[सूक्तस्थानेषु यथादेवतं सूक्तव्यवस्थाकरणम्]

**दैवतेन व्यवस्था: ॥ ९ ॥**

दैवतेन देवतया सूक्तानाम् आदिष्टानां व्यवस्थानं कर्तव्यम् । यद्दैवत्यं सूक्तमादिष्टं[1], तत् तद्दैवत्यस्य स्थाने भवति । यथा—'**उदु ष्य देवः सविता हिरण्यया**' (ऋ ६, ७१, १-३) इति तिस्रः '**ते हि द्यावापृथिवी**' (ऋ १०, ६२, ११) '**यज्ञस्य वो रथ्यम्**' (ऋ १०,९२,१) इति **वैश्वदेवम्** (आश्रौ ७,४,१२) इत्यत्र **सूक्तान्येव सूक्तस्थानेषु** (आश्रौ ७, १, ८) इति वचनाद् अनुक्रमेण त्रीणि सूक्तानि त्रयाणां सूक्तानां स्थाने प्राप्तानि, चतुर्थमैकाहिकं प्राप्तम् । एवं प्राप्ते दैवतेन व्यवस्था इति वचनात्, सावित्रं सावित्रस्य स्थाने **उदु ष्य देवः** (ऋ ६, ७१, १) द्यावापृथिवीयं द्यावापृथिवीयस्य स्थाने **ते हि द्यावा** (ऋ १०, ६२, ११) इति, वैश्वदेवं वैश्वदेवस्य स्थाने **यज्ञस्य वः** (ऋ १०, ९२, १) इति । ऐकाहिकम् आर्भवं भवति । व्यवस्थेति वक्तव्ये बहुवचनादधिकृतादन्यत्रापि हविर्यज्ञेष्वपि इयं परिभाषा भवति । यथा—**प्रथमायामग्निरग्निः पवमानः** (आश्रौ २, १, १९) इति द्वे देवते [2]उक्त्वा† द्वे[2] याज्यानुवाक्ये चोदिते अनुक्रमादाग्नेयस्य प्राप्ते दैवतेन व्यवस्थाः इति वचनाद् अग्नेः **पवमानस्यैते** भवत इति ॥ ९ ॥

[प्रउगे तृचानां व्यवस्थाकरणम्]

**तृचाः प्रउगे ॥ १० ॥**

प्रउगे ये आदिश्यन्ते, ते तृचा भवन्ति । तेषां दैवतेन च नित्यानां स्थाने व्यवस्थानं कर्तव्यम् । यथा—'**वायो शुक्रः**' (ऋ ४, ४७, १) इति **आनुष्टुभं प्रउगम्** (आश्रौ ७, ११, २२) । पादग्रहणादृचः प्राप्ताः । तत्र-तत्र तृचा इत्युच्यमाने गुरुग्रन्थः स्यादिति यथार्थमिदमुच्यते **तृचाः प्रउगे** इति ॥ १० ।

[सर्वेष्वहर्गणेष्वभ्यासातिप्रैषयोर्व्यवस्थानम्]

**सर्वाहर्गणेषु तायमानरूपाणां प्रथमादह्नः प्रवर्तेते अभ्यासातिप्रैषौ ॥ ११ ॥**

[3]सर्वाहर्गणा एकाहाहीनाः । सर्वे चाहर्गणाः सर्वाहर्गणाः, तेषु सर्वाहणेषु । तायमानानामह्नां[3] यानि गणरूपाणामह्नां रूपाणि वक्ष्यन्ते

---

१. सूक्तमादि मूको । २-२. नास्ति ब[1] । † उक्ता व[2] मै ।
३-३. सर्वाहर्गणामह्नां ब[2] ।

अभ्यासादीनि, तानि तायमानरूपाणीत्युच्यन्ते। तेषां द्वे एव तायमानरूपे प्रथमादह्न आरभ्य प्रवर्तेते अभ्यासश्च अतिप्रैषश्च । अतिप्रैषो व्याख्यातः— **अननुवषट्कृतेऽतिप्रैषम्** (आश्रौ ६,११ १३) इति।

इदानीमभ्यासो वक्ष्यते । यत्राधिकाराद्[1] एकाहाहीनाहर्गणेषु न प्राप्नुवन्ति तायमानरूपाणि, तस्मादाह--सर्वाहर्गणेष्विति। तायमानरूपाणीति वक्ष्यमाणानामभ्यासादीनां संज्ञा। **वैकल्पिकान्यग्निष्टोमेऽहर्गणमध्यगते** (आश्रौ ७, १, १७) इत्युक्ते तायमानरूपाणीति प्रत्येतव्यानि। द्वे एव प्रथमादह्नः प्रवर्तेते । द्वितीयादिष्वितराणि सर्वाणि तायमानपपाणीत्युच्यन्ते॥ ११॥

अभ्यासो वक्ष्यते—

[अभ्यासे विधिकथनम्]

॥ अह्न **उत्तमे शस्त्रे परिधानीयाया उत्तमे वचन उत्तमं चतुरक्षरं द्विरुक्त्वा प्रणुयात्** ॥ १२॥

अह्न उत्तमे शस्त्रे, अग्निष्टोमस्याग्निमारुते, उक्थ्यस्याच्छावाकशस्त्रे, षोडशिनः षोडशिनि[2], अतिरात्रस्य आश्विने परिधानीयायाः उत्तमे वचने उत्तमं चतुरक्षरं द्विरुक्त्वा प्रणवं कुर्यात्। **यज्जरित्रे यज्जरित्रो३मिति**[3]। **ऐरयेथामैरयेथो३मिति**[4]। **सख्युः पदे सख्युः पदो३मिति**[5]। **धेहि चित्रं धेहि चित्रो३मिति**[6]। होतुरुत्तमे[7] शस्त्र इत्युक्ते होतुः शस्त्राणामुत्तमे प्राप्ते अह्नः इति वचनाद् अच्छावाकस्यापि भवति । परिधानीयायास्त्रिष्वपि वचनेषु प्राप्ते 'उत्तमे वचन इत्याह[8]। उत्तमे वचन इत्युक्ते आद्यस्य चतुरक्षरस्य प्राप्ते उत्तमं चतुरक्षरमिति। यथासिद्धस्य प्रणवस्य अभ्यासप्राप्तेः[9] द्विरुक्त्वा प्रणुयादित्याह । कृतेऽभ्यासे यदि सोमातिरेको भवति, पुनरभ्यासं न कुर्यात् । नित्यानामेव शस्त्राणामभ्यासः क्रियते । न नैमित्तिकानां श्रुत्याम्नायदर्शनात् **ऐरयेथामैरयेथाम् इत्यच्छावाक उक्थ्येऽभ्यस्यति** (ऐब्रा ६, १५) इति। **अभ्यस्ये३त्, षोळशिनी३ँ नाभ्यस्ये३त्** (ऐब्रा ६, १५) इति च॥ १२॥

---

१. **तत्राधि॰** मूको।

२. नास्ति ब॰। ३. द्र. ऋ ४, १७, २०; आश्रौ ५, २०, ६।

४. द्र. ऋ ६, ६९, ८; आश्रौ ६, १, २। ५. द्र. ऋ ८, ६९, ७; आश्रौ ६, २, १२। ६. द्र. ऋ २, २३, १५; आश्रौ ६, ५, १९।

७. **होतुस्तस्मादुत्तमे** मूको। ८-८ नास्ति ब॰। ९. **॰प्राप्ते,** ब॰

[द्वितीयादिष्वहःसु निष्केवल्यसूक्तानां पूर्वं शस्त्रविधानम्]

**द्वितीयादिषु, त्यमू षु वाजिनं देवजूतम् इति तार्क्ष्यमग्रे निष्केवल्यसूक्तानाम् ॥ १३ ॥**

द्वितीयादिषु द्वितीयमहरादि कृत्वा यान्युत्तराण्यहानि, तेषु **त्यमू षु वाजिनं देवजूतम्** (ऋ १०, १७, ८) इति तार्क्ष्यमृषिमग्रे पूर्वं निष्केवल्ये यानि सूक्तानि, तेषां पूर्वं शंसेद् अहरहः । पादग्रहणादृक् प्राप्ता, तस्मात् तार्क्ष्यमित्याह सूक्तप्राप्त्यर्थम् । 'पादग्रहणात्सूक्तधर्मत्वाभावान्निविद्धानीयं' सूक्तं न[२] भवति । अनिविद्धानीयत्वात् पृथगाहावः यथा जातवेदस्यायाः ॥ १३ ॥

[जातवेदस्यानां सूक्तानां पूर्वमाग्निमारुतशस्त्रविधानम्]

**'जातवेदसे सुनवाम सोमम्' इत्याग्निमारुते जातवेदस्यानाम् ॥ १४ ॥**

**जातवेदसे सुनवाम सोमम्** (ऋ १, ९९, १) इत्येतामृचम् आग्निमारुते शस्त्रे 'जातवेदस्यानां सूक्तानामग्रे शंसेत् । पादग्रहणादृगेव, सूक्तं न भवति । तस्मात् पृथगाहावः । अविवाक्ये जातवेदस्यां न ब्रूयात्[३] । जातवेदस्यानामिति बहुवचनाद् दशमेऽहनि द्विप्रतीकं जातवेदस्यम् । अग्निदेवत्यश्च तृचः जातवेदस्येन समानार्थः, तेन सह त्रीणि सूक्तानि । एतदपेक्ष्य बहुवचनं द्रष्टव्यम् ॥ १४ ॥

[होत्रकैः शस्यानां शस्त्राणां कथनम्]

**आरम्भणीयाः पर्यासान् कद्वतोऽहरहः शस्यानीति होत्रका द्वितीयादिष्वेव ॥ १५ ॥**

प्रातःसवने माध्यन्दिने च आरम्भणीयाः[४] पर्यासान् कद्वतः अहरहः शस्यानीत्येतानि होत्रकाः अहरहः शंसेयुः द्वितीयादिष्वेव । होत्रकाणामेवैतानि । तस्माद्धोत्रकग्रहणात् पूर्वाणि[५] होतुर्भवन्ति । **नित्यानि होतुः** (आश्रौ ७, १, २०) इत्युक्ते सर्वाणि प्रत्येतव्यानि । होत्रका अहरहः शंसेयुः । अतिप्रैषं मैत्रावरुण आह । अच्छावाकस्याभ्यासो विद्यते । वषट्कारयोरन्तरातिप्रैषः, तस्माद्धोतुरित्युच्यते । **प्रथमादह्नः** (आश्रौ ७, १, ११), **द्वितीयादिषु** (आश्रौ ७, १, १३) इति च कालद्वयमधिकृतं, तस्मादाह—द्वितीयादिष्वेवेति, न प्रथमादिष्विति ॥१५॥

[पूर्वोक्तानां सर्वेषां शस्त्राणामनन्त्येऽहनि कर्तव्यत्वम्]

**तानि सर्वाणि सर्वत्रान्यत्राह्नः उत्तमात् ॥१६॥**

१-१. पादग्रहणात्सूक्तरधर्मधर्मत्वानिविद्धानीयं ब[१], पादग्रहतु धर्मत्वा (पादग्रहणो तु ऋग्धर्मत्वा मै) निविद्धानीया ब[२] मै । २. नास्ति मूको । ३-३. नास्ति ब[१] । ४. नास्ति मूको । ३. पूर्वं ब[१]; ।

तानि तायमानरूपाणि यानि प्रथमादह्नः प्रवृत्तानि यानि च द्वितीयादिषु प्रवृत्तानि सर्वाणि सर्वत्र क्रियन्ते एकाहेष्वप्यहर्गणमध्यगतेषु । अन्यत्राह्न[1] उत्तमात् मध्यमेष्वहःसु क्रियन्ते, उत्तमेऽहनि न क्रियन्ते । सर्वत्रेति वचनाद् उत्तमेऽहनि प्राप्तानि । तस्मात् प्रतिषेधः ॥ १६ ॥

[अहर्गणमध्यगतेऽग्निष्टोमे वैकल्पिकानां शस्त्राणां कथनम्]

**वैकल्पिकान्यग्निष्टोमेऽहर्गणमध्यगते ॥ १७ ॥**

वैकल्पिकानि विकल्पेन भवानि वैकल्पिकानि तायमानरूपाणि प्राकृते अग्निष्टोमे अहर्गणमध्यगते[2] । **अतिरात्रमग्रेऽथाग्निष्टोमम्** (आश्रौ १०,५, १०), **ज्योतिर्गौरायुरिति 'यावभितोऽग्निष्टोमौ'** (ऐब्रा ४. १५), **ज्योतिरुभयसामा** (आश्रौ ११, ३, १०) परिमितशस्यत्वान्न क्रियन्ते क्रियन्ते[3] वा[3] **नित्यत्वात् सत्रधर्मान्वियस्य** (आश्रौ ७, १, २१) । **अहर्गणमध्यगत** इति वचनात्[4] प्राकृतकस्याप्यग्निष्टोमस्य ग्रहणम् । अन्यथा[†] **तस्याग्निष्टोमावभितः** (आश्रौ ७, ७, १०) इत्यत्रापि स्याद् विकल्पः अग्निष्टोम इति वचनात्[5] । उक्थ्ये अतिरात्रे वा वैकल्पिकानि न भवन्ति, तथा[7] वक्ष्यामः । **त्रयाणामभिप्लवानामुपरिष्टादुपरिष्टादतिरात्रः** (आश्रौ ११, ४, १) । अत्र नित्यानि भवन्ति । अपरिमितशस्यात्[8] (शस्यत्वात् ?) प्रायणीयोदयनीययोः कस्मात् कल्पितानि, (इति ?) चेद्आद्यन्तयोः श्रुतावेव (श्रुतान्येव ?) न कल्पितानि, तस्मादन्येषामप्यन्त्यानाद्ये नयेत्, तिष्ठन्ति, यथा ऋतूनां षळहे ॥ १७ ॥

[अग्निष्टोमायनेषु वैकल्पिकशस्त्रकथनं कौत्सगौतमगाणगारिमतकथन-मैकाहिकोद्धारनियमश्च]

**अग्निष्टोमायनेषु वा ॥ १८ ॥**

**अन्यान्यभ्यासातिप्रैषाभ्यामिति कौत्सो विकृतौ तद्गुणभावात् ॥ १९ ॥**

**नित्यानि होतुरिति गौतमः संघातादावनुप्रवृत्तत्वादच्युतशब्द-त्वाच्च ॥ २० ॥**

**होत्रकाणामपि गाणगारिर्नित्यत्वात् सत्रधर्मान्वियस्य ॥ २१ ॥**

---

१. अन्यत्राह्न उत्तमात् मूको । २. °णमध्यात् ब[1] मै ।
३-३. नास्ति मूको । ४. नास्ति ब[1] । ५. नास्ति ब[1] ।
६-६. नास्ति ब[1] । [अन्यथा तस्याग्निष्टोमस्य ग्रहणम् । अथवा ब[1] । ७. यथा ब[1] । ८. शस्या मै । द्र. आश्रौ १०, ३, १-२ ।

**प्रगाथतृचसूक्तागमेष्वैकाहिकं तावदुद्धरेत् ॥ २२ ॥**

अष्टौ अयनानि सत्राणि[1] सन्ति । अग्नेरग्निष्टोमसहस्रम्[2] । गवामयनं सर्वं ज्योतिष्टोमेनैके । अग्निष्टोमो गौरेव द्वादशाहे । एतेष्वग्निष्टोमायनेषु च वैकल्पिकानि तायमानरूपाणि भवन्ति । अक्रियापक्षेऽप्यभ्यासः क्रियते । तायमानरूपेभ्यः पृथगारम्भात्[3] उत्तरवत्स्वहःस्वननुवषट्कृतेऽतिप्रैषं मैत्रावरुण आह (आश्रौ ६.११, १२-१३) इति । वा-शब्दः समुच्चयार्थः । श्रुतावारम्भणायानामहरहःशस्यानां[4] ब्राह्मणमाह । होत्रकाणां तायमानरूपैः[5] सह स[6] स्तोत्रियः, तथैवाचार्येणापि द्वितीयादिष्वेव कल्पितः । द्वितीयादिषु एव[7] होत्रकाणां [8]तायमानरूपाणि, तस्मादन्येष्वप्यहर्गणेषु होत्रकाणां[8] तायमानरूपैः सह स स्तोत्रियः प्रवर्तते । यथा ब्राह्मण, तथा आचार्येण प्रकल्पितम् ॥ १८—२२ ॥

॥ इति सप्तमे प्रथमः खण्डः ॥ १ ॥

---

१. नास्तिब[1] । २. द्र. आश्रौ १२, ६, २०-२२ ।
३. पृथग्वार मूको। ४. द्र. ऐब्रा ६, ६: २० ।
५. ०रूपेण व[2], ०रूपाणि: मै । ६. नास्ति मै ।
७. व ब[2] २ । ८-८. नास्ति मै ।

# अथ सप्तमेऽध्याये द्वितीयः खण्डः

[चतुर्विंशसंज्ञकेऽहनि स्तोत्रियानुरूपाणां कथनम्]

चतुर्विंशे 'होताऽजनिष्ट'[1] इत्याज्यम् ॥ १ ॥*

'आ नो मित्रावरुणा'[2], 'मित्रं वयं हवामहे'[3], 'मित्रं हुवे पूतदक्षम्'[4], 'अयं वां मित्रावरुणा'[5], 'पुरूरुणा चिद्ध्यस्ति'[6], 'प्रति वां सूर उदिते'[7] इति षळह-स्तोत्रिया मैत्रावरुणस्य ॥ २ ॥*

'आ याहि सुषुमा हि ते'[8], 'इन्द्रमिद् गाथिनो बृहद्'[9], 'इन्द्रेण सं हि दृक्षसे'[10], 'आदह स्वधामनु'[11] इत्येका द्वे च, 'इन्द्रो दधीचो अस्थभिः'[12], 'उत्तिष्ठन्नोजसा सह'[13], 'भिन्धि विश्वा अप द्विषः'[14] इति ब्राह्मणाच्छंसिनः ॥ ३ ॥*

'इन्द्राग्नी आ गतं सुतम्'[15], 'इन्द्रे अग्ना नमो बृहत्'[16], 'ता हुवे ययोरिदम्'[17], 'इयं वामस्य मन्मनः'[18], 'इन्द्राग्नी युवामिमे'[19], 'यज्ञस्य हि स्थ ऋत्विजा'[20] इत्यच्छावाकस्य ॥ ४ ॥*

तेषां यस्मिन् स्तुवीरन् स स्तोत्रियः ॥ ५ ॥*

यस्मिञ्छ्वः सोऽनुरूपः ॥ ६ ॥*

एकस्तोत्रियेष्वहस्सु योऽन्योऽनन्तरः सोऽनुरूपो
न चेत् सर्वोऽहर्गणः षळहो वा ॥ ७ ॥

ऐकाहिकस्तथा सति ॥ ८ ॥

एकस्तोत्रियेषु एक एव स्तोत्रियः अन्वहं येष्वहस्सु तेषु एवानुरूपः प्राप्तः, तस्मादिदमुच्यते । तस्मात् स्तोत्रियाद् योऽन्योऽनन्तरः सोऽनुरूपः कर्तव्यः, यथा उत्तमे मासि तृतीयस्याभिप्लवस्य[21] प्रथमेऽहनि आयुषि च समानस्तोत्रिया उभयत्रापि गव्याः[22] स्तोत्रियानुरूपा भवन्ति । अन्य इति

१. ऋ २,५, १ । *व्याख्या नोपलभ्यते ।
२. ऋ ७, ६५,४ । ३. ऋ १,२३,४ । ४. ऋ १,२,७ ।
५. ऋ २,४१,४ । ६. ऋ ५,७०,१ । ७. ऋ ७, ६५, १ ।
८. ऋ ८, १७,१ । ९. ऋ १,७,१ । १०. ऋ १,६,७ ।
११. ऋ १,६,४ । १२. ऋ १,८४,१३ । १३. ऋ ८,७६,१० ।
१४. ऋ ८,४५,४० । १५. ऋ ३,१२,१ । १६. ऋ ७,९४,४ ।
१७. ऋ ६,६०,४ । १८. ऋ ७,९४,१ । १९. ऋ ६,६०,७ ।
२०. ऋ ८,३८,१ । २१. °तीयाभि° ब' । २२. अन्या ब' ।

वचनात् कृतादन्योऽपि[1] भवति। अन्यथा [2]आम्नाये योऽनन्त(?-रः स)[2] स्यात्। अनुरूपग्रहणं स्तोत्रियाधिकारात्। न चेत् सर्वो[3]ऽहर्गणः। यदि सर्वोऽहर्गण एकस्तोत्रियो[4] [5]न भवति[5] तत एतद्[?]युक्तम्[?]। षळहो[6] वा। पृष्ठ्योऽभिप्लवो वा यदि एकस्तोत्रियो भवति, तथा सति क्रियमाणे ऐकाहिकः कर्तव्यः आम्नातः, लाक्षणिको वा। यथा ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रत चतुर्विशानां वैकैकम् (आश्वौ १२, ५, १२) इति। एतस्मिन् पक्षे यत्र युज्यते तयाम्नातो यः स भवति। यत्र न युज्यते, तत्र लाक्षणिको भवति। [7]अभिजिति विश्वजिति महाव्रते लाक्षणिको भवति। लाक्षणिकोऽप्यैकाहिक एव। तत्रैव लक्षणमपि दृष्टम्। यस्मात् तत्रैव स्तोत्रियान्यत्वे सति लाक्षणिकः क्रियते[7]। ज्योतिर्विकारेषु यथैव प्रकृतौ[8]। एकाहे आम्नातश्च[9] लाक्षणिकश्च क्रियते। एकाहे भवः लाक्षणिक ऐकाहिक इति। षळहा एकस्तोत्रिया भवन्ति। षळहविकारेषु तत्रापि ऐकाहिका स्तोत्रियानुरूपा[10] भवन्ति। षळहे अनन्तरः प्राप्तः, लाक्षणिको विधीयते। अहर्गणे तु अनन्तरस्याभावाद् ऐकाहिको विधीयते ॥ ७-८ ॥

[अन्त्येऽहन्यैकाहिकस्यानुरूपत्वम्]

**अन्त्ये च ॥ ९ ॥**

अन्त्ये[11]अहर्गणानन्तरे अहनि स्तोत्रियाभावाद् ऐकाहिकोऽनुरूपो भवति, य आम्नातः लाक्षणिको वा यथा युज्यते। आद्येऽहनि श्वःस्तोत्रियाभावात् स एव स्तोत्रियः स एवानुरूपः प्राप्तः **स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्वन्ति** (ऐब्रा ६, ५) इति श्रुतिवचनाद्, ऐकाहेषु च अन्त्ये चेति वचनाद् ऐकाहिक एव भवति स एवादिः स एवान्तो यस्मात् तस्मादैकाहिक आम्नातो लाक्षणिको भवति ॥ ९ ॥

[अनुरूपेभ्यः पश्चादारम्भणीयानां शंसनम्]

**ऊर्ध्वमनुरूपेभ्य 'ऋजुनीति नो वरुणः', 'इन्द्र वो विश्वतस्परि', 'यत्सोम आ सुते नरः' इत्यारम्भणीयाः शस्त्वा स्वान् स्वान् परिशिष्टानावपेरंश्चतुर्विशमहाव्रताभिजिद्विश्वजिद्विषुवत्सु ॥ १० ॥**

---

१. अन्योऽपि ब[1]। २-२. आम्नाये (°यो ब२ मै) योनंत (यानंर ब[2], यानंतर मै) मूको। ३. सर्वः ब[2] मै। ४. नास्ति ब[1]। ५-५. नास्ति ब[2]। [?]युक्तः ब[1]। ६. यदि सर्वोऽहर्गण एकस्तोत्रियो भवति षळहो (°हानां मै) ब[1] मै, षळहानाम् ब[2]। ७-७. अभिति विवस्तोत्रियान्यत्वे सति लाक्षणिकः क्रियते ब[1], अभिजिति विश्वजिति महाव्रते लाक्षणिकः क्रियते ब[2]। ८. प्रकृतो मूको। ९. °ताश्च मुको। १०. °कस्तत्रानुरूपा ब[2], मै। ११. अन्ते-(०न्त्ये-मै) षु ब[1] मै, नास्ति ब[2]।

ऊर्ध्वमनुरूपेभ्यः ऋजुनीति नः (ऋ १, ९०, १), इन्द्र वः (ऋ १, ७, १०), यत्सोम आ सुते (ऋ ७, ९४, १०) इति[1] आरम्भणीया संज्ञा। सोऽनुक्रमेण[2] त्रयाणामपि देवतेन व्यवस्थावचनाद् यथासंख्येन भवति[3]। ताभ्यः अनन्तरं स्वान् स्वान् परिशिष्टानावपेरन् स्तोत्रियानुरूपेषु उपयुक्तशिष्टान्[4] (°क्तान् परिशिष्टान् ?) षळहस्तोत्रियान् आवपेरन्। आवापः अधिको भवति उपजनः। शस्त्वेति अनुक्रमार्थः। स्वान् स्वानिति वचनाद् अन्यानन्यो[5] न शंसति। वीप्सा सर्वेषां प्राप्त्यर्थम्। परिशिष्टानिति वचनाद् उपयुक्ता नोप्यन्ते। चतुर्विंशे महाव्रते अभिजिति विश्वजिति विषुवति एतेषु अहस्सु परिशिष्टानावपेरन्। चतुर्विंश इत्यनुच्यमाने महाव्रतादिष्वेव स्यात् ॥१०॥

[सर्वस्तोमे सर्वपृष्ठेषु च स्वस्वपरिशिष्टानामावापः]

**सर्वस्तोमसर्वपृष्ठेषु च ॥ ११ ॥**

सर्वस्तोमे क्रतौ सर्वपृष्ठेषु च स्वान् स्वान् परिशिष्टानावपेरन्। सर्वस्तोमः[6] **सर्वस्तोमोऽतिरात्र उत्तरम्** (आश्रौ ९, ३, २६)। साकमेधानां तृतीयमहः[7] सर्वपृष्ठमहः। अप्तोर्यामः यः प्राकृत एकपृष्ठः[8] अन्येन समाम्नातेषु[8] द्रष्टव्यः। च-शब्दः समुच्चयार्थः। एतेनैव सिद्धत्वात् पूर्वस्मिन् सूत्रे[9] अभिजिद्विश्वजितोर्ग्रहणं न कर्तव्यम्। इदं प्रयोजनम्। सर्वस्तोमसर्वपृष्ठेष्विति समासवचनाद् विश्वजित्येव स्यात्, सर्वस्तोमश्च सर्वपृष्ठश्च स इति अभिजिन्न स्याद् असर्वपृष्ठत्वात्। तस्मादभिजिद्विश्वजितोर्ग्रहणं प्रदर्शितं भवति, सर्वस्तोमसर्वपृष्ठेष्विति ॥११॥

[परिशिष्टावापादूर्ध्वं पर्यासानां शंसनम्]

**ऊर्ध्वमावापात् 'प्रति वां सूर उदिते', 'व्यन्तरिक्षमतिरत्', 'श्यावाश्वस्य सुन्वतः' इति तृचाः पर्यासाः ॥१२॥**

ऊर्ध्वं परिशिष्टावापात् **प्रति वाम्** (ऋ ७, ६५, १-३), **व्यन्तरिक्षम्** (ऋ८, १४, ७-९), **श्यावाश्वस्य** (ऋ ८, ३८, ८-१०) इत्येते तृचाः पर्याससंज्ञाः। ऊर्ध्वमावापादिति अनुक्रमार्थम्। पादग्रहणात् तृचा इत्याह। पर्यासा इत्युक्ते एते प्रत्येतव्याः। **ऊर्ध्वं पर्यासेभ्यः यत्**[10] **प्राप्तं याज्याभ्यः पूर्वं पर्यासाः** (आश्रौ ६, ४, ९) इति वचनात् तल्लुप्यते। पर्यासान्तान्येव शस्त्राणि भवन्ति ॥१२॥

---

१. नास्ति मूको। २. सा क्रमेण ब[2]। ३. भवन्ति मूको। ४. उपमिष्टा ब[2], उपयुक्तमिष्टा ब[2]। मै। ५. अन्त्यानन्यो मूको। ६. नास्ति ब[1]।
७. °यमाह ब[2]। ८-८ अन्येनाम्नातेषु ब[2], अन्येषु अनाम्नातेषु मै।
९. द्र. आश्रौ ७, २, १०। १०. तत् मूको।

[मैत्रावरुणस्योत्तमपर्यासकथनं पूर्वस्य षडहस्तोत्रियस्य स्थानेऽन्यस्य कथनं च]

**स त्वेव मैत्रावरुणस्य षळहस्तोत्रिय उत्तमः स पर्यासः ॥१३॥ तद्दैवतमन्यं पूर्वस्य स्थाने कुर्वीतान्यत्रापि सन्निपाते ॥१४॥**

मैत्रावरुणस्य षळहस्तोत्रिय उत्तमः स एव पर्यासः । तत्र तद्दैवतमन्यं तृचं पूर्वस्य षडहस्तोत्रियस्य स्थाने कुर्वीत । अन्यत्रापि शस्त्रेषु यत्र एवं[1] सन्निपातो भवति तत्र तद्दैवतमन्यं तृचं सूक्तं वा पूर्वस्य स्थाने कुर्वीत । तु-शब्द इतरयोः होत्रकयोः अधिकारव्यावृत्त्यर्थः । मैत्रावरुणस्यैव नेतरयोः । एव-शब्दोऽवधारणार्थः । स एव समानलिङ्गः । मैत्रावरुणस्य ग्रहणं सर्वेषाम-धिकारात् । अन्यमित्युक्ते अन्यदैवतस्यापि प्राप्तिः, तस्मात् तद्दैवतमित्याह । अन्यमिति वचनात् षळहस्तोत्रियादन्यः कर्तव्यः । **यदद्य सूर उदिते** (ऋ ७, ६६, ४) इति भवति । सूर उदित इति समानलिङ्गत्वात्[2] पूर्वस्य स्थाने भवति आवापस्याप्रधानत्वात् । प्रधानं हि तायमानरूपम् इति[3] दर्शनात् । अन्यत्रापि सन्निपाते अप्रधानस्य स्थाने अन्यं कुर्यात् । अन्यत्रापि सन्निपाते यथा साकमेधानां तृतीये सर्वस्तोमे अच्छावाकस्य संपाताहीनसूक्तयोः सन्निपातः । तत्र **नित्या नैमित्तिका विकाराः** (आश्रौ ९, १, १३) इति अहीनस्य सूक्तस्य नित्यत्वात् संपातस्थाने अन्यत्[4] कर्तव्यम्[5] । इष्टं[6] संपातस्य स्थानेऽन्यत् **ऐकाहिका होत्राः सर्वत्र प्रथमसांपातिकेष्वहस्सु** (आश्रौ ८, २, ५) इति । अन्यत्रापीति अपि-शब्दः समुच्चयार्थः ॥१३-१४॥

[द्विः शंसनप्रकारकथनम्]

**न तृचं सूक्तं वाऽनन्तर्हितमेकासने द्विः शंसेत् ॥१५॥**

[7]तृचं सूक्तं वा[7] अनन्तर्हितमव्यवहितम्, एकासने एकस्मिन् शस्त्रे द्विर्न शंसेत् । आवापविभाषार्थमिदं द्रष्टव्यम् । न तृचं सूक्तं वेति वचनाद् ऋचं द्व्यृचं वा अनन्तर्हितमपि द्विः शंसेत् । अनन्तर्हितमिति वचनाद् अन्तर्हितं[8] तु शंसेत् । अनन्तर्हितमपि[9] प्रतिषिद्धं जामि भवतीति । एकासन इति वचनान् नानासने शस्यते । नानासनेऽपि श्रुत्यन्तरेण न शस्यते । वचनाद् ईकेद्यावीयं शस्यते ॥१५॥

[महावालभिदो विहारस्य शंसने नाभाकानां तृचानामावपनम्]

**महावालभिदं चेच्छंसेद् ऊर्ध्वमनुरूपेभ्य आरम्भणीयाभ्यो वा नाभाकां-स्तृचानावपेरन् गायत्रीकारम् ॥१६॥**

---

१. एव मूको । २. °लिङ्गात् व[1] । ३. नास्ति व[1] । ४. अन्यंत व[1], अनन्यं व[1] । ५. °व्यः व[1] । ६. नित्यं व[1] । ७-७. नास्ति मूको ८. अनन्तर्हितं मै । ९. °तमिति व[1] ।

महावालभिदिति वालखिल्यविहारस्य नाम । त वालभिदं चेद् विहारं[1] शंसेद् ऊर्ध्वमनुरूपेभ्य ऊर्ध्वमारम्भणीयाभ्यो वा नाभाकेन ऋषिणा दृष्टान्[2] नाभाकान् तृचानावपेरन् होत्रकाः गायत्रीकारं गायत्रीं कृत्वा । गायत्रीकारं न[3] तृचं सूक्तं वा अनन्तर्हितमेकासने द्विः शंसेत् (आश्वौ ७, २, १५) इति सर्व-क्रत्वर्थम् । तस्मात् सर्वक्रतूनामधिकारे इदमुच्यते—महावालभिदं चेच्छंसेत् । इह चेदित्यनित्यभावे[4] । होत्रकाणां नित्यं विहारो[5] मा भूदिति । आवापादनन्तर आवापो विधीयमान आवापादनन्तर एव प्राप्त अनुरूपाद् ऊर्ध्वं विधीयते । तस्मान्महावालभिन्निमित्त आवापो महावालभिच्च ऊर्ध्वमनु-रूपात् कल्पते । विद्यमानास्वारम्भणीयासु ऊर्ध्वमारम्भणीयाभ्य ओप्यन्ते । एतद् द्विर्दृष्टस्थानं[6] न विकल्पः । नाभाकग्रहणं ब्राह्मणे[7] दृष्टत्वात् । पादग्रहणे तृचानित्याह । आवपेरन्निति वचनाद् अधिक आवापो भवति, न कस्यचित् तृचस्य स्थाने । आतोऽर्धर्चं सर्वम् (आश्वौ ५, १४, ७) इति अर्द्धर्चशस्ये प्राप्ते गायत्रीकारं विधीयते । द्वाभ्यां पादाभ्यामवसानं तृतीयेन प्रणवः एतद् गायत्रीणां शस्यम् । तदिह विधीयते । तिस्र ऋचः गायत्र्यः षट् संपद्यन्ते । यथा स्तोत्रिये द्वे तिस्रः[8] गायत्रमहा-नाम्न्यो[9] नव[10] तिस्रो भवन्ति । निर्देशे प्रकृत्या[11] । एका द्वे भवतः । द्विपदा एवं[12] एकपदाः । एवमिहापि द्रष्टव्यम् । तस्मात् संख्याकृते आवाप एताः षट् गण्यन्ते । एकविंशतिं त्रयस्त्रिंशे (आश्वौ ७, ५, ११) इत्यत्र एताः संख्याय अन्याः पञ्चदश ओप्यन्ते । यत्र तु "संख्याकृत आवापो" न भवति, न[13] तत्र अधिका ओप्यन्ते । यत्र षळहस्तोत्रियावापे[14] प्राकृते एकाहे च षळहेषु च प्राक्सप्तदशाच्च "स्तोमात् तेषु"[15] "संख्याकृत आवापो" न भवति, तेषु अधिका ओप्यन्ते ॥१६॥

[मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानामोप्य तृचकथनम्]

**'स क्षपः परि षस्वजे' इति मैत्रावरुणः, 'यः ककुभो निधारय' इति वा; 'पूर्वीष्ट इन्द्रापमातयः' इति ब्राह्मणाच्छंसी; 'ता हि मध्यं भराणाम्' इत्यच्छावाकः ॥१७॥**

**स क्षपः परि षस्वजे** (ऋ ८, ४१, ३) इत्येतं तृचं मैत्रावरुण आवपेत् । नाभाकानित्यविशेषवचनाद् यः कश्चित् तृच इति प्राप्ते नियमः क्रियते—सक्षप इति । सर्वेषामधिकारान्मैत्रावरुणग्रहणम् । **यः ककुभो निधारयः** (ऋ८, ४१,४)

---

१. विकारं मूको । २. दृष्टं मूको । ३. मूको नास्ति ।
४. चेदित्यभावे मूको । ५. विहारे ब[2] । ६. एतद्विदृष्टस्थानं ब[1]; एतद्विः इष्टस्थानं ब[2]; एतद्धि दृष्टस्थानं मै । ७. द्र. ऐब्रा ६, २४ ।
८. द्र. आश्वौ ५, १५, ५ । ९. °त्रसा (श्रम ब[2] मै) हानंत्यो (°नह्यो मै) मूको । १०. भवति मूको । ११. कृत्या मूको, द्र. आश्वौ ७, १२,१० ।
१२. एव मूको । १३-१३ °कृतस्त्वावापो मूको । १४. नास्ति ब[2] मै ।
१५. °हास्तोत्रीयावापः ब[2] मै; °वापः ब[1] । १६. स्तोमावनेषु च (°नेषु ब[1]) मूको ।
१७-१७ °कृतावापो मै ।

इति मैत्रावरुणस्य तृचविकल्पः[1] । उत्तर एव कार्यः उत्तरपक्षत्वाद् ब्राह्मणे[2] दृष्टत्वाच्च, **व्रजे गावः** (ऋ ८,४१,६) इति गोलिङ्गत्वाच्च[3] । **पूर्वीष्ट इन्द्रोपमातयः** (ऋ ८,४०,९) इत्येतं तृचं ब्राह्मणाच्छंसी आवपेत । मैत्रावरुणाधिकाराद् ब्राह्मणाच्छंसीत्याह । **ता हि मध्यं भराणाम्** (ऋ, ८, ४०, ३) इत्येतं तृचम् अच्छावाक आवपेत । ब्राह्मणाच्छंस्यधिकारादच्छावाकग्रहणम् ॥१७॥

॥ इति सप्तमे द्वितीयः खण्डः ॥

१. तृच इति विकल्पः मूको । २. द्र. ऐब्रा ६, २४ ।
३. गोलिगं कृत्वाच्च व[1], गोलिकृत्वाच्च मैं ।

# अथ सप्तमेऽध्याये तृतीयः खण्डः

[चतुर्विंशेऽहनि माध्यन्दिने सवने मरुत्वतीयशस्त्रे ब्राह्मणस्पत्यप्रगाथयोः कथनम्]

**मरुत्वतीये 'प्रैतु ब्रह्मणस्पतिः', 'उत्तिष्ठ ब्रह्मणस्पते' इति ब्राह्मणस्पत्यावावपते पूर्वौ नित्यात् ॥१॥**

चतुर्विंशेऽहनि प्रातःसवनं व्याख्यातम् । इदानीं माध्यन्दिने मरुत्वतीये शस्त्रे विधिर्वक्ष्यते । **प्रैतु ब्रह्मणस्पतिः** (ऋ १, ४०, ३-४), **उत्तिष्ठ ब्रह्मणस्पते** (ऋ १, ४०, १-२) इत्येतौ ब्राह्मणस्पत्यौ प्रगाथावावपेत, अधिकौ शंसेत् । नित्याद् ब्राह्मणस्पत्यात्[1] पूर्वौ भवतः । नित्येन सह त्रयः प्रगाथा भवन्ति । ब्राह्मणस्पत्यग्रहणाद् ब्राह्मणस्पत्यस्य यच्छन्दस्तदेतयोर्भवति[2] । प्रगाथागमे प्रगाथस्योद्धारे प्राप्ते आवपेतेति वचनादधिकौ भवतः । नित्यादनन्तरे[3] प्राप्ते तस्मात् पूर्वावित्याह ॥१॥

[मरुत्वतीयप्रगाथयोः कथनम्]

**'बृहदिन्द्राय गायत', 'नकिः सुदासो रथम्' इति मरुत्वतीया ऊर्ध्वं नित्यात् ॥२॥**

**बृहदिन्द्राय गायत** (ऋ ८, ८१, १-२), **नकिः सुदासो रथम्** (ऋ ७, ३२, १०-११) इत्येतौ मरुत्वतीयौ प्रगाथावावपेत । नित्यान्मरुत्वतीयात्[4] प्रगाथादूर्ध्वम् । मरुत्वतीयाविति संज्ञा संव्यवहारार्था[5] । **उक्ता मरुत्वतीयः** (आश्रौ ७, ५, २२) इत्युक्ते एते प्रत्येतव्याः । पूर्वौ इत्यधिकृतम्, तस्मादूर्ध्वमित्याह ॥२॥

[ऐकाहिकस्य सूक्तस्य पुरस्ताच्छंसनीयस्य सूक्तस्य कथनम्]

**'कया शुभा' इति च मरुत्वतीये पुरस्तात् सूक्तस्य शंसेत् ॥३॥**

**कया शुभा** (ऋ १, १६५) इत्येतच्च सूक्तं मरुत्वतीये शस्त्रे पुरस्तादैकाहिकस्य[6] सूक्तस्य शंसेत् । द्वे सूक्ते भवतः । च-शब्दः समुच्चयार्थः । एतच्च अन्यानि च । पुनर्मरुत्वतीयग्रहणादन्यत्रापि मरुत्वतीये यत्र आवापः कर्तव्यो भवति, तत्र कयाशुभीयमावपेत । तद्वायुष्यं तद् योऽस्य प्रियः स्यात् कुर्यादेवास्य

---

१. द्र. आश्रौ ५, १४, ६; ऋ१, ४०, ५-६ । २. °त्यस्यच्छंसं तदे° ब[1],ब[2] °त्यस्य यच्छेष्यं तदे° मै । ३. नित्यानंतरे ब[1] । ४. द्र. आश्रौ ५, १४, १८; ऋ ८, ८९, ३-४ । ५. व्यवहा° मै । ६. द्र. आश्रौ ५, १४, १९; ऋ १०, ७३ ।

**कयाशुभीयम्** (ऐब्रा ५, १६) इति ब्राह्मणे । चकारकरणादन्यानि । यत्र बहूनामावाप: कर्तव्यो भवति तत्र कयाशुभीयम् 'आनो वाऽन्यानि' बाऽऽवपेत । **सूक्तान्येव सूक्तस्थानेषु** (आश्रौ ७, १, ८) इति प्राप्ते पुरस्तात् सूक्तस्य शंसेदित्याह ॥३॥

[पृष्ठ्याभिप्लवयो: प्रगाथानामावर्तननियम:]

**एवं स्थितान् प्रगाथान् पृष्ठ्याभिप्लवयोरन्वहं पुन: पुनरावर्तयेयु: ॥४॥ एकैकं ब्राह्मणस्पत्यानाम् ॥५॥ एवं मरुत्वतीयानाम् ॥६॥**

एवम् अनेनानुपूर्व्येण स्थितान् प्रगाथान् ब्राह्मणस्पत्यान् मरुत्वतीयान् पृष्ठ्याभिप्लवयो:[२] षळहयोरन्वहम् अहरहरन्वहं समाप्तान् प्रगाथान् पुन: पुनरावर्तयेयु: । [३]एकैकं ब्राह्मणस्पत्यानामेवमेकैकं[+] मरुत्वतीयानाम् । अन्यथा[३] एकैकं ब्राह्मणस्पत्यानामित्युक्ते अनुक्रमनियमो न स्यात् । पुन: प्रगाथग्रहणं सूक्ताधिकारात् । अन्वहमित्युक्ते पृष्ठ्याभिप्लवग्रहणम् । बहुषु षळहेषु एकैकस्मिन् षळहे एकैक: प्रगाथ: इति प्राप्ते[४] अन्वहमित्याह । एव स्थितान्° अन्वहम् इत्युक्ते सकृदावृत्ति: प्राप्ता, [५]पुन:† पुनरावर्तयेयुरिति प्रोक्ते बहुधा आवर्तयेयुरिति बहुवचनं संपातार्थम्, उक्ता मरुत्वतीयै: (आश्रौ ७,५,२२) इत्युक्ते आवर्तयेयुरित्येतदुपदिष्टं द्रष्टव्यम् । कस्मिंश्चिदहनि एकं प्रगाथं कस्मिंश्चिद् द्वौ कस्मिंश्चित् सर्वम्‖ एवमन्वहं[५] पुन: पुनरावर्तयेयुरित्येवं प्राप्ते एकैक: प्राप्त:, तस्मादिदमुच्यते—एकैकं ब्राह्मणस्पत्यानाम्, एवं मरुत्वतीयानाम् इति । तस्मादेकैकस्मिन्नहनि[६] द्वौ द्वौ प्रगाथौ भवत:, एकैको ब्राह्मणस्पत्य: एकैको मरुत्वतीय इति[७] ॥४-६॥

[इन्द्रनिहवसंज्ञस्य प्रगाथस्य नित्यत्वम्]

**ध्रुव इन्द्रनिहव: ॥७॥**

इन्द्रनिहव: प्रगाथ: ध्रुव:[८] न च्यवते ॥७॥

[धाय्यानां नित्यत्वम्]

**धाय्याश्च ॥ ८॥**

---

१-१ अनो व्यान्यानि ब[२] मे । २. नास्ति मूको । ३-३ नास्ति ब[१] । †°नामेवमेव ब[२], °नामेवमेवैकं मै । ४. अत्र ब[२] कोशसमाप्ति: । ५-५ नास्ति ब[२] । +नास्ति मै । ‖सर्वे मै । ६. तस्मादेकस्मिन्नहनि मै । ७. नास्ति ब[१] । ८. द्र. आश्रौ ५,१४,५ ।

अग्निर्नेता (ऋ ३, २०, ४) इति तिस्रो धाय्याः[१] ध्रुवा न च्यवन्ते । ध्रुवाः[२] शस्त्राणामातानाः (आश्वौ ७, १, ७) इति ध्रुवत्वे प्राप्ते पुनरुच्यते । एवं स्थितात् प्रगाथानन्वहमेकैकमावर्तयेयुः (आश्वौ ७, ३, ४) इत्युक्ते अधिकृतानेव प्रगाथानन्वहमेकैकमावर्तयेयुः, नान्यं नवमिति[३] । तदन्तर्भूतधाय्यानां लोपे प्राप्ते धाय्याश्च ध्रुवा इत्युच्यन्ते ॥८॥

[निष्केवल्ये शस्त्रे बृहत्पृष्ठस्य विधानम्]

**बृहत् पृष्ठम् ॥ ९ ॥**

व्याख्यातो[४] मरुत्वतीयः[५] । इदानीं 'निष्केवल्ये विधिर्वक्ष्यते[६] । निष्केवल्यं बृहत्पृष्ठं भवति **त्वामिद्धि हवामहे** (ऋ६, ४६, १-२) इति[७] ॥९॥

[रथन्तरपृष्ठस्य विकल्पत्वेन विधानम्]

**रथन्तरं वा ॥१०॥**

रथन्तरं[८] वा पृष्ठं भवति **अभि त्वा** (ऋ ७, ३२, २२) इति । इदं न कर्तव्यम्[९] । प्रकृतावपि[१०] विकल्प एव । **एतेनाह्ना सुत्यानि** (द्र. आश्वौ ७,१,३) इति प्राप्ते आरम्भो योनिशंसनविवक्षार्थम्[११] ॥१०॥

[बृहद्रथन्तरयोर्मध्येऽकृतस्य योनिशंसनविधानम्]

**तयोरक्रियमाणस्य योनिं शंसेत् ॥११॥**

प्रकृतावक्रियमाणस्य तयोर्बृहद्रथन्तरयोः [१२]पृष्ठस्थानेषु यन्न[१२] कृतं तस्याक्रियमाणस्य योनिं शंसेद् ऊर्ध्वं धाय्यायाः । प्रकृतौ पवमानेन[१३] कृतस्य योनिशंसनं दृष्टम् । इह तु पवमानेऽपि अक्रियमाणस्य विधीयते । **ते योनीः** (आश्वौ ८, ७, ६) इति वचनाद् अन्यस्मिन् पृष्ठे[१४] सति उभयोर्योनिशंसनप्राप्तिः[१५] ॥११॥

[वैरूपादिष्वप्यकृतस्य योनेः शंसनम्]

**वैरूपवैराजशाक्वररैवतानां च ॥१२॥**

वैरूपं च वैराजं च शाक्वरं च रैवतं च एतेषां साम्नां पृष्ठस्थाने क्रियमाणानां बृहत्पृष्ठानीति[१६] संज्ञा । एतेषां चतुर्णां पृष्ठस्थाने[१७] अक्रियमाणानां या[१८] योनीः शंसेत् ता [१९]योन्यः पृष्ठ्ये वक्ष्यन्ते[१९] । च-शब्दः अक्रियमाणस्य योनिं

१. द्र. आश्वौ ५, १४, १७ । २. नास्ति मूको । ३. तवमिति ब', ऋचमिति मै । ४. °त ब', °तं मै । ५. °यम् मै । ६-६. नास्ति मूको । ७. द्र. आश्वौ ५, १५, ३ । ८. द्र. आश्वौ ५, १५, २ । ९. वक्तव्यम् मै । १०. प्रकृतोऽपि ब' । ११. योनिवि° ब' । १२-१२. °स्थाने यं न ब', °स्थानेषु न मै । १३. °माने मै । १४. जष्टे ब' । १५. °योनीशंस° मै । १६. °पृष्ठा० मै । १८. स्थाने मूको । १८. यो ब', नास्ति मै । १९-१९. योनीः पृष्ठे वक्ष्यते मूको ।

शंसेदित्यधिकारसमुच्चयार्थः । तस्मादेषामक्रियमाणस्य योनिशंसनं विद्यते ॥१२॥

[योनिस्वरूपकथनम्]

**पृष्ठ्यस्तोत्रिया योन्यः ॥१३॥**

विश्वजिति वैराजस्यातिदेशप्राप्तौ[1] पृष्ठ्यस्तोत्रियाः पृष्ठ्यषळहे अन्वहं वैरूपादीनां स्तोत्रिया वक्ष्यन्ते एषां योन्यः । **योनिं शंसेत्** (आश्वौ ७, ३, ११) इत्युक्ते का योनिरिति न ज्ञायते, तस्मादिदमुच्यते ॥१३॥

[योनीनामर्धर्चशस्यत्वम्]

**अर्धर्चाः ॥१४ ॥**

अर्धर्चशस्या योन्यो भवन्ति । **पृष्ठ्यस्तोत्रिया[2] योन्यः** इत्युक्ते स्तोत्रिया यस्माद् बृहतीकारं[3] ककुबुत्तराकारं वा प्राप्ताः[4], [5]तस्मादाम्नायाम्नाता अर्द्धर्चा[5] विधीयन्ते[6] । तस्मात्[7] स्तुते स्तोत्रिये । **यथास्तुतं शंसेत्** (आश्वौ ६, ५, ९) इति अस्तुताश्चान्याः[8] शस्यन्ते । यद्यपि पवमाने स्तुते न तत्र बृहतीकारं ककुबुत्तराकारं वा[9] विद्यते । महानाम्नीषु तु छन्दोगवशादध्यर्द्धकाराश्च[10] भवन्ति स्ववचनादेव[11] । तस्मात् **पृष्ठ्यस्तोत्रिया[12] योन्यः** (आश्वौ ७, ३, १३) इति वचनाद् यथैव स्तोत्रिये, तथैव योन्यर्द्धर्चे प्राप्ते, **योनिस्थाने तु यथा निशान्तम्** (आश्वौ ७, १२, १४) इति वचनाद् यथाम्नातमर्द्धर्चशस्यं भवति सप्रणवं यथाऽन्यासु योनिषु ॥१४॥

[प्रतिदिनं योनीनां विधानम्]

**तासां विधानमन्वहम् ॥ १५ ॥**

तासां योनीनाम् ऋग्विधानं पृष्ठ्यषळहे अन्वहम् अहन्यहनि । अन्या[13] या [14]ऋचस्तासामपि शंसननिवृत्त्यर्थं तासां विधानमन्वहमित्युच्यते[14] ॥ १५ ॥

[अतः परं सामप्रगाथानामुपक्रमः]

**ताभ्य ऊर्ध्वं सामप्रगाथान् ॥ १६ ॥**

[उक्तस्य रथन्तरसामप्रगाथस्य पुनरुल्लेखः]

**उक्तो रथन्तरस्य ॥१७ ॥**

---

१. °देशाप्राप्ते मै; द्र. आश्री ८, ७, २-३ । २. स्तोत्रिया मूको । ३. यद् बृह° मूको । ४. प्राप्तः मूको; द्र. आश्रौ ५, १५, ६-९ । ५-५ तस्मा तस्मादाम्नायामातार्द्धर्चा ब[1], तस्मादाम्नायाम्नातमर्घर्चा मै । ६. विधीयते मूको । ७. कस्मात् ब[2] । ८. अस्तुतन्या ब[2], असुता स्यान्या मै । ९. ना ब[1] । १०. °कारा च मूको । ११. द्र. आश्रौ ७,१२,१० । १२. स्तोत्रिया मूको । १३. नास्ति मूको । १४-१४. 'ऋचस्तासामपि' इत्यारभ्य '°मित्युच्यते' इति पर्यन्तः पञ्चदशसूत्रव्याख्याभागः । 'रथन्तरस्य' इत्यारभ्य 'व्याख्यातः' इति पर्यन्तः सप्तदशसूत्रव्याख्याभागश्च सप्तदशसूत्रव्याख्यास्थ 'परोक्षपृष्ठे याः', इति पदानन्तरमापतितः मै ।

'रथन्तरस्य सामप्रगाथ उक्तो व्याख्यातः[1]।' ऋच आम्नाताः। **यद् द्याव इन्द्र ते शतम्** (ऋ ८, ७०, ५-७) इत्येवमादय ऋचस्तासां योनीनां तृचा भवन्ति[2], योन्यः (आश्वौ ७, ३, १३) इति वचनात् परोक्षपृष्ठे याः। **पिबा सुतस्य रसिनः** (ऋ८, ३, १) इति सिद्धो[3]ऽपि पुनरुच्यते उत्तरसूत्रविवक्षार्थम्। प्रकृतौ उक्तः[1] अविशेषवचनात् सर्वेषां साम्नां प्राप्तः । इह तु विकृतौ बृहतः सामप्रगाथ आम्नातः। अन्ये च चत्वारः प्रगाथा अन्येषां पृष्ठानामाम्नाताः। इतरेषामित्यविशेषवचनाद् अधिकृतानां रथन्तरादीनां पञ्चानां पृष्ठानां चत्वारः प्रगाथाः प्राप्ताः। उक्तो रथन्तरस्य इत्युक्ते अन्येषां पृष्ठानां ते प्रगाथा भवन्ति ॥१६-१७॥

[बृहतः सामप्रगाथस्य कथनम्]

**'उभयं शृणवच्च नः' इति बृहतः ॥१८॥**

**उभयं शृणवच्च नः** (ऋ ८, ६१,१-२) इत्ययं बृहतः सामप्रगाथः। **पिबा सुतस्य** (ऋ ८,३,१) इत्येतस्मिन् प्राप्ते बृहतोऽयं प्रगाथो विधीयते। तस्मात् प्रगाथौ ज्योतिष्टोमे बृहत्पृष्ठे सति **उभयम्** इति सामप्रगाथः कार्यः ॥१८॥

(इतरेषां चतुर्णां पृष्ठानां प्रगाथकथनम्)

**'इन्द्र त्रिधातु शरणं,' 'त्वमिन्द्र प्रतूर्तिषु', 'मो षु त्वा वाघतश्चन' इति सद्विपद उपसमस्येद् द्विपदाम् 'इन्द्रमिद् देवतातये' इतीतरेषाम् ॥१९॥**

इन्द्र त्रिधातु शरणम् (ऋ ६, ४६, ९-१०), **त्वमिन्द्र प्रतूर्तिषु** (ऋ ८, ९९, ५-६), **मो षु त्वा वाघतश्चन** (ऋ ७, ३२, १-३) इति सद्विपदः प्रगाथः। द्विपदया सह प्रगाथः सद्विपदः। उपसमस्येद् द्विपदां प्रगाथान्तेन प्रणवमकृत्वा[4]। तेन प्रगाथान्तेन द्विपदामुपसमस्य प्रणुयात् । **इन्द्रमिद् देवतातये** (ऋ ८, ३, ५-६) इत्येते चत्वारः प्रगाथाः । इतरेषां पृष्ठानां बृहद्रथन्तराभ्यामितरेषां चतुर्णां पृष्ठानां चत्वारः प्रगाथा आनन्तर्ययोगेन भवन्ति। **पिबा सुतस्य** (ऋ ८, ३, १) इत्येतस्मिन् [5]प्राप्ते इमे[5] प्रगाथा विधीयन्ते। **ताभ्य ऊर्ध्वं सामप्रगाथान्** (आश्वौ ७, ३, १६) इति वचनात् प्रगाथा एव प्राप्ताः, द्विपदा न प्राप्नोति[6], तस्मात् सद्विपद इत्युच्यते। सद्विपद इति बहुव्रीहिः अन्यपदार्थप्रधानो यस्मात्, तस्मात्[7] प्रगाथस्याऽऽगमे प्रगाथस्योद्धारः । अन्यथा तृचस्याऽऽगमे प्रगाथस्योद्धारो[8] न प्राप्नोसि । उपसमस्येद् द्विपदामिति वचनाद् ऋगन्ते प्रणवो न क्रियते, न चावसानम् । पुनर्द्विपदामिति वचनाद् द्विपदामेव उपसमस्येन्न[9] प्रगाथम् । [10]रथन्तरस्य बृहतः इतरेषामिति[10] । पृष्ठसंबन्धे-

---

१-१. १८ पृष्ठगता १४ टिप्पणी द्रष्टव्या। †द्र. आश्वौ ५, १५, २१।
२. द्र. आश्वौ ७, १०, ८ । ३. द्र. आश्वौ ५, १५,२१।
४. °वमवत्वा ब', °वमत्ताथा मै। ५-५. पादो रमे ब'। ६. प्राप्नोतीति ब'।
७. स ब'। ८. 'थावस्योद्धारे मै। ९. सम° मूको। १०-१०. तरस्ये वहतः इतरस्यामिति ब', द्र. आश्वौ ७, ३, १७; १८; १९।

नादिष्टाः प्रगाथाः पृष्ठानां भवन्ति । तस्माद् यत्रैतानि युज्यन्ते तत्रैतेषां प्रगाथाः प्रयोक्तव्याः । अन्यथा चतुर्विंशे एव स्युः । तस्मात् प्रगाथस्य पृष्ठेन सम्बन्धाद् यस्मिन्नहनि यत् पृष्ठं भवति तस्य प्रगाथः पूर्वः प्रयोक्तव्यः[1] । स नित्यस्य [2]प्रगाथस्य स्थाने[2] भवति । अनन्तरे प्रगाथाश्चतुर्विंशे विश्वजिति च ॥१९॥

[उक्तानां षण्णां प्रगाथानां पृष्ठ्ये षडहे प्रतिदिनमेकैकं शंसनम्]

**पृष्ठ्य एवैकैकमन्वहम् ॥२०॥**

पृष्ठ्ये षळहे एव एकैकं प्रगाथमन्वहम् अहरहः शंसेत् । षट् प्रगाथाः षट्स्वहःसु । अक्रियमाणेष्वपि पृष्ठेषु अन्वहम् एकैकं प्रगाथं शंसेत् । एवशब्दोऽवधारणार्थः । पृष्ठ्ये एव । अक्रियमाणेष्वपि पृष्ठेषु अन्वहमेकैकं प्रगाथं कुर्यात् । पृष्ठ्यादन्यत्र सामसम्बन्धिनो भवन्तीति । नित्यत्वात् पृष्ठानां पृष्ठ्यः षळहो[3] भवति । पृष्ठशब्दश्च षट्सु रथन्तरादिष्वेव[4] वर्तते । तस्मात् तेषां यथास्थाने क्रियायां योनिः शस्यते पृष्ठानामनुग्रहार्थम् । तस्मात् पृष्ठानां नित्यत्वादन्वहं प्रगाथा विधीयन्ते । अन्वहं प्रगाथविधानादेव पृष्ठ्यस्तोमे योनिर्न शस्यते । यदि तत्र वैरूपादीनामभाव एव, सामप्रगाथा अपि न[5] शंस्तव्याः, साम्नाम् अभावात्, तस्मात् पृष्ठ्ये नित्यत्वाद् योन्यः[6] शस्यन्ते प्रगाथाश्च ॥२०॥

[ऐकाहिकस्य सूक्तस्य पुरस्ताच्छंसनीयस्य सूक्तस्य कथनम्]

**'तदिदास' इति च पुरस्तात् सूक्तस्य शंसेत् ॥२१॥**

**तदिदास** (ऋ १०, १२०) इत्येतच्च सूक्तम् ऐकाहिकस्य[7] सूक्तस्य पुरस्ताच्छंसेत् । द्वे सूक्ते भवतः । चकारः समुच्चयार्थः, **तदिदास** (ऋ १०, १२०) इति चान्यानि च । तस्माद् यत्रावापः कर्तव्यो भवति, तत्र तदिदासेभ्योऽन्यानि च यथा मरुत्वतीये उक्तम् । **सूक्तान्येव सूक्तस्थानेषु** (आश्रौ ७, १, ८) इति प्राप्ते पुरस्तादित्याह ॥२१॥

[निष्केवल्ये उक्थपात्रचमसभक्षणयोर्मध्येऽतिग्राह्यग्रहभक्षणम्]

**उक्थपात्रं चमसांश्चान्तराऽतिग्राह्यान् भक्षयन्ति निष्केवल्ये ॥२२॥**

उक्थपात्रम् उक्थस्य पात्रम् उक्थपात्रं चमसांश्चान्तरा मध्ये, अतिग्राह्या नाम ग्रहाः, तान् अतिग्राह्यान् भक्षयन्ति ऋत्विजः निष्केवल्ये । **उक्थपात्रमग्रे भक्षयेत्** (आश्रौ ५, ६, २६) **ततश्चमसांश्चमसिनः** (आश्रौ ५, ६, २७) इति

१. प्रयोक्तः ब[1] ।　२-२ प्रगाथस्थाने मूको ।　३. पृष्ठ्यः मूको ।
४. रथन्तरेष्वेव मूको ।　५. नास्ति ब[1] ।　६. योनी : मूको ।
७. द्र. आश्रौ ३, १५, २२ ।

वचनादतिग्राह्यमप्राप्तं[1] विधीयते । चतुर्विंशे उक्तो विधिरन्यत्र न प्राप्नोति । निष्केवल्यग्रहणात् सर्वत्र निष्केवल्येषु भवति । विकृतौ चोदितो विधि: सर्वत्र विकृतावेव । चतुर्विंशादिष्वेव । [2]प्रकृतावुक्तं सर्वत्र[2] भवति प्रकृतौ विकृतौ च । षोळशिपात्रेणातिदेशाद् यथैव षोळशिपात्रं प्रकृतिविकृतिषु[3] वक्ष्यते, एवमेतत् । व्याख्याता[4] अतिग्राह्या: सर्वत्र निष्केवल्ये भक्ष्यन्ते । [5]एवं चेत् प्रकृतावेव[5] । [6]तस्मान्निष्केवल्येनोक्तोऽतिग्राह्यो[7] भवति[6] । षोळशिपात्रभक्षविधानाद् अनन्तरं विकृतौ चतुर्विंशेऽतिग्राह्यभक्षविधानं वक्ष्यति[8] भक्षयन्तीति ऋत्विजश्चमसिनस्तस्माद् यत्र ऋत्विजो भक्षयन्ति, तत्र चमसिनश्च[10] भक्षयन्ति ॥२२॥

[उक्तस्य भक्षमन्त्रजपस्य नित्यत्वेन विधानम्]

**नित्यो भक्षजप: ॥२३॥**

नित्यो य: सर्वसोमेषु भक्षमन्त्र उक्त: **वाग् देवी** (आश्रौ ५, ६, २) इति स भवति । अतिग्राह्यभक्ष: षोळशिपात्रेणातिदेशात् षोळशिपात्रेऽयमेव भक्ष: समाम्नात:[11] तस्मादाह नित्यो भक्षजप इति ॥२३॥

[षोडशिपात्रभक्षणनियमेन भक्षिणोऽतिग्राह्यभक्षणम्]

**षोळशिपात्रेण भक्षिण: ॥२४॥**

कथं भक्षिषु[12] उपदिष्टेषु भक्षमन्त्र: प्राप्नोति । भक्षिषु[13] उपदिष्टेषु भक्षिणश्च भक्षविधानं च सर्वमुपदिष्टं दर्शयति । घर्मे[14] यो भक्षविधिर्दीक्षितानामदीक्षितानां च, स षोळशिपात्रेण । य: षोळशिपात्रे सोऽतिग्राह्येषु । तस्मादेकैकमत्र[15] तेन न्यायेन भक्षयन्ति । किन्तु पात्रे वषट्कर्ता प्रथमं भक्षयति, ततोऽध्वर्यु:, ततो गृहपति:, ततो मुख्यानुक्रमेण इतरे, पुन: अन्ततो गृहपति: गृहपतेस्तृतीयोत्तमौ भक्षौ (आश्रौ ४, ७, ४) इति वचनात् । एकाहेषु तु होता प्रथम:, ततोऽध्वर्यु:, ततो मुख्यानुक्रमेणेतरे, अन्ततो यजमान इति । एवमितरे वषट्कारप्रदाना[16] न भवन्ति । [17]दर्विहोमा एते[17] । तस्मादेतेष्वदीक्षिता यजमानादिमुख्या अनुक्रमेण भक्षयन्ति । [18]घर्मे च[18] भक्षिणो मैत्रावरुणस्त्रयच्छन्दोगा:[19] । सत्रे तु गृहपतिप्रवरानुक्रमेण सर्वे भक्षयन्ति । प्रतिवषट्कारं

---

१. °ग्राह्यं प्राप्तं मूको । २. भवतीत्युक्ते मूको । सर्वं तु ब[1] । ३. प्रकृतिविकृतौ च मै ।
४-४. ख्याता ब[1] । ५-५. चेष्यकृतावेव ब[1] । ६. कस्मात् मूको ।
७. °ग्राह्या (°ह्य मै) मूको । ८. भक्षयति मै । ९. द्र. आश्रौ ७,३,२४ ।
१०. नास्ति मूको । ११. समाप्त: मै । १२. भक्षेयु ब[1] ।
१३. भक्षिग (°ष मै) मूको । १४. द्र. आश्रौ ४,७,४ तत्रत्यदेवत्रातभाष्यं च ।
१५. °कमित्यत्र मै । १६. °प्रधाना मूको । १७-१७. °होममेते ब[1]; दर्वीहोमोप्यते मै । १८-१८. घर्मेण मै । १९. °रुणस्त्रायश्छन्दोगा: ब[1]; °रुणस्त्वच्छन्दोगा : मै ।

च भक्षो न क्रियते दर्विहोमत्वादिति[१] । अथवा दर्विहोमा अप्येते सन्तो वषट्कारप्रदाना एव होमस्य तन्निमित्तत्वात् । वषट्कारनिमित्तो[२] होमो[३] वषट्कारप्रदाने[४], इह[५] न । पोळशिपात्रेणाऽतिदेशो[६] वषट्कारस्य भक्षस्य च मध्ये चोदितः । उक्थ्यपात्रं चमसांश्चान्तरा[७] दर्विहोमे सति भक्षान्ते[८] भक्षः स्यात् । होमानुक्रमेण दर्विहोमा अपि[९] वषट्कारप्रदानाः । एवं [१०]पञ्चदले चमस[१०]तृतीयस्य[१०] । तस्माद्वषट्कर्तैव[११] पूर्वमतिग्राह्यं भक्षयति, ततोऽध्वर्युस्ततो दीक्षिताः । पोळशिपात्रेऽन्यः । तेन[१२] अदीक्षिता अपि तेनैव न्यायेन । न हि तेषामतिदेशः । प्रतिवषट्कारं च भक्षो यथा पोळशिपात्रे होत्रकाणाम् ॥२४॥

॥ इति सप्तमे तृतीयः खण्डः ॥

---

१. दर्वीहो° मै । २. °रे नि° ब[१] । ३. होम मूको ।
४. °रपदनि ब[१] । ५, ह मूको । ६. णातिशेष मूको ।
७. °सांश्चोत्तरा ब[१] । ८. भिक्षान्ते मै । ९. अति ब[१] ।
१०-१०. चलं चमसतृ° ब[१] । ११. °तैव मूको । १२. येन मूको ।

# अथ सप्तमेऽध्याये चतुर्थः खण्डः

[होत्रकाणां शस्त्रकथनोपक्रमः]

व्याख्यातं निष्केवल्यम्, इदानीं होत्रकाणां शस्त्राणि वक्ष्यन्ते ।

**होत्रकाणाम्** ॥१॥

होत्रकाणामित्यधिकारः । यदित ऊर्ध्वं वक्ष्यते तद्धोत्रकाणां विधानं' वेदितव्यम् ॥१॥

[मैत्रावरुणस्य स्तोत्रियानुरूपकथनम्]

**'कया नश्चित्र आ भुवत्', 'कया त्वं न ऊत्या', 'मा चिदन्यद् वि शंसत', 'यच्चिद्धि त्वा जना इमे' इति स्तोत्रियानुरूपा मैत्रावरुणस्य** ॥२॥

**कया नः** (ऋ ४, ३१, १-३), **कया त्वं नः** (ऋ ८, ९३, १९-२१), **मा चिदन्यद्** (ऋ ८, १, १-३), **यच्चिद्धि त्वा** (ऋ ८, १, ३-५) इति स्तोत्रियानुरूपा मैत्रावरुणस्य । पादग्रहणे स्तोत्रियानुरूपग्रहणं तृचप्राप्त्यर्थम् । होत्रकाधिकारान्मैत्रावरुणग्रहणम् । एकस्मिन्नहनि[1] बहवः स्तोत्रियानुरूपा न संभवन्ति, तस्मात् सर्वेस्वहस्सु भवन्ति । छन्दोगवशाद् [2]विनियुज्यन्ते, न स्वप्रत्ययत्वात्[2] स्तोत्रियस्य । छन्दोगप्रत्ययत्वाद् वक्तव्यानि पञ्चविंशतिरहानि । तानि सर्वक्रतूनां प्रकृतिः **सिद्धैरहोभिरह्नामतिदेशः** (आश्रौ ९, १, २) इति वचनात् । तस्मात् तानि प्रत्यक्षं कल्प्यन्ते[3], स्तोत्रियानुरूपा आवापाश्च । ऐकाहिकाः स्तोत्रियानुरूपाः पुनः समाम्नाताः[4] **यद्यनुरूपे स्तुवीरन् स्तोत्रियानुरूपः** (आश्रौ (७, ४, ५) इत्येतस्य विधेः प्राप्त्यर्थम् । विकृतानां विधिर्नित्येषु, तस्मात् प्रकृतस्याऽऽवापस्य नित्यत्वाद् एकं प्रतीकं स्तोत्रियो द्वितीयमनुरूपः । एवं द्वे द्वे प्रतीके स्तोत्रियानुरूपौ भवतः, यथैकाहिकेषु । तत्र **कया नः** (ऋ ४, ३१, १-३), **कया त्वं नः** (ऋ ८, ९३, १९-२१) इत्येतौ सर्वत्र भवतः । दशमे तु [5]**"उदु त्यद्दर्शतम्'** (ऋ ७, ६६, १४), **'उदु त्ये मधुमत्तमाः'** (ऋ ८, ३, १५) **इति**[5] **ब्राह्मणाच्छंसिनः** (आश्रौ ७, ४, ३) । विश्वजिति तु वचनात् शाक्वरं भवति[6] ॥२॥

---

१. एतस्मिं ब्' । २-२. विनिमुच्यते ब' । ३. कल्पन्ते मूको ।
४. आम्नाताः मैं । ५-५. उदु मधु इत्यद्दर्शतं ब'; तदुत्ये एषूदित्यदर्शितं मै ।
६. द्र. आश्रौ ८, ७, ५ ।

[ब्राह्मणाच्छंसिनः स्तोत्रियानुरूपाणां कथनम्]

'तं वो दस्ममृतीषहं', 'तत्त्वा यामि सुवीर्यम्', 'अभि प्र वः सुराधसं', 'प्र सुश्रुतं सुराधसं', 'वयं घ त्वा सुतावन्तः', 'क ईं वेद सुते सचा', 'विश्वाः पृतना अभिभूतरं नरं', 'तमिन्द्रं जोहवीमि', 'या इन्द्र भुज आ भर' इत्येका द्वे च; 'इन्द्रो मदाय वावृधे', 'मदे मदे हि नो ददिः', 'सुरूपकृत्नुमूतये', 'शुष्मिन्तमं न ऊतये', 'श्रायन्त इव सूर्यं', 'बण्महाँ असि सूर्य', 'उदु त्यद्दर्शतं वपुः,' 'उदु त्ये मधुमत्तमाः', 'त्वमिन्द्र प्र तूर्तिषु', 'त्वामिन्द्र यशा असि, 'इन्द्र क्रतुं न आ भर', 'इन्द्र ज्येष्ठं न आ भर', 'आ त्वा सहस्रमा शतं', 'मम त्वा सूर उदिते' इति ब्राह्मणाच्छंसिनः ॥३॥

तं वो दस्मम् (ऋ ८,८८,१-३), तत्त्वा यामि (ऋ ८,३,६-११) इति षळहयोः प्रथमेऽहनि; अभि प्र वः सुराधसम् (८, ४९, १-३), प्र सुश्रुतं[1] सुराधसम् (ऋ ८ ५०, १-३) इति द्वितीये; [2]वयं घ त्वा (ऋ ८, ३३, १-३), क ईं वेद (ऋ ८, ३३, ७) इति पृष्ठ्यस्य तृतीये सप्तमे च; विश्वाः पृतनाः (ऋ ८, ९७, १०-१२) तमिन्द्रम् (ऋ ८, ९७, १३) इति चतुर्थे; या इन्द्र (ऋ ८, ९७, १-२) इत्येते द्वे प्रतीके। एका द्वे च ऋचौ आनन्तर्येण। तमिन्द्रम् (ऋ ८, ९७, १३) इत्येका, या इन्द्र (ऋ८, ९७, १-२) इति द्वे समाहार्योऽनुरूपः; इन्द्रो मदाय (ऋ १, ८१, १-३), मदे मदे (ऋ १, ८१, ७-९) इति पञ्चमेऽहनि; सुरूपकृत्नुम् (ऋ १, ४, १-३), शुष्मिन्तमं नः (ऋ ३, ३७, ८-१०) इति षष्ठेऽहनि; श्रायन्त इव (ऋ ८, ९९, ३-५), बण्महाँ असि (ऋ ८, १०१, ११-१३) इति नवमेऽहनि; उदु त्यद्दर्शत वपुः (ऋ ७, ६६, १४-१६), उदु त्ये मधुमत्तमाः (ऋ ८, ३, १५-१७) इति दशमेऽहनि; त्वमिन्द्र प्रतूर्तिषु (ऋ ८,९९, ५-७), त्वमिन्द्र यशा असि (ऋ ८, ९०, ५-७) इत्यभिप्लवस्य पञ्चमेऽहनि; इन्द्र क्रतुं न आ भर (ऋ ७,३२, २६-२८), इन्द्र ज्येष्ठं न आ भर (ऋ ६, ४६, ५-७) इति विषुवत्यत्तरे च पक्षसि; आ त्वा सहस्रम् (ऋ८, १, २४-२६), मम त्वा (ऋ ८, १, २९-३१) इत्यभिप्लवस्य तृतीयेऽहनि, इत्येते स्तोत्रियानुरूपा ब्राह्मणाच्छंसिन आम्नाताः। मैत्रावरुणाधिकाराद् ब्राह्मणाच्छंसिन इत्युच्यते ॥३॥

[अच्छावाकस्य स्तोत्रियानुरूपाणां कथनम्]

'तरोभिर्वो विदद्वसुं', 'तरणिरित् सिषासति', 'त्वामिदा ह्यो नरो', 'वयमेनमिदा ह्यो', 'यो राजा चर्षणीनां', 'यः सत्राहा विचर्षणिः', 'स्वादोरित्था विषूवतः', 'इत्था हि सोम इन्मदे', 'उभे यदिन्द्र रोदसी', 'अव यस्त्वं शतक्रतो', 'नकिष्टं कर्मणा नशत्'[3], 'न त्वा बृहन्तो अद्रयः,'[4] 'उभयं शृणवच्च नः'[5], 'आ वृषस्व पुरूवसो', 'कदा चन स्तरीरसि', 'कदा चन प्रयुच्छसि', 'यत इन्द्र

१. नास्ति मूको। २-२ नास्ति मूको। ३. द्र. ऋ ८, ७०, ३-६।
४. द्र. ऋ ८,८८, ३-५। ५. द्र. ८,६१, १-३।

भयामहे', 'यथा गौरो अपाकृतं', 'यदिन्द्र प्रागपागुदग्', 'यथा गौरो अपाकृतम्' इत्यच्छावाकस्य ॥४॥

**तरोभिर्वः** (ऋ ८, ६६, १-३), **तरणिरित् सिषासति** (ऋ ७, ३२, २०-२२) इति षळहयोः प्रथमेऽहनि; **त्वामिदा** (ऋ ८, ९९,१-३), **वयमेनम्** (ऋ ८, ६६, ७-९) इति पृष्ठ्यस्य द्वितीयेऽहनि; **यो राजा** (ऋ ८, ७०, १-३), **यः सत्राहा** (ऋ६, ४६,३-५) इत्यभिप्लवस्य चतुर्थे ब्राह्मणाच्छंसिनः। **स्वादोरित्था** (ऋ १,८४,१०-१२), **इत्था हि** (ऋ १,८०, १-३) इति पृष्ठ्यस्य पञ्चमे; **उभे यदिन्द्र** (ऋ १०, १३४, १-३), **अव यत्त्वम्** (ऋ १०,१३४, ४-६) इति पृष्ठ्यस्यैव षष्ठेऽहनि । तत्र **उभे यदिन्द्र, दीर्घं ह्यङ्कुशम्** (ऋ १०, १३४, १,६) इति द्वितीयां कुर्वन्ति छन्दोगाः । तथा सति **अव त्या बृहतीरिषः** (ऋ १०, १३-४, ३-५) इति तिस्रोऽनुरूपः । **यद्यनुरूपे स्तुवीरन् स्तोत्रियाऽनुरूपः** (आश्रौ ७, ४, ५) इति वचनात् । आत्मीयस्यान्यथाभावो नेष्यते वचनं विना, तस्मादुक्तम् **उत नो धियो गोअग्राः** (ऋ १, ९०, ५-७) इत्यनुरूपस्तोत्रमिति[1] । **आ वृषस्व** (ऋ ८,६१,३-५) इत्यष्टमेऽहनि, **कदा चन स्तरीरसि** (ऋ ८,५१, ७-९), **कदा चन प्र युच्छसि** ( ऋ८, ५२, ७-९) इति नवमेऽहनि । [2]**यत इन्द्र**[2] (ऋ८, ६१, १३-१५), **यथा गौरः** (ऋ ८, ४, ३-५) इति वा [3]नवमेऽहन्येव[3] । **यदिन्द्र प्राग्** (ऋ ८, ४, १-३), **यथा गौरः** इत्यष्टमेऽहनि ब्राह्मणाच्छंसिनश्छन्दोगवचनात् । इत्यच्छावाकस्य इत्येते स्तोत्रियानुरूपाः अच्छावाकस्य । ब्राह्मणाच्छंसिनोऽधिकारादच्छावाकग्रहणम् ॥४॥

[अनुरूपस्य स्तोत्रियत्वेन ग्रहणे स्तोत्रियस्यानुरूपत्वम्]

**स्तोत्रियानुरूपाणां, यद्यनुरूपे स्तुवीरन् स्तोत्रियानुरूपः**[4] ॥५॥

व्याख्याताःस्तोत्रियानुरूपाः । तेषां स्तोत्रियानुरूपाणां यदि छन्दोगा अनुरूपे स्तुवीरन्, स्तोत्रियोऽनुरूपः कर्तव्यः । यथा पृष्ठ्यस्य तृतीयेऽहनि छन्दोगाः **तरणिरित्** (ऋ ७,३२,२०) इति स्तुवते । **तरोभिः** (ऋ ८,६६, १) इत्यनुरूपः । तथा दशमेऽहनि **उदु त्ये मधुमत्तमाः** (ऋ ८, ३, १५) इति ब्राह्मणाच्छंसिनः स्तुवते । **उदु त्यद् दर्शतम्** (ऋ ७, ६६, १४) इत्यनुरूपः । स्तोत्रियाधिकारे पुनः स्तोत्रियग्रहणादनधिकृतानामपि[5] प्राप्तिः । यथा पृष्ठ्यस्य चतुर्थेऽहनि [6]अच्छावाकः । उक्थ्ये[6] **इममिन्द्र** (ऋ १, ८४, ४) इति स्तुवते। **असावि** (ऋ १ ८४, १) इत्यनुरूपः । तथा व्रात्यस्तोमेषु **देवो वः** (ऋ ७, १६,११) इति यज्ञायज्ञीयेन स्तुवते । **यज्ञायज्ञा वः** (ऋ ६, ४८, १) इत्यनुरूपः । लाक्षणिक-

---

१. द्र. आश्रौ ९, ११, १८ । इतः परं **नकिष्टम्** इत्यादि **उभयं शृणवच्च न** इत्यन्तस्य सूत्रभागस्य व्याख्या लुप्ता प्रतीयते । २-२ **त्रिय ब**', **मत मै** । ३-३ **नियमे** हन्वेव मूको । ४. स्तोत्रियः इति निर्णयसागरजीवानन्दयोः संमतः पाठः । ५. °दसधिकृ° ब'; °दधिकृ° मै । ६-६. **वाको द्दे मै** ।

प्रतिषेधार्थमिदमुच्यते, कथमाम्नायरूपं लक्षणं भवति । स्तोत्रियस्यानुरूप[1] आम्नातः । अनुरूपस्य त्वनुरूप आम्नातो[2] न विद्यते । तस्य लाक्षणिकोऽनुरूपः प्राप्तस्तस्मादिदमुच्यते—स्तोत्रियाऽनुरूप[3] इति । आम्नायस्य[4] नित्यार्थत्वाद् वचनमन्तरेण स्तोत्रियानुरूपो न प्राप्नोति, [5]तत्रानुरूपः स्तोत्रियः[5] तस्माद् वचनं विधीयते ॥५॥

[स्तोत्रियानुरूपानन्तरं कद्वत्प्रगाथानां शंसनम्]

**ऊर्ध्वं स्तोत्रियानुरूपेभ्यः 'कस्तमिन्द्र त्वा वसुम्,' कन्नव्यो अतसीनां', 'कदू न्वस्याकृतम्' इति कद्वन्तः प्रगाथाः ॥६॥**

ऊर्ध्वं स्तोत्रियानुरूपेभ्यः **कस्तमिन्द्र त्वा वसुम्** (ऋ ७, ३२, १४-१५), **कन्नव्यो अतसीनाम्** (ऋ ८, ३, १३-१४), कदू न्वस्याकृतम् (ऋ ८, ६६, ९-१०) इत्येते कद्वन्तो नाम प्रगाथा नित्यानां स्थाने भवन्ति । ऊर्ध्वमित्यनुक्रमार्थम् । ऊर्ध्वमनुरूपेभ्य इति सिद्धे स्तोत्रियग्रहणात् स्तोत्रियानुरूपभूतादपि प्राप्त्यर्थम्[6] । अन्यथा ये[7] आम्नाता अनुरूपास्तेभ्य एवोर्ध्वं प्रगाथाः स्युः । अनुरूपेभ्य इति बहुवचनात् त्रयाणामपीदं संविधानम् । तस्मादेकैकः प्रगाथ एकैकस्यैव भवति । कद्वन्तः इति संज्ञा, न कद्वन्तः (आश्रौ ८, ४, १५) इत्युक्ते एते प्रत्येतव्याः । प्रगाथग्रहणं वचनप्राप्त्यर्थम् ॥६॥

[कद्वत्प्रगाथानन्तरमारम्भणीयानां शंसनम्]

**'अप प्राच इन्द्र विश्वाँ अमित्रान्', 'ब्रह्मणा ते ब्रह्मयुजा युनज्मि', 'उरुं नो लोकमनु नेषि विद्वान्' इति कद्वद्भ्य आरम्भणीयाः ॥७॥**

**अप प्राचः** (ऋ १०, १३१, १), **ब्रह्मणा ते** (ऋ ३, ३५, ४), **उरुं नः** (ऋ ६, ४७, ८) इत्येता कद्वद्भ्यः प्रगाथेभ्य ऊर्ध्वम् आरम्भणीयसंज्ञा[8] ऋचो वेदितव्याः ॥७॥

[आरम्भणीयानन्तरमहीनसूक्तयोः शंसनम्]

**ऊर्ध्वमारम्भणीयाभ्यः 'सद्यो ह जातः' इत्यहरहःशस्यं मैत्रावरुणः, 'अस्मा इदु प्र तवसे', 'शासद् वह्निः' इतीतरावहीनसूक्ते ॥८॥**

अनुक्रमेणैकैकस्यैकैकोऽनुरूपेभ्य ऊर्ध्वं प्राप्तोऽधिकारः[9] । तस्माद् कद्वद्भ्य ऊर्ध्वमिति प्राप्ते ऊर्ध्वमारम्भणीयाभ्य इत्युच्यते । **सद्यो ह जातः** (ऋ ३, ४८, १) इत्येतत् प्राप्तावपि[10] पुनरुच्यतेऽहरहःशस्यसंज्ञार्थम् ।

१. स्तोत्रियस्यानुरूपस्यानुरूप ब[1] । २. आम्नाति ब[1] ।
३. °योऽनु° ब[1] । ४. °यस्य च ब[1] । ५-५. °रूपात्तो° ब[1] ।
६. प्राप्त्यर्थः मूको । ७. नास्ति मूको । ८. धाय्या स्वसंज्ञा मै ।
९. प्राप्ताधिकारात् (°रा ब[1]) मूको । १०. द्र. आश्रौ ५,१६, १ ।

अहरहःशस्यमिति[1] संज्ञा **अहरहःशस्यानि** (आश्वौ ८, ४, १५) इत्युक्त एतत् प्रत्येतव्यम् । मैत्रावरुणग्रहणं होत्रकाणामधिकारात् । ऊर्ध्वमारम्भणीयाभ्यः **अस्मा इद प्र तवसे** (ऋ १, ६१, १), **शासद् वह्निः** (ऋ ३, ३१, १) इत्येते सूक्ते अहीनसूक्ते[2] आनन्तर्येण भवतः । **ऐकाहिकं तावदुद्धरेद्** (आश्वौ ७, १, २२) इति वचनाद् **इन्द्र पूर्भिद्** (ऋ ३, ३४,१) इत्येतस्य स्थाने **अस्मा इदु प्र तवसे** इति, **भूय इद्** (ऋ ६, ३०, १) इत्येतस्य स्थाने[3] **शासद्** (ऋ ३, ३१,१) इति । मैत्रावरुणाधिकारादितरावित्याह । अहीनसूक्तमिति संज्ञा **अहीनसूक्तानि** (आश्वौ ७, ४, ११) इत्युक्ते एतानि प्रत्येतव्यानि ॥८॥

[द्वितीयस्याहीनसूक्तस्याहरहःशंसनीययोश्च कथनम्]

**'आ सत्यो यातु' इत्यहीनसूक्तं द्वितीयं मैत्रावरुणः; 'उदु ब्रह्माणि', 'अभि तष्टेव' इतीतरावहरहःशस्ये ॥९॥**

**आ सत्यो यातु** (ऋ ४, १६, १) इति[4] एतदहीनसूक्तं[5] द्वितीयं मैत्रावरुणः शंसति । ऊर्ध्वमारम्भणीयाभ्य इत्यधिकारादारम्भणीयाया अनन्तरम् अहीन-सूक्तं प्राप्तं तस्मादाह—द्वितीयमिति । वचनादहरहःशस्यादनन्तरं भवति । **एवा त्वामिन्द्र** (ऋ ४, १९, १) इत्येतस्य स्थाने[6] **ऐकाहिकं तावदुद्धरेद्** (आश्वौ ७,१,२२) इति वचनादहरहःशस्यसंज्ञा प्राप्ता, तस्मादाह—अहीनसूक्तमिति । इतरयोरधिकारान्मैत्रावरुणग्रहणम् । **उदु ब्रह्माणि** (ऋ ७, २३, १), **अभि तष्टेव** (ऋ ३, ३८, १) इति एते अहरहःशस्यसंज्ञे द्वितीये अहीनसूक्तयोरनन्तरे भवतः । मैत्रावरुणादितरौ होत्रकौ शंसतः । द्वितीयम्[7] इत्यधिकारादहीन-सूक्तयोरनन्तरे भवतः । **उदु ब्रह्माणि** इति प्राप्तमपि[8] पुनरुच्यते [9]अहरहःशस्यसंज्ञार्थम् । **इमामू षु** (ऋ ३, ३६) इत्येतस्य स्थाने अभितष्टीयं† भवति । **ऐकाहिकं तावदुद्धरेत्** इति वचनाद् अहरहः[9] । अहरहःशस्यानीत्युक्त एतानि प्रत्येतव्यानि । मैत्रावरुणाधिकारादितरावित्याह । अहीनसूक्तानामहरहः-शस्यानां च विपर्यासः परिधानीयार्थः । **ऐकाहिकाभिरेव मैत्रावरुणः परिदधाति अहीनाभिरच्छावाकः...उभयीभिर्ब्राह्मणाच्छंसी** (ऐब्रा ६, ८) इति ब्राह्मणम् ॥९॥

[अहरहःशस्यानां सूक्तानामुत्तमसूक्तनिर्देशः]

**'नूनं सा ते' इत्यन्तमुत्तमम् ॥१०॥**

---

१. °शम्यंति ब', °शस्यति मै । २. °सूक्तेन मूको । ३. द्र. आश्वौ ५, १६, १ । ४. इति वरुणः ब' । ५. एतेन दहानसूक्तसंज्ञं मै । ६. द्र. आश्वौ ५, १६, १ । ७. द्वितीये मूको । ८. द्र. आश्वौ ५,१६,२ । ९-९. नास्ति ब' । †ऋ ३, ३८ ।

अहरहःशस्यानामुत्तमं सूक्तम् अभि तष्टेव (ऋ ३,३८) इत्येतत् नूनं सा ते (ऋ २, ११, २१) इत्यन्तं प्रयोक्तव्यम्। इयमृग् अन्तो यस्य तत्[1] सूक्तमित्युक्तम्[2]। इत्यन्तम् इति वचनाद् अन्त्यायाः स्थाने भवति, अधिका वा अन्त्याया एतद्[3] भवति। तद्वै दशर्चम् (ऐब्रा ६, २०) इति ऋचां प्रसंख्यानं श्रूयते। तत्र अन्त्यायाः[4] स्थाने भवति। यथा प्रणयने[5] ता एता अष्टावन्वाह रूपसमृद्धाः (ऐब्रा १, १३) इति ऋचां प्रसंख्यानाद् इमं महे विदथ्याय शूषम् (ऋ ३, ५४, १) इत्याद्यायाः स्थाने भवति। तथाऽग्नीषोमप्रणयने ता एताः सप्तदशान्वाह (ऐब्रा १, ३०) इत्यृचां प्रसंख्यानाद् उत्तरया[6] वा क्षेमाचारे (आश्रौ ४, १०, ५) इति परिधानीयायाः स्थाने भवति। एवमिहापि तद्वै दशर्चम् (ऐब्रा ६, २०) इत्यृचां प्रसंख्यानात् शुनंहुवीयास्थाने[7] नूनंसातीया[8] भवति। यत्र ऋचां प्रसंख्यानं न विद्यते, तत्र विधास्यमानाऽधिका भवति। यथा[9] वैश्वदेवस्य परिधानीया[10] सूक्तमुखीया 'त्रातारमिन्द्रमवितारम्' (ऋ ६, ४७, ११) इति तार्क्ष्यादिः (आश्रौ ६, ८, ५)। एवं महान्यायदर्शनात् शुनंहुवीयायाः स्थाने नूनंसातीया भवति। सकृदिन्द्रं निराह (ऐब्रा ६, २०) इति च कृतार्थं भवति। "न तु" वैश्वामित्रमिति भूयस्त्वमपेक्षते, यथा गार्त्समदं प्रउगम् (आश्रौ ७, ६, ३) इति ॥१०॥

[षडहस्तोत्रियाणामावापे सत्यहीनसूक्तानां शंसनम्]

अहीनसूक्तानि षळहस्तोत्रियानावपत्सु ॥११॥

अहीनसूक्तानि षळस्तोत्रियानावपत्सु क्रतुषु माध्यन्दिने यथा तेऽहीनसूक्तानि शंसन्ति चतुर्विशमहाव्रताभिजिद्विश्वजिद्विषुवत्सु, सर्वस्तोमसर्वपृष्ठेषु च (आश्रौ ७, २, १०-११)। त एते प्रातःसवने षळहस्तोत्रियाञ्छस्त्वा माध्यन्दिनेऽहीनसूक्तानि शंसन्ति (ऐब्रा ६, १८) इति ब्राह्मणम्। अहीनसूक्तेभ्योऽन्यत् सर्वं सर्वत्र प्राप्तम् परिभाषावचनात् तानि सर्वाणि सर्वत्रान्यत्राह्न उत्तमात् (आश्रौ ७, १, १६) इति। स्तोत्रियानुरूपाश्च छन्दोगवशादेव। सर्वपृष्ठेषु चैतानि नित्यानि यथास्थाने ॥११॥

[तृतीयसवने सावित्रादिशस्त्रकथनम्]

'उदु ष्य देवः सविता हिरण्यया' इति तिस्रः; 'ते हि द्यावापृथिवी', 'यज्ञस्य वो रथ्यम्' इति वैश्वदेवम् ॥१२॥

---

१. नास्ति मूको। २. सूक्तमिवत्युक्तम् ब[1]। ३. स्थाने (स्था मै) एतद् मूको। ४. द्र. शुनं हुवेम ऋ ३, ३८, १०। ५. द्र. ऐब्रा १, २८; आश्री २, १७, ७। ६. द्र. ऋ ८, ४२, २। ७. ऋ द्र. ३, ३८, १०। ८. द्र. ऋ २, ११, २१। ९. तथा ब[1]। १०. द्र. आश्रौ ५, १८, १२; ऐब्रा ३, ३१; ऋ १, ८९, १०। ११-११. तदु मै।

व्याख्यातं माध्यन्दिनं सवनम्। इदानीं तृतीयसवनं वक्ष्यते[1]। ध्रुवाः शस्त्राणामातानाः, सूक्तान्येव सूक्तस्थानेषु (आश्वौ ७, १, ७-८)। उदु ष्य देवः सविता (ऋ ६, ७१, १-३) इति तिस्र ऋचः सावित्रं सूक्तम्। ते हि द्यावापृथिवी (ऋ १, १६०) इति सूक्तं द्यावापृथिवीयम्। ऐकाहिकमार्भवम्। यज्ञस्य वः (ऋ १०, ९२) इति वैश्वदेवं सूक्तम्। पञ्चजनीया परिधानीया ॥१२॥

[आग्निमारुतशस्त्रकथनम्]

**'पृक्षस्य वृष्णः', 'वृष्णे शर्धाय', 'यज्ञेन वर्धत' इत्याग्निमारुतम् ॥१३॥**

**पृक्षस्य वृष्णः** (ऋ ६, ८) इति वैश्वानरीयम्। **वृष्णे शर्धाय** (ऋ १, ६४) इति मारुतम्। **यज्ञेन वर्धत** (ऋ २, २) इति जातवेदस्यम्[2]। जराबोधीयं 'चेदम् अग्निष्टोमसाम'[3]। अग्ने युक्ष्वा हि (ऋ ६, १६, ४३-४८) इति स्तोत्रियानुरूपौ। यज्ञायज्ञा वः (ऋ ६, ४८, १) इति च सानुरूपा योनिः। अन्यदैकाहिकम्। इत्याग्निमारुतम् ॥१३॥

[चतुर्विंशस्याह्नोऽग्निष्टोमसंस्थाकत्वम्]

**अग्निष्टोम इदमहः ॥१४॥**

इदं चतुर्विंशमहरग्निष्टोमसंस्थं भवति। इदमहर् इति चतुर्विंशमहरधिक्रियते सर्वक्रतूनामधिकारात्। अहीनवसूतानि षळहस्तोत्रियानावपत्सु (आश्वौ ७, ४, ११) इति अन्येषामह्नामधिकाराद् वैश्वदेवाग्निमारुते चतुर्विंशेऽहनि [4]न प्राप्नुतः[4] तस्मादिदमहरिति पुनरधिक्रियते ॥१४॥

[एतस्याह्न उक्थ्यसंस्थाकत्वविकल्पः]

**उक्थ्यो वा ॥ १५॥**

इदमहरुउक्थ्यो वोक्थ्यसंस्थो वा भवति। अग्निष्टोमो वा। एतेनाह्ना (आश्वौ ७,१,३) इति [5]चतुःसंस्थे प्राप्ते[5] नियमः। तस्मादुक्थ्य एव स्यात् (ऐब्रा ४, १२) इति ब्राह्मणम्। अभिप्लवपृष्ठ्याहानि प्रायणीयचतुर्विंशे उपेत्य चतुरभिप्लवान् पृष्ठ्यपञ्चमान्पञ्चमासानुपयन्ति (आश्वौ ११,७,१-२) इति वक्ष्यन्ते। तेनव नुक्रमेण अहानि वक्ष्यन्ते ॥ १५ ॥

॥ इति सप्तमे चतुर्थः खण्डः ॥

---

१. चस्रते ब[1]। २. नास्ति मूको। ३. °दस्याम् मूको। ४-४. वैद्यग्नि° ब[1]। ५-५. नाप्नुवतः मूको। ६-६. °संस्थाप्राप्ते ब[1]; °संस्थाप्राप्ते मै।

# अथ सप्तमेऽध्याये पञ्चमः खण्डः

[षण्णामभिप्लवपृष्ठ्याह्नानामुपक्रमः]

**अभिप्लवपृष्ठ्याह्नानि ॥ १ ॥**

व्याख्यातं चतुर्विंशमहः । इदानीं षळह्नानि वक्ष्यन्ते । 'अभिप्लवश्च पृष्ठ्यश्च' अभिप्लवपृष्ठ्यौ, अभिप्लवपृष्ठ्ययोरहानि अभिप्लवपृष्ठ्याह्नानि, इत्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद् वक्ष्यामस्तदभिप्लवपृष्ठ्याह्नानां विधानं वेदितव्यम् । संज्ञा चेयम् । **चतुरभिप्लवान् पृष्ठ्यपञ्चमान्** (आश्रौ ११, ७, २) इत्युक्त एते प्रत्येतव्याः ॥ १ ॥

[अभिप्लवपृष्ठ्ययोः प्रथमतृतीयपञ्चमानामह्नां रथन्तरपृष्ठत्वम्]

**रथन्तरपृष्ठान्ययुजानि ॥२॥**

अभिप्लवे पृष्ठ्ये चायुजानि[१] विषमाणि चाहानि प्रथमतृतीयपञ्चमानि तानि **रथन्तरपृष्ठानि** । रथन्तरं साम तेषु पृष्ठं भवति निष्केवल्ये । **एतेनाह्ना सुत्यानि** (आश्रौ ७,१,३) इति, । '**बृहत्पृष्ठं, रथन्तरं वा** (आश्रौ ७,३,९-१०) इति' विकल्पे प्राप्ते रथन्तरं नियम्यते ॥ २ ॥

[द्वितीयचतुर्थषष्ठानामह्नां बृहत्पृष्ठत्वम्]

**बृहत्पृष्ठानीतराणि ॥ ३ ॥**

अयुजेभ्यो[४] यानीतराणि युजानि समानि द्वितीयचतुर्थषष्ठानि तानि[५] बृहत्पृष्ठानि[६] । बृहत्साम पृष्ठं भवति तेष्वहःसु । **एतेन** (आश्रौ ७, १, ३) इति विकल्पे प्राप्ते बृहन्नियम्यते[७] ॥ ३॥

[तृतीयादिष्वहःसु क्रमशः पृष्ठ्यस्य द्वितीयानां चतुःपृष्ठसाम्नां कथनम्]

**तृतीयादिषु पृष्ठ्यस्यान्वहं द्वितीयानि वैरूपवैराजशाक्वररैवतानि ॥ ४ ॥**

तृतीयादिषु पृष्ठ्यस्य[८] 'द्वितीयानि तृतीयमहरादौ कृत्वा पृष्ठ्यस्य अहरहः अन्वहं द्वितीयानि पृष्ठानि भवन्ति वैरूपवैराजशाक्वररैवतानि' वैरूपं च वैराजं च शाक्वरं च रैवतं च आनन्तर्येण । तृतीये रथन्तरं च वैरूपं च[८] । चतुर्थे बृहच्च

---

१-१. नास्ति ब[१] । २. अयुतानि ब[१] । ३-३. बृहत्यरथन्तरमेति ब[१] ।
४. अयुतेभ्यो ब[१] । ५. नास्ति मै । ६. नास्ति मूको । ७. बृहन्यते मै ।
८-८. नास्ति मै ।

वैराजं च। पञ्चमे रथन्तरं च शाक्वरं च। षष्ठे[1] बृहच्च रैवतं च। तृतीयादिष्विति वचनात् प्रथमद्वितीयपृष्ठं न विद्यते। पृष्ठ्यग्रहणादभिप्लवे द्वितीयं न विद्यते। अन्वहग्रहणाद् आनन्तर्येण प्रयुज्यन्ते। द्वितीयग्रहणाद् बृहद्रथन्तरयोरलोपः। वैरूपादीन्यन्वहं तत्रैव वक्ष्यते पृष्ठानि अहःसु गम्यते योनिशंसनार्थम् (द्र. आश्रौ ८, ७, ५; ६)॥ ४॥

[षण्णां पृष्ठानां मध्ये यथास्थानं यद्यदकरणं तत्तद्योनिशंसनम्]

**तेषां यथास्थानेऽक्रियायां योनीः शंसेत्॥ ५॥**

तेषां षण्णां पृष्ठानां यथाविहितानां यद्यस्मिन्नहनि विहितं तेषां यथाविहितानां पृष्ठस्थानेऽक्रियायां निष्कैवल्येऽक्रियमाणानां योनीः शंसेत्। **पृष्ठ्यस्तोत्रिया योन्यः** (आश्रौ ७, ३, १३) ता योनिस्थाने शंसेत्। उभयसामलक्षणाया योनेः शंसनं प्राप्तम्, अन्यासामप्राप्तम् आरभ्यते। तेषामिति पुनरुच्यते, तेषामेव स्थानेऽक्रियायां योनीः शंसेत्। अन्येषां पृष्ठानां वामदेव्यादीनां[2] सर्वत्र चास्वयोनिभाव[3] इति। 'एतेषामेव पृष्ठानाम् अस्वयोनिभाव इति'। एतेषामेव पृष्ठानाम् अस्वयोनिभावे योनिशंसनं, नान्येषां पृष्ठानाम्। यथाविहितानामित्यनुच्यमाने[4] अहन्यहनि, यथास्थाने[5] अक्रियायामिति वचनात्, षण्णामपि योनिशंसनं प्राप्नोति। प्रकृतौ[7] यत् पवमाने[7] तस्य योनिशंसनं नान्यस्य, एवमिहापि प्राप्ते यथास्थाने[6] अक्रियायामित्याह। उदाहरणानि यथा—गर्गत्रिरात्रे मध्यमेऽहनि वामदेव्यं पृष्ठस्थाने बृहदकृतं तस्य योनिः। स्वरसामसु स्वराणि पृष्ठानि भवन्ति, बृहद्रथन्तरयोर्योनिशंसनम्। तृतीयादिषु पृष्ठ्यस्य वैरूपादिषु क्रियमाणेष्वहःसु बृहद्रथन्तरयोर्योनिशंसनम्।[8] पृष्ठ्यस्तोमे तु तृतीयादिषु वैरूपादीनां योनिशंसनम्। परोक्षपृष्ठे तु प्रथमेऽहनि रथन्तरस्य योनिः, द्वितीयेऽहनि बृहतः, तृतीयेऽहनि रथन्तरस्य वैरूपस्य, चतुर्थेऽहनि बृहतो वैराजस्य, पञ्चमेऽहनि रथन्तरस्य शाक्वरस्य, षष्ठेऽहनि बृहतो रैवतस्य॥ ५॥

[आश्विनादन्यत्रास्वयोनिभावे योनिशंसनम्]

**सर्वत्र चास्वयोनिभावेऽन्यत्राऽऽश्विनात्॥ ६॥**

**अभिप्लवपृष्ठ्याहानि** (आश्रौ ७, ५, ६) इत्यधिकारः। **यथास्थाने** (आश्रौ ७, ५, ५) इत्यधिकारः। सर्वत्र च पृष्ठ्याभिप्लवयोरन्येषु चाहःसु पृष्ठस्थानेष्वन्येषु[10] च स्तोत्रेषु तेषां षण्णामेव पृष्ठानाम् अस्वयोनिभावे सति

१. पृष्ठे मूको। २. वामदेव्यानां मूको। ३. वास्वयो° मै।
४-४. नास्ति मै। ५. °त्यनूच्य° ब१। ६. स्थाने मूको।
७-७. यत्वमाने ब१। ८. आश्री १०,२,७। ९. °न्तरयोनि° ब१।
१०. °स्थाने° न्येषु ब१।

योनीः शंसेत् 'स्वा ऋचः'[1] **अभि त्वा शूर** (ऋ ७, ३२,२२), **त्वामिद्धि** (ऋ ६, ४६, १) इत्येतासु स्वासु ऋक्षु साम भवति, तस्मान्न स्वयोनिभावे सति योनीः शंसेत्। अन्यत्राऽऽश्विनात्। आश्विनेऽस्वयोनिभावे सति निष्केवल्ये योनिर्न शस्यते। स्वरसामसु स्वराणि[2] पृष्ठानि यदा क्रियन्ते, तदा बृहद्रथन्तरे अस्थाने भवतः। तत्र तयोर्योनिशंसनं भवति। सर्वत्रग्रहणात् पृष्ठ्याभिप्लवाभ्यामन्यत्रापि भवति। दशमेऽहनि **'कया नश्चित्र आ भुवद्'** (ऋ ४, ३१, १) इत्येतासु **रथन्तरं पृष्ठम्** (आश्रौ ८, १२, १८) 'अत्र रथन्तरस्य'[3] स्वयोनिभावात्। तथाऽग्निष्टुति[4] **एना वः** (ऋ ७,१६,१) इत्येतासु रथन्तरम् उपहव्येमारेदिमिति[5] (?) बृहद् अत्र बृहतो योनिः। सर्वत्र ग्रहणात् पृष्ठस्थानादन्येष्वपि स्तोत्रेष्वस्य योनिशंसनं निष्केवल्य एव कर्तव्यं यथाऽभिजिति **यज्ञायज्ञा वः** (ऋ ६, ४८, १) इत्येतासु रथन्तरम्। वाजपेये[6] चातिरिक्तोक्थे बृहत् क्रियते[7] इति।

अत्र च-शब्दो योनिशंसनाधिकारसमुच्चयार्थः। तेषामधिकारात् षण्णामेवैष विधिः। अन्येषां[8] साम्नामस्वयोनिभावे योनिशंसनं[8] न भवति। षष्ठेऽहनि[9] वारवन्तीयं रेवतीषु भवति। तत्र न[10] वारवन्तीयस्य योनिः शस्यते। [11]आश्विने एव[11] रथन्तरस्य योनिः[12] शस्यते, बृहच्च। तस्मान्निष्केवल्ये योनिशंसनं प्रतिषिद्धम्॥ ६॥

[अक्रियमाणस्यापि यज्ञायज्ञीयस्य सानुरूपयोनिशंसनम्]

**यज्ञायज्ञीयस्य त्वक्रियमाणस्यापि सानुरूपां योनिं व्याहावं शंसेदूर्ध्वमितरस्यानुरूपात्॥ ७॥**

**सर्वत्र** (आश्रौ ७, ५, ६) इति वर्तते। **अस्वयोनिभावे** (आश्रौ ७, ५, ६) इति वर्तते। **तेषाम्** (आश्रौ ७, ५, ५) इति, **यथास्थाने** (आश्रौ ७, ५, ५) इति वर्तते। सर्वत्र पृष्ठ्याभिप्लवयोरन्यत्र च यज्ञायज्ञीयस्य तु समाम्नातानामन्येषां साम्नाम् अस्वयोनिभावाद् योनिं शंसेत्। अग्निष्टोमसाम्नः स्थानेऽक्रियमाणस्यापि यज्ञायज्ञीयस्य[13] "सानुरूपां योनिं व्याहावं"[14] शंसेदिति **यज्ञायज्ञा वः** (ऋ ६, ४८, १), **देवो वः** (ऋ ७, १६, ११) इति।[15] आहूयाहूय व्याहावमिति[15] सानुरूपं द्विराहूय शंसेत्। ऊर्ध्वमितरस्यानुरूपात्[16] इतरस्य साम्नोः योऽनुरूपः

---

१. स्वात्रत्वः ब[1], स्वा रचः मै। २. द्र. आश्रौ ८,५,११। ३-३. अरथन्तरस्य ब[1]। ४. द्र. आश्रौ ९, ७, २२; २८। ५. °हव्येमारे (शी) दिमिति मै। ६-६. °न्तरवाज° मै। ७. क्रिमित ब[1], किंनिमित्त मै। ८-८. साम्नामस्वयोनिशंसनं मै। ९. पृष्ठेऽहनि मूको। १०. नास्ति मै। ११-११. अश्विने श च ब[1], अश्विने एव मै। १२. अयोनिः मै। १३. नास्ति मूको। १४-१४. सहानुरूपेण वेति मै। १५-१५. आहयाहयेत्याहावमिति ब[1]; व्येहूत्याहावमिति मै। १६. ऊर्ध्वम् मै।

तस्मादूर्ध्वं योनिस्थाने योनिशंसनं चाप्राप्तमारभते[1]। चतुर्विंशे अग्ने युक्ष्वां (ऋ ६, १६, ४३) इति[2] जराबोधीयम्, विषुवति पृक्षस्य (ऋ ६, ८, १) इति भासम्, विश्वजिति त्वमग्ने यज्ञानाम् (ऋ ६, १६, १) इति बृहत्, दशमेऽहनि अग्निं नरः (ऋ ७, १, १) इति वामदेव्यम्, महाव्रते अग्ने तव श्रवः (ऋ १०,१४०,१) इति इलान्दम्, अश्वं न त्वा (ऋ १,२७,१) इति वारवन्तीयं वा। एतेषु कृतेषु [3]यज्ञायज्ञीयस्य योनिः[3] शस्यते। अभि त्वा शूर नोनुमः (ऋ ७, ३२,२२) इति रथन्तरम्। तत्र स्तोत्रैरेवानुशस्तं भवति यथा व्रात्यस्तोमे देवो वः (ऋ ७, १६, ११) इत्यस्य योनेर्यज्ञायज्ञीयम्। तत्र स्तोत्रियानुरूपाभ्यामेव योनिः शस्ता भवति। तु-शब्दोऽन्येषां साम्नां व्यावृत्त्यर्थः। अपि-शब्दः समुच्चयार्थः। सानुरूपामिति श्रुतिवचनान् मध्ये योनिं चानुरूपं च शंसतीति। सकृत् पृथग् वाऽऽह्वानम् (आश्रौ ५, १५, १६) इति विकल्पे प्राप्ते [5]अनुकल्पार्थं व्याहावमित्युच्यते[5]। अनुरूपोऽपि योनिरेव। यदि न भवति, किमर्थं शस्यते। ऊर्ध्वं धाय्यायाः (आश्रौ ५, १५, १८) इति प्राप्त ऊर्ध्वमनुरूपाद् योनिस्थानं विधीयते। ऊर्ध्वमनुरूपादिति सिद्ध इतरग्रहणाद् योन्यनुरूपोऽपि अनुरूप एवानुरूपत्वात्। तेभ्यश्चानन्तरमिति[6] जातवेदस्याया आह्वावः सिद्धो भवति। आह्वावारम्भे तूक्तं प्रयोजनम्॥ ७॥

[होत्रकाणां परिशिष्टानां स्थाने वक्ष्यमाणमन्त्राणामावापविधानम्]

**होत्रकाः परिशिष्टानावापानुद्धृत्य॥ ८॥**

अभिप्लवपृष्ठ्याहानि (आश्रौ ७, ५, १) इत्यधिकारः। अभिप्लवपृष्ठ्याहःसु होत्रका अवशिष्टा ऋत्विजः[7] स्वान् स्वान् परिशिष्टानावपेरन् (आश्रौ ७, २, १०) इति तानावापान् उद्धृत्य तेषां स्थाने वक्ष्यमाणानावपेरन्[8] इत्यधिकृतं वेदितव्यम्। होत्रधिकाराद्धोत्रकग्रहणम्[9]। परिशिष्टानावापान् उद्धृत्य इति वचनाच् चतुर्विंशकाः शस्त्राणामातानां उपरिष्टाद् भवन्ति स्तोत्रियानुरूपारम्भणीयपर्यासाः[10]। ऐकाहिका अतोऽन्ये परिशिष्टा भवन्ति॥८॥

[आवापमन्त्रकथनम्]

'मित्रं वयं हवामहे', 'मित्रं हुवे पूतदक्षम्', 'अयं वां मित्रावरुणा', 'आ नो मित्रावरुणा' इति तृचाः, 'प्र वो मित्राय' इति चतुर्णां द्वितीयमुद्धरेत्, 'प्र

---

१. वा प्राप्त° ब[२]। २. नास्ति मै। ३-३. यज्ञा यस्माः योनिः ब[१]; यज्ञायज्ञीयस्ययोनिः मै। ४-४. पुनज्ञ ब[१]। ५-५. °ल्पार्थमाहाव° मूको। ६. °श्चान्यदन्तरमिति मै। ७. अत्वः ब[१]; क्रत्वः मै। ८. द्र. आश्रौ ७,५,१। ९. °राद्धोत्रग्रहणम् ब[१]; होत्रेरधिकाराद्धोतृवद्ग्रहणम् मै। १०. द्र. आश्रौ ७, १, ७; २, २-१२।

**मित्रयोर्वरुणयोः' इति षट्, 'काव्येभिरदाभ्या' इति तिस्रः, 'मित्रस्य चर्षणीधृतः' इति चतस्रो मैत्र्यः, 'यच्चिद्धि ते विशः' इति वारुणम् ॥ ९ ॥**

**मित्रं वयम्** (ऋ १, २३, ४-६), **मित्रं हुवे** (ऋ १, २, ७-९), **अयं वाम्** (ऋ २, ४१, ४-६), **आ नो मित्रा** (ऋ ३, ६२. १६-१८) इति चत्वारस्तृचाः। पादग्रहणात् तृचा इत्युच्यन्ते । **प्र वो मित्राय** (ऋ ५, ६८) इत्युक्तानां चतुर्णां सूक्तानां द्वितीयं सूक्तमुद्धरेत्[1] । **त्री रोचना** (ऋ ५, ६९) इति त्रैष्टुभम् । **प्र मित्रयोः** (ऋ ७, ६६, १-६) इति षड् ऋचः । **काव्येभिः** (ऋ ७, ६६, १७-१९) इति तिस्र ऋचः[2] । **मित्रस्य चर्षणीधृतः** (ऋ ३, ५९, ६-९) इति चतस्रो मैत्र्यः[3] । मित्रो देवता आसां ता मैत्र्यः । पादग्रहणादेका प्राप्ता चतस्र इत्याह । मैत्र्य इति वचनात् केवला नोप्यन्ते, वारुणीभिः सह ओप्यन्ते । तथा मैत्रावरुणं भवति **यच्चिद्धि** (ऋ १, २५) इति वारुणं सूक्तम् । वारुणग्रहणात् केवलं नोप्यते, मैत्रीभिः[4] सह ओप्यते ॥ ९ ॥

[मैत्रावरुणस्य तृचावापविधानम्]

**एतस्य तृचमावपेत मैत्रावरुणो नित्यादधिकं स्तोमकारणात् ॥ १० ॥**

एतस्य ऋक्समूहस्य तृचमावपेत मैत्रावरुणः । एतस्येत्यवयवलक्षणेयं[5] षष्ठी। एतस्य अवयवस्यान्वहमावापं[6] कुर्यात् । कृत्स्नस्य ऋक्समूहस्यान्वहमनुक्रमेणावापं कुर्यात् । अधिकृतस्य ऋक्समूहस्यावापे प्राप्ते तृचग्रहणम् । आवापग्रहणात् स्वस्य परिशिष्टावापस्य स्थाने तृचो भवति समानजातिन्यायात्, अन्यथा यावदावापस्तावदुद्धारः स्यात् । होत्रकाधिकारान्मैत्रावरुणग्रहणम्[7] । मैत्रावरुणस्यावापः । इतरयोरपि वक्ष्यति । स्तोत्रियानुरूपावारम्भणीया तृचावापः पर्यास इति शस्त्रं भवति । अभिप्लवे पृष्ठ्ये[8] च तृचावापो नित्यः स्तोमकारणादधिकम् । वक्ष्यति नित्यादधिकं स्तोमकारणात् । स्तोत्रियानुरूपावारम्भणीया तृचावापः पर्यास इति शस्त्रं भवति । तचावापो नित्यो न च्यवते, पृष्ठ्याभिप्लवयोर्नित्यस्तोममनुशिष्य[9] विहितत्वात् । तस्मान्नित्यतृचाऽऽवापादधिकमावापं[10] कुर्यात् स्तोमकारणात् स्तोमहेतोः । यथा एकया द्वाभ्यां वा अतिरिक्तं भवति, तथाऽधिकमावापं कुर्यात् । तृचावापः पञ्चदशस्तोमाद् भवति **एकया द्वाभ्यां वा** (आश्रौ ७, १२, ४) इति वचनात् । षोडशादिषु यत्र पञ्चदश इत्येवमादिवचनं न विद्यते, तत्र नित्यात् तृचादधिकं स्तोमकारणादावापं कुर्यात्, यथा षोडशेऽष्टादश एकोनविंश इत्येवं सर्वत्र ।

---

१. इत्येतत् मूको । २. नास्ति ब[1] । ३. नास्ति मै । ४. मैत्र्याभिः मूको । ५. °लक्षणे मूको । ६. अन्वहस्यान्वह° मै । ७. होत्रधि° मूको । ८. पृष्ठे मूको । ९. °योर्नित्यःस्तोम° मूको । १०. तदस्मा नित्या तृचा° मै ।

यदीदं[1] नारभ्यते, पृष्ठ्याभिप्लवयोर्याविदुक्तमेव स्यात्, सप्तदशाधिके वचनादावापोऽन्यत्र न स्यात्, तस्मात् सार्वत्रिकमिदमावापविधानं द्रष्टव्यम्। नित्यवचनात् पृष्ठ्याभिप्लवयोरेकादिस्तोमेष्वा पञ्चदशात् तृचावापो नित्यः। नित्यवचनात् षोळशिनातिदिष्टस्यापि तृच एकः प्राप्तः। तस्मादधिकं स्तोमकारणादित्याह। एवं [2]च नित्याद्[2] इति न वक्तव्यम्, अधिकं स्तोमकारणादित्येतावताऽप्यर्थः सर्वसिद्धः[3]। तस्मान्नित्यवचनादनधिकृतानामपि[4] नित्यावापप्राप्त्यर्थम्[5]। [6]एकाहे भव ऐकाहिक[6] आवापो नित्यस्तस्मान्नित्यादधिकं[7] [8]स्तोमकारणादावापं[8] कुर्यात् ॥१०॥

[अतिशंसनीयस्तोमानां सङ्ख्याकथनम्]

**पञ्च सप्तदशे नवैकविंशे द्वादश चतुर्विंशे पञ्चदश त्रिणव एकविंशतिं त्रयस्त्रिंशे द्वात्रिंशतं चतुश्चत्वारिंशे षट्त्रिंशतमष्टाचत्वारिंशे ॥११॥**

[9]सप्तदशस्तोमे पञ्च[9] तस्मात् नित्यादधिकस्तोमकारणादावापं कुर्यात्। बृहस्पतिसवेन[10] व्याख्यातेषु[11] तन्[12] नित्यम्। तस्मादधिकं स्तोमकारणाद्[13]आवापं कुर्यात्। पञ्चदशे स्तोमे पञ्च ऋच[13] आवपेत मैत्रावरुणः पृष्ठ्यस्य तृतीयेऽहनि। **एतस्य तृचमावपेत** (आश्रौ ७, ५, १०) इति तृचावापे प्राप्ते पञ्च विधीयन्ते सप्तदशे स्तोम। **नित्यादधिकं स्तोमकारणात्** (आश्रौ ७, ५, १०) इत्येतेनैव प्राप्ते न वक्तव्यम्। पञ्चविंशतिरहानि[14] सर्वक्रतूनां प्रकृतिः, तैरतिदिष्टा अन्ये क्रतवः **सिद्धैरहोभिरह्नामतिदेशः** (आश्रौ ९, १, २) इति। तस्माज्ज्योतिष्टोमादिप्राकृतान्यहानि सर्वाणि प्रत्यक्षं कल्पन्ते। नवैकविंशे। एकविंशस्तोमे नव ऋच आवपेत। नित्यतृचावापे प्राप्ते [15]नव विधीयन्ते[15]। [16]पृष्ठ्यस्य चतुर्थेऽहन्येकविंशस्तोमो भवति[16]। द्वादश चतुर्विंशे। चतुर्विंशे[17] स्तोमे द्वादश ऋच आवपेत सप्तमेऽहनि। अनुक्रमेण विधानाद् अनुक्रमेणैव[18] ऋच ओप्यन्ते। स्तोमानामनुक्रमेण विधाने सत्यनुक्रमेणैव ऋचामप्यावापः स्यात्। पञ्चदश त्रिणवे। त्रिणवे स्तोमे पञ्चदश ऋच आवपेत पञ्चमेऽहनि।

१. यदिदं मै। २-२. चानित्यम् मूको। ३. सिद्धः ब[1]। ४. °नादधिकृतानपि मै। ५. °दावाप्राप्त्यर्थः मै। ६-६. ऐकाहे ऐका° ब[1]; एका ऐका° मै। ७. °न्नित्यत्वाद° मूको। ८-८. स्तोमकारणात् मै। ९-९. नास्ति मै। १०. °सवनेन मूको। ११. द्र. आश्रौ ९,५, ३; व्याख्यायु ब[1]। १२. नास्ति ब[1]। १३-१३. नास्ति ब[1]। १४. द्र. आश्रौ ८, १३, ३१; ३५। १५-१५. न विधियते ब[1]; नव धीयन्ते मै। १६-१६. पृष्ठस्य चतुर्विंशेऽहनि एकविंशस्तोमे भवन्ति मै। १७. नास्ति मूको। १८. अननुक्रमेणैव मै।

एकविंशतिं त्रयस्त्रिंशे । त्रयस्त्रिंशस्तोमे 'एकविंशतिम् ऋच आवपेत षष्ठेऽहनि । द्वात्रिंशतं चतुश्चत्वारिंशे । चतुश्चत्वारिंशस्तोमे द्वात्रिंशतमृच आवपेताष्टमेऽहनि । षट्त्रिंशतम् अष्टाचत्वारिंशे । अष्टाचत्वारिंशस्तोमे' षट्त्रिंशतमृच आवपेत नवमेऽहनि । दशमेऽहनि चतुर्विंशस्तोमः । न तत्रावापः प्राप्नोति पृष्ठ्याभिप्लवाविकारात् । एवमेते वचनादावापा[२] उक्ताः । वचनादन्यत्र तृचावापोऽभिप्लवे पृष्ठ्यस्य प्रथमे द्वितीये च ॥ ११ ॥

[पूर्वोक्तसंख्यात एकाल्पामेकाधिकां वावपेत]

**एकाल्पीयसीर्वा ॥ १२ ॥**

**एकाहेष्वेकभूयसीर्वा ॥ १३ ॥**

'एकाल्पीयसीर्वैकाहेष्वेकभूयसीर्वा । **पञ्च सप्तदशे** (आश्वौ ७, ५, ११) इत्येवमादिस्तोमातिशंसनार्थाः[३] संख्याता ऋचस्ता एवर्चं एकाल्पीयसीर्वाऽऽवपेत[४] । यथासंख्याता भवन्ति । **पञ्च सप्तदशे** (आश्वौ ७, ५, ११) इत्युक्ते चतस्रो वा[५] भवन्ति । **नवैकविंशे** (आश्वौ ७,५, ११) इत्युक्तेऽष्टौ वा भवन्ति । एवं सर्वत्र । वक्ष्यति **एकया द्वाभ्यां वा प्रातःसवने** (आश्वौ ७, १२, ४) इति । यदैकाल्पीयसीस्तदेकयाऽतिशंसनम् । यथासंख्याता भवन्ति, 'यदा एकभूयसी-' स्तदा द्वाभ्यामतिशंसनं भवति । एकाहेषु क्रतुषु एकभूयसीः[६] एकयर्चा भूयसीर्वा आवपेत, यथासंख्याता वा । **पञ्च सप्तदशे** (आश्वौ ७,५, ११) षड् वा[७] आरम्भणीयाभावाद् यथासंख्यातास्वेकयाऽतिशंसनं, यद्येकभूयसीर्वा द्वाभ्यामतिशंसनम् ॥ १२-१३ ॥

[एकाहेष्वारम्भणीयपर्यासानां निषेधः, पर्यासस्थानेष्वैकाहिकानां तृचानामन्त्ये शंसनीयत्वम्]

**नाऽऽरम्भणीया न पर्यासा अन्त्या ऐकाहिकास्तृचाः पर्यासस्थानेषु ॥ १४ ॥**

नारम्भणीयाः । यत्र च आरम्भणीया न विद्यन्ते तत्र चैकभूयसीर्वाऽऽवपेत, यथासंख्या वा । द्व्यहेषु[८] आद्यन्तयोरह्नोरभिप्लवपृष्ठ्याहेष्वेदमन्येषु[९] । एकाहेष्विति वचनाद्[१०] अहीनेषु न प्राप्नोति । अहीनेष्वपि प्राप्त्यर्थमिदमुच्यते । एकाहेषु सूत्रारम्भोऽनर्थकस्तस्मादहीनार्थमेव । न पर्यासा अन्त्या ऐकाहिका-

१-१. नास्ति मैं । २. °नादावाप (°पः मैं) मूको । ३-३. एकाल्पीयसी सर्वा पञ्चदश इत्येव° मैं । ४. भवति मूको । ५. नास्ति मूको । ६-६. नास्ति मूको । ७. षडा मूको । ८. ह्येषु अहेषु ब' । ९. °पृष्ठ्यास्वेतवन्येषु ब' । १०. द्र. अश्वौ ७,५,१३ ।

स्तृचाः पर्यासस्थानेषु। न विद्यन्ते पर्यासा[1] यस्मिन्नहनि तस्मिन्न भवन्ति[2]। 'अन्त्या ये'[3] ऐकाहिकास्तृचास्ते पर्यासस्थानेषु। एकाहेष्वहीनेषु चाद्यन्तयोरह्नोः प्राप्त्यर्थोऽयमारम्भः। एकाहाधिकाराद्[4] ऐकाहिकास्तृचा एकाहेष्वेव पर्यासस्थानेषु, नाहीनेषु, तस्मादहीनेष्वपि प्राप्त्यर्थं[5] न पर्यासा इत्युच्यते। अन्त्या ऐकाहिकास्तृचा अप्राप्ता विधीयन्ते। पर्यासस्थानेष्विति यदि नोच्यते, आवापस्थाने ऐकाहिकास्तृचाः स्युरधिकारात्। पर्यासस्थानेष्विति वचनाद् यत्र-यत्र[6] पर्यासा न विद्यन्ते तत्रतत्र पर्यासस्थानेष्वैकाहिकास्तृचा भवन्त्येकाहेष्वहीनेषु ॥ १४ ॥

[ब्राह्मणाच्छंसिन आवापसूक्तविधिकथनम्]

**ब्राह्मणाच्छंसिनः 'सुरूपकृत्नुमूतये' इति षट् सूक्तानि ॥ १५ ॥**

**आवाप उक्तो मैत्रावरुणेन ॥ १६ ॥**

ब्राह्मणाच्छंसिन आवापो वक्ष्यते[7]। सुरूपकृत्नुमूतये (ऋ १, ४-९) इत्येतानि षट्[8] सूक्तानि। आवापविधिरुक्तो मैत्रावरुणेन। **परिशिष्टानावापानुद्धृत्य** (आश्रौ ७, ५,८), **एतस्य तृचमावपेत** (आश्रौ ७, ५, १०)। एकं नित्यम्। एकादिस्तोमेषु[9] आपञ्चदशस्तोमाद्[10] अस्माद् नित्यादधिकमावापं कुर्यात् स्तोमकारणात्[11]। षोडशादिषु स्तोमेषु पञ्चदशादिषु च यथा क्लृप्तम्। एकाल्पीयसीरेकभूयसीरिति[11] वा [11] एवमादि सर्वं मैत्रावरुणेन व्याख्यातम्। मैत्रावरुणाधिकाराद् ब्राह्मणाच्छंसिन इत्याह। ऋच ओप्यन्ते, न सूक्तानि, तस्मात् पादग्रहणम्। पादग्रहणादृचः प्राप्ताः, तस्मात् सूक्तग्रहणम्। आवापो विधीयते सूक्तान्यावाप इति वचनात्। **परिशिष्टानावापानुद्धृत्य** (आश्रौ ७, ५, ८) इत्यधिकारः। तस्मात् सूक्तस्थाने[13] सूक्तानि इति प्राप्त उक्तो मैत्रावरुणेन इत्याह। तस्मान्मैत्रावरुणस्य[14] य आवापन्यायः[15] स भवति ॥ १५-१६ ॥

[अच्छावाकस्याऽऽवापसूक्तकथनम्]

**'इहेन्द्राग्नी', 'इन्द्राग्नी आगतं', 'ता हुवे ययोरिदम्' इति नव, 'इयं वामस्य मन्मनः' इत्येकादश, 'यज्ञस्य हि स्थः' इत्यच्छावाकस्य ॥ १७ ॥**

इहेन्द्राग्नी (ऋ १,२१) इति सूक्तम्, इन्द्राग्नी आगतम् (ऋ ३,१२) इति सूक्तम्, ता हुवे ययोरिदम् (ऋ ६, ६०) इति नवर्चः, इयं वामस्य मन्मनः (ऋ ७, ९४, १-११) इत्येता एकादशर्चः, यज्ञस्य हि स्थः (ऋ ८, ३८) इति

१. पर्यासाः मूको। २. भवति मूको। ३-३. अन्त्याहे ब[1]। ४. एकाहाद्विकारा° ब[1]। ५. प्राप्त्यर्थे मूको। ६. नास्ति मूको। ७. वते ब[1]। ८. नास्ति मै। ९. एकाहि ब[1]। १०. °स्तोमात् ब[1]। ११. द्र. आश्रौ ७, ५, १०; १२; १३। १२. स मूको। १३. स्थाने ब[1]; तस्य स्थाने मै। १४. तन्मैत्रा[?] ब[1]। १५. आवापो न्यायः मै।

सूक्तम्, इत्ययमावापोऽच्छावाकस्य । मैत्रावरुणेनेत्यधिकारो[1] वर्तते । मैत्रावरुणस्योक्त आवापन्यायः[2] । तेनैव न्यायेनाच्छावाक आवपेत । ब्राह्मणाच्छंस्यधिकाराद् अच्छावाकस्येत्याह ॥ १७ ॥

[प्रथमस्याभिप्लविकस्य मरुत्वतीयनिष्केवल्यशस्त्रयोः कथनम्]

**'आ यात्विन्द्रोऽवसे' इति मरुत्वतीयम्, 'आ न इन्द्रः' इति निष्केवल्यं प्रथमस्याभिप्लविकस्य ॥ १८ ॥**

**आ यात्विन्द्रोऽवसे** (ऋ ४, २१) इत्येतत्सूक्तं मरुत्वतीयम्, **आ न इन्द्रः** (ऋ ४, २०) इत्येतत् सूक्तं निष्केवल्यं प्रथमस्याभिप्लविकस्य । अभिप्लवे भवमह आभिप्लविकम् । तस्यैते शस्त्रे भवतः । ध्रुवाः शस्त्राणामातानाः । **सूक्तान्येव सूक्तस्थानेषु** (आश्रौ ७, १, ७-८) । **अभिप्लवपृष्ठ्याहानि** (आश्रौ ७, ५, १) इत्यधिकारात् प्रथमस्याभिप्लविकस्येत्यभिप्लवे प्रथमस्याधिकारः क्रियते । इत उत्तरं यद् वक्ष्यते तदभिप्लवप्रथमस्य विधानं वेदितव्यम् ॥ १८ ॥

[उक्तशस्त्रयोर्मध्यन्दिनसंज्ञाकरणम्]

**मध्यंदिन इत्युक्त एते शस्त्रे प्रतीयात् ॥ १९ ॥**

मध्यंदिन इत्युक्त[3] एते निष्केवल्यमरुत्वतीयशस्त्रे प्रतीयाज्जानीयात् । **'इन्द्र सोमम्'** (ऋ ३, ३२, १), **'या त ऊतिरवमा'** (ऋ ६, २५, १) इति **मध्यंदिनः** (आश्रौ ७, ६, ४), **'त्र्यर्यमा'** ऋ ५, २९, १), **'यो जात एव'** (ऋ २, १२, १) इति **मध्यन्दिनः** (आश्रौ ७, ७, १) । **'कया शुभा'** (ऋ १, १६५, १), **'तदिदास'** (ऋ १०, १२०, १) इति **मध्यन्दिनः** (आश्रौ ९, ८, ९) एवमुक्त एकं सूक्तं मरुत्वतीयं सूक्तस्थाने भवति, द्वितीयं निष्केवल्यम् । लाघवार्थमिदमुच्यते । अन्यथेति मरुत्वतीयम्, इति निष्केवल्यमिति तत्र तत्रोच्यमाने गुरुर्भवति ॥ १९ ॥

[अहीनसूक्तस्थाने शंसनीयसूक्तानां संपातसंज्ञाकरणम्]

**अहीनसूक्तस्थाने 'एवा त्वामिन्द्र', 'यन्न इन्द्रः', 'कथा महाम्', 'इन्द्रः पूर्भित्', य एक इत्', 'यस्तिग्मशृङ्गः', 'इमामू षु', 'इच्छन्ति त्वा', 'शासद्वह्निः' इति संपाताः ॥ २२ ॥**

अहीनसूक्तानां स्थाने **एवा त्वामिन्द्र** (ऋ ४, १९, १) इत्येवमादि नव सूक्तानि संपातसूक्तानि ॥ २० ॥

[एकैकहोत्रकस्य संपातत्रयनियमः]

**एकैकस्य त्रयस्त्रयः ॥ २१ ॥**

एकैकस्य होत्रकस्यानुक्रमेण त्रयस्त्रयः संपाता भवन्ति ॥ २१ ॥

---

१. उक्तो मैत्रा° मै । २. द्र० आश्रौ ७, ५, ८-१६ । ३. इत्येवमुक्ते मै ।

[होत्रकसंपातानामुक्तस्थलनिर्देशः]

**उक्ता मरुत्वतीयैः ॥ २२ ॥**

एते[1] संपाताश्चातुर्विंशिकमरुत्वतीयैः प्रगाथैर्व्याख्याताः[2]। यथा ते प्रगाथान्[3] पृष्ठ्याभिप्लवयोरन्वहं पुनः पुनरावर्तयेयुः[4], एवं होत्रका अपि[5]। पृष्ठ्याभिप्लवयोरन्वहमेकैके होत्रका एकैकं संपातं पुनः पुनरावर्तयेयुः। **एवा त्वामिन्द्र** (ऋ ४, १९, १) इति प्रथमेऽहनि, **यन्न इन्द्रः** (ऋ ४, २२, १) इति द्वितीये, **कथा महाम्** (ऋ ४, २३, १) इति तृतीये। एवं ब्राह्मणाच्छंसी **इन्द्रः पूर्भित्** (ऋ ३, ३४, १) इति प्रथमेऽहनि, **य एक इत्** (ऋ १, ८४, ७) इति द्वितीये, **यस्तिग्मशृङ्गः** (ऋ ७, १९, १) इति तृतीये। एवमच्छावाकः **इमामू षु** (ऋ ३, ३६, १) इति प्रथमेऽहनि, **इच्छन्ति त्वा** (ऋ ३, ३०, १) इति[6] द्वितीये, **शासद् वह्निः** (ऋ ३, ३१, १) इति तृतीये[6]। **अहीनसूक्तस्थाने** (आश्रौ ७,५, २०) इति वचनाद् होत्रकाणां चातुर्विंशिको यः शस्त्राणामातानः स[7] समर्थ उपदिष्टो भवति। स्तोत्रियानुरूपाः कद्वन्त आरम्भणीया अहरहःशस्यानीति द्वितीयादिष्वेवेति[8] प्राप्तानामप्यत्र[9] क्रम उपदिश्यते। एकैकस्य [10]सर्वे संपाताः[10] प्राप्ताः[9] **एकैकस्य त्रयस्त्रयः** आश्रौ (७,५, २१) इति मरुत्वतीयानामाद्य[11] इति। ऐकाहिकसंपातानामप्याद्य[12] ऐकाहिकः। तस्मान्मरुत्वतीयैरुक्ताः, न ब्राह्मणस्पत्यैः। संपाता[13] इति संज्ञा। संपातान्[14] इत्युक्त[15] एते प्रत्येतव्याः। **प्रथमस्याभिप्लविकस्य** (आश्रौ ७, ५, १८) इत्यधिकारो वर्तते। तस्मादभिप्लव एव संपाताः प्राप्ता **उक्ता मरुत्वतीयैरिति** वचनात् पृष्ठ्याभिप्लवयोर्भवन्ति। स्तोत्रियानुरूपाः कद्वन्त आरम्भणीया अहीनसूक्तस्थाने[16] संपाता अहरहःशस्यानीति[17] शस्त्राणि ॥ २२ ॥

[प्रथमस्याभिप्लविकस्य वैश्वदेवसंज्ञकवैकृतशस्त्रकथनम्]

**'युञ्जते मनः', 'इहेह वः' इति चतस्रः, 'देवान् हुवे' इति वैश्वदेवम् ॥ २३ ॥**

प्रथमस्याभिप्लविकस्येत्यधिकारः। तस्य वैश्वदेवं वक्ष्यते। **ध्रुवाः शस्त्राणामातानाः** (आश्रौ ७, १, ७), **सूक्तान्येव सूक्तस्थानेषु** (आश्रौ ७, १, ८)।

---

१. एवा मूको। २. द्र० आश्रौ ७,३,२। ३. प्रगाथाः मूको। ४. द्र० आश्रौ ७,३,४। ५. अभि ब[1]। ६-६. नास्ति ब[1]। [शंसद् मै। ७. नास्ति मूको। ८. द्र० आश्रौ ७, १, १५। ९. इत्यत्र ब[1]। १०-१०. सर्वं सं° ब[1], सर्वसंपातः मै। ११. °नामप ब[1]। १२. °कसंयतानानामथाद्य ब[1]। १३. संपात मूको। १४. संपात (°ता मै) मूको। १५. द्र. आश्रौ ८, ४, १६; ९, १०, ४। १६. अहीनं सूक्तं ब[1], सूक्त° मै। १७. °शस्यमिति मूको, द्र. आश्रौ ७,१, १५।

**युञ्जते मनः** (ऋ ५, ८१, १) इति सावित्रम्। ऐकाहिकं द्यावापृथिवीयम्[1]। **इहेह वः** (ऋ ३,६०, १-४) इति चतस्र ऋच आर्भवम्[2]।

**देवान् हुवे** (ऋ १०, ६६, १) इति वैश्वदेवं सूक्तं वैकृतं शस्त्रम्। ऐकाहिकम् आग्निमारुतम्। **समानमाग्निमारुतं भवति** (ऐब्रा ४, ३०) इति श्रुतिः। अग्निष्टोमसंस्था ॥ २३ ॥

॥ इति सप्तमे पञ्चमः खण्डमः ॥

१. प्रद्यावा° मै। 'प्र द्यावा' इति द्यावापृथिवीयम्—इति पाठः मै. कोशसाक्ष्यात् संभाव्यते। २. आर्भवनिविद्धानीयाः।

# अथ सप्तमेऽध्याये षष्ठः खण्डः

[द्वितीयस्याभिप्लविकस्याह्न आज्यस्य चतुर्विंशेनाह्ना व्याख्याततत्वम्]

**द्वितीयस्य चतुर्विंशेनाऽऽज्यम् ॥ १ ॥**

प्रथमस्याभिप्लविकस्येत्यधिकारः । अभिप्लवस्य प्रथममहर्व्याख्यातम् । इदानीं द्वितीयस्येत्यधिकारः । षष्ठीवचनमुत्तरसूत्रार्थम् । चतुर्विंशेनाज्यं द्वितीयस्याह्नश्चतुर्विंशेनाह्नाऽऽज्यं व्याख्यातं होताऽजनिष्ट (ऋ २, ५, १) इति[1]। सूक्तागमे[2] सूक्तस्योद्धारः । अन्यदेतेनाह्ना[3] ॥ १ ॥

[द्वितीयस्याह्नः शस्त्रकथनम्]

**'वायो ये ते सहस्रिणः' इति द्वे, 'तीव्राः सोमास आ गहि' इत्येका, 'उभा देवा दिविस्पृशा' इति द्वे, 'शुक्रस्याद्य गवाशिरः' इत्येका, 'अयं वां मित्रावरुणा' इति पञ्च तृचाः ॥ २ ॥**

**वायो ये ते सहस्रिणः** (ऋ २, ४१, १-२) इत्येते द्वे ऋचौ, **तीव्राः सोमास आ गहि** (ऋ १, २३, १) इत्येका ऋग् इति वायव्यस्तृचः । **उभा देवा दिविस्पृशा** (ऋ १, २३, २-३) इति[4] द्वे ऋचौ, **शुक्रस्याद्य गवाशिरः** (ऋ २, ४१,३) इत्येका इति[5] ऐन्द्रवायवस्तृचः । तृचाः प्रउगे (आश्वौ ७, १, १०) इति सर्वे तृचाः प्राप्ताः, तस्माद् द्वे एकेत्याह । **अयं वां मित्रावरुणा** (ऋ २,४१, ४-८) इत्येवमादयः पञ्च तृचाः । एकस्तृचः प्राप्तः, पञ्च तृचा इत्युच्यते, ते मैत्रावरुणाश्विनैन्द्रवैश्वदेवसारस्वतास्तृचाः । ऐकाहिकमन्यत् ॥ २ ॥

[उक्तशस्त्रस्य गार्त्समदं प्रउगमिति संज्ञाकरणम्]

**गार्त्समदं प्रउगमित्येतदाचक्षते ॥ ३ ॥**

गृत्समदेन दृष्टं गार्त्समदं प्रउगमित्येतदाचक्षते ब्रुवते । ब्राह्मणोक्तायाः संज्ञाया ज्ञानेन धर्मः । होत्रकाणां व्याख्यातं[6] शस्त्रं स्तोत्रियानुरूपा आरम्भणीयास्तृचावापः पर्यासाः ॥ ३ ॥

---

१. द्र. आश्वौ ७, २, १ । २. द्र. आश्वौ ७, १, १२ । ३. द्र. आश्वौ ७, १, ३ । ४. इत्येते मै । ५. नास्ति मूको । ६. द्र. आश्वौ ७, २,२-६; १०; १२।

[मरुत्वतीयस्य प्रतिपदनुचरयोर्मध्यन्दिनस्य निष्केवल्यतृचविपर्ययस्य च कथनम्]

**'विश्वानरस्य वस्पतिम्', 'इन्द्र इत्सोमपा एकः' इति मरुत्वतीयस्य प्रतिपदनुचरौ, 'इन्द्र सोमं', 'या त ऊतिरवमा' इति मध्यन्दिनः। निष्केवल्यस्योत्तमे विपरीते ॥ ४ ॥**

**विश्वानरस्य** (ऋ ८, ६८, ४), **इन्द्र इत्सोमपाः** (ऋ ८, २, ४) इति मरुत्वतीयस्य प्रतिपदनुचरौ ऐकाहिकयोः[1] स्थाने भवतः। तृचागमे तृचयोरेवोद्धारः। वैश्वदेवेऽपि प्रतिपदनुचरौ भवतः। तस्मान्मरुत्वतीय इत्याह। **ध्रुव इन्द्रनिहवः** (आश्वौ ७, ३, ७), **धाय्याश्च** (आश्वौ ७, ३, ८)। प्रगाथौ[2]। **इन्द्र सोमम्** (ऋ ३, ३२, १), **या त ऊतिरवमा** (ऋ ६, २५, १) इत्येते सूक्ते मध्यंदिनः। **मध्यंदिन इत्युक्त एते शस्त्रे प्रतीयात्** (आश्वौ ७. ५, १९)। **इन्द्र सोमम्** इति मरुत्वतीयं सूक्तम्। **या त ऊतिः** इति निष्केवल्यं सूक्तम्। **विश्वानरस्य** (ऋ ८, ६८, ४), **इन्द्र इत्** (ऋ ८, २, ४), **इन्द्र नेदीयः** (ऋ ८. ५३, ५), **उत्तिष्ठ** (ऋ १, ४०, १), **अग्निर्नेता** (ऋ ३, २०, ४), **त्वं सोम** (ऋ १, ९१, २), **पिन्वन्त्यपः** (ऋ १,६४, ६), **बृहदिन्द्राय** (ऋ ८, ८९, १), **इन्द्र सोमम्** इति मरुत्वतीयम्।

बृहत्स्तोत्रियानुरूपौ, धाय्या, **उभयं शृणवच्च नः** (ऋ ८, ६१, १) इति सामप्रगाथस्तार्क्ष्यः,[3] **या त ऊतिः** (ऋ ६, २५, १) इति निष्केवल्यम्। निष्केवल्यस्योत्तमे[4] ऋचौ विपरीते विपर्यस्य शंसेत्। उपोत्तमया परिदध्यात् **अनु ते दायि** (ऋ ६, २५, ८) इत्येतया ॥ ४ ॥

[भारद्वाजे होतरि ऋग्विपर्ययनिषेधः]

**भारद्वाजो होता चेत् प्रकृत्या ॥ ५ ॥**

भारद्वाजो होता भवति, स प्रकृत्या शंसति, अन्त्ययैव परिदधाति तल्लिङ्गत्वात् **विद्याम वस्तोरवसा गृणन्तो भरद्वाजाः** ऋ ६, १५, ९) इति पुनर्भरद्वाजः स्तोतुमर्हति, नान्यः। होतुर्ग्रहणाद् यः शस्त्रं शंसति [5]स उच्यते[5] होता। होत्रकाणां स्तोत्रियानुरूपाः कद्वन्त आरम्भणीयाः संपाता अहरहः शस्यानि ॥ ५ ॥

[तृतीयसवनस्य चातुर्विंशिकत्वं वैश्वदेवस्य प्रतिपदनुचरयोः कथनं च]

**चातुर्विंशिकं तृतीयसवनं 'विश्वो देवस्य नेतुः' इत्येका, 'तत्सवितुर्वरेण्यम्' इति द्वे, 'आ विश्वदेवं सत्पतिम्' इति तु वैश्वदेवस्य प्रतिपदनुचरौ ॥ ६ ॥**

---

१. द्र. आश्वौ ५, १४, ४। २. द्र. आश्वौ ५, १५, २-३। ३. °प्रगाथस्तादर्थम् ब', °प्रगाढ्स्तार्क्ष्यः मै। ४. °वल्यसूक्तस्योत्तमे मै। ५-५. उच्येन मै।

चातुर्विंशिकं चतुर्विंशे भवमिति चातुर्विंशिकं तृतीयसवनं भवति। ऐकाहिकं प्राप्तम्। तृतीयसवनं वैश्वदेवाग्निमारुते 'उदु ष्य देवः सविता हिरण्यया' (ऋ ६, ७१, १-३) इति तिस्रः (आश्वौ ७, ४, १२) एवमादि व्याख्यातम्। विश्वो देवस्य नेतुः (ऋ ५, ५०, १) इत्येका, तत्सवितुर्वरेण्यम् (ऋ ३, ६२,१०-११) इति द्वे ऋचौ प्रतिपद्, आ विश्वदेवं 'सत्पतिम् (ऋ ५, ८२, ७) इति अनुचरः[1], तृचाः प्रतिपदनुचराः (आश्वौ ५, १४, ७,) इति वचनात्। सर्वाणि प्रतीकानीति तृचाः प्राप्ताः, तस्मादाह—एका द्वे इति। उक्थ्योऽयम्[2] उक्थ्या मध्ये (आश्वौ ७, ७,१०) इति वचनात्। ऊर्ध्वं स्तोत्रियानुरूपेभ्य ऐकाहिकान्युक्थ्यानि॥ ६॥

[अभिप्लवे षडहे युग्मेष्वहःसु वैश्वदेवमरुत्वतीययोः शस्त्रयोः क्रमश आज्यप्रउगयोः प्रतिपदनुचराणां च विधानम्]

आज्यप्रउगे प्रतिपदनुचराश्चोभयोर्युग्मेष्वेवमभिप्लवे॥ ७॥

आज्यप्रउगे अभिप्लवे षळहे यानि युग्मान्यहानि द्वितीयचतुर्थषष्ठान्यहानि,[3] तेष्वहःसु आज्यं च प्रउगं च आज्यप्रउगे प्रतिपदनुचराश्चोभयोः शस्त्रयोः मरुत्वतीयस्यैतान्ये एव भवन्ति, वैश्वदेवस्य प्रतिपदनुचरौ (आश्वौ ७,६,६)। अधिकाराद् उभयोरित्याह। अभिप्लव इत्युक्ते सर्वेष्वहःसु प्राप्तेषु युग्मेष्वित्याह बहुवचनम्। युग्मयोरित्युक्ते द्वितीयचतुर्थयोरेवातिदेशः स्यान्न षष्ठे। एवमिति यद् द्वितीयेऽहनि विधानं तन्निदर्शयति। युग्मेष्विति बहुवचनात् सर्वत्र युग्मेषु प्राप्त अभिप्लवग्रहणम्॥ ७॥

॥ इति सप्तमे षष्ठः खण्डः॥

१-१. नास्ति ब[1]। २. द्र. आश्वौ ७, ७, २ देवत्रातभाष्यम्। ३. [0]षळहानि मूको।

# अथ सप्तमेऽध्याये सप्तमः खण्डः

[तृतीयस्याभिप्लविकस्याह्नः शस्त्रकथनम्]

**तृतीयस्य 'त्र्यर्यमा', 'यो जात एव' इति मध्यंदिनः ॥ १ ॥**

तृतीयस्य आभिप्लविकस्य शस्यं वक्ष्यते। **एतेनाह्ना** (आश्रौ ७, १, ३) इत्यैकाहिके आज्यप्रउगे। होत्रकाणां स्तोत्रियानुरूपारम्भणीयातृचपर्यासाः। मरुत्वतीयौ[1] प्रागाथौ[2]। ऐकाहिकः शेष आतानः।[3] **त्र्यर्यमा** (ऋ ५, २९), **यो जात एव** (ऋ २,१२)[3] इति सूक्ते मध्यंदिनो भवति[3]। **त्र्यर्यमा** इति मरुत्वतीय-सूक्तम्। **यो जात एव** (ऋ २, १२) इति निष्केवल्यम्। रथन्तरस्य स्तोत्रियानुरूपौ धाय्या पिबवान् सामप्रगाथः ताक्ष्यः। **यो जात एव** इति निष्केवल्यम्। होत्रकाणां स्तोत्रियानुरूपाः कद्वन्त आरम्भणीयाः तृचा[4] वा[4] संपाता अहरहः-शस्यानि इति।

**वैश्वदेवाग्निमारुतयोर्ध्रुव आतानः। सूक्तान्येव सूक्तस्थानेषु** (द्र. आश्रौ ७, १.७८) ॥ १ ॥

[तृतीयस्याह्नः सावित्रादिशस्त्राणां चतुर्थस्याह्नश्च निष्केवल्यशस्त्रस्य कथनम्]

**'तद्देवस्य', 'घृतेन द्यावापृथिवी' इति तिस्रः, 'अनश्वो जातः', 'परावतो यः' इति वैश्वदेवम्; वैश्वानराय धिषणां,' 'धारावरा मरुतः', 'त्वमग्ने प्रथमो अङ्गिराः' इत्याग्निमारुतम्। चतुर्थस्य 'उग्रो जज्ञे' इति निष्केवल्यम् ॥ २ ॥**

**तद्देवस्य** (ऋ ४,५३) सावित्रम्। **घृतेन द्यावापृथिवी** (ऋ६ ७०.४-६) इति तिस्रो द्यावापृथिवीयम्। **अनश्वो जातः** (ऋ ४,३६) इत्यार्भवम्। **परावतः** (ऋ १०,६३) इति वैश्वदेवं शस्त्रम्। **वैश्वानराय धिषणाम्** (ऋ ३,२) इति वैश्वानरीयम्। **धारावरा** (ऋ २,३४) इति मारुतम्। ऐकाहिकौ स्तोत्रियानुरूपौ।[5] **त्वमग्ने प्रथमः** (ऋ १, ३१) इति जातवेदस्यम्। समानमन्यत्। इत्याग्नि-मारुतम्। स्तोत्रियानुरूपेभ्य ऊर्ध्वमैकाहिकान्युक्थानि। उक्थ्योऽयम्।

१. °तीये मै। २. प्रगाथः ब[1], प्रगाथो मै। ३-३. नास्ति मै। ४-४. तृतीया (°य्या मै) मूको। ५. °नुरूपौ जातवेदस्य (°स्या मै) मूको।

चतुर्थस्य द्वितीयादाज्यप्रउगे। होत्रकाणां स्तोत्रियानुरूपा वाऽऽरम्भणीया-स्तृचाः पर्यासाः। बृहतः स्तोत्रियानुरूपौ धाय्या उभयवान् प्रगाथस्तार्क्ष्यः, **उग्रो जज्ञे** (ऋ ७, २०) इति सूक्तम्। इत्येतद् निष्केवल्यम्। होत्रकाणां स्तोत्रिया-नुरूपप्रगाथारम्भणीयाः प्रथमाः संपाता अहरहःशस्यानीति।

वैश्वदेवाग्निमारुतयोर्ध्रुव आतानः। द्वितीयेन प्रतिपदनुचरौ॥ २॥

[चतुर्थस्याह्नः सावित्रादिशस्त्राणां कथनम्]

**'ह्वयाम्यग्निम्', 'अस्य मे द्यावापृथिवी' इति तिस्रः; 'ततं मे अपः' इति वैश्वदेवम्॥ ३॥**

**ह्वयाम्यग्निम्** (ऋ १, ३५) इति सावित्रम्। **अस्य मे द्यावापृथिवी** (ऋ २, ३२, १-३) इति तिस्र ऋचो द्यावापृथिवीयम्। **ततं मे अपः** (ऋ १, ११०) इत्यार्भवम्। ऐकाहिकं वैश्वदेवं सूक्तम्। इति वैश्वदेवशस्त्रम्।

[चतुर्थस्य वैश्वानरीयादिशस्त्राणां कथनम्]

**'वैश्वानरं मनसा' इति तिस्रः, 'प्र ये शुम्भन्ते', 'जनस्य गोपाः' इत्या-ग्निमारुतम्॥ ४॥**

**वैश्वानरं मनसा** (ऋ ३, २६, १-३) इति तिस्र ऋचो वैश्वानरीयम्। **प्र ये शुम्भन्ते** (ऋ १, ८५, १) इति मारुतम्। **जनस्य गोपाः** (ऋ ५, ११, १) इति जातवेदस्यम्। इत्याग्निमारुतम्। स्तोत्रियानुरूपेभ्य ऊर्ध्वमैकाहिकान्यु-क्थानि। उक्थ्योऽयम्॥ ४॥

[पञ्चमस्याह्नः शस्त्रकथनम्]

**पञ्चमस्य 'कया शुभा', 'यस्तिग्मशृङ्गः' इति मध्यन्दिनः॥ ५॥**

**पञ्चमस्य एतेन** (आश्रौ ७, १, ३) इत्यैकाहिके आज्यप्रउगे। होत्र-काणां स्तोत्रियानुरूपारम्भणीया तृचा वा पर्यासाः। **कया शुभा** (ऋ १, १६५), **यस्तिग्मशृङ्गः** (ऋ ७, १९) इत्येते सूक्ते माध्यंदिनः। ऐकाहिका आतानाः। द्वितीयो ब्राह्मणस्पत्यः प्रगाथः[1]। **कया शुभा** इति सूक्तम्। इति[1] मरुत्वतीयम्॥ ५॥

[कयाशुभीयसूक्तस्य परिधानविधानम्]

**कयाशुभीयस्य तु नवम्युत्तमाऽन्यत्रापि यत्र निविद्धानं स्यात्॥ ६॥**

कयाशुभीयस्य सूक्तस्य नवम्यृगुत्तमा भवति, नृयवम्या परिधानम् **अनुत्तमा** (ऋ १, १६५,९) इत्येतयैन्द्रयर्चा[2]। मारुत्या मा भूदिति। **एष वः**

१. नास्ति ब[1]। २. °तयैवर्चा ब[1]; °तयैन्द्रर्या मै।

स्तोमः (ऋ १, १६५, १५) इत्यृक्। इति मरुत्वतीयम्। अन्यत्राप्यन्येष्वहःसु यत्र कयाशुभीयं निविद्धानं भवति, तत्रापि नवम्युत्तमा प्रयोक्तव्या, यथा विषुवति।[1] उपसदादिषु क्रमेण विहितो विधिरन्यत्र न प्राप्नोति। तस्मादन्यत्रेत्युच्यते[2]। अपिशब्दः समुच्चयार्थः। तु-शब्दो निष्केवल्यसूक्तनिवृत्त्यर्थः। पञ्चमे वाऽन्यत्र च। यत्र इति वचनात् क्वचिन्निविद्धानम्, क्वचिन्न भवति। यत्र निविद्धानं[3] स्याद् इति वचनाद् अनिविद्धाने न भवति। नवम्युत्तमा, यथा सप्तमेऽहनि। रथन्तरस्य स्तोत्रियानुरूपौ, धाय्या, पिबवान्प्रगाथस्तार्क्ष्यः। यस्तिग्मशृङ्ग (ऋ ७, १९, १) इति निष्केवल्यम्। होत्रकाणां[4] स्तोत्रियानुरूपाः प्रगाथा आरम्भणीया द्वितीयसंपाता अहरहःशस्यानि इति। वैश्वदेवाग्निमारुतयोर्ध्रुव आतानः। सूक्तानि सूक्तस्थानेषु[5]। ऐकाहिकं सावित्रम्॥ ६॥

[पञ्चमस्य शस्त्रान्तरकथनम्]

**'घृतवती भुवनानामभिश्रिया', 'इन्द्र ऋभुभिर्वाजवद्भिः' इति तृचौ, 'कदु प्रियाय' इति वैश्वदेवम्॥ ७॥**

घृतवती (ऋ ६, ७०, १-३), इन्द्र ऋभुभिः (ऋ ३, ६०, ५-६) इत्येतौ द्वौ तृचौ। घृतवती इति तृचं द्यावापृथिवीयं सूक्तम्। इन्द्र ऋभुभिः (ऋ ३, ६०, ५-६) इति तृचमार्भवं सूक्तम्। पादग्रहणे तृचावित्याह। कदु प्रियाय (ऋ ५, ४८) इत्येतत् सूक्तं वैश्वदेवम्। [6]इति वैश्वदेवं शस्त्रम्[6]॥ ७॥

[पञ्चमस्याऽऽग्निमारुतशस्त्रस्य षष्ठस्य च शस्त्राणां कथनम्]

**'पृक्षस्य वृष्णः', 'वृष्णे शर्धाय', 'नू चित् सहोजाः' इत्याग्निमारुतम्। षष्ठस्य सावित्रार्भवे तृतीयेन वैश्वानरीयं च 'कतरा पूर्वा,' 'उषासानक्ता' इति वैश्वदेवं; 'प्रयज्यवः', 'इमं स्तोमम्' इति मारुतम्॥ ८॥**

पृक्षस्य वृष्णः (ऋ ६, ८), वृष्णे शर्धाय (ऋ १, ६४), नू चित् सहोजाः (ऋ १, ५८) इत्याग्निमारुतम्। समानमन्यत्। स्तोत्रियानुरूपेभ्य ऊर्ध्वमैकाहिकान्युक्थानि। उक्थ्योऽयम्।

षडहस्य द्वितीयादाज्यप्रउगे। होत्रकाणां स्तोत्रियानुरूपारम्भणीयास्तृचावापः पर्यासाः। द्वितीयात् प्रतिपदनुचरौ तृतीयौ। ध्रुव आतानः। ऐकाहिकं सूक्तम् इति मरुत्वतीयम्। बृहत्स्तोत्रियानुरूपौधाय्या, उभयवान् प्रगाथस्तार्क्ष्यः।

---

१. द्र. आश्री ८,६,६। २. तस्माद्यसौत्रे° मूको। ३. विनि° ब¹। ४. होतृणां मै। ५. द्र. आश्री ७,१,८। ६-६. इतच्छस्त्रं (इत्येतच्छस्त्रं ?) वैश्वदेवम् मै।

**इन्द्रस्य नु वीर्याणि** (ऋ १, ३२) इति निष्केवल्यम्। होत्रकाणां स्तोत्रियानुरूपाः प्रगाथा आरम्भणीयास्तृतीयासंपाता अहरहःशस्यानि।

द्वितीयात् प्रतिपदनुचरौ। सावित्रं चार्भवं च सावित्रार्भवे तृतीयेनाह्ना व्याख्याते **तद्देवस्य** (ऋ ४, ५३), **अनश्वो जातः** (ऋ ४, ३६) इति[1]। वैश्वानरीयं च सूक्तं तृतीयेनाह्ना व्याख्यातम् **वैश्वानराय धिषणाम्** (ऋ ३, २) इति[1]। च-शब्दस्तृतीयाधिकारसमुच्चयार्थः। इत्येतद् वैश्वदेवं शस्त्रम्। **तद्देवस्य, कतरा पूर्वा** (ऋ १, १६५), **अनश्वो जातः, उषासानक्ता** (ऋ १०, ३६) इत्यन्तानि सूक्तानि वैश्वदेवम्। **वैश्वानराय धिषणाम्** इति वैश्वानरीयम्। **प्रयज्यवः** (ऋ ५, ५५) इति मारुतम्[2]। **इमं स्तोमम्** (ऋ १, ९५) इति जातवेदस्यम्। इत्याग्निमारुतम् ॥ ८ ॥

[अभिप्लवषडहोपसंहारः]

**इत्यभिप्लवः षळहः ॥ ९ ॥**

इत्यभिप्लवः षळह इयं संज्ञा। **चतुरभिप्लवान्** (आश्रौ ११,७,२) इत्युक्त एतस्य षळहस्य ग्रहणम्। षळहग्रहणात् **षळहा वाऽऽवर्तेरन्** (आश्रौ ११,७,१९) इत्युक्ते ज्ञातव्या एते षळहाः ॥९॥

[षडहस्याभिप्लवस्य प्रथमषष्ठयोरह्नोरग्निष्टोमसंस्थाकत्वं द्वितीयादि-पञ्चान्तानां चोक्थ्यसंस्थाकत्वम्]

**तस्याग्निष्टोमावभित उक्थ्या मध्ये ॥१०॥**

तस्याभिप्लवस्याग्निष्टोम संस्थावभित उभयतो यौ प्रथमषष्ठौ। उक्थ्यौ तु न भवतः, उक्थ्या मध्य इति वचनात्। **उक्थ्या मध्ये**। द्वयोरग्निष्टोमयोर्मध्य उक्थ्याश्चत्वारो भवन्ति, द्वितीयतृतीयचतुर्थपञ्चमास्तेषु। उक्थ्यानि व्याख्यातानि[3]। एतेनाह्ना (आश्रौ ७, १, ३) इति च संस्थानामतिदेशाद् अनियमे प्राप्ते संस्था नियम्यते[4] ॥१०॥

[उक्थ्येषु स्तोत्रियानुरूपाणां कथनोपक्रमः]

**उक्थ्येषु स्तोत्रियानुरूपाः ॥११॥**

उक्थ्येषु स्तोत्रियानुरूपा वक्ष्यन्ते। उक्थ्यसंस्थेषु क्रतुषु उक्थ्या वेदितव्याः। उक्थ्येष्वित्यधिकृत्य विधानादन्यत्र न भवन्ति। पुनरुक्थ्यग्रहणात् षळहादन्यत्राप्यु-

---

१. द्र. आश्रौ ७, ७, २। २. मारुतं जातवेदस्य (°स्या मै) मूको। ३. द्र. आश्रौ ६, १, २। ४. नियम्यन्ते मै।

क्थ्येषु एते[1] स्तोत्रियानुरूपा भवन्ति चतुर्विंशादिषु। ऐकाहिकेषु स्तोत्रियानुरूपेष्विमे वक्ष्यन्ते, ऐकाहिकानां स्थाने भवन्ति। तृचागमे तृचानामुद्धारः ॥११॥

[मैत्रावरुणस्य स्तोत्रियानुरूपाणां कथनोपक्रमः]

**मैत्रावरुणस्य ॥१२॥**

मैत्रावरुणस्य पूर्वं वक्ष्यते, अनन्तरमितरयोः सर्वेषामधिकारान्मैत्रावरुणग्रहणम् ॥१२॥

॥ इति सप्तमे सप्तमः खण्डमः ॥

---

१. नास्ति ब[1]।

# अथ सप्तमेऽध्यायेऽष्टमः खण्डः

'एह्यू षु ब्रवाणि ते', 'आग्निरगामि भारतः', 'प्र वो वाजा अभिद्यवः', 'अभि प्रयांसि वाहसा', 'प्र मंहिष्ठाय गायत', 'प्र सो अग्ने तवोतिभिः', 'अग्निं वो वृधन्तम्' 'अग्ने यं यज्ञमध्वरं', 'यजिष्ठं त्वा ववृमहे', 'यः समिधा य आहुती', 'आ ते अग्न इधीमहि', 'उभे सुश्चन्द्र सर्पिषः' इति द्वे एका च; 'अग्निं तं मन्ये यो वसुः', 'आ ते वत्सो मनो यमत्', 'आग्ने स्थूरं रयिं भर', 'प्रेष्ठं वो अतिथिं', 'श्रेष्ठं यविष्ठ भारत', 'भद्रो नो अग्निराहुतः', 'यदी घृतेभिराहुतः', 'आ घा ये अग्निमिन्धते', 'इमा अभि प्र णोनुमः' इति ॥१॥

**एह्यषु** (ऋ ६,१६,१६-१८), आग्निरगामि (ऋ ६,१६,१९-२१) इति स्तोत्रियानुरूपौ मैत्रावरुणस्य द्वितीयेऽहनि। ऐकाहिकाः स्तोत्रियानुरूपाः पुनरुच्यन्ते। उक्थ्येषु स्तोत्रियानुरूपाः वक्ष्यन्ते (द्र. आश्रौ ७,७, ११) इत्युक्तम्[1]। ये वक्ष्यन्ते, त एव स्तोत्रियानुरूपाः। ऐकाहिकानां प्रतिषेधः स्याद् यथाऽच्छावाकस्य **प्र वो वाजाः** (ऋ ३, २७, १-३), **अभि प्रयांसि** (ऋ ३, ११, ७-९) इति[2] स्तोत्रियानुरूपौ षळहयोर्द्वितीयेऽहन्येव। **प्र मंहिष्ठाय गायत** (ऋ ८, १०३, ८-१०), **प्र सो अग्ने तवोतिभिः** (ऋ ८,१९,३०-३२) इति[3] तृतीये। **अग्निं वो वृधन्तम्** (ऋ८, १०२,७-९), **अग्ने यं यज्ञमध्वरम्** (ऋ १,१,४-६) इति चतुर्थे चतुर्विंशे च। **यजिष्ठं त्वा ववृमहे** (ऋ ८,१९, ३-५), **यः समिधा य आहुती** (ऋ ८, १९ ५-७) इति[4] पञ्चमे। **आ ते अग्ने** (ऋ ५, ६, ४-५), **उभे सुश्चन्द्र सर्पिषः** (ऋ ५,६,९) इत्येते द्वे प्रतीके, द्वे एका च आनन्तर्येण। आ ते अग्ने इति द्वे भवतः। उभे सुश्चन्द्र सर्पिषः इत्येका भवति[5]। द्वे एका च स्तोत्रियः। तृचाः स्तोत्रियानुरूपाः (आश्रौ ५, १०,१८) इति वचनात् 'सर्वत्र तृचाः[6]। **अग्निं तं मन्ये** (ऋ ५,६, १-३) इत्यनुरूपः। एतौ स्तोत्रियानुरूपौ पृष्ठ्यस्य[7] पञ्चमेऽहनि। **आ ते वत्सो मनो यमत्** (ऋ ८, ११, ७-९), **आग्ने स्थूरम्** (ऋ १०,१५६, ३-५) इत्येतौ सप्तमेऽहनि। **प्रेष्ठं वो अतिथिम्** (ऋ १, १८६, ३-५), **श्रेष्ठं यविष्ठ भारत** (ऋ २,७, १-३) इत्यष्टमेऽहनि, स्वरसाम्नः प्रथमेऽहनि च। **भद्रो नो अग्निराहुतः** (ऋ ८,१९,१९-२१), **यदी घृतेभिराहुतः** (ऋ ८, १९, २३-२५) इति नवमेऽहनि अनुवचनात्[1]। **आ घा ये** (ऋ ८, ४५,

---

१. इत्युक्ते मूको; द्र. आश्री ७, ७, ११ देवत्रातभाष्यम्। २. इति वा मूको। ३. नास्ति मूको। ४. नास्ति मै। ५. भवति द्वे एका भवति ब[1]। ६-६. सर्व ऋचाः मूको। ७. पृष्ठ्या ब[1]।

१-३), इमा अभि (ऋ ८, ६,७-६) इति नवमेऽह्न्येव विकल्पः। एते[1] अभिप्लवे दश तृचाः[2]। षष्ठेऽहनि द्विपदा वक्ष्यन्ते । अभिप्लवस्य व्याख्यातेषु स्वरसामस्वपरयोश्चतुर्विंशे [3]च प्राकृतान्यहानि[3], प्रत्यक्षं कल्पन्ते,[4] तस्मादेत आम्नाताः ॥१॥

[ब्राह्मणाच्छंसिनः स्तोत्रियानुरूपाः]

अथ ब्राह्मणाच्छंसिनः 'अभ्रातृव्यो अना त्वं', 'मा ते अमाजुरो यथा', 'एवाह्यसि वीरयुः'[5], 'एवा ह्यस्य सूनृता'[6], 'तं ते मदं गृणीमसि'[7], 'तम्वभि प्र गायत'[8], 'वयमु त्वामपूर्व्य'[9] 'यो न इदमिदं पुरा'[10] 'इन्द्राय साम गायत'[11], 'सखाय आ शिषामहि'[12], 'य एक इद्विदयते'[13] 'य इन्द्र सोमपातमः'[14], 'एन्द्र नो गधि'[15], 'एदु मध्वो मदिन्तरम्'[16], 'एतो न्विन्द्रं स्तवाम सखायः'[17], 'स्तुहीन्द्रं व्यश्ववत्'[18], 'त्वं न इन्द्रा भर'[19], 'वयमु त्वामपूर्व्य'[20], 'यो न इदमिदं पुरा'[21], 'आ याहीम इन्दवः'[22] इति समाहार्योऽनुरूपः; 'अभ्रातृव्यो अना त्वं', 'मा ते अमाजुरो यथा' इति ॥२॥

अथ ब्राह्मणाच्छंसिनो वक्ष्यन्ते। अथ शब्दोऽभिप्लवेषु। अभ्रातृव्यः (ऋ ८, २१, १३-१५), [23]मा ते अमाजुरः[23] (ऋ ८, २१, १५-१७) इत्येतावभिप्लव एव भवतो, न पृष्ठ्ये, तयोः पुनर्वचनाद् आभिप्लविकानाम् अभ्यावृत्तिं दर्शयति। तस्मात् सर्वत्राभिप्लवेष्वाभिप्लविकाः स्तोत्रियानुरूपा अभ्यावर्तन्ते[24]। इतरयोस्तु होत्रयोः स्तोत्रियानुरूपावभिप्लवे पृष्ठ्ये च[25] भवतः। अभ्रातृव्यः[26] (ऋ ८,२१, १३; १५-१७) इत्येतौ तु अभिप्लव एव, न पृष्ठ्ये, तस्मादभिव्यावृत्तिर्दर्शिता[27] ॥२॥

[अच्छावाकस्य स्तोत्रियानुरूपाः]

अथाच्छावाकस्य 'इन्द्रं विश्वा अवीवृधन्', 'उक्थमिन्द्राय शस्यं', 'श्रुधी हवं तिरश्च्याः', 'आश्रुत्कर्ण श्रुधी हवम्', 'असावि सोम इन्द्र ते', 'इममिन्द्र

---

१. एते अभिप्लवः एते मै। २. ऋचाः मै। ३-३ व प्राकृता° ब[1]।
४. कल्पते व[1]। ५. ऋ ८, ९२, २८-३०।
६. ऋ १, ८,८-१०। ७. ऋ ८,१५,४-६। ८. ऋ ८,१५,१-३।
९. ऋ ८,२१,१-३। १०. ऋ ८,२१,९-११। ११. ऋ ८, ९८, १-३।
१२. ऋ ८,२४,१-३। १३. ऋ १,८४,७-९। १४. ऋ ८,१२,१-३।
१५. ऋ ८,९८,४-६। १६. ऋ ८,२४,१६-१८। १७. ऋ ८,२४,१९-२१।
१८. ऋ ८,२४,२२-२४। १९. ऋ ८,९८,१०-१२। २०. ऋ ८,२१,१-३।
२१. ऋ ८,२१,९-११। २२. ऋ ८,२१,३-५। २३-२३. नास्ति मूको।
२४. अर्वतंते व[1]; आवर्तन्ते मै। २५. नास्ति मूको। २६. अभ्यावृत्य मूको।
२७. °वृत्तिः प्रदर्शिता मै।

सुतं पिब'' 'यदिन्द्र चित्र मेहना', 'यस्ते साधिष्ठोऽवसे', 'पुरां भिन्दुर्युवा कविः', 'वृषा ह्यसि राधसे', 'गायन्ति त्वा गायत्रिणः', 'आ त्वा गिरो रथीरिव' इति ॥३॥

अच्छावाकस्य स्तोत्रियानुरूपा वक्ष्यन्ते । अथ-शब्दः पूर्वप्रकृतापेक्षार्थः । 'उक्थ्यान् प्रकृतानपेक्षते[२] । ब्राह्मणाच्छंसिनोऽधिकाराद् अच्छावाकग्रहणम् । इन्द्रं विश्वा (ऋ १, ११, १-३), उक्थमिन्द्राय (ऋ १, १०, ५-७) इति पृष्ठ्याभिप्लवयोर्द्वितीयेऽहन्यैकाहिकयोः स्थाने । ऐकाहिकौ तु नाऽऽम्नातौ, तस्मात्तयोरिहोक्थ्येषु प्रयोजनं न विद्यते । श्रुधी हवम् (ऋ ८, ६५, ४-६), आश्रुत्कर्ण (ऋ १, १०, ६-११) इति तृतीयेऽहनि स्वरसाम्नां प्रथमे च । असावि सोम इन्द्र (ऋ १, ८४, १-३) इति पृष्ठ्यस्य पञ्चमे चतुर्थे चानुरूपे स्तुवन्ति । स्तोत्रियानुरूपः स्वरसाम्नां च वा प्रथमेऽहनि । यदिन्द्र चित्र मेहना (ऋ ५, ३६, १-३), यस्ते साधिष्ठः (ऋ ५,३५, १-३) इत्यभिप्लवस्य पञ्चमे । पुरां भिन्दुर्युवा (ऋ १, ११, ४-६), वृषा ह्यसि (ऋ ५, ३५, ४-६), इन्द्रमीशानम् (ऋ १, ११, ८) इति स्तोत्रियस्योत्तमा छन्दोगवशाद् एतावेवाष्टमे चाह्नि[३] भवतः । गायन्ति त्वा गायत्रिणः (ऋ १, १०, १-३), आ त्वा गिरो रथीरिव (ऋ ८,६५, १-३) इति नवमेऽहनि । चतुर्थस्य पादस्याभ्यासः । य एक इद् विदयते (ऋ १, ८४, ७) इत्येतस्मिश्च ब्राह्मणाच्छंसी तृतीयस्य पादस्याद्यान्यष्टाक्षराण्यभ्यस्य पृष्ठ्यस्य षष्ठेऽहनि द्विपदा[४] वक्ष्यन्ते[५] आभिप्लवस्य च षष्ठेऽहन्युक्थ्यामिति छन्दोगवशात् (द्र. द्राश्रौ ८,४,१०) । अग्ने[६] त्वं नः (ऋ ५,२४, १-३), अग्ने भव (ऋ ७,१७, १-३), य एक इत् (ऋ ६, २२, १-३), य इन्द्र सोम (ऋ ८, १२,१-३), [७]अधा हीन्द्र[७] (ऋ ८, ९८,७-९), इयन्त इन्द्र (ऋ ८,१३, ४-६) इति स्तोत्रियानुरूपाश्चतुर्विंशे । अग्निं वो वृधन्तम् (ऋ ८, १०२, ७-९), वयमु त्वा (ऋ ६, १५, १९-२१), यो नः (ऋ १०, ८२, ३-५), य एक इत् (ऋ १, ८४, ७-९), य इन्द्र सोम इति वाः गायन्ति त्वा (ऋ १, १०, १-३), आ त्वा गिरः (ऋ ८, ६५, १-३), इति स्तोत्रियानुरूपा व्याख्याताः ॥३॥

[सूक्तानामेकैकमवशिष्याऽऽवापविधानम्]

**सूक्तानामेकैकं शिष्ट्वाऽऽवपेरन् ॥ ४॥**

ऊर्ध्वमनुरूपेभ्य ऐकाहिकान्युक्तानि । तेषु सूक्तानामेकैकं [८]शिष्ट्वा सूक्तशेषं कृत्वा[८] आवपेरन् होत्रकाः । या ऋचो वक्ष्यामस्ता अधिकाः शंसेद् यथाऽपरिमिताभिरतिशंसनं भवति । त्रिप्रभृत्यपरिमिताः ॥ ४ ॥

॥ इति सप्तमेऽष्टमः खण्डः ॥

---

१. ऋ १, ८४, ४ । २-२. उक्थ्या प्रकृतानापेक्षते (°न्ते मै) मूको ।
३. वाह्नि ब' । ४. द्विपादा ब' । ५. वक्ष्यते ब' । ६. अन्ये ब' ।
७-७. आधाहीन्द्र मूको । ८-८. सूक्तशेषं कृत्वा शिष्ट्वा मूको ।

# अथ सप्तमेऽध्याये नवमः खण्डः

[स्तोमे वर्धमाने ऋगावपनम्]

**स्तोमे वर्धमाने ॥१॥**

स्तोमे वर्धमान आवापं कुर्यात् । मैत्रावरुणस्य शस्त्रे एकत्रिंशदृचः[1] । [2]तेनाष्टाविंशस्तोमोऽतिशस्यते[2] एकोनत्रिंशदादिषु स्तोमेष्वावापः कर्त्तव्यो यथाऽपरिमिताभिरतिशंसनं भवति । तथाऽच्छावाकस्य शस्त्रे चत्वारिंशत्[3] । यथाऽपरिमिताभिरतिशंसनं भवति । तथाऽच्छावाकस्य शस्त्रे चत्वारिंशत्[3] । चत्वारिंशस्तोममतिशंसति[4] । अत ऊर्ध्वं स्तोमे वर्धमान एकचत्वारिंशत्प्रभृत्यपरिमितावापः[5] कर्त्तव्यः । दशरात्रेषु स्तोमेषु त्रयस्त्रिंशस्तोमं[6] मैत्रावरुण आवपेत। [7]यद्युक्थ्येष्वद्विपदासु स्तुवीरन्[7], चतुश्चत्वारिंशादिषु ब्राह्मणाच्छंस्यच्छावाकश्च । **आ वां राजानौ** (ऋ ७, ८४, १), इत्येतस्मात् प्रागावापस्थानं मैत्रावरुणस्य[8] । **अच्छा म इन्द्रम्** (ऋ १०,४३, १) इत्येतस्मात् प्राग्[9] ब्राह्मणाच्छंसिनः[8] । **सं वां कर्मणा** (ऋ ६,६९,१) इत्येतस्मात् प्रागच्छावाकस्य[8] । स्तोमे वर्धमान आवापः क्रियते । [10]स्तोमस्यानिर्ह्रासे[10], ह्रासे तु निर्ह्रासो न क्रियते, नित्यत्वाच्छस्त्राणामावापस्य । **नित्यादधिकं स्तोमकारणात्** (आश्वौ ७, ५, १०) इति चोक्तम् । **इमा उ वां भृमयः** (ऋ ३, ६२, १) इत्येवमादि या ऋचो वक्ष्यन्ते, ता आवापऋचः ॥ १ ॥

[मैत्रावरुणस्य आवापऋचां कथनम्]

**'इमा उ वां भृमयो मन्यमानाः' इति तिस्रः; 'इन्द्रा को वाम्' इति सूक्ते; 'श्रुष्टी वां यज्ञः', 'युवां नरा', 'पुनीषे वाम्', 'इमानि वां भागधेयानि' इत्येतस्य यथार्थं मैत्रावरुणः ॥ २ ॥**

**इमा उ वां भृमयो मन्यमानाः** (ऋ ३, ६२, १-३) इत्येतास्तिस्र ऋचः । पादग्रहणात् तिस्र इत्युच्यते[11] । **इन्द्रा को वाम्** (ऋ ४, ४१; ४२) इत्येते द्वे सूक्ते । **श्रुष्टी वां यज्ञः** (ऋ ६,६८) इति सूक्तम् ।[12] **युवां नरा** (ऋ ७,८३) इति सूक्तम् ।[12] **पुनीषे वाम्** (ऋ ७, ८५) इति सूक्तम् । **इमानि वाम्** (ऋ ८, ५९) इति सूक्तम् । एतस्य ऋक्समूहस्य अवयवश ऋचो यथार्थमावपेत मैत्रावरुणः, यथार्थं यथास्तोमं यावतीभिर्ऋग्भिः स्तोमा[13] अतिशस्यन्ते । स्तोमाश्चाऽधिका अपरिमिता यथा संभवन्ति, तावतीरावपेत ।

---

१. एकविंशदृचः ब[1]; एकत्रिंशऋचः मै; द्र. आश्वौ ६, १, २ । २-२. °स्तोमानि शस्यंते (°स्यते मै) मूको । ३. त्रिचत्वा° मूको, द्र. आश्वौ ६, १, २ । ४. °रिंशत्स्तोम° ब[1] । ५. °रिंशप्रभृ° मूको । ६. त्रयस्त्रिंश (°शे मै) स्तोमे मूको । ७-७. यद्युक्थेष्वद्विपदा स्तुवीरन् ब[1] । ८. द्र. आश्वौ ६, १, २ । ९. नास्ति मूको । १०-१०. स्तोमस्याह्रसि (°स्याह्रसि मै) मूको । ११. °च्यंते मूको । १२-१२. नास्ति ब[1] । १३. यावद्भिर्ऋ° मूको ।

सर्वस्यावापः प्राप्त.[1] तस्मादाह—एतस्य यथार्थमिति। सर्वेषामधिकारान्मैत्रा-वरुणग्रहणम् ॥ २ ॥

[ब्राह्मणाच्छंसिन आवापसूक्तानां कथनम्]

**'यस्तस्तम्भ', 'यो अद्रिभिद्', 'यज्ञे दिवः' इति सूक्ते; 'अस्तेव सु प्रतरम्', 'आ यात्विन्द्रः स्वपतिः', 'इमां धियम्' इति ब्राह्मणाच्छंसी ॥ ३ ॥**

**यस्तस्तम्भ** (ऋ ४,५०) इति सूक्तम्। **यो अद्रिभित्** (ऋ ६, ६३) इति सूक्तम्। **यज्ञे दिवः** (ऋ ७,९७) इति सूक्तम्। **अस्तेवसु प्रतरम्** (ऋ १०,४२) इति सूक्तम्। **आ यात्विन्द्रः स्वपतिः** (ऋ १०,४४) इति सूक्तम्। **इमां धियम्** (ऋ ८, ४२, ३) इति सूक्तम्। इति ब्राह्मणाच्छंसी, इत्येतस्य ऋक्समूहस्यावयवशः[2] ब्राह्मणाच्छंसी यथार्थमावपेत। मैत्रावरुणाधिकाराद् ब्राह्मणाच्छंसीत्याह ॥३॥

[ अच्छावाकस्याऽऽवापसूक्तानां कथनम् ]

**'विष्णोर्नु कम्' इति सूक्ते; 'परो मात्रया' इत्यच्छावाकः ॥ ४ ॥**

**विष्णोर्नु कम्** (ऋ १, १५४; १५५) इत्येते द्वे सूक्ते। **परो मात्रया** (ऋ ७,९९) इति[3] सूक्तम्। इत्यच्छावाक इत्येतस्य ऋक्समूहस्य अवयवशः[4] यथार्थमावपेताच्छावाकः ॥ ४ ॥

॥ इति सप्तमे नवमः खण्डः ॥

१. प्राप्ते त॰ मै। २. ॰वयवस्य मूकी। ३. नास्ति मै। ४. ॰यवस्य मूकी।

# अथ सप्तमेऽध्याये दशमः खण्डः

[पृष्ठ्यस्याद्ययोरह्नोरुपक्रमः]

**पृष्ठ्यस्याभिप्लवेनोक्ते अहनी आद्ये आद्याभ्याम् ॥ १ ॥**

पृष्ठ्यस्येत्यधिकारः[1]। इत ऊर्ध्वं यद्[2] वक्ष्यामस्तत् पृष्ठ्यस्येत्यर्थः[3] ॥१॥

[ तृतीयसवनानामभिप्लवोक्तवत् कर्तव्यत्वम् ]

**तृतीयसवनानि चान्वहम् ॥ २ ॥**

[प्रथमद्वितीययोरह्नोराज्यसूक्तकथनम्]

**'उप प्रयन्तः'[4] इति तु प्रथमेऽहन्याज्यम्। 'अग्नि दूतम्' इति द्वितीये ॥ ३ ॥**

**अग्नि दूतम्** (ऋ १, १२, १) इत्येतत् सूक्तं द्वितीयेऽहन्याज्यम् ॥३॥

[तृतीयेऽहन्याज्यसूक्तकथनम्]

**तृतीये 'युक्ष्वा हि' इत्याज्यम् ॥ ४ ॥**

**होताऽजनिष्ट** (ऋ २, ५, १) इत्येतस्य स्थाने[5] तृतीयेऽहनि **युक्ष्वा हि** (ऋ ८, ७५, १) इत्येतत् सूक्तमाज्यं भवत्यैकाहिकस्य स्थाने। आज्यग्रहणं प्रउगविवक्षार्थम्। अनुच्यमाने तु वक्ष्यमाणाना प्रउगसंज्ञा एव[6] न स्यात् ॥ ४ ॥

[वाय्वादीनां तृचकथनम्]

**'वायवा याहि वीतये' इत्येका; 'वायो याहि शिवा दिवः' इति द्वे; 'इन्द्रश्च वायवेषां सुतानाम्' इति द्वयोरन्यतरा[7] द्विः; 'आ मित्रे वरुण वयम्', 'अश्विनावेह गच्छतम्', 'आ याह्यद्रिभिः सुतं', 'सजूर्विश्वेभिर्देवेभिः', 'उत नः प्रिया प्रियासु' इत्यौष्णिहं प्रउगम् ॥ ५ ॥**

**वायवा याहि वीतये** (ऋ ५, ५१, ५) इत्येका ऋक्। **वायो याहि शिवा दिवः** (ऋ ८, २६, २३-२४) इत्येते द्वे ऋचौ। एका, द्वे वायव्यस्तृचः, **तृचाः प्रउगे** (आश्रौ ७, १, १०) इति वचनात्। द्वे[8] प्रतीके द्वौ तृचौ प्राप्तौ, तस्माद् एका, द्वे इत्याह। **इन्द्रश्च वायवेषां सुतानाम्** (ऋ ५, ५१, ६-७) इत्येतयोर्द्वयोर्ऋचोरन्यतरा द्विः[8] आद्यां द्वितीयां वा द्विर्ब्रूयात्। द्विरभ्यासे कृते तृचो भवत्यैन्द्रवायवः तृचः। **तृचाः प्रउगे** (आश्रौ ७, १, १०) इति प्राप्तेऽधिकपादग्रहणं[८]

---

१. पृष्ठ्याधि° ब[1]। २. नास्ति मूको। ३. पृष्ठ्ये ब[1]। ४. ऋ १,७४,१। ५. द्र. आश्रौ ७, २, १; ६, १। ६. नास्ति मं। ७. °तरां देवत्रातपाठः। ८-८. नास्ति ब[1]।

'विशेषार्थम्। इन्द्रश्च वायवेषां सोमानाम् (ऋ ४, ४७, २) इति पूर्वत्वात् प्राप्नम्। द्वयोरिति तृचप्रतिषेधार्थम्। एवम् अन्यतरां द्विरिति प्राप्त्यर्थम्'। तृचं सूक्तं वाऽनन्तर्हितं द्विः' न शंसेत्'। आद्यां द्विर्ब्रूयान् 'मुख्यात्वात्, अन्त्यां वा द्विर्ब्रूयात्'। अन्त्यालोपो' वृद्धिर्वा इति। आ मित्रे वरुणे वयम् (ऋ ५, ७२, १-३)। अश्विनावेह गच्छतम् (ऋ ५, ७८ १-३); आ याह्यद्रिभिः सुतम् (ऋ ५, ४०, १-३), सजूर्विश्वेभिर्देवेभिः (ऋ ५, ५१, ८-१०), उत नः प्रिया प्रियासु (ऋ ६, ६१, १०-१२) इत्येते पञ्च तृचाः मैत्रावरुणाश्विनैन्द्रवैश्वदेवसारस्वतास्तृचाः। तृचाः प्रउगे (आश्वौ ७, १, १०) इति वचनात् तृचा भवन्ति। ध्रुवाः शस्त्राणामातानाः (आश्वौ ७, १, ७)। इति' औष्णिहं प्रउगम् इत्येतदौष्णिहं प्रउगमित्युच्यते। उष्णिक् छन्दः, तदौष्णिहम्। प्रउगमिति ब्राह्मणे संज्ञा। तद्धर्मातिदेशादैकाहिकः प्राप्तः॥ ५॥

[उत्तमे सारस्वते तृचेऽभ्यासविशेषविधानम्]

**उत्तमेऽन्वृचमभ्यासाश्चतुरक्षराः॥ ६॥**

उत्तमे सारस्वते तृचे अन्वृचम्, ऋचमृचं प्रत्यृचम्, चतुरक्षरा अभ्यासाः कर्तव्याः। ऋचान्त्यानि' चत्वार्यक्षराणि द्विर्वक्तव्यानि, उष्णिक्संपदर्थम्। गायत्री चतुरक्षराभ्यासा उष्णिक् भवति। औष्णिहं प्रउगम् (ऐब्रा ५, १) इति श्रुतेरन्त्यानामभ्यासः। अन्त्यानां लोपो वृद्धिर्वेति। चतुरक्षरा इति वचनाद् विकर्षप्रतिषेधः। सप्ताक्षरपादो विकर्षणेऽष्टाक्षरो भवति'। तत्र त्वविकर्षणे चतुर्णामभ्यासः—सरस्वती स्तोम्याभूत्, ती स्तोम्या भो३म्, निदस्पातु निदस्पातो३म्, जे हव्याभूज्जे हव्या भो३म् (द्र. ऋ ६, ६१, १०-१२) इति॥६॥

[पूर्वोक्ताभ्यासप्रतिषेधविकल्पः]

**न वा॥ ७॥**

न वाऽभ्यासं कुर्याद् गायत्रम्' एव'' शंसेत् श्रुतौ विहितत्वात्। औष्णिहमिति बाहुल्याद् भवति संज्ञा, यथा—समानोदर्कमित्याह''। यथा—गात्समदम् (आश्वौ ७, ६, ३) इति। होत्रकाणां स्तोत्रियानुरूपारम्भणीयातृचा वा पर्यासाः॥ ७॥

[मध्यन्दिने सवने प्रतिपदनुचरयोस्तृचयोर्वैरूपपृष्ठे च स्तोत्रियानुरूपयोः प्रगाथयोर्विधानम्]

**तृतीयेनाऽऽभिप्लविकेनोक्तो मध्यन्दिनः। 'तं तमित् राधसे महे', 'त्रय इन्द्रस्य सोमाः' इति मरुत्वतीयस्य प्रतिपदनुचरौ वैरूपं चेत् पृष्ठं 'यद् द्याव इन्द्र ते शतं' (ऋ ८, ७०, ५-६), 'यदिन्द्र यावतस्त्वम्' इति प्रगाथौ स्तोत्रियानुरूपौ॥८॥**

---

१-१. नास्ति ब'। २. वा मूको। ३. द्र. आश्वौ ७, २, १५। ४-४. नास्ति ब'।† अन्या मै। ५. °लोपे ब'। ६. नास्ति मूको। ७. ऋचान्तानि मूको। ८. द्र. सरस्वती स्तोम्याभूत ऋ ६, ६१,१०। ९. गायत्र्यः मूको। १०. एवं मै। ११. द्र. ऐब्रा ५, १।

तृतीयेनाभिप्लविकेनाह्ना मध्यंदिनो व्याख्यातः । **मध्यंदिन इत्युक्ते एते शस्त्रे** (आश्रौ ७, ५, १९) । **त्र्यर्यमा** (ऋ ५, २९) इति मरुत्वतीयं सूक्तम्, **यो जात एव** (ऋ २, १२, १) इति निष्केवल्यं सूक्तं शंसेत्[1] । अन्यद् यथाप्राप्तं सर्वम् इति[2] ऐकाहिके प्राप्ते **तं तमित्** (ऋ ८, ६८, ७-९). **त्रय इन्द्रस्य** (ऋ ८, २, ७-९) इति मरुत्वतीयस्य प्रतिपदनुचरौ भवत ऐकाहिकयोः [3]स्थाने । उभयोः शस्त्रयोरधिकाराद् मरुत्वतीयस्येत्याह । प्रतिपदनुचराविति वचनात् प्रतिपदनुचरयोः[3] स्थाने भवत एतौ प्रतिपदनुचरौ । **ध्रुव इन्द्रनिहवः** (आश्रौ ७, ३, ७), **धाय्याश्च** (आश्रौ ७, ३, ८) । तृतीयौ प्रगाथौ । त्र्यर्यमा (ऋ ५, २९) इति सूक्तम् । इति मरुत्वतीयम् । '[4]चतुर्थौ प्रगाथौ[4]' वैरूपं चेत्पृष्ठम् इति दर्शयति । प्रगाथग्रहणं च '[5]**तृचाः प्रतिपदनुचरा**[5]' द्व्यृचाः प्रगाथा (आश्रौ ५, १४, ७) इति । स्तोत्रियानुरूपग्रहणात् स्तोत्रियानुरूपयोः स्थाने भवतः । यथास्तुत-वचनाद्[6] बृहतीकारं मरुत्वतीये च बृहतीकारं प्रगाथाः, वैरूपस्य स्तोत्रियानुरूपौ, धाय्या, रथन्तरस्य योनिः, **इन्द्र त्रिधातु** (ऋ ६, ४६, ९) इति सामप्रगाथः, तार्क्ष्यः, **यो जात एव** (ऋ २, १२) इति सूक्तम् । इति निष्केवल्यम् । रथन्तरं चेत्[7] पृष्ठम् । होत्रकाणां '[8]स्तोत्रियानुरूपप्रगाथारम्भणीया तृतीयसंपातौ अहरहःशस्यानि, इहप्रभृति पृष्ठे पवमानगते स्याताम् । यद्यभीवर्तकाले उभयोः[8] स्तोत्रियानुरूपतो यानिधर्मेण[9] शंसेत्[10] । समानसव्येष्वभिप्लवस्य प्रकृता[11] [12]अभिजिद्विषुवतोश्चानुरूपाद् ऊर्ध्वं योनिस्थानम्[12], **एतद्धोत्रकाणां योनिस्थानम्** (आश्रौ ८, ६, १८) इति वचनात् । [13]तृतीयेऽहनि **आ त्वा सहस्रमा शतम्** (८, १, २४) इति योनिः, **यो राजा** (ऋ ८, ७०, १) इति चतुर्थे, **त्वमिन्द्र यशाः** (ऋ ८, ९०, ५) इति पञ्चमे, **पिबा सुतस्य** (ऋ ८, ३, १) इति षष्ठे अन्वहं काले यस्य क्रियमाणस्य योनिः, अभिजिति[13] **मा चिदन्यत्** (ऋ ८, १,१) इति योनिः, विषुवति [14]च श्यैतनौधसयोरभीवर्तस्य[14] च । उत्तरे पक्षसि इन्द्रक्रतोर-क्रियमाणस्य योनिशंसनम् **इन्द्र क्रतुं न आ भर** (ऋ ७, ३२, २६) इति । कालेयस्य चाक्रियमाणस्य योनिशंसनं छन्दोगवशाद् भवति । ब्राह्मणाच्छंसिना शंसयेत्, कालेयस्याच्छावाकेन इति तेषां वचनम् (द्र. द्राश्रौ ९, २, १७) छान्दोग्यो[15] होत्रामर्शो[16]ऽयम् इति चेत्, न, छान्दोग्यो[17] वा आध्वर्यवो वा होत्रामर्शः, होतृवशो यः, स कर्त्तव्यः[18] । यथा प्रउगे[19] सजनीयं[20] होता शंसति विहव्यम्[21] । निष्केवल्ये कयाशुभीयम् ।

---

१. द्र. आश्रौ ७,७, १ । २. नास्ति मूको । ३-३. नास्ति ब' । ४-४. चैत्यथां यौ ब'; नास्ति मै । ५-५. तृचप्रया ब'; ऋच प्राप्ताया मै । ६. यथाश्रुत° मै; द्र. आश्रौ ५,१५,१४ । ७. वा ब' । ८-८. नास्ति ब' । ९. योनिधप्रेण ब' । १०. शंसयेत् मै । ११. ये कृता (°ताः मै) मूको । १२-१२. °रूपा ऊर्ध्वंयोनि° मै । १३-१३. तृतीयेऽहनि दिति ब' । १४-१४. वश्येत नौविसयो° ब' । १५. छ (छा मै) न्दोग्या मूको । १६. हौत्रा ब' । १६. छन्दोग्या मूको । १८. द्र. आश्रौ ८, १३, ३४ । १९. प्रउगो ब' । २०. जनीयम् मै । २१. °व्य ब' ।

वैश्वदेव इति[1] शाखान्तरगतं[2] विधिमनुवदति, स न कर्तव्यः । यस्तु छन्दोगवशः अध्वर्युवशो वा, स कर्तव्यः । यथा होतारं वाचयति ब्राह्मणाच्छंसिना शंसयेत्, कालेयस्याच्छावाकेन इति । यथाऽस्माकं शास्त्रे वाचयत्यध्वर्युः[3] यजमानम्, तथा प्रतिगरं होतृवशादध्वर्युः करोति । एवमन्योन्यवशानि कर्माणि भवन्ति, तानि कर्तव्यानि, न छन्दोगवशत्वाद्योनिशसनं कर्तव्यम् । यदि च न क्रियते योनिशंसनम् **एतद्धोत्रकाणां योनिस्थानं** (आश्वौ ८,६,१८) इति परिभाषारम्भोऽनर्थकः, विश्वजितोऽन्यत्र योनिशंसनाभावात् । विश्वजिति तु वक्तव्यम् ऊर्ध्वमनुरूपेभ्य इति । तस्मात् परिभाषारम्भस्य सार्थकत्वम्[4] । यथाऽभीवर्ते **इन्द्र क्रतुम्** (ऋ ७, ३२, २६) कालेयानां योनिशंसनं कर्तव्यम् । तृतीयेनाभिप्लविकेनोक्तं तृतीयसवनं सोवथ्यम् ॥ ८ ॥

॥ इति सप्तमे दशमः खण्डः ॥

---

१. नास्ति ब[1] । २. शाश्वन्तरं गतं ब[1] । ३. वाचकस्यध्वयु° ब[1]; वायत्य° मै ।
४. सार्थकत्वात् मूको ।

# अथ सप्तमेऽध्याये एकादशः खण्डः

[ चतुर्थेऽहनि न्यूङ्खविधानम् ]

**चतुर्थेऽहनि प्रातरनुवाकप्रतिपद्यर्धर्चाद्योर्न्यूङ्खः ॥ १ ॥**

चतुर्थेऽहनीत्यधिकारः । यदित ऊर्ध्वं वक्ष्यामस्तत् चतुर्थेऽहनि विधानं वेदितव्यम् । प्रातरनुवाकप्रतिपदि प्रातरनुवाकस्य प्रतिपद् यया ऋचा प्रतिपद्यते सा प्रतिपद् **आपो रेवतीः** (ऋ १०, ३०, १२) इति । **स एतयर्चा प्रातरनुवाकं प्रत्यपद्यत** (ऐब्रा २, १६) इति ब्राह्मणम् । तस्मात् प्रतिपदि द्वयोरर्द्धर्चाद्यो-र्न्यूङ्खो भवति । न्यूङ्ख इति वक्ष्यमाणस्य ओकारस्योदात्तानुदात्तसंज्ञा उक्ता । न्यूङ्ख इत्युक्त एतस्य ग्रहणम् । **मुखतः प्रातरनुवाके न्यूङ्खयति** (ऐब्रा ५, ३) इति श्रुतिः ॥१॥

[न्यूङ्खविधिप्रदर्शनम्]

**द्वितीयं स्वरमोकारं त्रिमात्रमुदात्तं त्रिः ॥२॥**

प्रतिपदि द्वयोरर्धर्चाद्योर्यो द्वितीयः स्वरः । अकाराद्यौकारान्ता वर्णाः स्वर इत्युच्यन्ते । अर्धर्चेऽर्धर्चे यो द्वितीयः स्वरः, तमोकारं कुर्यात्, आपो रायश्च । कृतायां संहितायाम् ओकारमकारं च ओकारं कुर्यात् 'पो यो इति'[1] । तमोकारं द्विमात्रं सन्तं[2] त्रिमात्रं कुर्यात्, त्रिमात्रमुदात्तं कुर्यात् । एकश्रुतिः प्राप्ता, वचनाद् उदात्तो भवति । तमोकारमुदात्तं त्रिर्ब्रूयात् । **आपो** ३ ३ऽ ३ऽ ३ऽ ३ऽ ३ऽ ओ३ ३ऽ ३ऽ ३ऽ ३ऽ ३ऽ ओ३ ३ऽ ३ऽ ३ऽ षोडशग्राम इति, **रायो** ३ ३ऽ ३ऽ ३ऽ ३ऽ ३ऽ । अर्धर्चाद्योरिति वचनाद् आद्यस्य प्राप्ते (प्तौ ?) द्वितीयमित्याह । स्वरग्रहणाद् व्यञ्जनस्यौकारो न[3] भवति । द्विमात्रे प्राप्ते त्रिमात्रमित्याह । एकश्रुतौ प्राप्तायामुदात्तो विधीयते ॥२॥

[न्यूङ्खे ओकारानन्तरमर्द्धौकारवचनसंख्याव्यवस्था]

**तस्य तस्य चोपरिष्टादपरिमितान् पञ्च वाऽर्धौकाराननुदात्तान् ॥३॥**

**उत्तमस्य तु त्रीन् ॥४॥**

योऽत्र[4] ओकार उदाहृतः, तस्य तस्य चौकारस्योपरिष्टादेकैकस्योपरिष्टाद् अर्द्धौकारान् ब्रूयात् । अर्द्धकाला ओकारा अर्द्धौकारा मात्राकालाः । ते अर्द्धौकाराः पञ्च वक्तव्याः । अपरिमितान् वा पञ्चभ्योऽपरिमिता वा

१-१. आयोरति व; आपो इति मै । २. सकृत् मूको ।

३. [illegible] मूको । ४. यत्र मूको ।

भवन्ति। ते अर्द्धौंकारा अनुदात्ता भवन्ति। तानुदाहरिष्यति । तस्य तस्येति वीप्सा ओकारबहुत्वाद् एकैकस्योपरिष्टादर्द्धौंकारा भवन्ति। अन्यथा आद्यस्यैवोपरिष्टात् स्युः। च-शब्दो न्यूङ्खसंज्ञाधिकारसमुच्चयार्थः। तस्मादोकाराणां च न्यूङ्खसंज्ञा भवति। तस्मात् **उक्तो न्यूङ्खः** (आश्रौ ७, ११, १०) इत्युक्त उभयेषां प्राप्ता। अन्यथाऽन्तरत्वादोकाराणामेव न्यूङ्खसंज्ञा स्यात्। अधिकृतयोः संख्यायाम् अपरिमिता भवन्ति। यथा प्रातरनुवाके[1] शतादिभ्यः अपरिमितः[2], एवं पञ्चभ्योऽपरिमिता भवन्ति। विपर्यासवचनात् पञ्चेत्युत्तरपक्षो भवति। तस्मात् पञ्चैव प्रपद्यन्त अर्द्धौंकारस्यार्द्ध ॐकारः ॐ अक्षरप्रविभागः स्यात्। पञ्चानां कालप्रविभागो भवति। द्विमात्रस्यार्द्धमात्राकालो[3] भवति ओकारस्य। अर्द्धमिति वचनाद् अकार ओकारो भवति सर्वेष्वोकारेषु[4]। अर्द्धौंकारमिति संज्ञा चेयम्। **प्रथमादर्द्धौंकारात्** (आश्रौ ७, ११, १८) इत्युक्त एतस्य ग्रहणम्। अधिकारादुदात्ताः प्राप्ताः, तस्मादनुदात्ता[5] विधीयन्ते। अनुदात्ता इति वचनात् स्वरिता भवन्ति॥३॥

स्वरितांशको योऽन्येषामाम्नायः। एकश्रुतौ च प्राप्तायाम् उत्तमस्य तु त्रीनिति। उत्तमस्य तु त्रिमात्रस्यौकारस्योपरिष्टात् त्रीनर्द्धौंकारान्[6] अपरिमितान्[7] पञ्च वा न कुर्यात्। तु-शब्दः प्राप्तव्यावृत्त्यर्थः। अपरिमिताः पञ्च प्राप्तास्त्रीनेव कुर्यात्। तदेतत् सर्वं निदर्शनायोदाहरिष्यति। एवमेके सूत्रार्थमनुपदिशन्ति।

अपरे त्वन्यथा[8]। तत्र [9]तस्य चोपरिष्टात्[9] त्रय [10]ओकारा अनुदात्ताः[10]। तस्य तस्य [11]चोपरिष्टाद् द्वितीयादर्द्धमोकारं[11] ब्रूयात्। चकारो ऽर्धौंकारानुकर्षणार्थः। **द्वितीयं स्वरमोकारम्** (आश्रौ ७, ११, २) इत्यधिकृत ओकारे स्वकारणात् कृष्यते, तमेवमोकारमुदात्तादुपरिष्टाद् ब्रूयात्। एवं कृत एकैकस्योदात्तस्यौकारस्य पुनरुपरिष्टादेकैकमोकारं ब्रूयात्। इत्येवंस्थितेषु तेषां मात्राकाल उच्यते। अपरिमिता उदात्तेभ्य उपरिष्टाद् ये [12]ओकाराश्चोदितास्तानोकारानपरिमितकालान्[12] ब्रूयात्। पञ्चमात्रान् वा ब्रूयादिति विकल्पः। **ततो वै वागेव चतुर्थमहर्वहति** (ऐब्रा ५, ३) इति ब्राह्मणम्। तस्माद् यथाकामं वाचं वर्धयत्यपरिमितानोकारान् ब्रूयात्, वाचं[13] वर्द्धयति **एतदेव तदक्षरमभ्यायच्छन्ति। एतद् वर्धयन्ति। एतत् प्रविभावयिषन्ति** (ऐब्रा ५, ३) इति च ब्राह्मणम्। तस्मादपरिमितकलो मुख्यः, स एव कर्तव्यः, [14]ब्राह्मणवचनात्[14]।

---

१. आप्रात° मै। २. द्र. आश्रौ ४, १५, ३। ३. द्वि द्वि° व¹। ४. सर्वं (सव्ये मै) षूका° मूको। ५. तस्मादुदात्ता मूको। ६. त्रीर्न (नून मै) द्वौ (र्धो मै) कारान् मूको। ७. नास्ति व¹। ८. अन्यथा मै। ९-९. तयोप° व¹। १०-१०. ओकारोऽनु (°रो उ मै) दात्ताः मूको। ११-११. चोपरिष्टाद्वयादर्धमोंकारं व¹; चोदात्तोपरिष्टात् ब्रूयादर्धमोंकारं मै। १२-१२. ओकारानपरिमित° व¹। १३. होचं व¹। १४-१४. नास्ति व¹। नास्ति मूको।

'पञ्च वेति पुरुषशक्तिमपेक्ष्योक्तं द्रष्टव्यम्। तस्मिन्नपि पक्षे ब्राह्मणं कृतार्थमेव। एतद् वर्धयन्त्येतत् प्रविभावयिषन्तीति प्रकृतिकालाद् वर्धयन्ति'। द्विमात्र ओकार:[1] त्रिमात्रश्चतुर्मात्रो वाप्यवसाने दृष्टस्तस्मादधिकं वर्धते, पञ्चमात्रस्य[1] विधिः पूर्ववचनात्[2]। अशक्तावितरः पक्षः। तस्मादनन्तरं विधीयते। तानेतानद्धौंकारान् वृद्धौकारानित्यर्थः[5]। 'ऋध्नोतेर्द्धातोरर्द्धः'[6]। दीर्घ ओकारो यथाकामं वर्द्धते। संज्ञा चेयम्। **प्रथमादर्द्धौकारात्** (आश्रौ ७, ११, १८) इत्युक्त एतस्य ग्रहणम्। उदात्ताधिकारादुदात्ताः प्राप्ताः, तस्मादनुदात्तानित्याह। उदात्तानुदात्ता न्यूङ्खा विधीयन्ते (?)। यथा साम गायत्रं क्रियते, तथा चैवोदाहरिष्यति गानमेव न्यूङ्खः। तथा ब्राह्मणं **यदेलवा अभिगेष्णाश्चरन्त्यथान्नाद्यं प्रजायते** (ऐब्रा ५, ३) इति। उत्तमस्य तूदात्तस्योपरिष्टाद् य ओकारस्तस्मिंस्त्रिमात्रान् कालाज्जानीयात्[7]। तु-शब्दोऽपरिमिताधिकारव्यावृत्त्यर्थः ॥ ४ ॥

[पूर्वाक्षरस्य निघातकरणम्]

**पूर्वमक्षरं निहन्यते न्यूङ्ख्यमाने** ॥ ५ ॥

न्यूङ्ख्यमाने न्यूङ्खे क्रियमाणे न्यूङ्ख्याद्[8] अक्षरात् यत्[9] पूर्वमक्षरं तन्निहन्यते नीचं ब्रूयात्, अनुदात्तं ब्रूयात्। आपो इति आकारोऽनुदात्तो भवति तस्मात्। प्रचय एवैकश्रुतिः[10]। प्रचयान्तोऽनुदात्तो भवति, उदात्तस्वरित परः **नियुक्तं तूदात्तस्वरितोदयम्** (ऋप्रा ३, २१) इति वचनात्। एवं चेन्न वक्तव्यं प्राप्तत्वात्। इदं प्रयोजनम्। अनुदात्तप्रकृतेः प्रचयोक्तो विधिरिह न प्राप्नोति, स्वरप्रकृतित्वात्[11]। इह सर्वे स्वराः प्रचयं गच्छन्ति। तस्मादस्य प्राकृतो[12] धर्मोऽप्राप्तः पुनरारभ्यते। न्यूङ्ख्यमान इति पुनरुच्यते अधिकारव्यवायात् ॥ ५ ॥

[न्यूङ्खोदाहरणप्रदर्शनप्रतिज्ञा]

**तदपि निदर्शनायोदाहरिष्यामः** ॥ ६ ॥

तत्[13] यदुक्तं लक्षणेनापि निदर्शनाय। अपि निपातनायार्थ उदाहरिष्यामः ॥६॥

[न्यूङ्खोदाहरणम्]

**आपो** ३ ॐ ॐ ॐ ॐ ॐ **ओ**३ ॐ ॐ ॐ ॐ ॐ **ओ**३ ॐ ॐ ॐ **रेवतीः**

---

१-१. नास्ति ब[1]। २. चकारः मूको। ३. °त्रास्य मै। ४. °चनाम् ब[1]; °चनम् मै। ५. सिद्धोकारानित्यर्थ (°रनिवृत्त्यर्थः मै) मूको। ६-६. वृधोतेर्धातोः ऋद्धः ब[1]; शुध्नोतेर्धातो सद्धः मै। ७. काञ्जा° ब[1]। ८. न्यूङ्खाद° मूको। ९. नास्ति ब[1]। १०. एकैकश्रुतिः मूको। ११. स्वरः स्वरप्र° मै। १२. प्रकृता (तो° मै) मूको। १३. नास्ति ब[1]।

**क्षयथा हि वस्वः क्रतुं च भद्रं विभृथामृतं च। रायो३ ३० ३० ३० ३० ३० ओ३ ३० ३० ३० ३० ३० ओ३ ३० ३० ३० ३० ३० अ।३ ३० ३० ३० श्व स्थ स्वपत्यस्य पत्नीः सरस्वती तद् गृणते वयोधो३मापो३ ॥ ७ ॥**

**आपो३ ३० ३० ३० ३० ३० रेवतीः** इति, **रायो३ ३० ३० ३० ३० ३० श्च स्थः** इति, **गृणते वयोधो३ मापो३** (द्र. ऋ १०, ३०, १२) इत्येतदुदाहृतम्। शाखान्तरे न्यूङ्खा आम्नाताः, इह शाखायाम् अनाम्नाताः। तस्मादुदाहरणेन सिद्धे **द्वितीयं स्वरमोकारम्** (आश्वौ ७,११,२) इत्येवमादि न्यूङ्खलक्षणम्। तस्मादुदाहृतादन्यत्रापि प्राप्त्यर्थं वैराजादिषु[1] उदाहरणम्। [2]तस्मान्निदर्शनं न्यूङ्खलक्षणस्य[2] सार्थकत्वाय। सति लक्ष्ये लक्षणं सार्थकं भवति। तस्मान्नित्यस्य शाखान्तर आम्नातस्य न्यूङ्खस्य लक्षणमनुविधायि। नानोदाहरणम् अनर्थकं, न्यूङ्खमात्रमेवोदाहर्तव्यम्। यदि च आम्नायः प्रमाणं न भवति, अर्द्धौकाराणां [3]विवृत्तिर्न प्राप्नोति। **स्वरान्तरं तु विवृत्तिः** (ऋप्रा २, ३) इत्युक्तं स्वरावयवान्तरे न प्राप्नोति। आम्नायात् स्वरावयवान्तरेष्वपि[3] विवृत्तिर्भवति। अर्द्धौकारपक्षे निदर्शनमपि तथैवोदाहरन्ति। अर्द्धौकारपक्षेऽपि तथैवोदाहरन्ति। अत्राप्युदात्तानुदात्तयोः [4]'अन्तरा विवृत्तिर्न'[4] विद्यते, अधिककालत्वात्। अत्राप्याम्नायप्रामाण्यादेव विवृत्तिरावृत्तिश्च। न्यूङ्खात्[5] परस्य ऋक्शेषस्यानुदात्तत्वं निपातनात्। एकश्रुतिः [6]'अनुदात्तो भवतीति'[6] शाखान्तरे दृष्टं च[7] लक्षणम्। मात्राशेषादि[8] तच्छाखान्तरगतं विधिमिह निपातयति। ऋगन्तस्य[9] प्राप्तस्यानुदात्तत्वं प्राप्तम् ऋगन्तविकारत्वादेकश्रुतिस्तु निपात्यते। अधिकः स्वररतद्विकारेषु नेष्यते पद अदृष्टत्वात्। एतदेव ज्ञापकम् अन्यत्रापि। यथा **स स्वरवत्या वाचा शंस्तव्यः** (ऐब्रा ३, २४) इत्यत्र प्रणवः। आपो इति पुनः ऋगादेः प्रत्यादानं त्रिर्वचनप्राप्त्यर्थम्[10]। अप्राप्तप्राप्त्यर्थोऽयमाम्नायः, प्राप्तनिवृत्त्यर्थश्च। [11]"प्राप्तमैकश्रुत्यं प्रतिषिद्धं सांतत्यं"[11] च प्रणवस्य पुनराम्नातत्वात्। सप्रणवाया ऋच आम्नातत्वाद् यथाम्नाता भवतीति निर्वचनप्रतिषिद्धिः[12] स्यात्। तस्मात् प्रणवेन सांतत्यं च त्रिर्वचनं च[13] पुनर्विधीयते। एवमन्यत्रापि यत्र कृत्स्नां पठति तत्र पुनस्त्रिर्वचनं विधीयते, यथा महाव्रते। एवम् एतां त्रिरिति, **आज्याद्यां त्रिः शंसेदिति**[14] (आश्वौ ५, ६, २०)। अत्र [15]"वचनादधिकारान्निदर्शनान्ते पुनस्त्रिर्वचनं"[15] नोक्तम्[16]। अत्र अर्द्धौकारान्

---

१. द्र० आश्वौ ७,११,३०। २-२. कस्मान्निदर्शनाप्यनुल° ब¹। °दर्शनार्थं तु ल° मै। ३-३. नास्ति ब¹। ४-४. °न्तरार्धति न ब¹। ५. न्यूङ्खापरस्य ब¹। ६-६. °दात्ता भवन्तीति मै। ७. नास्ति ब¹। ८. मात्रशेषादि ब¹। ९. ऋगन्त्यस्य मै। १०. त्रिव (°वं मै) चने प्राप्त्यर्थः (°र्थं मै) मूको। ११-११. प्राप्तमेक श्रुत्यप्रतिषिद्धं (°द्धिं मै) ज्ञातव्यं मूको। १२. °तिषिद्ध मै। १३. नास्ति मूको। १४. एत्योदिति ब¹। १५-१५. °कारानिदर्शनान्तो मे स्त्रिव° ब¹; °कारा निद० मै। १६. प्रोक्तं नाक्तः ब¹।

(आश्रौ ७, ११, ३) इत्यर्द्धौकाराश्चोक्ताः। [1]अनुदात्ता इह आम्नाता अन्येषां स्वरिता आम्नाताः। एकपातानिहापि[1] [2]शास्त्रे केचिदुपदिशन्ति। तन्नोपपद्यते। अनुदात्ता [2]इति वचनात्। यद्यनुदात्ताः[3] स्वरिताः क्रियन्ते ते[4] निदर्शनेनेति[4]। तथा सत्यनुदात्तवचनम् अनर्थकमेव। स्वरितानित्येतद्वक्तव्ये **अनुदात्तान्** (आश्रौ ७, ११, ३) इत्याह। तस्मात् स्वरिता इह नाम्नाताः। न चैते[5] शास्त्र उपपद्य ते[6]। [7]**उदात्तपूर्वं नियतं**[7] **विवृत्त्या**[8] **व्यञ्जनेन वा स्वर्यते** (ऋप्रा ३, १७) इत्योकारः[9] स्वरितो भवति। [10] तस्मादनुदात्तानां परेषां प्रचयः स्वरः[10] प्राप्नोति, तत्सर्वे स्वरिताः प्राप्नुवन्ति। नैवैते जात्याः। तस्मात् कम्पोऽपि[11] न प्राप्नोति। अप्राप्तमपि[12] सूत्रवचनाद् भवति, निपातनाद् वा। न वचनमस्ति, न च निपातनं, तस्मान्न प्रयोक्तव्याः। शास्त्रान्तरे तु वचनात् निपातनाच्च प्रयुज्यन्ते। सूत्र इह वचनाभावान्न प्रयुज्यन्ते ॥७॥

[आज्यसूक्तकथनम्]

**'आग्निं न स्ववृक्तिभिः' इत्याज्यम् ॥८॥**

**आग्निं न स्ववृक्तिभिः** (ऋ १०, २१) इत्याज्यम्[13] इति[14] एतत् सूक्तमाज्यं भवत्येकाहिकस्य स्थाने। **तदेतद् अस्तुतम् अशस्तम् अयातयामसूक्तं यज्ञ एव साक्षात्** (ऐब्रा ५, ४) इति ब्राह्मणश्रुतिः ॥८॥

[आज्यसूक्तस्योत्तमामृच त्यक्त्वाऽन्यासां तृतीयपादेषु न्यूङ्खनिनदविधानम्]

**तस्योत्तमावर्जं तृतीयेषु पादेषु न्यूङ्खो निनर्दश्च ॥९॥**

तस्य आज्यस्य उत्तमावर्जम्[15] उत्तमां वर्जयित्वाऽन्यासाम् ऋचां तृतीयेषु पादेषु पादादौ[16] न्यूङ्खो भवति निनर्दश्च पादान्ते। [17]**मध्यत आज्ये**[17] **न्यूङ्खयति** (ऐब्रा ५, ३) इति ब्राह्मणम्। तस्येति पुनर्वचनाद् वक्ष्यमाणो विधिस्तस्य भवति। अन्यथा तस्य न प्राप्नोति। द्वितीयं[18] निर्दिष्टत्वात तस्य प्राप्नोति। उत्तमावर्जमित्याहोत्तमायामृचि न्यूङ्खो निनर्दश्च न क्रियते। **मध्यत आज्ये न्यूङ्खयति** (ऐब्रा ५, ३) इति वचनादन्त्यायाः प्रतिषेधः। अर्द्धर्चाधिकारात् तृतीयेष्विति। च-शब्दः समुच्चयार्थः। न्यूङ्खो [19]निनर्दं वक्ष्यति[19]। यदिदं नारभ्यते प्रथमाया निर्दशितो विधिः प्रथमायामेव स्यात् ॥९॥

---

१-१. अनुदात्ताति वचनात् म एद्यनुदात्ता चरिताः छरदि इहाम्नात अन्येषां स्वरिता आम्नाता. सकनारि इह ब[1]। [1]सकपातानिहापि मै। २-२. इना ब[1]। ३. नास्ति ब[1]। ४. निदर्शनेति ब[1]। ५. चैतं मूको। ६. °द्यते ब[1]। ७-७. उदात्तपूर्वं (र्वं° मै) नियतं (°मं मै) मूको। ८. त्रिवृत्य (°त्या मै) मूको। ९. ऋगोकारः मूको। १०-१०. तदुदात्तां नापरषां प्रचयात् स्वरं ब[1]; तदुक्तानां परेषां प्रचया स्वरं मै। ११. कयोपि ब[1]; कं बी पि मै। १२. अप्राप्तमिति ब[1]। १३. नास्ति मै। १४. नास्ति ब[1]। १५. °नस्तुतिः ब[1]। १६. पादौ ब[1]। १७-१७ मध्ये चाद्ये मूको। १८. °या मै। १९-१९. निनर्दवक्ष्य (°त्य ब[1]); ति मूको।

[न्यूङ्खाधिकारसमाप्तिकथनम्]

**उक्तो न्यूङ्खः ॥१०॥**

उक्तो न्यूङ्खो व्याख्यातश्च। इदानीं निनर्दं वक्ष्यामः। निनर्दविवक्षार्थमिदमुच्यते। अन्यथा वक्ष्यमाणो विधिर्न्यूङ्खो भवति निनर्दो वा। च-शब्दो विवक्षार्थः स्यात्। इदानीं निनर्दो वक्ष्यते ॥१०॥

[निनर्दविधिकथनम्]

**स्वरादिरन्त ओकारश्चतुर्निनर्दः ॥११॥**

तृतीयेषु पादेषु पादान्तो वर्णः स्वरादिरोकारो भवति, स्वरोऽस्य वर्णस्यादिः स्वरादिः, स्वरेण व्यञ्जनेन। स्वरश्च व्यञ्जनं चौकारो भवति। **विवो मदो** (ऋ १०,२१,१), वृषाकपो (द्र. ऋ.१०,८६,१) इति। स ओकारश्चतुर्निनर्दः। नर्द शब्दे। चतुःशब्दश्चतुरुच्चारणः। चतष्कृत्वो निनर्द्यते चतुष्कृत्व उच्चार्यते चतुर्निनर्दः। नियतं निश्चितं वा नर्द्यते निनर्दः। चतुष्कृत्वो निनर्द्यत ओकारश्चतुर्निनर्दः वि वो मदो ३ ३० ३० ३०३ भवति। स्वरादिरिति अस्मिन्[1] सूक्ते स्वरान्ता एव पादाः। तस्मादादिग्रहणं विकृत्यर्थम्[2], वृषाकप्येवयामरुतोः[3] साहचर्यार्थम्। पञ्चेति वर्तते, तस्माच्चतुर्ग्रहणम्। निनर्द इति संज्ञा। दशविग्राहं[4] निनर्द्य शंसेत् (आश्रौ ८, ३, ८) इत्युक्त एतस्य ग्रहणम्। इदानीं निनर्दस्य स्वरा वक्ष्यन्ते ॥११॥

[निनर्दस्वरकथनम्]

**उदात्तौ प्रथमोत्तमौ। अनुदात्तावितरौ उत्तरोऽनुदात्ततरः ॥१२॥**

चतुर्णां निनर्दानां यौ प्रथमोत्तमौ निनर्दौ तावुदात्तस्वरौ भवतः। न्यूङ्खवत् 'ऋगन्तलक्षण उदात्तः'[5] प्राप्त इतरे ऽनुदात्ताः प्राप्तास्तस्मात् स्वरा इमे वक्ष्यन्ते। अनुदात्तावितरौ प्रथमोत्तमाभ्यां यौ शेषावितरौ द्वितीयतृतीयौ, तावनुदात्तस्वरौ भवतः। मदो ३३० ३० ३०३ इति। उत्तरोऽनुदात्ततरो अनुदात्तावधिकृतौ, तयोर्द्वयोर्य उत्तर ओकारः सो ऽनुदात्ततरो भवति। अयमनुदात्तोऽयमप्यनुदात्तो ऽयमनयोरनुदात्ततरो मदो३ ३० ३० ३०३ इति ॥१२॥

[निनर्दनिदर्शनप्रतिज्ञा]

**प्लुतः प्रथमो मकारान्त उत्तमः। तदपि निदर्शनायोदाहरिष्यामः ॥१३॥**

प्लुतः प्रथमश्चतुर्णां निनर्दानां यः प्रथमः। अधिककालानाम् ऊनकालानां वा वृत्तिर्न[6] भवति न्यूङ्खेषु, वि वो मदो ३ ३० ३० ३०३। मकरान्त उत्तमः,

---

१. अस्य मूको। २. विष्कृत्व° ब'। ३. वृषाकपौ एवया° मूको; द्र. ऐब्रा ५,१५। ४. नास्ति मूको। ५-५. °क्षणो उदात्तः ब'; °क्षणोदात्तः मै। ६. वर्तिनं मूको।

चतुर्णां निनर्दानां य उत्तमो निनर्दः स मकारान्तो भवति। प्रथमाधिकारादुत्तम इत्याह। वि वो मदो ३उ उ उ३म् इति। तदपि निदर्शनाय तदेतन्निनर्द-विधानम् अपि निदर्शनायोदाहरिष्यामः ॥१३॥

[निनर्दनिदर्शनम्]

आग्निं न स्ववृक्तिभिः। होतारं त्वा वृणीमहे यज्ञो३ उ उ उ उ उ ओ३ उ उ उ उ उ ओ३ उ उ उ य स्तीर्णबर्हिषे विवो मदो३ उ३ उ३ उ३ म् शीरं पावकशोचिषं विवक्षसो३माग्निं न स्ववृक्तिभिः, होतारं त्वा वृणीमहे ॥१४॥

आग्निं न स्ववृक्तिभिः। होतारं त्वां वृणीमहे (ऋ १०, २१, १) यज्ञो३ उ उ उ उ उ ओ३ उ उ उ उ उ ओ३ उ उ उ। य स्तीर्णबर्हिषे वि वो मदो३ उ उ उ३म्, शीरं पावक-शोचिषं विवक्षसो३माग्निं न स्ववृक्तिभिः। होतारं त्वा वृणीमहे) ऋ १०, २१, १)। तदिति पुनरुच्यते, तदधिकृतस्यापि प्राप्नोति[1]। निनर्दविधानम् अधिकृतं निदर्शयिष्यामः। अपिशब्दः समुच्चयार्थः। अपि च[2] निदर्शनायापि च[3] निपातनाय[4]। न्यूङ्खात् परस्य ऋक्शेषस्यानुदात्तत्वं निपात्यते निदर्शनं[5] शास्त्रस्य सार्थकत्वाय[6]। असत्युदाहरणे[7] शास्त्रमनर्थकं भवति। उदाहरणमिह शाखायामाम्नायाभावात् शाखान्तर आम्नातादुदाहर्तव्यम्। शाखायां तु विद्यमानं शास्त्रे चोदितमेव प्रतीयते, यथा ऐन्द्राणि त्रैष्टुभान्य-मरुच्छब्दान्यावपेरन् (आश्रौ ७, १२, २) इति। आग्निं न स्ववृक्तिभिः (ऋ १०, २१, १) इत्येतस्यार्द्धर्चस्य निदर्शनं न्यूङ्खप्रतिषेधार्थम्। उक्तो न्यूङ्खः (आश्रौ ७, ११, १०) इत्यत्र उक्तग्रहणमनर्थकम्। उक्तग्रहणे न्यूङ्खः यथाविहितप्राप्तस्तृतीयेषु पादेषु निनर्द एव आम्नायाद् विप्रतिषेधः स्यादिति पुनर्विग्रहो विधीयते। [8]पुनर्न्यूङ्खस्य निदर्शनं[8] [9]न्यूङ्खात् परस्य ऋक्शेषस्य[9] अनुदात्तविधानार्थम्। यत्र निपात्यते तत्रैवानुदात्तो[10] भवति। यत्र न निपात्यते तत्रैकश्रुतिरेव। यथा श्रुधीहवीये कुहश्रुतीये च न्यूङ्खात् परमनुदात्तमाम्नातम्[11]। तेनैव न्यायेन निनर्दात्[12] परस्यापि[13] ऋक्शेषस्यानुदात्तत्वं प्राप्तम्। [14]दृष्टं च[14] प्रातरनुवाके कृत्स्नस्य ऋक्शेषस्यानुदात्तत्वम्[15]। एवमनुदात्ते[16] प्राप्त एकश्रुतिर्निपात्यते। पुनरृगादेः प्रत्यादानं त्रिर्वचनप्राप्त्यर्थम्। विग्रहादिप्राप्तमपि पुनराम्नातम्[17]। तस्माद् यथाम्नातं सकृद्वचनं स्यात्। अष्टर्चं पाङ्क्तम्

---

१. प्रायुवन्ति ब[1]; प्राप्नुवन्ति मै। २. नास्ति मै; न ब[1]। ३. नास्ति मै: नं त्र[1]। ४. नि (न ब[1]) घातनाय मूको। ५. निर्दशेन ब[1]। ६. सार्थत्वाय त्र[1]। ७. अत्युदा° ब[1]। ८-८. °ङ्खस्यानि° ब[1]। ९-९. न्यूस्या-सकशेषस्य ब[1]। १०. तत्र वानुदात्तो ब[1]। ११. परमुदा° मूको। १२. विषादात् ब[1]; निषदात् मै। १३. परस्यादि मै। १४-१४. द्रपूव ब[1]। १५. शेषस्या° ब[1]; °षस्यानुवतत्वम् मै। १६. एवमुदात्ते मूको। १७. पुनराम्नाति मूको।

(ऐब्रा ४, ४) इति श्रुतिस्तस्मात् पुनस्त्रिर्वचनं विविधोपपत्तेस्त्रिर्वचने कृते दश जगत्यो भवन्ति ता उ दश जगत्यः (ऐब्रा ५,४) इति ब्राह्मणम्, ता उ पञ्चदशानुष्टुभः, ता उ विंशतिर्गायत्र्यः (ऐब्रा ५, ४) इति च ॥ १४॥

[द्वितीयार्द्धर्चे प्रतिगरविधानम्]

**३ऽ३ ३ऽ ३ऽ ३ऽ ३ऽ ३ऽ ३ऽ३ ३ऽ ३ऽ ३ऽ ३ऽ ३ऽ ३ऽ३ ३ऽ ३ऽ ३ऽ मदेथ मदैवो३ ३ऽ३ ३ऽ३ ३ऽ३ मो थामो दैवोमइत्यस्य प्रतिगरः ॥१५॥**

३ऽ ३ऽ ३ऽ ३ऽ **मदेथ मदैवोम्** इत्यस्य प्रतिगरो यथाम्नातो भवति। आद्यायां निदर्शनमुक्त्वा आम्नातः प्रतिगर आद्याया एव प्राप्तः, अस्येति वचनात् कृत्स्नस्य भवति। एवं चेदन्त्याया अपि प्राप्तः, अवसाने भविष्यति। यथैवावसाने न भवति, तथैवान्त्यायामपि न भविष्यति, न्यूङ्खाभावात्। प्रतिगरे त्वेकाक्षरेण न्यूङ्ख आम्नातः, पूर्वमक्षरं न विद्यते। **एकाक्षरेण** न्यूङ्खयेदिति 'ह स्माह (ऐब्रा ५, ३) इति' ब्राह्मणम् ॥१५॥

[निनर्दस्यापरकल्पकथनम्]

**अपि वोदात्तादनुदात्तं स्वरितमुदात्तमिति चतुर्निनर्दः ॥१६॥**

अपि वा निनर्दस्यापरः '[2]कल्पो वक्ष्यते[2]'। उदात्तादोकारादनन्तरमेवानुदात्तमोकारं ब्रूयात्, ततस्तृतीयमोकारं स्वरितं, तत उदात्तम् इत्येवं चतुर्निनर्द[3] ओकार '[4]इति। अयम्[4] उत्तरस्य[5] निनर्दस्य विकल्पः, अनुदात्ततर उक्तः[6] स्वरितो वा भवतीति। एवं चेत् पृथगारम्भोऽनर्थकस्तत्रैव वक्तव्यम् उत्तरोऽनुदात्ततरः[7] स्वरितो वेति। एवमनेन विकल्पेनोदाहर्तु[8] '[8]न शक्यते', तस्मात् पृथगारम्भः। अपि-शब्दः समुच्चयार्थः। वा-शब्दो विकल्पार्थः। अयं च कल्पः श्रुतावाम्नातः, स वा भवतीति। '[9]अपि-शब्दाद् उक्तो निनर्दविधिरुत्तरपक्षे[9]' भवति। "[10]यथा—**अपि वाच्यां**[10] **वैष्णवीम्** (**आश्वौ** १,५,३६) इति[11]"। कथं ज्ञायत उत्तरपक्ष इति। यस्मात् प्रतिगरेषु "[12]तत्र तत्रैव कल्प पठन्ति[12]" एवया मरुतम्[13] आहनस्याः। अथ चतुर्निनर्द इति चतुर्ग्रहणेऽक्रियमाणे द्वावेव निनर्दौ प्राप्नुतः प्रथममुदात्तानुदात्तं[14] द्वितीयं स्वरितोदात्तम् इति द्वितीयस्यैवैतौ कल्पौ प्राप्नुतः। चतुर्ग्रहणाच्चत्वार एव भवन्ति ॥१६॥

---

१-१. नास्ति मै। २-२. कृत्योक्ष्यते व'। ३. निनर्द व'। ४-४. इत्यर इत्ययम् व'। ५. अध्व (°ध व') रस्य मूको। ६. द्र. आश्वौ ७, ११, १२. ७. उदात्ततरोऽ° व'। ८-८. मशक्यते व'। ९-९. अपिशब्दः युक्तो (उक्तो व'); विधिः उत्तरपक्षो मूको। १०-१०. अथापि वाचा मूको। ११. नास्ति मूको। १२-१२. तत्रैव कल्पं पठति व'। १३. °रुतो मूको। १४. कथमुदात्ता° मूको।

[निनर्दस्यापरकल्पनिदर्शनम्]

**तदपि निदर्शनायोदाहरिष्यामः । आग्निं न स्ववृक्तिभिः ।**

**होतारं त्वा वृणीमहे । यज्ञो३ ३ऽ ३ऽ ३ऽ ३ऽ ३ऽ ओ ३ ३ऽ ३ऽ ३ऽ ३ऽ ३ऽ ओ ३ ३ऽ ३ऽ ३ऽ य स्तीर्णबर्हिषे विवो मदो३ ३ऽ ३ ३ऽ ३ ३ऽ ३ शीरं पावकशोचिषं विवक्षसो ३ माग्निं न स्ववृक्तिभिः । होतारं त्वा वृणीमहे । ओ ३ ३ऽ ३ऽ ३ऽ ३ऽ ३ऽ ओ ३ ३ऽ ३ऽ ३ऽ ३ऽ ३ऽ ओ ३ ३ऽ ३ऽ ३ऽ मदेथ मदैवो ३ ३ऽ ३ ३ऽ ३ ३ऽ ३ मोथामोदैवोम्इत्यस्य प्रतिगरः ॥१७॥**

तदपि निदर्शनायोदाहरिष्यामः। एतद् व्याख्यातम् । आग्निं न स्ववृक्तिभिः (ऋ १०, २१, १) इति यथा समाम्नातं निदर्शनं व्याख्यातम् । अस्य प्रतिगरश्च यथाम्नातो निर्दशितः । स चापि व्याख्यातः । किमर्थं पुनः कृत्स्नमुदाह्रियते । निनर्द एवोदाहर्तव्यः । तथा सति न्यूङ्खप्रतिषेधः स्यात् । यथा पूर्वस्मिन्निदर्शने सिद्धो न्यूङ्खः पुनराम्नातः ॥१७॥

[प्रथमादर्द्धौकारादध्वर्योर्न्यूङ्खकरणम्]

**प्रथमादर्द्धौकारादध्वर्युर्न्यूङ्खयेत् ॥ १८ ॥**

प्रथमादर्द्धौकारात् प्रतिगरोऽवसानप्रणवेनाऽऽम्नातः । सस्वरो यः प्रतिगरः स आर्चिकेन[1] स्वरेण सह[2] संपादयितव्यः[3] **शस्त्रस्वरः प्रतिगरः** (आश्रौ ५,६,४) इति वचनात् । न्यूङ्खो [4]न्यूङ्खे, निनर्दो[4] निनर्दे, प्रणवः प्रणवे यथा संपद्यते [5]तथा प्रयोक्तव्यम्[5]। तत्र महती ऋग्[6] भवति ह्रस्वः[7] प्रतिगरः । तत्र यावन्त्यक्षराणि प्रतिगरादतिरिक्तान्यार्चिकानि[8] भवन्ति, तावतीषु मात्रासु शक्तासु[9] प्रतिगरमुपदिशन्ति । शस्त्रे यः प्रथम ऋगोकारः[10] तस्मादर्द्धौकारादध्वर्युर्युगपन् न्यूङ्खं प्रारभते[11] श्रुधीहवीये, अधिकाराद् वृषाकपावाहनस्यासु च । एवं प्रयोगे सति न्यूङ्खे न्यूङ्खैकदेशो[12], निनर्दे निनर्दैकदेशः, प्रणवः प्रणवे, अवसानमवसाने संपाद्यन्ते[13] । न्यूङ्खेन सह न्यूङ्खः प्राप्तस्तस्मादाह—प्रथमादर्द्धौकारादिति । अध्वर्युग्रहणमुभयोरधिकारात्[14] ॥ १८ ॥

[द्वितीयादर्द्धौकारान्न्यूङ्खविकल्पः]

**द्वितीयाद् वा ॥ १९ ॥**

यत्र बहून्येवार्चिकान्यक्षराणि[15] भवन्ति तत्र द्वितीयादर्द्धौकारादध्वर्यु-

---

१. आविवेकेन ब'; आर्चिकेन मै । २. नास्ति ब' । ३. संयायितव्य ब'; सपातयितव्यः मै । ४-४. नास्ति मूको; द्र. आश्रौ ७,११, २० देवत्रातव्याख्या । ५-५. यथा प्रयोक्तव्यः ब' । ६. स ब' । ७. उ स्वः ब' । ८. °रादन्यतेरिक्ता° ब'; °राददितिरिक्ता° मै । ९. शास्त्रासुर ब' । १०. ऋद्धोकार° मै । ११. प्रारभेत् ब' । १२. °देशे ब' । १३. पाद्यन्ते मूको । १४. °णमुत्तरयोरधिकारा ब'; °कारा मै । १५. °र्चिकान्येकाक्षराणि मूको ।

न्यूङ्खमारभते। वेति विनिवेशार्थे भवत्याज्ये कुहश्रुतीये च। एवयामरुति तु महान् प्रतिगरः। 'तस्मान्न्युङ्खादेव न्यूङ्खयति। न्यूङ्खं न्यूङ्खे संपादयति। अवसानेऽवसानकारणमवेक्ष्य प्रथमादर्द्धौकाराद् द्वितीयाद् वेत्युक्तम्। यत्र कारणं न विद्यते तत्र न्यूङ्खान्न्यूङ्खयति' एवयामरुति ॥१६॥

[उपरम्य प्रतिगरवचनमतान्तरम्]

**व्युपरमं हैके ॥२०॥**

वीति वैविध्ये। उपरममिति णमुलन्तम्[2]। उपरम्योपरम्योपरमम्। हेत्यवधारणे। उपरम्योपरम्यैव प्रतिगरं ब्रूयादित्येक आचार्या मन्यन्ते। वीति विरामस्थाने विरमेत्, पुनर्निनर्दमुक्त्वा विरमेत्। एवं सति न्यूङ्खे न्यूङ्खो, निनर्दे निनर्दः, प्रणवे प्रणवः, अवसानेऽवसानमिति संपाद्यते। अनियतावसानः प्रतिगरः। एतस्माद् यथाकामं विरमेत् ॥२०॥

[उक्तमतयोर्यथारुचिसम्पादनम्]

**यथा वा संपादयिष्यन्तो मन्येरन् ॥२१॥**

यथा येन प्रकारेण न्यूङ्खनिनर्दप्रणवान्[3], एवमनेन न्यायेन संपादयिष्याम 'इति मन्येरन्नध्वर्यवो[4] होतारश्च तथैव[5] संपादयेयुः[6]। अध्वर्यु रुक्तन्यूङ्खान्[7] विलम्बितम्, द्रुतं होता ऋचं शसति, आज्ये कुहश्रुतीयासु च पुनर्निनर्दादप्यूर्ध्वमेव। वृषाकपौ आहनस्यासु च निनर्दादूर्ध्वं द्रुतम्, प्रतिग्रहणादतिविलम्बितम् इतरः शंसति। संपादयिष्यन्त[8] इति बहुवचनाद्धोतारो ऽध्वर्यवश्चोपदिश्यन्ते। एवमेते कल्पा न सर्वे सर्वत्र युज्यन्ते। 'यो हि[9] यत्र युज्यते, स तत्र प्रयोक्तव्यः। तथा चैवं प्रदर्शितम् ॥२१॥

[आनुष्टुभानां प्रउगतृचानां स्थाने वायव्यादितृचविधानम्]

**'वायो शुक्रो अयामि ते', 'वि हि होत्रा अवीताः', 'वायो शतं हरीणाम्', 'इन्द्रश्च वायवेषां सोमानाम्', 'आचिकिता न सुक्रतू', 'आ नो विश्वाभिरूतिभिः', 'त्यमु वो अप्रहणम्', 'अपत्यं वृजिनं रिपुम्', 'अम्बितमे नदीतमे' इत्यानुष्टुभं प्रउगम् ॥२२॥**

**वायो शुक्रः** (ऋ ४, ४७, १), **वि हि होत्रा** (ऋ ४,४८, १), **वायो शतम्** (ऋ ४, ४८, ५) इति वायव्यस्तृचः। **एकपातिन्यः प्रथमः** (आश्रौ ७, ११, २३) इति वक्ष्यति। **इन्द्रश्च वायवेषां सोमानाम्** (ऋ ४, ४७, २-४) इत्यैन्द्रवायवस्तृचः। सुतानामिति[10] प्राप्ते सोमानामित्याह। अविशेषे यत्र

१-१. तस्मान्न्यूङ्खयति ब'। २. णमुल ब'; णमुल य मै। ३-३. न्यूङ्खनिनर्दपरमवान् ब'। ४. इत्यन्यानध्व° मूको। ५. न (त° मै) मेवं मूको। ६. संपातयेयुः मै। ७. अध्वर्युर्यु (°यूं यु० ब') वत° मूको। ८. संपादयिष्यति (°न्ति मै) मूको। ९-९. तयोर्हि ब'। १०. द्र. ऋ ५,५१,६।

विशेषः[1] कृतः [2]स समाप्नोति[2] । तस्माद्विशेषणं क्रियते । यथा द्यावापृथिवीये [3]इति दैर्घतमसमिति[3] वासिष्ठम्[4] । **आ चिकिता न** (ऋ ५, ६६, १-३) इति[5] मैत्रावरुणः तृचः[6] । **आ नो विश्वाभिः** (ऋ ८, ८, १-३) इत्याश्विनः तृचः[6] । **त्यमु वः** (ऋ ६,४४,४-६) इत्यैन्द्रस्तृचः । **अपत्यम्** (ऋ ६, ५१,१३-१५) इति वैश्वदेवस्तृचः । **अम्बितमे** (ऋ २,४१,१६) इति सारस्वतः तृचः[6] इत्येतदानुष्टुभं प्रउगम् '**इत्यानुष्टुभं प्रउगम्**' (ऐब्रा ५,४) इति ब्राह्मणात् । ब्राह्मणज्ञाने धर्मः । प्रउगग्रहणाद् एते तृचाः प्रउगतृचानां स्थाने भवन्ति । अन्यथैकाहिकानां गायत्राणां स्थाने न प्राप्नुवन्ति ॥२२॥

[वायवे तृच एकैकस्या ऋचः कथनम्]

**एकपातिन्यः प्रथमः** ॥२३॥

एकैका पतत्येकपातिनी । प्रथमो वायवस्तृचः । तिस्र एकपातिन्य ऋचो भवन्ति । **तृचाः प्रउगे** (आश्रौ ७, १, १०) इति वचनात् त्रीणि प्रतीकानि त्रयस्तृचाः प्राप्ताः, तृचागमे तृचानामुद्धार ऐकाहिकमिति[7] त्रीणि, तृचानां स्तोत्रियानुरूपारम्भणीया[8] वा[9] तृचा [10]वा सपर्यासाः[10] ॥२३॥

[मरुत्वतीयस्य प्रतिपदनुचरयोस्तृचयोः कथनम्]

**'तं त्वा यज्ञेभिरीमहे', 'इदं वसो सुतमन्धः' इति मरुत्वतीयस्य प्रतिपदनुचरौ** ॥२४॥

**तं त्वा यज्ञेभिः** (ऋ ८, ६८, १०), **इदं वसो** (ऋ ८, २, १) इत्येतौ मरुत्वतीयस्य प्रतिपदनुचरौ [11]तृचाः प्रतिपदनुचराः सर्वत्र प्रतिपदनुचरौ[11] सहचोदितौ । इह प्रतिपदित्युक्ते ऽनुचरस्य लोपः स्यात्, तस्मात् पुनरनुचरग्रहणम् । मरुत्वतीयग्रहणं [11]वैश्वदेवनिवृत्त्यर्थम् । अविशेषवचनात् प्राप्तम्, अर्थाद् वचनस्य बलीयस्त्वात्[11] ॥२४॥

[मरुत्वतीये शस्त्रे सूक्तद्वयकथनम्]

**'श्रुधी हवमिन्द्र', 'मरुत्वाँ इन्द्र' इति मरुत्वतीयम्** ॥२५॥

मरुत्वतीये[12] शस्त्रे [13]ऐकाहिकं सूक्तं प्राप्तम्[13] तस्य स्थाने द्वे सूक्ते भवत एकविंशत्वात्स्तोमस्य । [14]**ध्रुवाः शस्त्राणामातानाः**[14] (आश्रौ ७,१, ७) । प्रति-

---

१. विशेषतः ब[1] । २-२. समामेति ब[1]; समाप्नोति मै । ३-३. गार्हतमिदं ब[1]; गार्त्समदम् मै; द्र. आश्री ५, १८, ५ । ४. द्र. आश्रौ ८, ८, ४ । ५. नास्ति मूको । ६-६. नास्ति मूको । ७. द्र. आश्रौ ७,१,२२ । ८. मृतोत्रियानु° ब[1] । ९. चा ब[1] । १०-१०. या या पर्यासः ब[1] । ११-११. नास्ति ब[1] । १२. तृतीये ब[1] । १३-१३. ऐकाहिकप्राप्ते ब[1] । १४-१४. ध्रुवशेष आतानः मूको ।

पदनुचरौ व्याख्यातौ । ध्रुव इन्द्रनिहवः (आश्वौ ७, ३, ७), धाय्याश्च (आश्वौ ७, ३, ८) । प्रथमौ प्रगाथौ 'क्लृप्ते द्वे सूक्ते' इति मरुत्वतीयम् । बृहतीकारं प्रगाथाः ॥२५॥

[सूक्तानामनेकत्वेऽन्त्ये निविद्धानम्]

**अन्त्ये निविदं दध्यादनेकभावे सूक्तानाम् ॥२६॥**

इह च [1]'अन्यत्र चान्त्ये यानि[1] सूक्तानि, तानि निविद्धानीयानि[3] भवन्ति । तत्र सूक्ते सूक्ते निवित् प्राप्ता । ऐकाहिकस्य सनिवित्कस्य[4] स्थाने यानि[5] चोदितानि, तेषु निवित् प्राप्ता, तस्मादन्त्ये विधीयते ।

[6]'तस्मादन्त्यमेव निविद्धानम् इतराण्यावापिकानि[6] । [7]'तस्मात् स्तोमनिह्रासे आवापिकानामुद्धारः । इयं परिभाषा चतुर्विंश एव वक्तव्या । न हि तत्रैकाहिकस्य सूक्तस्य †स्थानम् आदिष्टम्†[7] । यत्र ह्यैकाहिकस्य स्थान आदिशति[8], तदर्थेऽयं परिभाषा ॥२६॥

[पृष्ठस्थाने वैराजसामनि सति स्तोत्रियानुरूपकथनम्]

**वैराजं चेत् पृष्ठं 'पिबा सोममिन्द्र मन्दतु त्वा' इति[9] स्तोत्रियानुरूपौ ॥२७॥**

वैराजं साम पृष्ठस्थाने चेत् क्रियते तस्य स्तोत्रियानुरूपौ वक्ष्यति[10] । **पिबा सोममिन्द्र मन्दतु त्वा** (ऋ ७, २२, १-६) इत्येताः षड्चः स्तोत्रियानुरूपौ [11]भवतः । अन्यत्रापि† यत्र≠ वैराजम् आदिशति तत्रैतौ≠ स्तोत्रियानुरूपौ[11] विश्वजिति[12] । चेदिति वचनाद् अनित्यम्, बृहद् वा भवति । पृष्ठग्रहणात् पृष्ठस्थाने भवतः । स्तोत्रियानुरूपत्वादाहावादिप्राप्तिः । [13]ऐकाहिकयोश्च स्थाने[13] भवतः । पादग्रहणात् पडिति[9] वक्तव्यम् । न वक्तव्यम् । छन्दोगवशात् स्तोत्रियास्तृचा भवन्ति । तत्प्रमाणरूपत्वादनुरूपोऽपि तृच एव ॥२७॥

[निष्केवल्ये शस्त्रे निविद्धानसूक्तकथनं श्रुधीहवीये च न्यूङ्खविधानम्]

**'कुह श्रुत इन्द्रः', 'युध्मस्य ते' इति निष्केवल्यम् । श्रुधीहवीयस्य तु तृच आद्येऽर्धर्चादिषु न्यूङ्खः ॥२८॥**

---

१-१. कुसे देनूगावते ब[1]। २-२. अन्यच्च त्येतानि ब[1]; अन्य च अन्त्ये यानि मै । ३. तानि विधानि यानि ब[1]; विधानीयानि मै । ४. संविक्तस्य मै । ५. नास्ति मूको । ६-६. तस्मादं एव निद्धानं तरतराण्यो ब[1] । ७-७. नास्ति ब[1] । †-† स्थाने आदिष्टे मै । ८. आदिष्टे सति मै । ९. °ति पद्' इति पाठः सायणभाष्ये । १०. वक्ष्यते मूको । ११-११. नास्ति ब[1] । †अत्रापि मै । ≠-≠. वैरागमा दिश्यते तत्रैको मै । १२. द्र. आश्वौ ८,७,३ । १३-१३. °कयो स्थाने ब[1] ।

**कुह श्रुत इन्द्रः** (ऋ १०, २२), **युध्मस्य ते** (ऋ ३, ४६) इत्येते द्वे सूक्ते निष्केवल्यं निष्केवल्य एते निविद्धाने ऐकाहिकस्य स्थाने भवतः। **पिबा सोमम्** (ऋ ७, २२, १-३), **श्रुधी हवम्** (ऋ ७,२२, ४-६) स्तोत्रियानुरूपौ धाय्याश्च बृहतो योनिः **इन्द्र त्रिधातु** (ऋ ६, ४६, ६) सामप्रगाथः तार्क्ष्यः। **कुह श्रुतः** (ऋ १०, २२), **युध्मस्य** (ऋ ३,४६) इति निष्केवल्यम्।

**श्रुधी हवम्** (ऋ २, ११, १) इति यस्मिन् सूक्ते विद्यते[1] तच्छ्रुधीहवीयम्। तस्य तृच आद्य अर्द्धर्चानामादिषु न्यूङ्खः कर्तव्यः। स व्याख्यातः। तु-शब्दो निष्केवल्याधिकारव्यावृत्यर्थः। तृचग्रहणं कृत्स्ने सूक्ते मा भूदिति। **मध्यमेषु पादेषु** (आश्रौ ७, ११, ३०) इत्यधिकाराद् अर्द्धर्चादिष्वत्याह[2]। **मुखतो मध्यंदिने न्यूङ्खयति** (ऐब्रा ५, ३) इति श्रुतिः। तस्याद्य तृच अर्द्धर्चादिषु च ॥२८॥

[श्रुधीहवीयवत् कुहश्रुतीयेऽपि न्यूङ्खकरणम्]

**एवं कुहश्रुतीयस्य** ॥२९॥

यथा श्रुधीहवीय एवं कुहश्रुतीयस्यापि तृच आद्य अर्द्धर्चादिषु च[3] न्यूङ्खो भवति। **मुखतो मध्यंदिने न्यूङ्खयति** (ऐब्रा ५, ३) इत्येतस्मादेव वचनात्। **मध्यंदिन इत्युक्त एते शस्त्रे** (आश्रौ ७, ५, १९) भवतः ॥२९॥

[विराट्छन्दस्कानामृचां मध्यमेषु पादेषु न्यूङ्खकरणम्]

**विराजां मध्यमेषु पादेषु** ॥३०॥

विराजामृचां मध्यमेषु पादेषु न्यूङ्खो भवति पादादौ **पिबा सोमम्** (ऋ ७, २२, १) इत्येतासाम्। **मुखतो मध्यंदिने न्यूङ्खयति** (ऐब्रा ५, ३) इति श्रुतिः। अर्द्धर्चादिषु प्राप्ते मध्यमेषु पादेष्वित्याह। नूनं विशेषश्रुतिः निष्केवल्यस्याधिकारात् निष्केवल्य एव विराजां न्यूङ्खो भवति, न होत्रकाणां शस्त्रेषु। श्रुतावपि अन्यूङ्ख्या[4] विराजः (ऐब्रा ६,१९)) इति[5] प्रतिषेधः [6]विराजामिति ऋचां[†] न्यूङ्खविधानाद् योनिगतानामपि ऋचां न्यूङ्खो भवति। **मुखतो मध्यंदिने न्यूङ्खयति** (ऐब्रा ५, ३) इति श्रुतिवचनम्। मुखतः स्तोत्रिये नित्यो न्यूङ्खः[6]। स्तोत्रिया एव योनिः। यदि च पृष्ठ एव न्यूङ्खः स्याद्, वैराजस्य मध्यमेषु पादेष्विति ब्रूयात्। तथा तु विश्वजिति। एतच्चतुर्थेऽहनि पृष्टम् अन्यत्र न भवति चतुर्विंशादिषु। चतुर्थेऽहनि ब्राह्मणम्[7]। अन्यत्र तु वचनाद् भवति विश्वजिति ॥३०॥

---

१. विधीयते मूको। २. °र्चादित्याह मूको। ३. नास्ति मूको।
४. न न्यूङ्ख्या ब'; अन्यूङ्खा मै। ५. प्रतिषेधस्य ब'। ६-६. नास्ति ब'।
†. रीष मै। ७. द्र. ऐब्रा० ६, १९।

[अत्र न्यूङ्खादिप्रतिगरविधानम्]

**नित्य इह प्रतिगरो न्यूङ्खादिः ॥३१॥**

मध्यंदिने नित्यः प्राकृतः[1] प्रतिगरो भवति न्यूङ्खादिः[2] ओथामो दैवेति। 'आद्यो[3] य आम्नातः सो ऽधिकारात्[3] प्राप्तस्तस्मान्नित्य इत्याह। विराजामधिकारादिहेत्याह। तस्मादिह प्रकरणे भवति, मरुत्वतीये, निष्केवल्ये च न[4] भवति। न्यूङ्खादिरिति वचनाद् आद्यमक्षरं न्यूङ्ख्यते, द्वितीयम् ओथामो दैवेत्याम्नायाभावात्। न्यङ्खशेषस्यैकश्रुतिः। एवमार्चिकेष्वपि न्यूङ्खेषु श्रुधीहवीये[5] विराट्सु च[6] प्रथमादर्धौकारादध्वर्युर्न्यूङ्खयेत् विलम्बितं वा ब्रूयात्[7] ॥३१॥

[कुहश्रुतीयानां द्वितीयेऽर्धर्चे प्रतिगरस्य प्रणवान्तत्वम्]

**प्रणवान्तः प्रणवे कुहश्रुतीयानाम् ॥३२॥**

प्रणवान्तः प्रणवे कुहश्रुतीयानामिति वचनाद् अन्यत्र श्रुधीहवीये विराट्सु च प्रणवेषु प्लुतादिरेवाविशेषवचनतः प्राप्नोति ॥३२॥

[त्रिष्टुब्वर्जमृचामर्धर्चशः शस्यत्वम्]

**अर्धर्चशश्चैनदुत्तमावर्जम्[8] ॥३३॥**

एतत् [9]सूक्तमर्द्धर्चशस्यं च भवत्युत्तमामृचं वर्जयित्वा[9]। च-शब्दः समुच्चयार्थः। न्यूङ्खश्च भवति अर्धर्चशश्च। समुच्चयवचनात् तृच एव प्राप्त एतदित्याह कृत्स्नसूक्तप्राप्त्यर्थम्। कृत्स्ने च[10] प्राप्त उत्तमावर्जमित्याह। त्रिष्टुप् सा[11] पादशस्या भवति। "बार्हतं सूक्तं व्याहृतस्यार्द्धर्चं प्राप्तं पुनरुच्यते"[11] स्थानिवद्भावात्। ऐकाहिकस्य त्रैष्टुभस्थानम्[12] आदिष्टम्। स्थानिवद्भावात् पच्छःशस्ये[13] प्राप्ते अर्धर्चशो[14] विधीयते ॥३३॥

[विराट्छन्दस्काष्वृक्षु तृचावपनम्]

**'न ते गिरो अपि मृष्ये तुरस्य', 'प्र वो महे महिवृधे भरध्वम्' इति चतस्रस्तिस्रश्च विराजः ॥३४॥**

**तासामूर्ध्वमारम्भणीयाभ्यस्तृचानावपेरन् ॥३५॥**

---

१. द्र. आश्रौ ५, ९, ४। २. °दि मूको। ३-३. आयो (°द्यो मै) आम्नातः अधिकारः मूको। [?]द्र. आश्रौ ७, ११, ५। ४. नास्ति मूको। ५. °हवाये वि ये व'। ६. द्र. आश्रौ ७,११,२८-३०। ७. द्र. आश्रौ ७,११,१८; २१ भाष्यं च। ८. °श्चैतद्रुदेवशातपाठः। ९-९. °मर्धर्च वर्जयित्वा व'।
१०. नास्ति मै। ११-११. द्र. ऋ १०, २२, १५। बार्हतसूक्तव्याहृतस्यार्द्धर्चे प्राप्तं पुनरित्युच्यते व'। १२. अत्रैष्टुभस्यास्थाने मै; त्रैष्टुभस्थाने व'। १३. पच्छस्ये व'; पच्चशस्ये मै; द्र. आश्रौ ५,१४,९;१३। १४. अर्धर्चं (°र्चं व') मूको।

**न ते गिरो अपि** (ऋ ७, २२, ५-८), **प्र वो महे** (ऋ ७, ३१, १०-१२) इत्येते द्वे प्रतीके, चतस्र ऋचः। तिस्रश्चानन्तर्येण। प्रथमप्रतीके[1] चतस्रः [2]द्वितीये तिस्र इति[2] सप्तर्चो भवन्ति। विराजः [3]वैराजच्छन्दसो भवन्ति[3]। तासाम् ऋचां तृचानावपेरन् होत्रकाः। ऊर्ध्वमारम्भणीयाभ्य[4] आवापस्थानम्। पादग्रहणाच्चतस्रस्तिस्र इत्युच्यते। च-शब्दः समुच्चयार्थः। तासामित्युक्ते सप्तानां ग्रहणमधिकारात्[5] विराड्ग्रहणं[6] न्यूङ्खप्राप्त्यर्थम्। उक्तं च **विराजां मध्यमेषु पादेषु** (आश्रौ ७, ११, ३०) इति। अविशेषवचनाद् विराट्सु च[7] माध्यंदिने भवति। विज्ञायते मखतो **मध्यंदिने न्यूङ्खयति** (ऐब्रा ५, ३) इति। **तदुभयतो[8] न्यूङ्खं परिगृह्णाति** (ऐब्रा ५, ३)। सवनग्रहणाच्च **मध्यन्दिने** सवने भवति। न चाचार्येण[9] प्रतिबद्धः, विराड्ग्रहणं च कृतम्, तस्मात् प्राप्तः। ब्राह्मणे तु प्रतिषिद्धः **अन्यूङ्ख्या विराजः** (ऐब्रा ६, १६) इति। विराजो न्यूङ्ख्या इति एवमनारभ्य [10]प्रतिषेधाच्छ्रुत्यन्तरप्रतिषेधोऽयम्। तस्माच्छ्रुत्यन्तरमाचार्येण कल्पितं द्रष्टव्यम्। **यानि शिल्पानि तानि सह वा शंसेत्** (द्र. ऐब्रा ६,३०) इति ब्राह्मणम्। सूत्रकारः श्रुत्यन्तरं[10] कल्पयति। **एवमुक्थानि यत्र यत्र द्विपदासु स्तुवीरन्** (आश्रौ ८, ४, ४) इति। एवं श्रुत्यन्तरे दृष्टं न्यूङ्खं कल्पयति। तस्मात् सति द्वैविध्ये विकल्पः। प्रयोगोऽप्युभयथा दृश्यते। सर्वे वैराजा एकैकस्य प्राप्तास्तस्मादिदमुच्यते-तासां तृचानावपेरन्निति। आवापग्रहणादधिको भवति। [11]"सूक्ताद्यस्य स्थानं" भवति ॥३४-३५॥

कथं सप्तर्चस्त्रयस्तृचा भवन्तीति तदुच्यते---

[सप्तस्वृक्षु मैत्रावरुणब्राह्मणाच्छंसिनोः शंसनविधिः]

**आद्यं मैत्रावरुणस्तस्योत्तमादि शस्तानां तृचं ब्राह्मणाच्छंसी** ॥३६॥

आद्यं मैत्रावरुणः शंसति **न ते गिरः** (ऋ ७, २२, ५-७) इति। प्राप्तमपीदं पुनरुच्यते[12] पनस्तृचानां भागविवक्षार्थम्। तस्योत्तमादि तस्य[13] मैत्रावरुणस्य शस्त्रे शस्तानामृचाम् उत्तमाद्युत्तमामृचमादिं कृत्वा तृचं ब्राह्मणाच्छंसी शंसति। **तुभ्येदिमा** (ऋ ७, २२, ७-८) इति द्वे ऋचौ, **प्र वो महे महिवृधे** (ऋ ७, ३१, १०) इत्येका च तृचो भवन्ति। तस्येत्यनुच्यमान उत्तरत्राच्छावाकस्य निर्देशो नोपपद्यते ॥३६॥

[ब्राह्मणाच्छंसिवदच्छावाकस्य शस्त्रम्]

**तस्य चाच्छावाकः** ॥३७॥

---

१. °मप्रतीकं ब[1]; °मं प्रतीकं मैं। २-२. नास्ति मूको। ३-३. वैराजच्छन्दो हन्ति मूको। ४. °णीयाया ब[1]; °णीयाः मैं। ५. ग्रहणाधि° मूको। ६. ग्रहणं मूको। ७. नास्ति मको। ८. °तो मध्यन्दिने मूको। ९. वाचा ब[1]। १०-१०. प्रतिषेधान् श्रुत्यन्तरे ब[1]। ११-११. सूक्ताद्यन्यस्थानं मैं। १२. उच्यते ब[1]। १३. न मूको।

तस्य च ब्राह्मणाच्छंसिनः शस्त्रे शस्तानामृचामुत्तमादितृचमच्छावाकः शंसति **प्र वो महे महिवृधे** (ऋ ७, ३१, १०-१२) इति ॥३७॥

[अच्छावाकशस्त्रे द्वितीयतृचकथनम्]

**'यजामह इन्द्रं वज्रदक्षिणम्' इति द्वितीयानेवमेव ॥३८॥**

**यजामह इन्द्रं वज्रदक्षिणम्** (ऋ १०, २३, १-७) इत्येताः सप्त **ऋचः**। एतासामपि तृचान् द्वितीयान् शंसति । एवमेव तृचानां विभागः। **यजामहे** (ऋ १०, २३, १-३)[१] इति तृचं मैत्रावरुणो वैराजादनन्तरं द्वितीयं[२] शंसति । **यदा वज्रम्** (ऋ १०, २३, ३-५) इति तृचं द्वितीयं ब्राह्मणाच्छंसी शंसति । **यो वाचा विवाचः** (ऋ १०, २३, ५-७) इति तृचमच्छावाको द्वितीयं शंसति । द्वितीयानिति वचनादेकैकस्य द्वौ द्वौ तृचौ भवतः। **अन्यूङ्खया विराजो वैमदीश्च चतुर्थेऽहनि** (ऐब्रा ६, १६) इति ब्राह्मणम्। एवमेवेत्युक्ततृचानां विभागमुपदिशन्ति । एवेत्यवधारणार्थम् ॥३८॥

[पञ्चमेऽहनि तृचावापकथनम्]

**पञ्चमेऽहनि 'यच्चिद्धि सत्य सोमपाः' इत्येकैकमेवमेव ॥३९॥**

पञ्चमेऽहनि **यच्चिद्धि सत्य** (ऋ १, २९, १-७) इत्येताः[३] सप्त ऋचः। एतासां पञ्चमेऽहनि [४]एकैकं तृचानावपन्ति[४] । एवमेव पूर्वोक्तेनैव तृचविभागेन । ऊर्ध्वमारम्भणीयाभ्यः **यच्चिद्धि सत्य** (ऋ १, २९, १-३) इति तृचं मैत्रावरुणः पङ्क्तीः शंसति । **नि ष्वापया** (ऋ १, २९,३-५) इति तृचं शंसति ब्राह्मणाच्छंसी । **समिन्द्र गर्दभं मृण** (ऋ १, २९, ५-७) इति तृचं शंसत्यच्छावाकः। चतुर्थस्याधिकारात् पञ्चमेऽहनीत्युच्यते । द्वितीयानित्यधिकारादेकैकमित्याह ।एवमेवेति तमेव तृचविभागमुपदिशति । एवेत्यवधारणे । **पङ्क्तीः पञ्चमे** (ऐब्रा ६, १९) इति ब्राह्मणम् ॥३९॥

[षष्ठेऽहनि तृचावापकथनम्]

**षष्ठेऽहनि 'इन्द्राय हि द्यौरसुरो अनम्नत' इत्येवमेव ॥४०॥**

[५]षष्ठेऽहनि **इन्द्राय हि द्यौः** (ऋ १, १३१,१-७) इति सप्त ऋचः। तासामूर्ध्वमारम्भणीयाभ्यस्तृचानावपेरन् होत्रका एवमेव पूर्वोक्तेनैव विधानेन[५]। षष्ठेऽहनीत्यधिकारात् **इन्द्राय हि द्यौः** (ऋ १, १३१, १-३) इति तृचं

१. च ब'। २. तृचं मूको। ३. नास्ति ब'। ४-४. एकैकतृ° ब'। ५-५. नास्ति ब'।

मैत्रावरुणः शंसति। पादशस्यं पारुच्छेपीनां वक्ष्यते[1]। 'एकैकमिति वर्तते[2]। वि त्वा ततस्रे (ऋ १, १३१, ३-५) इति ब्राह्मणाच्छंसी शंसति। आदित्ते अस्य (ऋ १, १३१, ५-७) इति तृचं शंसत्यच्छावाकः। पञ्चमस्याधिकारात् षष्ठेऽह्नीत्याह। एकैकमिति वर्तते। एवमेवेति उक्ततृचविभागम्[3] उपदिशति। एवेत्यवधारणे। पारुच्छेपीः षष्ठेऽह्नीति ब्राह्मणम्[4]। कथमासां[5] पच्छःशस्यम् इति। आ ऽ तो ऽर्द्धर्चम् (आश्रौ ५, १४, ७) इत्युक्तम्। अत ऊर्ध्वं पच्छःशस्य-विषये पच्छःशस्या भवन्ति। अर्द्धर्चशस्यविषये ऽर्द्धर्चशस्या भवन्ति।

इदानीं होत्रकाणां चतुर्थेऽहनि शस्त्राणि वक्ष्यामः। स्तोत्रियानुरूपप्रगाथा-रम्भणीया 'वैराजं तृचं[6] वैमदं तृचं[7] प्रथमसंपाता अहरहःशस्यानि अभीवर्तकाले-ययोर्योनी[8]। चतुर्थेनाभिप्लविकेनोक्तं तृतीयसवनं 'सोक्थ्यम्। इन्द्र[9] जुषस्व (आश्रौ ६,३,१) इति विहृतषोळशिसंस्थोऽयम्[10] ॥४०॥

॥ इति सप्तमे एकादशः खण्डः ॥

---

१. वक्षति ब[1]; वक्ष्यति मै। २-२. एकैकनिवर्तने ब[1]। ३. तव विभाम् ब[1]। ४. द्र. ऐब्रा ६, १९। ५. कथयामास ब[1]। ६-६. वैराजतृचं मूको। ७. तृचं तवं व[1]। ८. अभीवर्तकलियषो मोनिः ब[1]; 'योनिः मै। ९-९. सौस्थमिदं ब[1]; सो...इन्द्र मै; द्र. आश्रौ ७,७,३;४;१०। १०. द्र. आश्रौ ६,३,१; विहृतः षोडशी मूको।

# अथ सप्तमेऽध्याये द्वादशः खण्डः

[स्तोमे वर्धमाने पारुच्छेपीनामूर्ध्वमावापविधानम्]

**स्तोमे वर्धमाने 'को अद्य नर्यः,' 'वने न वा यः', 'आ याह्यर्वाङ्' इत्यष्टर्चान्यावपेरन्नुपरिष्टात्पारुच्छेपीनाम् ॥१॥**

अधिकारसूत्रमेतत्। अत ऊर्ध्वमावापो वक्ष्यते। स स्तोमे वर्द्धमाने भवति। आवापाधिकारादावापो वक्ष्यते। यथैव प्रातःसवने **नित्यादधिकं स्तोमकारणात्** (आश्रौ ७, ५, १०) तथैवेहापि नित्यादधिक आवापः कर्तव्यः। स्तोमे वर्द्धमाने यथा गोसवे छन्दोमेष्वपरिमितेषु[1] चैतेषु शस्त्राणामृचः[2] परिसंख्याय यथा अपरिमिताभिः स्तोमातिशंसनं भवति, तथावापाः कर्तव्याः। [3]इदानीमावपनानि सूक्तानि[3] वक्ष्यन्ते। **को अद्य नर्यः** (ऋ ४,२५), **वने न वा यः** (ऋ १०, २९), आ **याह्यर्वाङ्** (ऋ ३, ४३) इत्येतानि त्रीणि सूक्तान्यष्टा ऋचः [4]यासां तानि[4] अष्टर्चान्यावपेरन्। अनुक्रमेण त्रीणि त्रयाणां भवन्ति। सूक्तानां स्थाने प्राप्नुवन्ति, आवापवचनादधिकानि भवन्ति। ऊर्ध्वमारम्भणीयाभ्य आवापस्थानम्[5]। तृचानि चोदितानि, तस्मादेतेष्वहःसु तृचेभ्योऽनन्तराण्यष्टर्चानि। अष्टर्चानि [6]इति वचनात्[6] सूक्तानि न विद्यन्ते। पुनरावापग्रहणम् उत्तरसूत्रार्थम्। उपरिष्टात् पारुच्छेपीनाम् अस्मादारम्भात् षष्ठेऽहन्यवर्द्धमानेऽपि स्तोमेऽष्टर्चानावपेरन्। षष्ठेऽहनि नित्यानि श्रूयन्ते **एतैर्वा आवपनैर्देवाः स्वर्गं लोकमजयन्** (ऐब्रा ६, १९) इति। नित्यानामेव फलं, न[7] नैमित्तिकानामिति ॥१॥

[पूर्वोक्ताऽऽवापात् पूर्वम् ऐन्द्राणां सूक्तानामावापविधानम्]

**तैरप्यनतिशस्त ऐन्द्राणि त्रैष्टुभान्यमरुच्छब्दान्यावपेरन् ॥२॥**

अष्टर्चानि स्तोमातिशंसनार्थानि। तैरप्यनतिशस्ते स्तोम ऐन्द्राणि सूक्तानि त्रैष्टुभानि निष्केवल्यानि यानि सूक्तानि तान्यमरुच्छब्दानि[8] आवपेरन्। आवापपक्षेऽपि यानि मरुच्छब्दानि तानि भवन्त्येव। अपिशब्दः

---

१. छन्दोगेषु अपरिमितौ मूको। २. शस्त्राणा (°स्त्रा ब') मृचां मूको। ३-३. °मावापनादिसू° मूको। ४-४. नास्ति मूको। ५. द्र. आश्रौ ७, ११,३५। ६-६. ग्रहणात् मै। ७. च मूको। ८. नास्ति मूको।

समुच्चयार्थः। तैश्च शस्त्रं शस्यते। तैरप्यनतिशस्ते[1] इति[2] वचनाद् अष्टर्चेव तदतिशंसनं[3] भवति। अष्टर्चान्येवावपेरन् नातिप्रयोक्तव्यानि। अस्मादारम्भादष्टर्चावापो नित्यः। तैरनतिशस्ते सूक्तानि चोदितानि, तस्मात् सूक्तान्येव मरुच्छब्दभिन्नानि[4] प्रयोक्तव्यानि। पुनरावापग्रहणं [5]सर्वार्थं षष्ठस्याधिकारात्[5] ॥२॥

[ऐन्द्राणां सूक्तानां नित्यत्वविधानम्]

**न त्वेतान्यनोप्यातिशंसनम्** ॥३॥

एतान्यष्टर्चान्यनोप्यैन्द्रीभिरतिशंसनं नैव[6] कर्तव्यम्। **तैरप्यनतिशस्त ऐन्द्राणि** (आश्रौ ७, १२, २) इत्युक्त ऐन्द्रीभिरतिशंसने क्रियमाणेऽष्टर्चानां प्रतिषेधः प्राप्तः। अष्टर्चानि यदि नातिशस्यन्ते, ऐन्द्राण्येवावपेरन्नित्ययमर्थः[7] स्यात्। तस्मादिदमुच्यते। अस्मात् सूत्रारम्भादष्टर्चावापो नित्यः। कस्माद्, ब्राह्मणे फलश्रवणात् **एतैरावपनैः स्वर्लोकं जयन्ति** (ऐब्रा० ६, १६) इति[8] ॥३॥

[प्रातःसवनेऽतिशंसनविधिकथनम्]

**एकया द्वाभ्यां वा प्रातःसवने** ॥४॥

अतिशंसनमिति वर्तते, अतिरिक्तं शंसनम्। प्रातःसवन एकयर्चाऽतिशंसनं द्वाभ्यामृग्भ्यां [9]वाऽतिशंसनं[9] भवति। **एकां द्वे न स्तोममतिशंसेत्** (ऐब्रा० ६, ८) इति ब्राह्मणम्। यदा पञ्च सप्त दश इति, तदा द्वाभ्यामतिरिक्तं भवति, यदा एकाल्पीयसीर्वेति[10], तदा, एकयाऽतिरिक्तं भवति। मध्यंदिनाधिकारात् प्रातःसवन इत्याह ॥४॥

[मध्यन्दिनतृतीयसवनयोरपरिमिताभिर्ऋग्भिरतिशंसनम्]

**अपरिमिताभिरुत्तरयोः सवनयोः** ॥५॥

अपरिमिताभिर्ऋग्भिरतिशंसनं भवत्युत्तरयोः सवनयोर्मध्यंदिने तृतीयसवने च। त्रिप्रभृतिभिरपरिमिताभिरतिरिक्तानि शस्त्राणि भवन्ति। ब्राह्मणे न प्रातर्माध्यन्दिनयोः[11], तृतीयसवन एवापरिमिताभिरतिशंसनम्। **एकां द्वे न द्वयोः सवनयोः स्तोममतिशंसेत्। दीर्घारण्यानि ह वै भवन्ति, यत्र बह्वीभिः स्तोमोऽतिशस्यते। अपरिमिताभिस्तृतीयसवनेऽपरिमितो वै स्वर्गो लोकः** (ऐब्रा ६, २३) इति। श्रुत्यन्तरमाचार्येण कल्पितम्। तस्माद् विकल्पः। अश्वमेध एकाहे वा गोतमस्तोमेऽष्टर्चावापो न क्रियते ॥५॥

---

१. °शस्तः मै। २. नास्ति मै। ३. दतिशं ब[1]; चेदतिशं° मै। ४. अभिन्नानि मूको। ५-५. सर्वार्थः षष्ठ° ब[1]; सर्वार्थपृष्ठ° मै। ६. चैव मै। ७. °न्नित्यर्थः मै। ८. नास्ति मूको। ९-९. शंसनम् मूको। १०. °यसी वंति ब[1]। ११. तरगेन ब[1]; नास्ति मै।

[पञ्चमेऽहनि शस्यानां नवानामृचां कथनम्]

**पञ्चमस्य 'इमम् षु वो अतिथिमुषर्बुधम्' इति नवाऽऽज्यम् ॥६॥**

अधिकारसूत्रमेतत् । पञ्चमस्याह्नः शस्यमधिक्रियते[1] **इमम् षु वः** (ऋ ६, १५, १-६) इत्येता नव ऋच आज्यम् ऐकाहिकस्य स्थाने। असूक्तमपि[2] आज्यस्य [3]न्यायातिदेशात् स्थाने[3] भवति। अन्यदैकाहिकम् ॥६॥

[तत्र शस्यानामन्यासामृचां कथनम्]

**'आ नो यज्ञं दिविस्पृशम्' इति द्वे, 'आ नो वायो महे तने' इत्येका, 'रथेन पृथुपाजसा', 'बहवः सूरचक्षसः', 'इमा उ वां दिविष्टयः' 'पिबा सुतस्य रसिनः', 'देवं देवं वोऽवसे देवं देवं', 'बृहदु गायिषे वचः' इति बार्हतं प्रउगम् ॥७॥**

**आ नो यज्ञं दिविस्पृशम्** (ऋ ८, १०१, ९-१०) इति द्वे **ऋचौ**, **आ नो वायो महे तने** (ऋ ८, ४६, २५) इत्येका । द्वे चैका च वायव्यस्तृचः । **तृचाः प्रउगे** (आश्रौ ७, १, १०) इति प्राप्ते द्वे चैका चेत्युच्यते। **रथेन पृथुपाजसा** (ऋ ४, ४६, ५-७) इत्यैन्द्रवायवस्तृचः। **बहवः सूरचक्षसः** (ऋ ७, ६६, १०-१२) इति मैत्रावरुणः । **इमा उ वाम्** (ऋ ७, ७४, १-३) इत्याश्विनः। **पिबा सुतस्य** (ऋ ८, ३, १-३) इत्यैन्द्रः। **देवं देवं वोऽवसे देवं देवम्** (ऋ ८,२७,१३-१५) इति वैश्वदेवस्तृचः। देवं देवम् इति विशेषणम् औष्णिहस्य[4] प्रतिषेधार्थम् । प्राप्तश्च पूर्वत्वात्। **बृहदु गायिषे** (ऋ ७, ९६, १-३) इति सारस्वतस्तृचः। इति बार्हतं प्रउगम्। इत्येति **बार्हतं प्रउगम्** (ऐब्रा ५,६) इति ब्राह्मणम्। गायत्र्योऽपि [5]ऋचो विधीयन्ते[5] भूयस्त्वाद् बार्हतमित्याह ॥७॥

[एकेषां मतेन द्वितीयोत्तमतृचाभ्यामन्यत्र तृचस्थाने प्रगाथविधानम्]

**प्रगाथानेके द्वितीयोत्तमवर्जम् ॥८॥**

एके शाखिनः प्रगाथान् द्व्यृचान् कुर्वन्ति न तृचान्, द्वितीयं चोत्तमं च तृचं वर्जयित्वा। द्वितीयस्तृचः । अन्ये प्रगाथा द्व्यृचा भवन्ति। द्वितीयप्रतिषेधोऽनर्थकः। गायत्रे तृचे[6] प्रगाथो न संभवति, द्व्यृचस्तु न प्राप्नोति **द्व्यृचाः प्रगाथाः** (आश्रौ ५,१४,७) इति वचनात्, तस्मात् प्रतिषेधः। उत्तमवर्जमिति कस्मात् । [7]अन्त्ये तृचे तृतीया प्रस्तारपङ्क्तिः[7] । प्रगाथे शस्यमानेऽन्त्यया परिधानं न प्राप्नोति । इष्यते शस्त्रन्यायात् परिधानम्। तस्मात् प्रतिषेधः। होत्रकाणां स्तोत्रियानुरूपारम्भणीयाः पञ्चदशार्द्धो[8] वा पर्यायाः ॥८॥

---

१. शस्यं क्रियते व[1]; सस्यं वक्ष्यते मै। २. आ सूक्त° मै। ३-३. °देशान्तस्थाने मै। ४. द्र. ऋ ८, १२,१९। ५-५. ऋचोपविद्यन्ते मै। ६. द्र. ऋ ४, ४६, ५-७। ७-७. अन्त्यस्तृचः तृतीया पुरस्तात्पङ्क्तिः मूको; द्र. ऋ ७, ९६, १-३। ८. °शार्घा मै।

[मरुत्वीयतत्प्रतिपदनुचरसूक्तानां कथनम्]

**'यत्पाञ्चजन्यया विशा', 'इन्द्र इत् सोमपा एकः' इति मरुत्वतीयस्य प्रतिपदनुचरौ । 'अवितासि', 'इत्था हि', 'इन्द्र पिब तुभ्यम्' इति मरुत्वतीयम् ॥९॥**

**यत्पाञ्चजन्यया विशा** (ऋ ८, ६३, ७-९), **इन्द्र इत् सोमपा एकः** (ऋ ८, २, ४-६) इति मरुत्वतीयस्य प्रतिपदनुचरौ भवत ऐकाहिकयोः स्थाने । मरुत्वतीयग्रहणं वैश्वदेवनिवृत्त्यर्थम् । **ध्रुव इन्द्रनिहवः** (आश्रौ ७, ३, ७), **धाय्याश्च** (आश्रौ ७, ३, ८) । **द्वितीयौ प्रगाथौ**, बृहतीकारप्रगाथाः। **अवितासि** (ऋ८, ३६), **इत्था हि** (ऋ १, ८०), **इन्द्र पिब तुभ्यम्** (ऋ ६, ४०) इत्येतानि त्रीणि सूक्तानि मरुत्वतीयानि[1] । मरुत्वतीय एतानि त्रीणि सूक्तान्यैकाहिकस्य स्थाने भवन्ति । त्रिणवस्त्रिणवत्वात् स्तोमस्य । पुनर्मरुत्वतीयग्रहणाद् ऐकाहिकस्य स्थाने भवन्ति ॥९॥

[पृष्ठस्थाने शाक्वरे सामनि महानाम्नीनां स्तोत्रियत्वं तच्छंसनविधिकथनं च]

**शाक्वरं चेत् पृष्ठं महानाम्न्यः स्तोत्रियः । ता अध्यर्द्धकारं नव प्रकृत्या तिस्रो भवन्ति ॥१०॥**

शाक्वरं साम, तत् पृष्ठस्थाने क्रियते । तस्य स्तोत्रियानुरूपौ वक्ष्येते[2] । चेदिति वचनाद् रथन्तरं वा भवति । यदि शाक्वरं पृष्ठं, महानाम्न्य ऋचो वेदान्ते[3] आम्नाताः शाक्वरस्य स्तोत्रिया भवन्ति । **महानाम्नीष्वत्र स्तुवते शाक्वरेण साम्ना** (ऐब्रा ५, ७) इति ब्राह्मणम् । ता अध्यर्धकारं, ता महानाम्न्योऽध्यर्धकारं शस्यन्ते । तद् व्याख्यातम् । **सामिधेनीषु**[4] त्रीनर्द्धर्चान् प्रणुयात् । [5]स्तोत्रियाधिकारात् पुनस्ता इत्युच्यते[5] । ता एवाध्यर्द्धकारं, न[6] रथंतरस्य स्तोत्रिया इति । नव प्रकृत्या तिस्रो भवन्ति । प्रकृतिराम्नायः । प्रकृतौ नव आम्नातास्तिस्रः क्रियन्ते । अस्मादारम्भाद् [7]अध्यर्धकारे ऋगन्तलक्षणाः[7] प्रणवा[8] न क्रियन्ते, तथा यावतीषु त्रीनर्द्धर्चानुक्त्वाऽवस्येत् प्रणुयात् । प्रकृतिग्रहणादन्यथाम्नाताः[9] शस्यन्ते । [10]केचन छन्दोगानां पादा न विद्यन्ते, केचिन्न विकारा अपि विद्यन्ते । तस्मादाह—प्रकृत्या इति[10] ॥१०॥

[महानाम्नीभिः पुरीषपदानामुपसन्तननम्]

**ताभिः पुरीषपदान्युपसन्तनुयात् ॥११॥**

---

१. °त्वतीयः ब[1]; °त्वतीया मै । २. वक्ष्यते मूको । ३. द्र कौ ४, १-९ । ४. सामिधेनाप्सु ब[1] । ५-५. °धिकारात्युच्यते ब[1] । ६. स मै । ७-७. °कारे न लक्षणाः ब[1] । ८. प्रणवो मूको । ९. °णा यथा° ब[1] । १०-१०. नास्ति ब[1] ।

'ताभिर्महानाम्नीभिः पुरीषपदान्युपसन्तनुयात्। न संदध्यात्'[1] । **प्रकृत्या** (आश्वौ ७, १२, १०) इत्यधिकाराद् यथाम्नातानि शस्यन्ते । **महानाम्न्यः स्तोत्रियः** (आश्वौ ७, १२, १०) इत्युक्तम् । स्तोत्रियेणानुरूपस्य सन्धाने प्राप्ते पुरीषपदान्युपसन्तनुयादित्युच्यते ॥११॥

[पुरीषपदानां शंसनविधिकथनम्]

**पञ्चाक्षरशः पूर्वाणि पञ्च** ॥१२॥

**सर्वाणि वा यथानिशान्तम्** ॥१३॥

पदानाम्[2] आद्यानि पञ्च पदानि पञ्चाक्षरशः शस्यन्ते । पञ्चभिरक्षरैरवसानम् । 'एवेत्यवसानम्'[3] । सर्वाणि वा 'यथासमाम्नायमिति'[4] । यथानिशान्ते प्राप्ते पञ्चाक्षरश इत्युच्यते । पञ्चग्रहणात् पञ्चैव प्राप्तानि, सर्वग्रहणात् सर्वाणि शस्यन्ते यावन्त्याम्नातानि । पञ्चेति संख्यावचनादूनान्यधिकानि वा न[5] शस्यन्ते । छन्दोगवशादूनान्यधिकानि च प्राप्नुवन्ति । अधिकं सौम्यं कुर्वन्ति । उत्तमानि चत्वारि । सर्वाणि वा पदानि यथानिशान्तं यथाम्नातं शस्यन्ते, पञ्चाक्षरशो न शस्यन्ते । सर्वग्रहणेऽक्रियमाणे पञ्चैव 'यथानिशान्तं शस्येरन् उत्तरेषां'[6] चतुर्णां शस्त्रन्याय एव[7] स्यात् । सर्वग्रहणात् सर्वाण्येव यथाऽऽम्नातं शस्यन्ते ॥१२-१३॥

[योनिशंसने विशेषविधिकथनम्]

**योनिस्थाने तु यथानिशान्तं सपुरीषपदा उत्तमेन सन्तानः** ॥१४॥

योनिस्थाने तु महानाम्न्यो यथानिशान्तं यथाऽऽम्नातमर्द्धर्चाः शस्यन्ते सह पुरीषपदैः । सपुरीषपदेत्युक्तपुरीषपदैः । तु-शब्दः[8] स्तोत्रियाधिकारव्यावृत्त्यर्थः । **योन्यः** (आश्वौ ७, ३, १३), **अर्द्धर्चाः** (आश्वौ ७, १३, १४) इति सिद्धे 'पुनर्यथानिशान्तमिति वचनाद्'[9] वाचनिकस्यार्थस्य[10] प्रतिषेधः । छन्दोगवशात् स्तोत्रियाधिकारः । बृहतीकारादि प्राप्तं[11] तत्प्रतिषेधार्थं योन्यः, अर्द्धर्चाः इत्युक्तम् । महानाम्नीषु त्वध्यर्द्धकारं छन्दोगवशान्न भवति । स्ववचनादेव **प्रकृत्या तिस्रो भवन्ति** (आश्वौ ७, १२, १०) । **तृचाः स्तोत्रियाः** (आश्वौ ६, ५, ६) इति प्रकृतिषु । **तिसृभिः**[12] **स्तुवन्ति** (ऐब्रा ३, २३) इति ब्राह्मणम् । **स्तोत्रिया योन्यः** (आश्वौ ७, ३, १३) इति वचनम् । तस्माद् योन्योऽर्द्धर्चाः इत्युक्ते स्तोत्रियस्य यदर्धर्चं[13] तत् प्राप्तम्,

---

१-१. के च दध्यात् ब॰ । २. पादा॰ ब॰ । ३-३. द्र. को ३,१० एवा ह्येव । ४-४. °साम्नायां दिति मूको । ५. नास्ति मूको । ६-६. °शान्तस्योरेषां ब॰; °शान्तस्युत्तरेषाम् मै । ७. नास्ति मै । ८. उण्व ब॰ । ९-९. °शान्तं वच° मै । १०. °स्यार्द्धस्य ब॰ । ११. नास्ति मूको । १२. तिसृषु मूको । १३. दर्धर्चं ब॰ ।

तन्निवृत्त्यर्थं[1] 'यथानिशान्तमिति वचनम्'[1]। तस्माद् यथाम्नातम् अर्द्धर्चं सप्रणवं भवतीति महानाम्न्यः स्तोत्रियः (आश्रौ ७, १२, १०) इत्युक्तम्। स्तोत्रिया योन्यः (आश्रौ ७, ३, १३) इति वचनाद् महानाम्न्य एव योनिस्थाने प्राप्ताः, पुरीषपदानि न प्राप्नुवन्ति, तस्मात् सपुरीषपदा इत्याह। उत्तमेन सन्तानः। पुरीषपदानामुत्तमेन पदेन सन्तानः कर्तव्यः[2]। यथानिशान्तवचनात् सन्तानो न प्राप्नोति, तस्मादारभ्यते ॥१४॥

[अनुरूपतृचानां कथनम्]

**'स्वादोरित्था विषूवतः', 'उप नो हरिभिः सुतम्', 'इन्द्रं विश्वा अवीवृधन्' इति त्रयस्तृचा अनुरूपः ॥१५॥**

**स्वादोरित्था** (ऋ १, ८४, १०-१२), **उप नो हरिभिः** (ऋ ८, ९३, ३१-३३[3]), **इन्द्रं विश्वाः** (ऋ १, ११, १-३) इति त्रयस्तृचा अनुरूपो भवति। पादग्रहणात् तृचा इत्युच्यते। [4]त्रय इति वचनात्त्रय एव भवन्ति[4]। अध्यर्द्धकारं नव प्रकृत्या तिस्रो भवन्ति (आश्रौ ७, १२, १०) इत्यनुवर्तते। अनुरूपवचनाच्चानुरूपः स्तोत्रियेण समानोऽनुरूपो[5] भवति। स्तोत्रियानुरूपौ धाय्या [6]रथन्तरस्य योनिः[6] मो षु त्वा (ऋ ७, ३२, १-२) इति सद्विपदः[7] प्रगाथाः[8] तार्क्ष्यः ॥१५॥

[निष्केवल्यसूक्तानां कथनम्]

**'प्रेदं ब्रह्म', 'इन्द्रो मदाय', 'सत्रा मदासः' इति निष्केवल्यम् ॥१६॥**

**प्रेदं ब्रह्म** (ऋ ८, ३७), **इन्द्रो मदाय** (ऋ १, ८१), **सत्रा मदासः** (ऋ ६, ३६) इत्येतानि त्रीणि सूक्तानि। होत्रकाणां स्तोत्रियानुरूपप्रगाथारम्भणीयाः पाङ्क्तास्तृचा द्वितीयाः संपाता अहरहःशस्यानि[9] अभीवर्तकालेययोश्च योनी। पञ्चमेनाभिप्लविकेनोक्तं तृतीयसवनं सोक्थ्यम् ॥१६॥

[मरुत्वतीयनिष्केवल्यसूक्तानां पङ्क्तिशस्यत्वकथनम्]

**पाङ्क्ते पूर्वे सूक्ते मरुत्वतीये, पाङ्क्ते निष्केवल्ये ॥१७॥**

मरुत्वतीये त्रीणि सूक्तानि[10], तेषां त्रयाणां सूक्तानां ये पूर्वे सूक्ते प्रथमद्वितीये, ते[11] पाङ्क्ते भवत **अवितासि** (ऋ ८, ३६), **इत्था हि** (ऋ १, ८०) इति। पाङ्क्त इति पङ्क्तिशंसनप्राप्त्यर्थम्। ऐकाहिकस्य त्रिष्टुभः[12] स्थाने आदिष्टानां[13] मरुत्वतीयग्रहणस्थानिवद्भावात् पच्छःशस्ये प्राप्ते पङ्क्तिशंसनं विधीयते।

१. तद्विनिवृ° मै। २-२. °शान्तवच° मै। ३. नास्ति ब[1]। ४-४. यत्र इति वचना त्वयस्मि भ° ब[1]; यत्र इति बहुवचनात् त्रयस्तिस्रो भ° मै। ५. समानमनु° मूको। ६-६. °न्तरस्वयोनिः ब[1]। ७. द्र. आश्रौ ७, ३, १९। ८. प्रगाथः मै। ९. °स्यानीति मै। १०. द्र. आश्रौ ७,१२,९। ११. नास्ति मै। १२. त्रैष्टुभस्य मै। १३. आनोदिष्टानां ब[1]।

मधिकारव्यवायात् । पाङ्क्त० । निष्केवल्येऽपि पूर्वे द्वे सूक्ते पाङ्क्ते[1] भवतः, प्रेदं ब्रह्म (ऋ ८,३७), इन्द्रो मदाय (ऋ १,८१) इति[2] । पुनः पाङ्क्त-ग्रहणादपाङ्क्ते अपि पाङ्क्ते एव[3] पङ्क्तिशंसनप्राप्त्यर्थम्[4] । अधिकपादाक्षरे[5] प्रेदं जागतं महापाङ्क्तम् । निष्केवल्यग्रहणं मरुत्वतीयाधिकारात् ॥१७॥

[अन्ते त्रिष्टुप्छन्दस्कयोः सूक्तयोः पच्छःशस्यत्वम्]

**आद्ये तु त्रिष्टुबुत्तमे ॥१८॥**

त्रिष्टुबुत्तमा ययोः सूक्तयोस्ते सूक्ते[6] त्रिष्टुबुत्तमवचने । तयोरेव[7] सूक्तयोरुत्तम ऋक् त्रिष्टुब् भवति । **श्यावाश्वस्य सुन्वतः** (ऋ ८, ३६, ७), **श्यावाश्वस्य रेभतः** (ऋ ८, ३७, ७) इति । जागतस्य पङ्क्तिशंसने प्राप्ते त्रिष्टुब्ग्रहणं पच्छःशस्यार्थम् । महापङ्क्तिर्जागतप्राये[8] जगती, त्रैष्टुभप्राये त्रिष्टुप्[9], माध्यंदिने त्रैष्टुभम् । तस्मात् त्रिष्टुबित्युच्यते । तु-शब्दोऽन्त्यसूक्ताधिकारव्यावृत्त्यर्थः ॥१८॥

[मरुत्वतीये शस्त्रेऽवसानकथनम्]

**तयोरवसाने 'शतक्रतो समप्सुजित्' इति मरुत्वतीये ॥१९॥**

तयोस्त्रिष्टुबुत्तमयोः सूक्तयोर्द्वयोः पङ्क्तिशंस्ययोः "पङ्क्तेरवसाने । पञ्चपदत्वादुक्तं† **सर्वाश्चैवाचतुष्पदाः** (आश्रौ ५, १४, १०) यथा शस्तव्यास्तथा तत्रैव वक्ष्याम इति । तस्मादचतुष्पदत्वाद् अवसाने **शतक्रतो, समप्सुजित्**" (ऋ ८, ३६, १) इत्येते अवसाने मरुत्वतीये शस्त्रे । शतक्रतो इत्येकमवसानम् । समप्सुजिद् इति द्वितीयमवसानम् । **पिबा सोमं मदाय कं शतक्रतो** (ऋ ८, ३६, १) इत्येकम्, **पृतना उरु ज्रयः समप्सुजित्** (ऋ ८, ३६, १) इति द्वितीयमवसानम् । **पङ्क्तिषु द्विरवस्येत्** (आश्रौ ५, १४, ११) इत्येते द्वे अवसाने । मरुत्वतीयग्रहणमुभयोः शस्त्रयोरधिकारात् ॥१९॥

[निष्केवल्ये शस्त्रेऽवसानकथनम्]

**'शचीपते,' 'अनेद्य' इति निष्केवल्ये निष्केवल्ये ॥२०॥**

**शचीपते** (ऋ ८, ३७,१) इत्येकमवसानम् । **अनेद्य** (ऋ ८, ३७, १)

---

१. नास्ति ब'; पाङ्क्ते पाङ्क्ते मै । २. द्र. आश्रौ ७,१२,१६ । ३. एवं ब' । ४. °शंसप्रा° मै । ५. °क्षरः मूको । ६. द्र. ऋ ८,३६; ३७ । ७. तयोरवने तयोरेव ब' । ८-८. नास्ति मूको । ९. महापदपङ्क्तिजागत (°तः मै) प्राये जगती (जपती मै) मूको; द्र. ऋ अ १, १० । १०. द्र. ऋ अ १,९, २-३ । ११-११. पङ्क्तिरवसाने वक्ष्यते षड्गदत्वादवसाने मै । †षब्ददत्वा° ब' ।

इति द्वितीयमवसानम् । एते द्वे अवसाने निष्केवल्ये शस्त्रे । **प्रेदं ब्रह्म** (ऋ ८, ३७, १) इत्येतस्मिन् **प्र सुन्वतः शचीपते** (ऋ ८, ३७, १) इत्येकमवसानम्, **सवनस्य वृत्रहन्ननेद्य** (ऋ ८, ३७, १) इति द्वितीयमवसानम्, एते द्वे भवतः । निष्केवल्यग्रहणं मरुत्वतीयाधिकाराद् इति[1] । निष्केवल्ये इत्यध्यायान्तलक्षणोऽभ्यासः[2] ॥२०॥

॥ इति सप्तमे द्वादशः खण्डः ॥

'इति वराहे' देवगृहपतेः कृतौ सूत्रव्याख्यायां सप्तमोऽध्यायः ॥७॥

१. प्रति ब[1]; नास्ति मै । २. °यान्तलक्षणाभ्यासः मूकौ । ३. नास्ति ब[1] ।
४. वाराहे मै ।

# अथ अष्टमोऽध्यायः

## तत्र प्रथमः खण्डः

(पृष्ठ्यषष्ठाह्नमारभ्य वैश्वदेवादिप्रपञ्चः)

[षष्ठस्याह्नः प्रातःसवनोपक्रमः]

**षष्ठस्य प्रातःसवने प्रस्थितयाज्यानां पुरस्तादन्याः कृत्वोभाभ्यामनवानन्तो यजन्ति ॥१॥**

'षष्ठस्येत्यधिकारः[1]। यदित ऊर्ध्वमनुक्रमिष्यामः, तत् षष्ठस्याह्नः शस्यं वेदितव्यम्। प्रातःसवने षष्ठस्याह्नः प्रातःसवने प्रस्थितयाज्यानां[2] पुरस्तादन्या ऋचः कृत्वा उभाभ्यामनवानन्तोऽनुच्छ्वसन्तो यजन्ति। ता ऋचो वक्ष्यन्ते **वृषन्निन्द्र** (ऋ १, १३१, ६) इत्येवमादयः[3]। प्रातःसवन एव, नोत्तरयोः सवनयोः। प्रस्थितयाज्यानां पूर्वोत्तरत्वादिना[4] अनन्तराः प्राप्तास्तस्मात् पुरस्तादित्याह। **पारुच्छेपीरुपदधति पूर्वयोः सवनयोः पुरस्तात् प्रस्थितयाज्यानाम्** ऐब्रा ५, १०) इति ब्राह्मणम्। अन्या अधिका इत्यर्थः। अनवानं प्राप्तमपि पुनरुच्यते, उभयोः समासप्राप्त्यर्थम्। अन्यथा पृथगनवानं स्यात्। ऋचो वक्ष्यन्ते ॥१॥

[प्रस्थितयाज्यानां पुरस्तादनवानद्भिर्यजनीयमन्त्राणां कथनम्]

**'वृषन्निन्द्र वृषपाणास इन्दवः', 'सुषुमा यातमद्रिभिः', 'वनोति हि सुन्वन्क्षयं परीणसः, 'मो षु वो अस्मदभि तानि पौंस्या' 'ओ षू णो अग्ने शृणुहि त्वमीळितः', 'अग्निं होतारं मन्ये दास्वन्तं', 'दध्यङ् ह मे जनुषं पूर्वो अङ्गिराः' इति ॥२॥**

**वृषन्निन्द्र** (ऋ १, १३९, ६), **सुषुमा यातम्** (ऋ १, १३७, १) **वनोति हि** (ऋ १, १३३, ७), **मो षु वः** (ऋ १, १३९, ८), **ओ षू णः** (ऋ १, १३९, ७), **अग्निं होतारम्** (ऋ १, १२७, १), **दध्यङ् ह मे** (१, १३९, ९) इत्येताः सप्त ऋचः। होत्रादीनामच्छावाकान्त्यानामृचः 'पुरस्तात् प्रस्थितयाज्यानां' प्रयोक्तव्याः। अच्छावाकस्य स्वकाले प्रस्थितयाज्या भवति **'प्रातर्यावभिरा गतम्'** (ऋ ८, ३८, ७) **इति यजति** (आश्रौ ५, ७, ६) इति। तस्याः पुरस्ताद् **दध्यङ् ह मे** इत्येतां कुर्यात् ॥२॥

---

१. षष्ठेत्यधि° मै। २. द्र. आश्रौ ५,५, १५; १८। ३. द्र. आश्रौ ८,१,२। ४. पूर्वोक्तं त्वादिना ब'। ५-५. पुरस्ताद् याज्यानां मूको।

[माध्यन्दिने सवने प्रातःसवनवदेव सर्वम्]

**एवमेव माध्यंदिने ॥३॥**

एवमेव माध्यंदिने यथा प्रातःसवने 'पुरस्तात् प्रस्थितयाज्यानामृचः' कृत्वोभाभ्यामनवानन्तो यजन्ति[1], एवमेव माध्यंदिनेऽपि प्रस्थितयाज्यानां पुरस्तादन्या ऋचः कृत्वा उभाभ्याम् अनवानन्तो यजन्ति[2]। ता ऋचो वक्ष्यन्ते ॥३॥

[प्रस्थितयाज्याकथनम्]

**'पिबा सोममिन्द्र सुवानमद्रिभिः', 'इन्द्राय हि द्यौरसुरो अनम्नत' इति षट् ॥४क॥**

**पिबा सोममिन्द्र सुवानमद्रिभिः** (ऋ १,१३०, २) इत्येका, **इन्द्राय हि द्यौः** (ऋ १, १३१, १-६) इति षड् ऋचः । सप्तानां प्रस्थितयाज्यानामनुक्रमेण सप्त ऋचो भवन्ति ॥४क॥

[माध्यन्दिनेऽध्यर्धाया ऋचो ऽनवानद्भिर्यजनम्]

**अध्यर्द्धां तु तत्रानवानम् ॥४ख॥**

**उभाभ्यामनवानन्तः** (आश्रौ ८,१,१) इति प्राप्ते इदमारभ्यते। अध्यर्धां तु अर्द्धेन 'अधिका अध्यर्धा।' अध्यर्द्धां तु ऋचमनवानं कुर्यात् तत्र माध्यंदिने। कस्मात्। आगूर्वषट्कारयोः प्रतिषेधार्थम्। अनवाने सति अवसानं[4] न विद्यते। अवसानाभावादाद्यन्तौ न स्तः । आद्यन्ताभावादाद्यन्तोपदिष्टौ आगूर्वषट्कारौ अपि न स्तः । तु-शब्द उभयोरनवान[5]प्रतिषेधार्थः । तत्रेत्यनुच्यमाने प्रातः-सवनेऽपि स्यादुभयोरधिकारात्[6] ॥४ख॥

[ऋतुयाजानामुपरिष्टादृचां प्रयोगः]

**उपरिष्टात्त्वृच ऋतुयाजानाम् ॥५॥**

ऋतुयाजानाम् ऋतुप्रैषाणाम्[7] उपरिष्टात् तु ऋचो भवन्ति। **तस्माद् ऋग्मेभ्य एवाधि प्रेषितव्यम् ऋग्मेभ्योऽधि वषट्कृत्यम्** (ऐब्रा ५,६) इति श्रुतेः। तु-शब्दोऽधिकृतानां व्यावृत्त्यर्थः **पुरस्तादन्याः कृत्वा** (आश्रौ ८, १, १) इति ॥५॥

कथं प्रयोग इति तदुच्यते—

[मैत्रावरुणप्रैषकथनम्]

**प्रैषमृतेऽसौयजमृचं चानवानमुक्त्व ऋगन्तेर् 'असौयज' इति प्रेष्येत् ॥६॥**

---

१-१. प्रस्थितयाज्यानां पुरस्तादन्यो (?) मै। २-२. नास्ति ब'। ३-३. अधिकारा मूको। ४. अनवानं मूको। ५. °वाननिवृत्त्यर्थः मै। ६. °काराभावात् ब'। ७. द्र. ऋखि ५,७,५, १-१२; ऐब्रा ५, ६।

असौयजर्वाजितं प्रैषं च [1]'ऋचं च'[1] अनवानमुक्त्वा [2]'ऋगन्तै रसौयजेति प्रेष्येन्मैत्रावरुण [3]'ऋच ऋतुयाजानाम्'[3] (आश्रौ ८, १, ५) इति । [4]'असौयज-शब्देन सह प्रैषः । ऋगन्तैरसौयजेत्याह'[4] पुनः । ऋगन्तेषु[5] अप्राप्तो विधीयते ॥६॥

[आगूर्वषट्काराभ्यां यजनम्]

**एवमेव यजन्ति ॥७॥**

यथा मैत्रावरुणेन प्रेषितमेवमेव यजन्ति[6] । एवेत्यवधारणे । **यथाप्रैषं यजति** (आश्रौ ५, ८, १४) [7]इति वचनात्[7] प्रैषेणैव इज्या प्राप्ता, तस्मादेवमेव । [8]यजन्तीति वचनात् प्रैषेण असौयजवर्जितेन ऋचा च[9] [10]यजन्तीति । होतायक्ष-दसौयजयोस्तु स्थाने आगूर्वषट्कारौ भवतः । अथ तु-कारकरणादृग्मेभ्योऽपि आगूर्वषट्कारौ भवत एव । ता ऋचो वक्ष्यन्ते ॥७॥

[याज्यारूपाणामृचां कथनम्]

**'तुभ्यं हिन्वानो वसिष्ठ गा अपः' इति द्वादश[11] ॥८॥**

**तुभ्यं हिन्वानो वसिष्ठ गा अपः** (ऋ २, ३६, १-१२) इति एता **द्वादश** ऋच एकैकस्य प्रैषस्योपरिष्टादेकैका भवति । द्वादशेतिवचनाद् द्वादशैव भवन्ति [12]ना† त्रयोदश । अध्वर्युरेव यजति न प्रतिप्रस्थाता[12] ॥८॥

[आज्यसूक्तकथनम्]

**'अयं जायत मनुषो धरीमणि' इत्याज्यम् ॥९॥**

**'अयं जायत मनुषो धरीमणि** (ऋ १, १२८) इत्येतत् सूक्तं षष्ठेऽहनि आज्यम् ऐकाहिकस्य[13] स्थाने ॥९॥

[14]तस्य शस्योपायो[14] वक्ष्यते—

[आज्यसूक्तशंसने विग्रहविधिकथनम्]

**एकेन द्वाभ्यां च विग्रहः ॥१०॥**

एकेन पादेन द्वाभ्यां च पादाभ्यां विग्रहः । प्रकृतौ द्विपदेऽर्द्धे[15] उक्तो[16] विग्रहः ।

---

१-१. नास्ति ब' । २. स्थानेरसौ° ब' । ३-३. तत्रऋतु° ब'; तृच ऋतु° मै । ४-४. असौ जराह्वेन सह प्रैषः सृते सौ यजतीत्याह ब'; असौ यजतीत्याह मै । ५. °न्ते मूको । ६. यजति मै । ७-७. इत्यवधारणवचनात् मै । ८. यजतीति मूको । ९. व ब' । १०. यजतीति ब'; यजति मै । ११. नास्ति मुद्रित पुस्तके । १२. त्रयोदश अध्वर्यु स्वयता तेन प्रतिपस्पता ब'; द्र. तैब्रा २, ६, १२, १० । †. त मै । १३. द्र. आश्रौ ५, ९, १५ । १४-१४. तस्योपायो ब' । १५. द्विपादाद्दे ब'; द्विपरा द्वि मै । १६. द्र. आश्रौ ५,९,२० ।

त्रिपदे[1] कथं भवतीति तदुच्यते । त्रिभिः तदवसानं मा भूदिति द्वाभ्यामित्याह चकारः समुच्चयार्थः[2] ॥१०॥

[सप्तपदानां पारुच्छेपीनां शस्योपायकथनम्]

**त्रिभिरवसानं चतुर्भिः प्रणवो यत्रार्धर्चशः पारुच्छेप्यः ॥११॥**

इदानीं 'सूक्तस्य शस्योपायो' वक्ष्यते, अनुक्तत्वात्[4] । **सर्वाश्चैवाचतुष्पदा** (आश्रौ ५, १४, १०) यथा शंस्तव्यास्तथा[5] तत्रैव वक्ष्याम इत्युक्तम्[6] । तस्मादुच्यते शस्योपायः[7] ।

त्रिभिः पादैरवसानं ततश्चतुर्भिः पादैः प्रणवो भवति । **एवं** सप्तपदानां शस्योपाय उक्तः, यत्रार्द्धर्चशस्यो[8] भवति[9] । पारुच्छेप्य ऋचः । परुच्छेपेन[10] ऋषिणा दृष्टाः पारुच्छेप्य ऋचः[11] पारुच्छेप्योऽर्द्धर्चा भवन्ति । महाव्रतविषये[12] स्तोत्रियानुरूपेषु[13] च **'ऐन्द्र याह्युप नः परावतः'** (ऋ १,१३०, १), **इन्द्राय हि द्यौरसुरो अनम्नत** (ऋ १, १३१, १), **'प्रो ष्वस्मै पुरोरथम्'** (ऋ १०, १३३, १), **इत्यतोऽनुरूपः** (ऐआ ५, १, १) इत्यत्र प्रउगेषु च अर्द्धर्चा भवन्ति । अस्य शस्योपाय उक्तः, अन्यत्र न प्राप्नोति । तस्मादन्यत्रापि प्राप्त्यर्थमिदमुच्यते । पारुच्छेप्य इति वचनादन्यासु सप्तपदासु एतन्न भवति । **प्रो ष्वस्मै पुरोरथम्** (ऋ १०, १३३, १) "इत्येता **ऋचो** यथासमाम्नाता एवार्द्धर्चा"[14] भवन्ति ॥११॥

इदानीं प्रउगं वक्ष्यते—

[प्रउगशस्त्राणां कथनम्]

**'स्तीर्णं बर्हिः' इति तृचौ 'सुषुमा यातमद्रिभिः', 'युवां स्तोमेभिर्देवयन्तो अश्विना', 'अवर्मह इन्द्र वृषन्निन्द्रः', 'अस्तु श्रौषट्', 'ओ षू णो अग्ने शृणुहि त्वमीळितः', 'ये देवासो दिव्येकादश स्थ', 'यमददाद्रभसमृणच्युतम्' इति प्रउगम् । द्वे चैका च पञ्चमे । एकपातिन्य उपोत्तमे ॥१२॥**

**स्तीर्णं बर्हिः** (ऋ १,१३५,१-६) इत्येतौ[15] द्वौ तृचौ वायव्य ऐन्द्रवायवश्च । **तृचाः प्रउगे** (आश्रौ ७,१,१०) इतिवचनादेकस्तृचः प्राप्तस्तस्मादाह—तृचाविति **सुषुमा यातम्** (ऋ १, १३७, १-३) इति मैत्रावरुणः । **युवां स्तोमेभिः** (ऋ १, १३९, ३-५) इत्याश्विनस्तृचः । **अवर्मह इन्द्र** (ऋ १, १३३, ६-७) इति द्वे, **वृषन्निन्द्र** (ऋ १, १, ३९, ६) इत्येका, ऐन्द्रस्तृचः । द्वे चैका

१. प्रतिपदे मै । २. नास्ति मूको । ३-३. सूक्तस्योपायो व[1] । ४. उक्तत्वात् मै । ५. संभूत्यास्तथा मूको । ६. द्र. आश्रौ ५, १४, १० देवत्रातभाष्यम् । ७. सहस्योपायः व[1] । ८. °शस्या व[1] । ९. भवन्ति मै । १०. °च्छेस्य मूको । ११. पुनः मूको । १२. आतो (°नो मै) विषये मूको । १३-१३. रूपे यु चः व[1] । १४-१४. इत्येतामृचं (°ता ऋचं मै) यथासमाम्नीत रावार्धं (°माम्नात एवार्धं मै) र्चा मूको । १५. इत्येते मूको ।

च पञ्चमे वक्ष्यति । **अस्तु श्रौषट्** (१, १३९, १), **ओ षू णो अग्ने** (ऋ १, १३९, ७), **ये देवासः** (ऋ १, १३९, ११), इति त्रीणि प्रतीकान्येक-स्तृचो भवति । 'इति वैश्वदेवः । एकपातिन्य उपोत्तमे इति वक्ष्यति । **इयमददात्** (ऋ ६, ६१,१-३) इति सारस्वतस्तृचः' । इति प्रउगम् । इत्येतत् प्रउगशस्त्रं[२] व्याख्यातम् । 'ऐकाहिकस्य स्थाने' पच्छःशस्यस्थाने आदिष्टानां स्थानिवद्भावात् पच्छःशस्ये प्राप्ते अर्धर्चश इत्युच्यते'। 'स्वस्त्यात्रेये ऋच (तृच) आदिष्टा निवित् (?) तविच्छन्दाः शि (?) स्यात् । '**स्वस्त्यात्रेये निविदं दध्यात्**। (आश्रौ ६, ६, ६) इत्युक्ते ऋचे (? तृचे) एव निविदं दध्यात् । यथाप्र युक्तमेवोऽ-दिश्यान्यत्रापि यथा **आनो भद्रीयं च तस्य स्थाने** (ऐआ ५, ३, २) इति । स्मृतौ तु पञ्चर्चं (? र्चः) प्रयुज्यते (°न्ते ?) शूलं (°ल ?) गवे स्वस्त्यात्रेयं जपति, अत्र ऋग्विधाने चोदितत्वात् । निविद्धाने निविद्धानीयं च यथोपदिष्टं भवति । १ **ये ये दायो यथापदिष्टः समानचातिन्यायो श्रुता श्रुतौ** ? (       ) न्यायः स्मृतौ स्मार्तो भवति । **इति वैश्वदेवम्** आश्रौ (८, १, २५) इति वचनात् । उद्धृतस्य स्थाने न प्राप्नोति, उत्तमस्योद्धारे कृत ऐकाहिकं प्राप्तम् । एतानि च' 'अधिकानि षष्ठे ह्यभिप्लविकादाग्निमारुतम् । अग्निष्टोमे प्राप्त उक्तो विधीयते । ऐकाहिकान्युक्तानि प्राप्तानि । विकृतानि विधीयन्ते । होत्रकाणां द्विपदासु ऋक्षु इह उक्थ्येषु स्तुवते छन्दोगास्ते होत्रका द्विपदेभ्यः अनुरूपेभ्य ऊर्ध्वं विकृतानि सन्मुखानि च शिल्पसन्ता (°न्तता ?) नि सूक्तानि शंसेयुस्तानि वक्ष्यामः । उक्थ्येषु विधिर्विधीयते । होत्रकाणामेव भविष्यति । न व (? च) भवति ।†' द्वे चैका च पञ्चमे' । **तृचाः प्रउगे** (आश्रौ) ७, १, १०) इति प्राप्ते द्वौ तृचौ प्राप्तौ तस्मादिदमुच्यते । पञ्चमस्तृचः समाहार्यो भवति । **अवर्मह** (ऋ १, १३३, ६, ७) इति द्वे **वृषन्निन्द्र** (ऋ १, १३९, ६) इत्येका च तृचो भवति । चकारः समुच्चयार्थः । एकपातिन्यः । एका पतति असहाया सा एक-पातिनी । तिस्र एकपातिन्यः तृचो भवति । उपोत्तमे । उपोत्तमस्य तृचस्य समीपे यस्तृचः स उपोत्तमो वैश्वदेवो भवति । त्रयस्तृचाः प्राप्ता उपोत्तमे तृचे सारस्वते ॥१२॥'

[प्रत्यृचमन्तेऽष्टाक्षराणामभ्यासविधिः]

**उत्तमेऽन्वृचमभ्यासा अष्टाक्षराः ॥१३॥**

'ऋचम् ऋचमनु अन्वृचम् । अन्वृचमभ्यासा अष्टाक्षराः कर्तव्याः । तथा कृते अतिजगत्यो भवन्ति । अतिच्छन्दसो भवन्ति । **पारुच्छेपमतिच्छन्दाः षष्ठेऽहनि** (ऐब्रा ५, १२) इति ब्राह्मणम् । (?) अन्ताल्लोपो वृद्धिर्वेति उत्तमानामभ्यासा संख्यावचनाद् विकर्षे निक्रियते (?) ।'

१-१. नास्ति मूको । २. **प्रउगं शस्त्रम्** मैं । ३-३. °कस्थाने मैं । ४. **इत्युक्ते** ब' । ६-६. नास्ति ब' । ३-३. नास्ति ब' । †. तु. आश्रौ ८,२,१ । ‖. तु आश्रौ ८, २,२ । ७-७. **द्वे चैकाये अक्रियमाणे** ब' । ‡. **द्वौ** मैं ।

'यथाम्नातामभ्यासः—**णि तविषा सरस्वति णि तविषा सरस्वतो३मि**ति (ऋ ६, ६१,१). **आ विवासेम धीतिभिरा विवासेम धीतिभो३मिति**) (ऋ ६, ६१, २), **अस्नवो वाजिनीवत्यस्नवो वाजिनीवतो३मिति** (ऋ ६,६१,३) ॥१३॥'

[पूर्वोक्ताभ्यासनिषेधविकल्पः]

**न वा ॥१४॥**

'न वा अभ्यासः क्रियते। यथाम्नातस्तृचः शस्यते। एवमप्यतिच्छन्द'स्तृच एव प्रउगं भवति, बाहुल्यात्। यथा गा मदं अस्मि हहमिति होत्रकाणां स्त्रोत्रियानुरूपारम्भणीया नाभाकस्तृचावाष्टादशावाप-पर्यासा यदा नाभाकावापो न क्रियते तदा एकविंशतिरावापः॥ अभ्यासो जगतीकारं चतुर्विंशत्यक्षराण्युक्त्वाऽवस्येत्, पुनस्तावन्त्येवोक्त्वा प्रणुयात् ॥१४॥'

[मरुत्वतीयशस्त्रस्य तत्प्रतिपदनुचरयोश्च कथनम्]

**'स पूर्व्यो महानां', 'त्रय इन्द्रस्य सोमाः' इति मरुत्वतीयस्य प्रतिपदनुचरौ; 'यं त्वं रथमिन्द्र', 'स यो वृषा', 'इन्द्र मरुत्वः' इति तिस्र इति मरुत्वतीयम् ॥१५॥**

**'स पूर्व्यो महानाम्** (ऋ ८, ६३, १) **त्रय इन्द्रस्य** (ऋ ८, २, ७) [इति] प्रतिपदनुचरावैकाहिकयोः स्थाने। मरुत्वतीयग्रहणं वैश्वदेवनिवृत्त्यर्थम्। ध्रुव इन्द्र निहवो धाय्याश्च तृतीयौ प्रगाथौ बृहतीकारं प्रगाथाः। **य त्वं रथमिन्द्र** (ऋ १, १२९, १), **स यो वृषा** (ऋ १, १००, १), **इन्द्र मरुत्वः** (ऋ ३, ५१, ७) इति तिस्र ऋच इति मरुत्वतीयमित्येतानि त्रीणि सूक्तानि मरुत्वतीयं त्रयस्त्रिंशत्वात्। स्तोमस्य (स्तोमाश्च ?) मरुत्वतीयग्रहणान्मरुत्वतीये भवन्ति। ऐकाहिकस्य स्थाने पुनर्मरुत्वतीयग्रहणम्। पूर्वं हि वैश्वदेवनिवृत्त्यर्थम् अधिकारार्थं न भवति' ॥१५॥

'इदानीं तेषां सूक्तानां शस्योपायो वक्ष्यते'—

[पूर्वोक्तसूक्तानां शंसनविधिकथनम्]

**एकेनाग्रेऽवसाय द्वाभ्यां प्रणुयाद् द्वाभ्यामवसाय द्वाभ्यां प्रणुयाद्, यत्र पच्छः पारुच्छेप्यः ॥१६॥**

'एकेनाग्रेऽवसाय एकेन पादेनाग्रेऽवसाय द्वाभ्यां पादाभ्यां प्रणुयात्, पुनः द्वाभ्यां पादाभ्यामवसाय द्वाभ्यां प्रणुयात्। एवं सप्तपदानां पादशस्यं यत्र पच्छः-शस्या भवन्ति पारुच्छेप्यः। अतो विषयादूर्ध्वम् अर्धर्चं शस्यं, वचनादर्धर्चम्। **त्रैष्टुभं वै माध्यन्दिनं सवनं जागतं वै तृतीयसवनम्** (?) इति श्रुतिः। त्रिष्टुभां' 'जगतीनां च पच्छः शस्यन्ते। तस्मात् पच्छःशस्यविषये याः पारुच्छेप्यः ताः पच्छःशस्या भवन्ति। निष्केवल्ये होत्रकाणां च पारुच्छेपेषु

१-१. नास्ति ब'। १-१. नास्ति ब'; ८,२,२ सूत्रव्याख्यायाम् 'ऊर्ध्वं विकृतानि इति पदद्वयमध्ये प्रमादात्पतितोऽयं व्याख्याभागः मे।

'तृचेषु मरुत्वतीय उक्तं शस्यमन्यत्र न प्राप्नोति। तस्यान्यत्रापि प्राप्त्यर्थं यत्र पच्छःपारुच्छेप्यः इत्युच्यते ॥१६॥'

[रैवते साम्नि पृष्ठस्थाने कृते स्तोत्रियानुरूपकथनम्]

**रैवतं चेत् पृष्ठं 'रेवतीर्नः सधमादे', 'रेवां इद्रेवतः स्तोता' इति स्तोत्रियायानुरूपौ ॥१७॥**

'रैवतं साम, तच्चेत् पृष्ठस्थाने क्रियते, तत्र स्तोत्रियानुरूपौ वक्ष्येते। **रेवतीर्नः** (ऋ १, ३०, १३), **रेवाँ इद्रेवतः** (८, २,१३) इत्येतौ स्तोत्रियानुरूपौ भवतः। चेदिति वचनाद् बृहद् वा भवति। रैवतस्य स्तोत्रियानुरूपौ धाय्या बृहती योनिः **इन्द्रमिद् देवतातये** (ऋ ८,३,५) इति सामप्रगाथः तार्क्ष्यः ॥१७॥'

[निष्केवल्यशस्त्रकथनम्]

**'एन्द्र याह्युप नः', 'प्र घा न्वस्याभूरेकः' इति निष्केवल्यम् ॥१८॥**

**एन्द्र याह्युप नः** (ऋ १, १३०), **प्र घा न्वस्य** (ऋ २, १५), **अभूरेकः** (ऋ ६, ३१) इत्येतानि त्रीणि सूक्तानि निष्केवल्यं निष्केवल्ये भवत्येकाहिकस्य स्थाने। उक्तः शस्योपायः। होत्रकाणां स्तोत्रियानुरूपा अभीवर्तकालेययोर् योनिः प्रगाथाः। आरम्भणीयाः पारुच्छेप्यास्तृचा अष्ट्यानि-(? अष्टावादि-) स्तृतीयाः संपाताः अहरहःशस्यानि **सुरूपकृत्नुमूतये** (ऋ १, ४, १) इत्येतयोः स्तोत्रियानुरूपयोः ॥१८॥'

[वैश्वदेवशस्त्रस्य प्रतिपदनुचरयोः कथनम्]

**'अभि त्यं देवं सवितारमोण्योः' इत्येका, 'तत्सवितुर्वरेण्यम्' इति द्वे, 'दोषो आगाद् बृहद् गाय द्युमद् धेह्याथर्वण स्तुहि देवं सवितारं', 'तमु ष्टुह्-यन्तः सिन्धु सूनुम् सत्यस्य युवानम् द्रोघवाचं सुशेवं', 'स घा नो देवः सविता साविषद् वसुपतिः उभे सुक्षिती सुधातुः' इति वैश्वदेवस्य प्रतिपदनुचरौ ॥१६॥**

'षष्ठेनाभिप्लविकेनोक्तं तृतीयसवनम्। प्रतिपदनुचरयोः स्थाने प्रतिपदनुचरौ वक्ष्येते। **अभि त्यं देवम्** (अथर्व ७, १४, १) इत्येका, **तत्सवितुर्वरेण्यम्** (ऋ ३,६२,१०;११) इत्येते द्वे ऋचौ। एका च द्वे च तृचो भवति। प्रतिपद्यु (?) क्रतुमिति पदान्ते विग्रहः। **दोषो आगात्** (द्र. शौ ६,१, १-३) इति यथासमाम्नातोऽनुचरः इत्येतो प्रतिपदनुचरौ भवतः। षष्ठी क्रियास्थाने। **तद्देवस्य** (ऋ ४, ५३), **कतरा पूर्वा** (ऋ १, १८५), **अनश्वो जातः** (४, ३६), **उषासा नक्ता** (ऋ १०, ४३) इत्येतेषु सूक्तेषु इदमुच्यते ॥१६॥'

[पूर्वोक्तेष्वन्तिमसूक्तमुद्धृत्य तत्र त्रयाणां सूक्तानामादेशः]

**उद्धृत्य चोत्तमां सूक्तं त्रीणि ॥२०॥**

---

१-१ नास्ति ब'।

[1]प्रतिपदनुचरौ उद्धृतौ। उत्तमं च सूक्तमुद्धृत्य **उषासा नक्ता** (ऋ १०,३६) इत्येतमुद्धृत्य तस्य स्थाने त्रीणि सूक्तानि आदिश्यन्ते । **इदमित्था** (ऋ १०, ६१), **ये यज्ञेन** (ऋ १०,६२), **स्वस्ति नः**(ऋ १०,७) इत्येतेषां शस्योपायो वक्ष्यते। **इदमित्था रौद्रम्** (ऋ १०,६१) इत्येतस्य सूक्तस्य उत्तमा उप समीपे उपोत्तमा तस्याः प्राग् **ये यज्ञेन** (ऋ १०, ६२) इत्येतस्य अर्धर्चः । अर्धर्चशस्या भवन्ति, ऋचः प्रागुत्तमायाः[1] '**सहस्रदा ग्रामणीः** (ऋ १०, ६२, ११) इत्येतस्याः प्राग् ऊर्ध्वं चतुर्थ्याः **विरूपासः** (ऋ १०, ६२, ५) इत्येवमाद्या अनुष्टुभः प्रगाथो गायत्री च, ता अर्धर्चशस्या भवन्ति । अन्या च पच्छःशस्या आद्याश्चतस्रः । सूक्तं समाप्य शिष्टे ऋचौ **स गृणानः** (ऋ १०, ६१, २६;२७) इत्येते ऋचौ शस्त्वा ततः **स्वस्ति नो मिमीताम्** (ऋ ५, ५१, ११) इति तृचः । अस्मिंस्तृचे निविदं दध्यात्—इति वैश्वदेवसूक्तं उद्धृत्य अस्य स्थाने भवति सूत्रार्थम् उद्धृत्य चोत्तममिति । च-शब्दः समुच्चयार्थः । प्रतिपदनुचरौ उत्तमं च सूक्तमुद्धरन्ति । अन्यदाभिप्लविकेन समानम् । समुच्चये अक्रियमाणे' प्रतिपदनुचरौ । तयोरुद्धारो न प्राप्नोति अनैकाहिकत्वात् । ऐकाहिकस्योद्धार उक्तः । उत्तमस्य सूक्तस्योद्धारवचने प्रयोजनं त्रीणीति वचनान् नाभानेदिष्ठमपि त्रिप्रतीकमेवोद्धरेत् [2]अस्मिन्नेव निविद् धीयते[2] । त्रि-ग्रहणे[3] अक्रियमाणे निविद्धानीयं न भवति । न[4] निविद्धानीयाभावात् पृथगाहावः प्राप्नोति शिल्पत्वात्[5] । संज्ञया ऋषिणा च चोदितानां पृथगाहावो भवति । यथा तार्क्ष्य एवयामरुत्संज्ञया चोदितानि द्विपदानि जातवेदस्यवत् तायमानरूपसंज्ञा, एवं पृथगाहावे प्राप्ते त्रिग्रहणम् । पृष्ठादन्यत्र नाभानेदिष्ठस्य पृथगाहावो भवति विश्वजिच्छिल्पे तृचग्रहणात्[6], **तं सनाराशंसं शंसति** (ऐब्रा ६, २७) इति वचनात् ॥२०॥

[आदेशे **प्रथमसूक्तकथनम्**]

**'इदमित्था रौद्रम्'** (ऋ १०,६१) **इति** ॥२१॥*

[द्वितीयसूक्तकथनम्]

**प्रागुपोत्तमायाः 'ये यज्ञेन' इत्यावपते** ॥२२॥

**ये यज्ञेन** (ऋ १०, ६२) इति [7]नाराशंसीः† शस्त्वा ततोऽतिशस्यते[7] । प्रागुपोत्तमाया[8] एतस्य[9] स्थानं श्रुतिवचनादेव । [10]**मध्य एव**[10] **शंसेन्मध्यायतना वा इयं वागुपरिष्टान्नेदीयसीवोपरिष्टान्नेदीयसीव** (ऐब्रा ६, २७) इति द्वे[11] परिशिष्य शंसति । तस्मादेतैस्त्रैस्टुभस्तृचो भवति । निविद्धानार्थं त्रैष्टुभानां तृतीयसवनानि ॥२२॥

---

१-१. नास्ति ब[1] । २-२. अस्मिन्नव ति विधीयते ब[1] । तु आश्रौ ८, १, १४ (१३?) ३. वियग्र° ब[1] । ४. नास्ति ब[1] । ५. शिल्पत् ब[1] । ६. तवग्र° ब[1]; तृग्रहणाभावात् मै । ७-७. नाराशंसी: शंस्वसी: तोति शस्यते ब[1]; नाराशंसः सी: शस्यते मै । †द्र. आश्रौ ७,७,४ । ८. द्र. १०,६१,२६ । ९. द्र. ऋ १०,६२ । १०-१०. मध्यंदिने ब[1] । ११. द्र. ऋ १०,६१,२६;२७ । *भाष्यं नोपलभ्यते ।

[तस्य शस्योपायकथनम्]

**तस्यार्द्धर्चशः प्रागुत्तमाया ऊर्ध्वं चतुर्थ्याः ॥२३॥**

अर्धर्चशो ग्रहणं पच्छःशस्यनिवृत्त्यर्थम् पच्छःशस्यस्य स्थानिवद्भावात् पच्छःशस्ये प्राप्ते अर्द्धर्चश इत्युच्यते । स्वरूपोऽत्र **'स्वस्त्यात्रेये निविदं दध्यात्** (आश्वौ ६,९, ६) इत्युक्ते[1] **ये यज्ञेन** (आश्वौ ८, १,२२) इति तृचे एव [2]'निविदं दध्यात्[2] । यथाप्रयुक्तमेवोपदिश्यतेऽन्यत्रापि[3] । यथा **आनोभद्रीयं च तस्य स्थाने** (ऐश्रा ५,३,२) इति । स्मृतौ तु पञ्चर्चः प्रयज्यते, [4]'शूलगवे स्वस्त्यात्रेय जपत्यत्र[4] ऋग्विधाने चोदितत्वात् । निविद्धाने[5] निविद्धानीयं[6] च यथोपदिष्टं[7] भवति । [8]'यो यो न्यायो[8] यथोपदिष्टः समानजातिः[9] । न्यायः[10] श्रुतौ श्रौतो[11] न्यायः स्मृतौ स्मार्तो भवति ॥२३॥

[आदेशे तृतीयसूक्तकथनम्]

**शिष्टे शस्त्वा 'स्वस्ति नो मिमीतामश्विना भगः' इति तृचः ॥२४॥***

[वैश्वदेवसमाप्तिकथनम्]

**इति वैश्वदेवम् ॥२५॥**

इति-वचनाद् उद्धृतस्य [12]स्थाने न प्राप्नोति । उत्तमस्योद्धारे कृत ऐकाहिकं प्राप्तम् । एतानि चाधिकानि । षष्ठेऽहनि[13] आभिप्लविकादाग्निमारुतम्[14] । आग्निष्टोमे प्राप्त उक्तो विधीयते । ऐकाहिकान्युक्तानि प्राप्तानि, विकृतानि विधीयन्ते ॥२५॥

इति अष्टमे प्रथमः खण्डः

---

१-१. येनेति विद्वध्यादिसूक्ते ब[1] । २-२. निंदध्यात् बं[1] । ३. °वोपविश्यो (°श्या मै ) न्य° मूको । ४-४. शूलाविश्वस्त्यात्रेयं जयत्यत्र ब[1] । ५. निविकाग्रे विकाग्रे ब[1] । ६. विविद्धानु ब[1] । ७. उपदिष्टं ब[1] । ८-८. य ये दायो मूको । ९. °नचातिः मै । १०. यायो ब[1]; न्यायो मै । ११. श्रुतौ मै । १२. उद्धतस्य ब[1]; उद्भूस्य मै । १३. षष्ठे ह मै । १४. °रुतः ब[1] । *भाष्यं नोपलभ्यते ।

# अष्टमेऽध्याये द्वितीयः खण्डः

[होत्रकाणामुक्थ्येषु द्विपदासु छन्दोगाः स्तुवते]

**होत्रकाणां द्विपदास्विहोक्थ्येषु स्तुवते ॥१॥**

होत्रकाणां द्विपदासु ऋक्षु इह शस्त्रे[1] उक्थ्येषु स्तुवते छन्दोगाः ॥१॥

[होत्रककृतं वैकृतानां शिल्पानां शंसनम्]

**त ऊर्ध्वमनुरूपेभ्यो विकृतानि शिल्पानि शंसेयुः ॥२॥**

ते होत्रका द्वैपदेभ्यः अनुरूपेभ्य[2] 'ऊर्ध्वं विकृतानि[3] तन्मुखानि[4] च शिल्पसंज्ञानि सूक्तानि शंसेयुः। तानि वक्ष्यामः। उक्थ्येषु विधिर्विधीयते होत्रकाणामेव भविष्यति। न वक्तव्यं होत्रकाणामिति। वक्तव्यम् अधिकारार्थम्। अधिकारे सत्यूर्ध्वमनुरूपेभ्य इत्युक्ते होत्रकाः संबध्यन्ते, अन्यथा न संबध्यन्ते। छन्दोगाधिकारात् **द्विपदासु** (आश्वौ ८, २, १) इति वचनाद् यथास्तुतानि न शस्यन्ते। **शिवो भव** (ऋ ५, २४, १) इत्यभ्यासो न क्रियते। द्विपदास्वेव नान्यस्मिन् छन्दसीत्यर्थः। छन्दो न संपद्यते। अभ्यास[5] सामधर्मः। इहेति वचनाद् इहैव[6] द्विपदासु[7] स्तुवते। अस्याह्नः तृतीयसवनं[8] तृतीयेन व्याख्यातम्। [9]तस्मिन् षष्ठेऽह्नि[9] द्विपदासु स्तुवते। उक्थ्येष्वित्युक्थ्यग्रहणम् अधिकारार्थम्। अधिकारे सति वक्ष्यमाणो विधिरुक्थ्येषु भवति होतुः कर्मणोऽधिकाराच्च। **स्तुवते** (आश्वौ ८, २, १) इति वचनात् [10]"छन्दोगवशादेतदिति दर्शयति[10]"। [11]"यदि द्विपदासु† स्तुवते ततः शिल्पानि शस्यन्ते। यदि न स्तुवते ततः ऐकाहिकानि भवन्ति। न स्तुवतेऽग्निष्टोम एव भवति[11]"। छन्दोगवशात् त्रयस्त्रयः कल्पाः। अत ऊर्ध्वमनुरूपेभ्य[12] इति होत्रकाधिकारे सति[13] पुनर् अत इत्याह छन्दोगाधिकारात्। **सूक्तानामेकैकं शिष्ट्वाऽऽवपेरन्** (आश्वौ ७, ८, ४) इत्यावापस्थाने शिल्पानि प्राप्तानि तस्मादूर्ध्वमनुरूपेभ्यः स्थानं[14] विधीयते। शिल्पानि शंसेयुरिति न वक्तव्यम्। [15]"एवं करणे[15]" वक्ष्यमाणानि [16]विकृतान्येव[16] भविष्यन्ति[16]। इदं प्रयोजनम्। इह विकृतानीति वचनाद् वक्ष्यमाणेन विकारेण विकृतानि भवन्ति। तस्मात्

---

१. नास्ति मै। २. द्र. आश्वौ ८, २, ३। ३-३. ऊर्ध्वं विकृतानि इत्युभयो पदयोर्मध्ये ८,१,१५-१८ सूत्राणां व्याख्या समापतिता मै। ४. सन्मु मूको। ५. अभ्यस्त ब[1]। ६. नास्ति मै। ७. द्विपदा मै। ८. तृतीयसवनयेन ब[1]; तृतीयसवनं येन मै। ९. तष्ठष्टे इति ब[1]। १०. °शादि तद्दर्शयति ब[1]। ११-११. नास्ति ब[1]। †. द्विपदा मै। १२. °मनुकल्पेभ्यः मै। १३. शत ब[1]; इति मै। १४. स्याने ब[1]। १५-१५. एव कारणं मूको। १६-१६. विभूकृतान्येव (विभूतान्येव ब[1]) भविष्यति मूको।

प्रकृत्या शिल्पानि शंसेयुः (आश्वौ ८, ४, ७) इत्युक्तम्। न्यूङ्खविहारयोरेव[1] प्रतिषेधो[2]ऽत्र सिद्धो भवति। अन्यथा प्रकृतिग्रहणाद् ऐकश्रुत्यसन्ततलक्षणयोरपि[3] प्रतिषेधः[4] स्यात्। कथम्। प्रकृतिरित्युक्त आम्नायो गृह्यते। यथा प्राकृतास्त्वेव मन्त्राणां शब्दाः (आश्वौ ३, २, १८) इति। शिल्पानीति ब्राह्मणोक्ता संज्ञा। शिल्पानि शंसेयुः (आश्वौ ८, ४, ७) इत्युक्त एतेषां ग्रहणम्। [5]सूत्रारम्भे प्रयोजनम्[5]—यदि द्विपदासु स्तुवते। छन्दोगास्तत ऊर्ध्वमनुरूपेभ्यो विकृतानि शिल्पानि शंसेयुः। यदा द्विपदासु[6] न स्तुवते, तदा ऐकाहिकान्येव[7]। एतत् सूत्रमनारभ्य यद्युक्थ्यानि[8] विधीयन्ते, अद्विपदास्वपि नित्यान्येव शिल्पानि स्युः॥ २॥

[मैत्रावरुणस्य स्तोत्रियानुरूपकथनं वालखिल्याविहारोपक्रमश्च]

**मैत्रावरुणस्य 'अग्ने त्वं नो अन्तमः', 'अग्ने भव सुषमिधा समिद्धः' इति स्तोत्रियानुरूपावथ वालखिल्या विहरेत्॥३॥**

मैत्रावरुणस्योक्थं[9] वक्ष्यते। **अग्ने त्वं नो अन्तमः** (ऋ ५, २४, १-२), **अग्ने भव** (ऋ ७, १७, १-३) तचौ स्तोत्रियानुरूपौ भवतः। होत्रकाणामधिकारान्मैत्रावरुणस्येत्युच्यते। स्तोत्रिये चतुर्थी[10] तृतीया भवति। पच्छः शस्यन्ते द्विपदानामर्द्धर्चशः[11]। अथ वालखिल्या विहरेत्। अथानुरूपादनन्तरं वालखिल्याः (द्र ऋ ८,४९-५९) ऋषयस्तेषामार्षं[12] वालखिल्या[13] ऋचस्ता विहरेत्। ऋचः अर्धर्चशो व्यवधाय[14] शंसेत्। **पूर्वस्य प्रथमामुत्तरस्य द्वितीयया** (आश्वौ ८, २,७) इत्येवमादिविहारो वक्ष्यते। अधिकारसूत्रमेतत्। यदित ऊर्ध्वं वक्ष्यामस्तद् वालखिल्यानां विहारविधानं वेदितव्यम्। **सूक्तानां प्रथमद्वितीये पच्छः** (आश्वौ ८, २, ५) इत्युक्ते वालखिल्यानां सूक्तानामिति सिद्धं भवति। अन्यथा कानि सूक्तानि इति संशयः स्यात्। **ता विहृताः शंसति** (ऐब्रा ६, २८) इति ब्राह्मणम्॥३॥

[षोडशिना वालखिल्याविहारस्योक्तत्वम्]

**तदुक्तं षोळशिना॥ ४॥**

सूक्तानां तद् विधानमुक्तं षोळशिना **पादान् व्यवधायार्द्धर्चशः शंसेत्** (आश्वौ ६, ३, ३), **पूर्वासां पूर्वाणि पदानि** (आश्वौ ६, ३, ४) इति। **सूक्तानां प्रथम-**

---

१. शूखविदास्योरेव ब'। २. प्रतिषिद्धः मूको। ३. °क्षणोपि ब'; °क्षणयोपि मै। ४. प्रतिषिद्धा ब'; प्रतिषिद्धः मै। ५-५. सूत्रारम्भप्र° ब'। ६. द्विपदा ब'। ७. एतान्येव मै। ८. यद्युक्तानि मूको। ९. °स्योक्तं मूको। १०. चतुर्थर ब'; द्र. ऋ ५, २४, ४ तं त्वा शोचिष्ठ इति। ११. °र्चतः ब'; र्चं त मै। १२. ऋचयस्तेषामार्षं मै; ऋचो यास्तासमार्षं ब'। १३. तु. ऐब्रा ६, २८ साभा। १४-१४. अर्धर्चश (°र्च ए ब') व्यवधाय मूको।

**द्वितीये पच्छः** (आश्रौ ८, २, ५) इति वक्ष्यति । तत्र पादौ पादं व्यवधायार्द्धर्चशः शंसेत् पूर्वस्य सूक्तस्य पूर्वाणि पदानि उत्तरस्योत्तराणि । तदिति वचनात् तदेव सर्वविहारेषु षोडशिविधानमेव । विशेषास्तु अन्ये वक्ष्यन्ते ।। ४ ।।

[वालखिल्यासूक्तानां प्रथमद्वितीययोः पच्छो विहारः]

**सूक्तानां प्रथमद्वितीये पच्छः ।। ५ ।।**

सूक्तानां वालखिल्यानाम् । बार्हतानि षट्सूक्तानि वालखिल्ये आम्नातानि, तेषां सूक्तानां प्रथमं च द्वितीयं च 'प्रथमद्वितीये सूक्ते पच्छो विहरेत्[१] पादशो विहरेत्[१] पूर्वस्य पूर्वाणि पदानि उत्तरस्योत्तराणि । सूक्तयोः प्रथमाभ्यां पादाभ्याम् अवस्येत् । द्वितीयाभ्यां प्रणुयादेवं द्वे सूक्ते समापयेत्[३] ।। ५ ।।

[तृतीयचतुर्थपञ्चमषष्ठसूक्तानां विहारविधिः व्यत्यासविकल्पश्च]

**तृतीयचतुर्थे अर्धर्चशः ऋक्शः पञ्चमषष्ठे । व्यतिमर्शं वा विहरेत् ।। ६ ।।**

तृतीयं च चतुर्थं च तृतीयचतुर्थे सूक्ते अर्धर्चशो विहरेत् । तृतीयस्यार्द्धर्चमुक्त्वाऽवस्येत् । चतुर्थस्यार्द्धर्चमुक्त्वा प्रणुयात् । ततः[४] तृतीयस्य द्वितीयमर्द्धर्चमुक्त्वाऽवस्येत् । चतुर्थस्य द्वितीयमर्द्धर्चमुक्त्वा प्रणुयात् । एवं तृतीयचतुर्थे सूक्ते समापयेत् । ऋक्शः[५] पञ्चमं च 'षष्ठं च[६] पञ्चमषष्ठे सूक्ते । पञ्चमस्य प्रथमा[७]मृच शस्त्वा षष्ठस्य प्रथमामृचं शंसेत् । एवं ते सूक्ते समापयेत् । अनेन न्यायेन पदे सूक्तानि विहरेत् । **ते हैके[८] सह बृहत्यौ सह सतोबृहत्यौ विहरन्ति** (ऐब्रा ६, २८) इति ब्राह्मणम् । व्यतिमर्शं वा विहरेत् । **'अतिमर्शमेव विहरेत्[९] तथा वै प्रगाथाः कल्पन्ते** (ऐब्रा ६,२८) इति ब्राह्मणम् । व्यत्यासेन प्रगाथान् व्यतीत्य मर्शो व्यतिमर्शः, व्यतिमृश्य व्यतिमृश्य । व्यतिमर्शमिति णमुल् । उत्तरस्य प्रथमामतीत्य द्वितीयां मृशति, पुनः प्रथमामतीत्य द्वितीयां मृशति । एवं व्यतिमृश्य व्यतिमृश्य सूक्ते समापयेत् । व्यतिमर्श इति संज्ञा ब्राह्मणोक्ता । तस्या ज्ञाने धर्मः[१०] । वा-शब्दो विकल्पार्थः । व्यतिमर्शस्य विधानं वक्ष्यति ।।६।।

[सूक्तानां व्यत्यासविधिः]

**पूर्वस्य प्रथमामुत्तरस्य द्वितीययोत्तरस्य प्रथमां पूर्वस्य द्वितीयया ।।७।।**

पूर्वस्य प्रथमां पूर्वस्य सूक्तस्य 'प्रथमाम् ऋचम् उत्तरस्य सूक्तस्य[११] द्वितीयया ऋचा सह विहरेत् । "सह प्रगाथो भवति । पुनरुत्तरस्य सूक्तस्य प्रथमाम् ऋचं पूर्वस्यां सूक्तस्य द्वितीयया ऋचा सह विहरेत्" । स द्वितीयः प्रगाथो भवति । एवमेतौ द्वौ प्रगाथौ भवतः । "[१२]अतिमर्शमेव[१२] विहरेत् तथा[१३] वै प्रगाथाः कल्पन्ते; प्रगाथा वै वालखिल्याः (ऐब्रा ६, २८) इति ब्राह्मणम् ।।७।।

---

१. द्वितीये मूको । २-२. नास्ति मैं । ३. समावपेत् मूको । ४. नास्ति ब[१] । ५. ऋचः मूको । ६-६. षट् च ब[१]; षट् पञ्च मैं । ७. प्राथमामस्य वं त्र[१] । ८-८. तद्वैके ब[१]; तद्वैते मैं । ९-९. नास्ति मूको । १०. धर्माः मूको । ११-११. नास्ति ब[१] । †. नास्ति मूको । १२-१२. व्यतिमर्शं° मूको । १३. यथा ब[१] ।

[द्वयोः प्रगाथयोर्ऋचोः पृथग् विहारविधिः]

**तयोर्नानर्चा ॥८॥**

'तयोः द्वयोः प्रगाथयोः नाना पृथक् प्रगाथे प्रगाथे ऋचोर्विहारः। एतदधिकृतं वेदितव्यम्। इत उत्तरं यद् वक्ष्यामः **प्रथमद्वितीयाभ्यां** पादाभ्यामवस्येदिति तयोरिति वचनाद् द्वयोः प्रगाथयोर्भवति विहारः। नाना इत्यनुच्यमाने[2] प्रगाथस्य प्रगाथेन सह विहारः प्राप्नोति। तस्मान्नाना[3] इति वचनात् प्रगाथे प्रगाथे[4] पृथग्विहारो भवति। ऋचोः इति वक्तव्ये ऋचा इत्युक्तं द्रष्टव्यम्। छान्दसो विधिः कृतः ॥८॥

[ऋचोः पृथग्विहारप्रकारः]

**प्रथमद्वितीयाभ्यां पादाभ्यामवस्येत् प्रथमद्वितीयाभ्यां प्रणुयात्, तृतीयोत्तमाभ्यामवस्येत् तृतीयोत्तमाभ्यां प्रणुयात् ॥९॥**

प्रथमद्वितीयाभ्यां प्रगाथे प्रथमायाः प्रथमः पादः। द्वितीयायाः द्वितीयः पादः, ताभ्यां प्रथमद्वितीयाभ्यां पादाभ्यामवस्येत्। प्रथमद्वितीयाभ्यां प्रणुयात्। [5]द्वितीयायाः प्रथमः पादः प्रथमाया द्वितीयः पादः, ताभ्यां प्रणुयात्। तृतीयोत्तमाभ्यामवस्येत्[5]। पुनस्तस्मिन्नेव प्रगाथे प्रथमायाः[6] तृतीयः पादः, द्वितीयाया उत्तमः पादः, ताभ्यामवस्येत्। तृतीयोत्तमाभ्यां प्रणुयात्। द्वितीयायास्तृतीयः[7] पादः, प्रथमाया[8] उत्तमः पादः ताभ्यां तृतीयोत्तमाभ्यां प्रणुयात्। प्रथमे प्रगाथे उक्तो विहारः। एवं द्वितीयेऽपि[9] प्रगाथे विहारः। एवमनेन न्यायेन द्वौ द्वौ प्रगाथौ पादशो विहरन् प्रथमद्वितीये[10] सूक्ते समापयेत् ॥९॥

[पूर्ववद् व्यत्यासविहारविधिः]

**एवं व्यतिमर्शमर्धर्चश उत्तरे। एवं व्यतिमर्शमृक्श उत्तरे ॥१०॥**

प्रथमयोः[11] सूक्तयोः[12] व्यतिमर्श उक्तो यथा एवं व्यतिमर्शमर्द्धर्चश उत्तरे। द्वे सूक्ते भवतः[13]। उत्तरे[15] तृतीये चतुर्थे[16] विहरेत्[14]। कथम्। प्रगाथे प्रथमायाः प्रथममर्द्धर्चमुक्त्वाऽवस्येत्। अथ द्वितीयाया द्वितीयेनार्द्धर्चेन प्रणुयात्। पुनर्द्वितीयायाः प्रथमर्धर्चमुक्त्वाऽवस्येत्। अथ प्रथमाया द्वितीयेनार्द्धर्चेन प्रणुयात्। एवम् अनेन न्यायेन द्वे सूक्ते समापयेत्। पुनर्व्यतिमर्शग्रहणं द्वयोर्विहारयोरधिकारार्थम्।

---

१-१. तयोर्ननार्चा द्वितीयाभ्यां ब'। २. इत्युच्य° ब'; इत्यनूच्य° मै। ३. यस्मा° ब'। ४. प्रथमायाः ब'। ५-५. नास्ति मूको। ६. नास्ति ब'। ७. द्वितीयया तृ° मै। ८. उत्तमाया मूको। ९. तृतीयेपि ब'। १०. द्र. ऋ ८,४९-५०। ११. प्रथमायाः ब'; नास्ति मै। १२. यो मै। १३. नास्ति मै। १४. हरेत् ब'; विहारे मै। १५. द्र. ऋ ८,५१-५२। १६. नास्ति मूको

एवं व्यतिमर्शमृक्श उत्तरे। यथा चतुर्णां सूक्तानामुक्तो व्यतिमर्शः 'एवं व्यतिमर्शः'[1] सः। उत्तरे द्वे सूक्ते पञ्चमषष्ठे[2]। कथम्। पञ्चमस्य सूक्तस्य प्रथमामृचं शस्त्वा षष्ठस्य द्वितीयां शंसेत्। पुनः षष्ठस्य प्रथमां शस्त्वा पञ्चमस्य द्वितीयां शंसेत्। एवं द्वे सूक्ते समापयेत्। पुनर्व्यतिमर्शवचनमुक्तप्रयोजनम्[3] ॥१०॥

[सप्तमाष्टमसूक्तयोर्विहारविधिः]

**विपरिहरेदेवोत्तमे सूक्ते गायत्रे सर्वत्र ॥११॥**

**'अथ वालखिल्या विहरेत्** (आश्रौ ८,२,३) इति वचनादष्टानामपि सूक्तानां विहार उपदिष्टः। तत्र षण्णां सूक्तानां विहारविधिरुपदिष्टः। इदानीमुत्तमयोः सप्तमाष्टमयोर्विहारो वक्ष्यते। विपरिहरेदेवोत्तमे सूक्ते सप्तमाष्टमे[4] गायत्रे सर्वत्र सर्वेषु विहारेषु। अष्टमं सूक्तं शस्त्वा सप्तमं शंसेत्। [5]एवमयं विपरिहारः[5]। एव-शब्दोऽवधारणार्थः। एतयोः सूक्तयोर्विपरिहार एव विहारो भवति। **द्वे एवोत्तमे सूक्ते पर्यस्यति स एव तयोर्विहारः** (ऐब्रा ६,२८) इति ब्राह्मणम्। नित्यानां सूक्तानां स्थाने शिल्पान्यादिष्टानि। तद्भावानां[6] पच्छःशस्यं प्राप्तं गायत्रवचनाद् अर्द्धर्चानि भवन्ति। एका तु पङ्क्तिरस्ति[7], तस्याः 'पङ्क्तिशंसनमेव[8]। गायत्रवचने[9] पच्छःशस्यं प्रतिषिद्धम्। [10]न्यायेनार्धर्चं विधीयते[10]। [11]व्यतिमर्शाधिकारे विहार[11] उक्तो विपरिहारोऽन्यत्र न प्राप्नोति। सर्वत्रग्रहणात् [12]षोडशिविहारे महावालभिदि च[13] विपरिहारः[14] सिद्धो भवति ॥११॥

[सौपर्णसूक्तशंसनविधानम्]

**'इमानि वां भागधेयानि' इति प्रागुत्तमाया आहूय दूरोहणं रोहेत् ॥१२॥**

**इमानि वां भागधेयानि** (ऋ ८, ५९) इत्येतस्य सूक्तस्योत्तमाया[15] ऋचः प्राग् आहूय आहावं कृत्वा दूरोहणं रोहेत्। **एतद् दूरोहणम्** (आश्रौ ८,२,१४) इति वक्ष्यति। **सौपर्णं रोहेद्** (ऐब्रा ६, २५) इति ब्राह्मणम्। अप्राप्त आहावो विधीयते —[16]आहूय दूरोहणं रोहेद् इति[16]। **न** चानेन चतुराहावता विहन्यते,[17] न च पञ्चाहावत्वं तदर्थत्वादाहावस्य। दूरोहणार्थो ह्ययमाहावः [18]आरोहणार्थः। **तद् ब्रह्मणाऽऽहावेन स्वर्गं लोकं रोहति** (ऐब्रा० ४,२१) इति ब्राह्मणम्। सन्तानार्था अन्ये आहावाः। न तैः सहायमाहावः संख्यायते अन्यार्थत्वाद् आरोहणं वक्ष्यते ॥१२॥

---

१-१. नास्ति ब'। २. द्र. ऋ ८,५३-५४। ३. °चनं प्रयोजनमुक्तम् ब'; °चने उक्त° मै। ४. द्र. ऋ ८,५५-५६। ५-५. **षमयं विहारः** ब'। ६. तद्वद्भावानाम् इति शोधोऽप्यकिञ्चित्करः। ७. द्र. ऋ ८,५६,५। ८. तु. आश्रौ ५,१४,११-१५। ९. गायत्रवे ब'। १०-१०. नान्येनार्धर्चविधी ब'। ११-११. °धिकारवि° ब'। १२. षोडशि रे ब'। १३. व मूको। १४. परि° ब'। १५. द्र. ऋ ८, ५९, ७। १६-१६, आहूय दूरोह दूरोहयं ब'; आहूय दूरोहणम मै। १७. विधीयते ब'। १८-१८. हंसः शुचिषत्—इत्ये इति पूर्वः आरोहणार्थः। इत्यारभ्य सहायमाहावः इत्यन्तः पाठः वक्ष्यते इत्यनन्तरं पठ्यते ब'।

[दूरोहणसंज्ञाया ऋचः सप्तकृत्वः शंसनविधिः]

**'हंसः शुचिषद्' इति पच्छोऽर्धर्चशस्त्रिपद्या चतुर्थमनवानमुक्त्वा प्रणुत्यावस्येत्। पुनस्त्रिपद्याऽर्धर्चशः पच्छ एव सप्तमम् ॥१३॥**

हंसः शुचिषद (ऋ ४,४०,५)[1] इत्येतामृचम्[2] आहूय पच्छः शंसेत् । प्राप्त-मपि पुनरुच्यते अर्द्धर्चादिविवक्षार्थम् । पुनर्द्वितीयमर्धर्चशः शंसेत् । [3]पुनः तृतीयं त्रिपद्या त्रिभिः पादैः अवस्येत्, चतुर्थमनवानमृचं शस्त्वा प्रणुत्य चतुर्मात्रेण प्रणवेनावस्येत्[3] । **त्रिपद्या प्रत्यवरोहति** (ऐब्रा ४,२१) इति ब्राह्मणम् । पुनरर्द्धर्चश एवमेव शंसेत् । पुनः पच्छ एतामेव[4] शंसेत् । सप्तमग्रहणमविकल्पार्थम्[5] । सप्तकृत्व[6] एवं शंसेत्[6] । एव-शब्दोऽवधारणार्थः । सप्तकृत्व 'एव शंसेत्' । चतुष्कृत्व एव शंसेत् । **अथ य एककामाः स्युः स्वर्गकामाः पराञ्चमेव तेषां रोहेत्** (ऐब्रा ४,२१) इत्येतस्य विधेः प्रतिषेधार्थं सप्तमग्रहणम् ॥१३॥

[पूर्वोक्तमन्त्रस्य दूरोहणसंज्ञाकरणम्]

**एतद् दूरोहणम् ॥१४॥**

**हंसः शुचिषद्** इत्येतस्याः सप्तकृत्वो यदुक्तं शंसनम् एतद् दूरोहणसंज्ञं भवति । **मैत्रावरुणो दूरोहणं रोहेत्** (आश्रौ ८, ४, १३) इत्युक्ते एतस्य ग्रहणम् ॥१४॥

[ऐकाहिकस्य सूक्तस्य शंसनम्]

**'आवां राजानौ' इति नित्यमैकाहिकम् ॥१५॥**

**आवां राजानौ** (ऋ ७, ८४) इत्येतदुक्तं नित्यमच्युतम् ऐकाहिकम् । एतदेवैकाहिकं शस्यते, नान्यानीत्यर्थः । एकमेव शस्यते, न सर्वाणि । समस्तानां शंसनं प्राप्तं तत्प्रतिषिद्धम् **अथ यन्न शंसतो३ तत्स्वर्गस्य लोकस्य रूपं तस्मान्न शंसेत्** (ऐब्रा ६, २६) इति । तस्मादेकमेव शस्यते । इतरेषां स्थाने शिल्पानि शस्यन्ते । तस्मात् तेषां 'स्थानानि तद्भावात् पच्छः शस्ये प्राप्ते अर्धर्चं विधीयते नित्यमैकाहिकम् । नित्यवचनादेकमेव नित्यम्, इतराण्यनित्यानि । इतरेषां[7] स्थाने शिल्पानि शस्यन्ते । अथवा इतराण्यपि शस्यन्ते । [8]तथा हि ब्राह्मणं[8] भवति—**तं यदि दर्प एव विन्देदुपरिष्टाद् दूरोहणस्यापि बहूनि शतानि शंसेद् यस्यो तत्कामाय तथा कुर्यात्** (ऐब्रा ६,२६) इति । **संशंसेदित्याहुः । कथम् । अन्येष्वहःसु संशंसति, कथमत्र न संशंसेद्** (ऐब्रा ६,२६) इति ॥१५॥

---

१-१. हंसः शुचिषत्-इत्ये इतिपूर्वः आरोहणार्थः इत्यारभ्य सहायमाहावः इत्यन्तः पाठः वक्ष्यते इत्यनन्तरं पठ्यते ब[1] । २. तामृचम् ब[1] । ३-३. नास्ति ब[1] । ४. °मेव मै । ५. सामग्रहणं नाविकल्पार्थम् मूको । ६-६. नास्ति मै । ७. नास्ति मै । ८-८. नास्ति ब[1] । ९-९. तथापि ब्राह्मणे मूको ।

[पूर्वोक्तविहारयोर्हौण्डिनसंज्ञाकरणम्]

**इति नु हौण्डिनौ ॥१६॥**

इत्येतौ नु विहारौ हौण्डिनसंज्ञौ भवतः षोळशिनो विहारा[1] व्यतिमर्शश्च। नु इति निपातः [2]'पूर्वप्रकृतापेक्षार्थः, [3]'पूर्वं प्रकृतौ[3] विहारावपेक्षते[4]। हुण्डिनो नाम ऋषिः, तेन दृष्टौ हौण्डिनौ विहारौ। एवं ज्ञाने[5] धर्मो[6] भवति ॥१६॥

[महावालभित्संज्ञकस्य विहारस्य कथनम्]

**अथ महावालभित् ॥१७॥**

हौण्डिनयोर्विहारयोरनन्तरं महावालभिन्नामा विहारो वक्ष्यते। [7]वलो नाम महानसुरः, सोऽनेन भिन्न इति महावालभित्[7]। [8]'**देवा वै वले गाः पर्यपश्यन्**[8] (ऐब्रा ६,२४) इति श्रुतिः। संज्ञा चेयम्। **महावालभिदं चेच्छंसेत्** (आश्री ७,२,१६) इत्युच्यते[9]। एवमस्य ग्रहणम् ॥१७॥

[महावालभिदो विहारस्य शंसनविधिः]

**एतान्येव षट् सूक्तानि व्यतिमर्शं पच्छो विहरेत्।**

**व्यतिमर्शमर्धर्चशो व्यतिमर्शमृक्शः ॥१८॥**

हौण्डिनयोर्यानि सूक्तानि विहितानि, एतान्येव षट् सूक्तानि व्यतिमृश्य व्यतिमर्शं पच्छः पादशो विहरेत्[10]। विहारे अप्राप्ते षड्ग्रहणम्। व्यतिमर्शग्रहणं द्वयोर्विहारयोरधिकारात्। व्यतिमर्शमर्धर्चशः। एतान्येव षट् सूक्तानि व्यतिमृश्य व्यतिमर्शमृक्शः [11]"एतान्येव षट् सूक्तानि व्यतिमृश्य† व्यतिमर्शम् ऋक्शो‡[11]" विहरेत्। पुनर्व्यतिमर्शग्रहणम् उक्तप्रयोजनम् ॥१८॥

[प्रगाथान्तेष्वेकपदाशंसनविधिः]

**प्रगाथान्तेषु चानुपसन्तान ऋगावानमेकपदाः शंसेत् ॥१९॥**

महावालभिदि षट् सूक्तानि व्यतिमर्शं विहरेत्। एवं चाधिकृतम्। प्रगाथान्तेषु अनुपसन्तानश्च भवति, प्रगाथा न सन्धीयन्ते। [12]"एवं पृथग्[12] व्यवस्थितेषु प्रगाथानामन्तेषु एकपदा ऋगावानं शंसेत्। ऋगावानं व्याख्यातम्। एकपदा उत्तरत्र[13] वक्ष्यन्ते। च-शब्दो विहाराधिकारसमुच्चयार्थः। **तृतीयोत्तमाभ्यां प्रणुयात्** (आश्री ८,२,९) इति उपसन्तानस्य प्राप्तस्य प्रतिषेधः। उपसन्ताने प्रतिषिद्धे प्रगाथा असंहिताः पृथग्भूताः शस्यन्ते। त्रिषु विहृतेषु [14]"चतुर्थं शंसति[14]"।

---

१. विकारा ब[1]; अधिकारा मै। २. °कृत्यापे° मूको। ३-३. पूर्वप्र° मूको। ४. विहारा यक्षतः ब[1]। ५. ज्ञाते मूको। ६. नास्ति ब[1]। ७-७. वाला (बला ब[1]) नाम महापर्वत (°पयतः ब[1]) सोमेन भिन्न (भिन्नः ब[1]) महा° मूको। ८-८. देवा वरुलिङ्ग (वै कलिङ्गं मै) पर्यपश्यन्ति मूको। ९. इत्युच्यतं ब[1]। १०. नास्ति मूको। ११-११. नास्ति ब[1]। †. °मश्यं मै। ‡. ऋक्...मै। १२-१२. एव पृथः ब[1]। १३. उनरत्र ब[1]। १४-१४. चतुर्थे (°र्थं ब) शंसने मूको।

एतेषु चतुर्ष्वपि पृथक् प्रगाथाः शस्यन्ते । **प्रगाथा वै वालखिल्याः** (ऐब्रा ६,२८) इति ब्राह्मणम् । **वज्रेण वालखिल्याभिर्वाचःकूटेनैकपदया वलं विरुज्य गा आप्नुवन्ति** (ऐब्रा ६, २४) इति च । तस्मात् प्रगाथान्तेषु अनुपसन्तानो विधीयते । एवं चेन्न वक्तव्यम् । एकपदानिर्देशादेव[1] प्रगाथान्तेष्वनुपसन्तानो भविष्यति । प्रगाथान्तेष्विति । तृतीयानिर्देशे कर्तव्ये सप्तमीवचनम् एकपदानां स्थाने विवक्षार्थम् । प्रगाथानामन्तेषु एकपदाः शस्यन्ते । तासामुपसन्तानो भवति । **उपसन्तनुयादेकपदाः** (आश्रौ ६,५,१२) इति वचनादुपसन्ताने क्रियमाणे वाचः कूटं भवति । अनुपसन्ताने तु वाचः कूटं न संपद्यते । **वज्रेण वालखिल्याभिर्वाचः कूटेनैकपदया** (ऐब्रा ६, २४) इति ब्राह्मणम् । **प्रगाथे प्रगाथ एवैकपदां दध्यात् स वाचः कूटः** (ऐब्रा ६, २४) इत्युक्तम् । यद्येकपदा न संधीयते[2] 'प्रगाथे न[3] कृता भवति[4] '[5]प्रगाथबाह्या भवति[5]'। तथा[6] सति वाचः-कूटं न संपद्यते । षोळशिनोक्तः प्रतिगर उपसन्ताने एव युज्यते । अनुपसन्ताने न[7] युज्यते[8] । तथापि अनुपसन्ताने भवत्येव[9] । "[10]तथा सति वाचःकूटं[10] संपद्यते" **ताभ्यश्चोत्तराः** (आश्रौ ६,५, १३) इति वचनादुभयोस्तुल्यबलत्वाद् विकल्पः स्यात् । उपसन्तान अनुपसन्तानो[12] वा[13] स्यात् । तस्मादेकपदापवादस्य[14] उपसन्तानस्य प्रतिषेधं कृत्वा एकपदा विधीयन्ते[15] । अनुपसन्तान इति वचनात् प्रणवे प्रतिषिद्धे **उपसन्तनुयादेकपदाः** इति वचनात् पुनः प्रणवेन संतानो भवति । **ताभ्यश्चोत्तराः** इति संतानो प्राप्ते ऋगावानम् इत्याह । **वज्रेण वालखिल्याभिर्वाचःकूटेनैकपदया वलं विरुज्य गा आप्नुवन्ति** इति च ब्राह्मणम् । एवमेकपदाः प्रगाथान्तेषु न संधीयन्ते, तेषाम्अनुपसंतानः इति वचनात् प्रगाथान्तेषु[16] प्रणवो न प्राप्नोति । संतानार्थत्वात् प्रणवस्य षोळशिनोक्तः प्रणवोऽवसाने न प्राप्नोति । श्रुतिश्च विरुध्यते । **प्रगाथे प्रगाथ एवैकपदां दध्यात्, स वाचःकूटः** इति ब्राह्मणम् । यदि प्रगाथेनैकपदा संधीयते, ततः प्रगाथे एकपदा शस्ता भवति । "[17]वाचःकूटं च[†] संपद्यते । यदि न संधीयते, प्रगाथो बार्हतः स्याद्,[17] वाचःकूटं च[18] न संपद्यते; तस्माच्छ्रुतिविरोधो भवति । ता इमा एकपदा वक्ष्यन्ते ॥१९॥

[एकपदानामृचां कथनम्]

**'इन्द्रो विश्वस्य गोपतिः', 'इन्द्रो विश्वस्य भूपतिः', 'इन्द्रो विश्वस्य चेतति', 'इन्द्रो विश्वस्य राजति' इति चतस्रः** ॥२०॥

**एकां महाव्रतादाहरेत्** ॥२१॥

---

१. एकपादादिशादिव मूको । २. °यन्ते ब' । ३-३. प्रगाथेन मूको । ४. भवन्ति ब' । ५-५. नास्ति ब' । ६. यथा ब' । ७. नास्ति मूको । ८. तु. तिः', आश्रौ ८,१,२३ । ९. भवति ब' । १०-१०. नास्ति मै । ११. नास्ति मूको । १२. उपसन्तानो मूको । १३. न मै; या ब' । १४. तस्मादपि (°प मै) वादापवादस्य मूको । १५. °यते ब' । १६. प्रगाथोक्तषु ब' । १७-१७. नास्ति मै । †. न ब' । १८. नास्ति ब' ।

**त्रयोविंशतिमष्टाक्षरान् पादान् महानाम्नीभ्यः सपुरीषाभ्यः ॥२२॥**

**इन्द्रो विश्वस्य गोपतिः** इत्येवमादि [1]यथासमाम्नाताश्चतस्रः । †**इन्द्रो विश्वं विराजति**† (ऐआ ५,३१), इत्येकां महाव्रताद् आहरेत् । या अष्टाक्षरा सा भवति । उत्तरत्र अष्टाक्षरग्रहणाच् चतुरक्षरा न भवेदिति । **नूनमथ** (ऋ ८, ४६, १५) इति[1] ह्रस्वत्वादिह नाम्नाता । त्रयोविंशतिमष्टाक्षरान्[2] पादान् महानाम्नीभ्य आहरेत् । संख्यावचनात्[3] पादा एव चतस्र एकां[4] त्रयोविंशतिमिति । तस्मात् 'अन्यत्रैकपदाभ्यः (आश्रौ ८,२,२३) इत्युक्ते [5]षोळशिनोक्तः प्रतिगरः[5] पादेष्वपि न भवति । अन्वृचमृगावानं[6] भवति । अष्टाक्षरान् इति वचनाद् विकर्षरूपाः[7] पादा न गृह्यन्ते । ये[8] 'अष्टाक्षरास्ते एव गृह्यन्ते[8] । तानि पदानि वक्ष्यन्ते । महानाम्न्यो नव ऋचः[10] । तासु द्वितीयस्या द्वितीयतृतीयौ पादौ, तृतीयस्या आद्याः त्रयः[9], पञ्चम्या द्वितीयतृतीयौ, षष्ठ्यां चत्वारः पादाः, सप्तम्यां चतुर्थः पादः, अष्टम्यामाद्यास्त्रयः पादाः, नवम्यां पञ्च पादाः, एवमेते [11]विंशतिः पादाः[11] पुनरुक्तैर्विना । पुनरुक्तास्त्रयः पादा भवन्ति । यदि तेऽपि गण्यन्ते, सपुरीषाभ्य इति न वक्तव्यम् । सपुरीषाभ्य इति वचनात् प्रयुक्ताः पादा न[12] पुनः प्रयुज्यन्ते । अथ पुरीषपदानि । [13]तत्राद्यं विवेकादष्टाक्षरं भवति[13] । विवेके कृते आकारेकारौ द्वे अक्षरे भवतः । [14]तस्मादक्षरं प्लावयेदित्युक्तम् । न च वर्णविपर्यस्य प्लुतिर्विधीयते । तस्माद् विवेके कृते द्वे अक्षरे भवतः[14] । द्वितीयं पौष्णं, तृतीयं दैवमित्येतानि पदानि त्रीणि । एवमेतानि त्रयोविंशतिः ॥२०-२२॥

[एकपदासु प्रतिगरप्रतिषेधः]

**षोळशिनोक्तः प्रतिगरोऽन्यत्रैकपदाभ्यः ॥२३॥**

षोळशिनोक्तः प्रतिगरः षोळशिना व्याख्यातः प्रतिगरः । [16]एकपदाभ्योऽन्यत्र प्रगाथेत्येव (? °थेष्वेव) । एकपदासु प्रणवान्त एव महावालभिदित्युक्तः प्रतिगरः[16] हौण्डिनयोर्न प्राप्नोति । प्राप्नोत्येवाधिकारात् । इति नु **हौण्डिनौ** (आश्रौ ८,२, १६) अथ **महावालभित्** (आश्रौ ८, २, १७) इति सर्वे विहारा अधिकृताः । **एतान्येव षट् सूक्तानि** (आश्रौ ८,२,१८) इति कथमनधिकृतान्यतिदिश्यन्ते । प्रगाथैः सन्तता एकपदाः । प्रगाथाङ्गत्वादेकपदास्वपि विहृतः[15] प्रतिगरः प्राप्तः । "यथा प्रतिगरः तथात्रिकद्रुकीयासु" प्रथमायां पङ्क्तिषु च ।

---

१-१. यतिह्रस्वादिह नापादाता ब[1] †-†. नास्ति मै । २. °तिरष्टा° मूको । ३. °चना मूको । ४. °शतिरिति मूको । ५-५. षोळशी (°शि ब[1]) प्रति मूको । ६. अनृचामृ° मूको । ७. °र्षयूपाः ब[1]; °र्षपूर्याः मै । ८. नास्ति मूको । ९-९. नास्ति मै । १०. तु. ऋखि ५,४, १-९ । ११-११. विंशतिपादाः मूको । १२. म मूको । १३-१३. तत्रायं विवेकदृष्टाक्षरं मणवति ब[1] । †. तत्राज्यं मै । १४-१४. नास्ति ब[1] । १५. विहितः मै । १६-१६. पदा त्रि° ब[1]; यथागरः कन्दुकीयासु मै ।

उत्तमयोः[1] पदयोर्विहारेण संबन्धाद् विहारप्रतिगरः[2]। एवमेकपदास्वपि प्राप्ते अन्यत्रैकपदाभ्य इत्याह।

येषां पुनरेकपदा असंहिताः पृथक् शस्यन्ते, तेषां प्रतिषेधोऽनर्थकः। प्रगाथबाह्यत्वान्न[3] प्राप्तः। तेषां प्रगाथान्तेषु उपसन्ताने प्रतिषिद्धे प्रणवो न प्राप्नोति, सन्तानार्थत्वात् प्रणवस्य। सन्ताने आम्नातः प्रतिगर अवसाने न प्राप्नोति। एकपदासु च प्रतिगरप्रतिषेधोऽनर्थकः। तेषां श्रुतिविरोधश्च **प्रगाथे प्रगाथ एवैकपदा दध्यात्** (ऐब्रा ६,२४) इति। अन्यत्रैकपदाभ्यः प्रगाथबाह्या भवन्ति[4] इति वचनात् [5]षट्सु च सूक्तेषु विहृतः प्रतिगरो भवति। एवं सर्वेषु सूक्तविहारेषु प्रकृत्या प्रतिगरः। षोळशिनोक्तः इति वचनाद्[5] ऊर्ध्वं स्तोत्रियानुरूपाभ्यामपि विहृतावेव **अष्टाक्षरेण द्वादशाक्षरम्** (ऐब्रा ६,२६) इति ब्राह्मणम् ॥२३॥

[चतुर्थरूपशंसनम्]

**अवकृष्यैकपदा अविहरंश्चतुर्थं शंसेत् ॥२४॥**

अवकृष्यैकपदाः[6]। अवकृष्य[7] अपनीय एकपदाः, अविहरन् षट् सूक्तानि चतुर्थं[8] शंसेत्। अविहरंश्चतुर्थं शंसेत् इत्युक्ते अधिकारादेकपदाः प्राप्ताः प्रतिषिध्यन्ते। विहाराधिकाराद् विहारे प्राप्ते अविहरन्नित्याह। इह चतुर्थग्रहणात् [9]पूर्वे त्रयोऽपि कल्पा[9] न भवन्ति, षट्सूक्तानि चतुष्कृत्वः शस्यन्ते। अधिकाराद् विहारः प्राप्तः[10]। प्रगाथान्तेषु अनुरूपसन्तानः प्राप्तः। एकपदाः प्राप्ताः। एवं विहारे प्राप्ते विहारः प्रतिषिद्धः, एकपदाः प्रतिषिद्धाः, अनुपसन्तानो[11] न प्रतिषिद्धः। प्रतिषेधाभावादनुपसन्तानः[12] प्राप्त एव। [13]तस्मादत्र प्रगाथानामनुपसन्तानो[13] भवति, पृथक् प्रगाथाः शस्यन्ते। [14]**प्राणक्लृप्त्याम् अविहृतानेव**[14] **चतुर्थं प्रगाथान् शंसति** (ऐब्रा ६, २४) इति ब्राह्मणम्। ब्राह्मणे प्रगाथाश्चोदिताः, सूक्तानि च चोदितानि। [15]उपसन्ताने अक्रियमाणे[15] सूक्तानि भवन्ति, न प्रगाथाः, तस्मादनुपसन्तान एव कर्तव्यः ॥२४॥

[अन्येषां हौण्डिनविहारवत्कथनम्]

**समानमन्यत् ॥२५॥**

**महावालभित्** (आश्रौ ८, २, १७) इति उक्तादन्यत् सर्वं समानम्। हौण्डिनेन विहारेण स्तोत्रियादिपरिधानीयान्तौ हौण्डिनौ समाप्य [16]अथ महावालभि-

---

१. उभमयोः ब[1]। २. विहारः प्र° मूको। ३. °थबाह्यबाह्यत्वा° ब[1]। ४. थप्राह्या ब[1]। ५-५. नास्ति ब[1]। ६. अधिरष्यै (अधिकृत्यैं मै) कपदाः मूको। ७. अधिकदयै ब[1]; अधिकृत्य मै। ८. चतुर्थं ब[1]। ९-९. पूर्वे वयो विकल्पा ब[1]; पूर्वं त्रयो विकल्पा मै। १०. नास्ति ब[1]। ११. अनुरूपसन्ताने मै। १२. प्रतिषिद्धा भा० ब[1]। १३-१३. तस्मादनुप्र° मूको। १४-१४. प्राणवप्तामवि° ब[1]; प्राणक्लीप्ताः मविहृताः नेव मै। १५-१५. °न्तान क्रिय° ब[1]। १६. प्रथम मूको।

दित्यधिकृत्य षट् सूक्तानि चतुष्कृत्वः शंस्तव्यानीति चोदितम्[1]। यथाचोदितं[2] शस्त्रं प्राप्तम्, तस्मादाह—समानमन्यदिति। [2]**विपरिहरेदेवोत्तमे सूक्ते गायत्रे सर्वत्र** (आश्वौ ८,२,११), **नित्यमैकाहिकम्**[2] (आश्वौ ८,२,१५) इत्येतत सर्वं समानमिति। अत्र त्रयः कल्पा उक्तास्तेषामाद्यो ब्राह्मणे प्रतिषिद्धः—**'नेत्तु प्रगाथाः कल्पन्ते** (ऐब्रा ६,२८) इति। **अतिमर्शमेव**[3] **विहरेत्, तथा वै प्रगाथाः कल्पन्ते** (ऐब्रा ६, २८) **इति**। सूत्रकारेण तु विकल्प उक्तः **व्यतिमर्शं वा** [4]**विहरेत्** (आश्वौ ८, २, ६)[4] इति, तस्माद् द्वावेव कल्पौ। तत्रोत्तर[5]एव[6] क्रियते, उत्तरपक्षत्वात्, ब्राह्मणप्रशस्तत्वाच्च, महावालभित्तुल्यविकल्पो न[7] भवति। पशुकामानां चोदितत्वात् **वज्रेण वालखिल्याभिर्वाचःकूटेनैकपदया वलं विरुज्य गा आप्नुवन्ति** (ऐब्रा ६, २४), [8]**तदेतत् पशव्यं च स्वर्ग्यं च शस्त्रम्**[8] (ऐब्रा ६, २४) इति। तस्मात् कामसंयोगात् कृताकृतो नित्यो न भवति। सूत्रकारोऽप्याह **महावालभिदं चेत्** (आश्वौ ७,२,१६) इति। **अथ महावालभित्** (आश्वौ ८, २, १७) इत्याह, नोक्तं महावालभिदं वा इति। **यथा व्यतिमर्शं वा** (आश्वौ ८, २, ६) इति। तस्मादन्यत्र[9] विकल्पः। तस्मात् पशुकामस्य नैव शंस्तव्यः। तदुक्तम्—**सहोवाच भूयिष्ठानहं यजमाने पशून् पर्यग्रहैषमकनिष्ठा उ मामागमिष्यन्तीति** (ऐब्रा ६, २४)। [10]तस्माद् यावत्यो हौत्रे दक्षिणास्तावत्यो याजमाने दातव्याः[10] **तस्मै ह यथा महद्भ्य ऋत्विग्भ्य एवं निनाय** (ऐब्रा ६, २४) इति वचनात्। तस्मात् पशुकामाय पशुकामेनैव शंस्तव्यः ॥२५॥

॥ इति अष्टमे द्वितीयः खण्डः ॥

१. चोदितः मै। २-२. विदिते (विहृते मै) गायत्रे सूक्ते ऐकाहिके उत्तमम् मूको। ३-३. स तु प्रगाथः (°थ ब') कल्प इति व्यति° (वति° ब') मूको। ४-४. विहरेदेव मूको। ५. तथोत्तरः मूको। ६. एवं मै। ७. नास्ति ब'। ८-८. रतदेतत् (न तदेतत् मै) प्रशस्यं वा स्तन्यं च शस्तमिति (°स्यं च स्तमिति मै) मूको। ९. तस्मादत्र मै। १०-१०. तस्मा पावषो हौत्रे दक्षिणा तावत्यो यजमाने दातव्यः ब'; तस्माद् यावात्रा होत्रे दक्षिणा तावत्यो यजमानो दातव्याः मै।

# अथ अष्टमेऽध्याये तृतीयः खण्डः

[ब्राह्मणाच्छंसिनः स्तोत्रियानुरूपकथनम्]

**ब्राह्मणाच्छंसिनः 'इमा नु कं भुवना सीषधाम' इति पञ्च 'अया वाजं देवहितं सनेम' इति स्तोत्रियानुरूपौ ॥१॥**

इदानीं ब्राह्मणाच्छंसिनः । तत्कथम्[1] इति[2] वक्ष्यते[3]—'**इमा नु कम्** (ऋ १०, १५७,१-५) इत्येताः पञ्च द्विपदाः । **अया वाजम्** (ऋ ६, १७, १५) इत्येतौ स्तोत्रियानुरूपौ । तृचे[†] प्राप्ते पञ्चेत्याह । अया वाजम् इति तृचः प्राप्तः । स्तोत्रियानुरूपौ[4] इति वचनाद् एका भवति । स्तोत्रियानुरूपवद् भवति ॥१॥

[सुकीर्तिसूक्तशंसनम्]

**'अप प्राच इन्द्र' इति सुकीर्तिः ॥२॥**

**अप प्राचः** (ऋ १०,१३१) इत्येतत् सूक्तम्, सुकीर्तिर्नाम ऋषिः तेन दृष्टं सुकीर्तिसूक्तं भवति । **सुकीर्ति ब्राह्मणाच्छंसी** (आश्रौ ८, ४, ६) इत्युक्ते एतत् प्रत्येतव्यम् । शाखान्तरे[5] सुकीर्तिनमान्यदप्यस्ति[6] सूक्तम्, तस्मादाह अप प्राच इन्द्र इति सुकीर्तिरिति । तस्मात् सुकीर्तिमित्युक्ते तदेतत् सूक्तं प्रत्येतव्यम्, नान्यत् ॥२॥

[सुकीर्तेः सूक्तस्य चतुर्थ्या ऋचः शंसनविधिः]

**तस्यार्धर्चशश्चतुर्थीम् ॥३॥**

तस्य सुकीर्तेश्चतर्थीम् ऋचम् अर्धर्चशः[7] शंसेत् । **युवं सुरामम्** (ऋ १०, १३१,४) इत्येनामनुष्टुभम् अर्धर्चशः शंसेत् । **विच्छन्दस उद्धरेत्** (आश्रौ ६,५, १४) इति उद्धारे[8] प्राप्ते **अपि वा तन्न्यायेन शंसनम्** (आश्रौ ६, ५, १५) इति[9] विच्छन्दसो न्याय एव भवति । यथा **अग्निनेन्द्रेण** (ऋ ८, ३५) इत्यत्र पङ्क्त्याः पङ्क्तिशंसनं वा नवर्चमिति ॥३॥

[वृषाकपिसूक्तशंसनम्]

**अथ वृषाकपिं शंसेद् यथा होताऽऽज्याद्यां चतुर्थे ॥४॥**

अथ सुकीर्तिशंसनानन्तरं[10] वृषाकपिमृपिं[11] शंसेत् **वि हि सोतोः** (ऋ १०, ८६) इति **ऊर्ध्वमनुरूपेभ्यो विकृतानि शिल्पानि शंसेयुः** (आश्रौ ८,२,२) इति वचनाद् अनुरूपादनन्तरं वृषाकपिसूक्तं[12] सुकीर्तेरनन्तरं विधीयते । **वृषाकपिं शंसति** (ऐब्रा ६, २९) इति ब्राह्मणम् । तथैवेहापि चोदितम्[13] । **वृषाकपिं च**

---

१. तत्कथः ब[1] । २. नास्ति मूको । ३. वक्ष्यन्ते मै । ४-४. इमानुरूपा मूको । †. तृचा मै । ५. अथर्व २०,१२५ । ६. °न्यदस्ति ब[1] । ७. नास्ति मूको । ८. °रः मै; °र ब[1] । ९. इति सममिति ब[1] । १०. °र्तिनानन्तरं मूको । ११. °कपिमृषिना ब[1] । १२. °कपिप्रांन्तः ब[1]; °कपि प्रातः मै । १३. चोदितः ब[1] ।

**पङ्क्तिशंसम्** (आश्रौ ८,४,६) इत्युक्ते एतत् प्रत्येतव्यम् । यथा होताऽऽज्याद्यां चतुर्थे । पृष्ठस्य चतुर्थेऽहनि आज्यस्य **अग्निं न स्ववृक्तिभिः** (ऋ १०, २१) इत्येतस्य आद्यामृचम् यथा होता शंसितवान् तथा वृषाकपिं ब्राह्मणाच्छसी शंसेत् । इह होतृग्रहणाच्चतुर्थेऽहनि आज्यं संशंसतीति[1] यथातिदेशं कृत्स्ने सूक्ते विग्रहो भवति । न्यूङ्खा निनर्दश्चोक्ता भवन्ति । तं[2] न्यूङ्खयति (ऐब्रा ६,२६) इति श्रुतिः ॥४॥

[वृषाकपेः पङ्क्तिशस्यत्वम्]

**पङ्क्तिशंसं त्विह** ॥५॥

आज्येनातिदेशादर्द्धर्चशः[3] प्राप्तम्, इह वृषाकपौ पङ्क्तिशंसं भवति **पङ्क्तिषु द्विरवस्येत्** (आश्रौ ५,१४,११) इति । तु-शब्दः प्राप्तव्यावृत्त्यर्थः । इह [4]चोदितः प्रतिगरार्थः[4] । प्रणवान्तश्च प्रतिगरः, इह पङ्क्तिशंसं भवति ॥५॥

[द्वितीये पाङ्क्तावसाने प्रतिगरस्य प्रणवान्तत्वनिषेधः]

**अप्रणवान्तश्च प्रतिगरो द्वितीये पाङ्क्तावसाने** ॥६॥

अप्रणवान्तश्च प्रतिगरो भवति । अप्रणवान्तः प्रतिगरो द्वितीये पाङ्क्तावसाने कर्तव्यः । **अयः पृष्टेषु मत्सखा** (ऋ १०,८६,१) इत्यत्र आज्ये प्रणवान्त आम्नातः । स आज्यातिदेशादिह प्राप्तः[5] । तस्मादप्रणवान्तो विधीयते । इह वचनादिदं[6] प्रभृति[6] यद्यपि प्रणवान्त आम्नातः, अप्रणवान्त एव कर्तव्यः । एवयामरुति[7] प्रणवान्तपादेषु प्रतिगरार्थः । पङ्क्तिशंसं प्रणवान्तश्च प्रतिगर आम्नातः । प्रतिगरः[8] अप्रणवान्तोऽपि सन् प्रणवे एव प्राप्तः [9]**प्लुतादिः प्रणवे**[9] (आश्रौ ५, ६, ६) इति यथा षोळशिनि[10] । तस्मादवसाने विधीयते । द्वितीयग्रहणादुत्तरस्यामृचि आज्ये अवसाने प्राप्नोति । सूक्ताधिकारात् सूक्तस्य द्वितीये अवसाने प्राप्तः, पाङ्क्तग्रहणात् प्रत्यृचं[11] द्वितीये अवसाने भवति ॥६॥

[कुन्तापसूक्तशंसनम्]

**तस्मादूर्ध्वं कुन्तापम्** ॥७॥

तस्माद् वृषाकपेरूर्ध्वं कुन्तापं शंसेत् । कुन्तापो नाम खिलेष्वाम्नातः **इदं जना उप श्रुतम्** (ऋखि ५, ८, २२) इति । **अत ऊर्ध्वमनुरूपेभ्यो विकृतानि शिल्पानि शंसेयुः** (आश्रौ ८, २, २) इति [12]वचनादन्त्यं तत्[12] प्राप्नोति ।

---

१. शंसतीति मै । २. नास्ति मूको । ३. °र्चं मूको । ४-४. चोदितप्रतिगरार्थं (°र्थं ब¹) मूको । ५. प्रादो ब¹; प्राप्ते मै । ६. °नादिन्द्र प्र° ब¹; नादिदुप्र° मै । ७. °मरुत्वति ब¹ । ८. नास्ति ब¹ । ९-९. शुनादिः प्र° ब¹; प्लुतादिप्र° मै । १०. षोळशीति मूको । ११. प्रसत्यञ्चं ब¹; प्रत्यञ्चं मै । १२-१२. °नादत्यन्त मै ।

तस्मादिदमुच्यते । नाराशंसीः शंसति[1] रैभीः शंसति[1] पारिक्षितीः शंसति कारव्याः शंसति (ऐब्रा ६.३२) इति ब्राह्मणम् ॥ ७ ॥

[कुन्तापस्य शंसनविधिः]

**तस्याऽऽदितश्चतुर्दश विग्राहं निनर्दं[2] शंसेत् ॥ ८ ॥**

विगृह्य विगृह्य विग्राहम् । निनर्द्य निनर्द्येति निनर्दम् । विग्रहो[3] निनर्दश्च भवति । आदित इति उत्तरसूक्तार्थम् ।[4] चतुर्दशस्वेव[5] विग्रहो निनर्दश्च भवति, नोत्तरासु, तासु न न्यूङ्खयेन्नैवैव च निनर्देत् (ऐब्रा ६,३२) इति श्रुतिवचनात् । विग्राहं निनर्दमिति नियमार्थं विग्राहमेव[6] निनर्दमेव न न्यूङ्खम्[7] इति । अधिकृतस्य प्राप्तस्य निषेधः—ताः प्रग्राहं शंसति यथा वृषाकपिम् (ऐब्रा ६,३२) इति । तासु न न्यूङ्खयेद्[8] नीवीव निनर्देत्[8] स हि तासां न्यूङ्खः (ऐब्रा ६,३२) इति श्रुतिवचनाद् विग्रहादनन्तरो[9] निनर्दः चतुर्दश्यामृचि । तत्प्रयोजनं[10] विग्रहादनन्तरं चतुर्थे पादे निनर्दो भवति ॥ ८ ॥

[तृतीयेषु पादेष्वादौ प्रथममनुदात्तं तत उदात्तं कृत्वा निनर्दः]

**तृतीयेषु पादेषूदात्तमनुदात्तपरं यत्प्रथमं तं निनर्देत् ॥ ९ ॥**

तृतीयेषु पादेष्विति वचनान्न प्राप्तः । तासु आद्यास्तिस्रो नाराशंसीरुत्तरास्तिस्रो रैभीः ताभ्य उत्तराश्चतस्रः पारिक्षितीः । तासु दधि मन्था३म् इति प्लवते[11] परिस्रुता३म् इति च । ताभ्यश्चतस्रः कारव्याः आनुपूर्व्यलिङ्गैर्ग्राह्या अर्द्धर्चाः । विग्रहोपदेशात् स्थानिवद्भावात् पच्छः शस्य प्राप्तम् । उदात्तानुदात्तं[12] भवति । यथानिशम् ।[13] न्यूङ्खो यदेलवा अभिगेष्णाश्चरन्त्यथान्नाद्यं प्रजायते (ऐब्रा ५,३) इति ब्राह्मणम् । तृतीयेषु पादेषु पादादौ निनर्दो[14] वक्ष्यते । उदात्तमक्षरं भवति अनुदात्तपरम् । आद्यमक्षरमनुदात्तं भवति । ष इत्यनुदात्तं ष्टिम् इत्युदात्तम् स्वर एव उदात्तः अनुदात्तश्च भवति व्यञ्जनमपि तदङ्गत्वाद् निनर्देषु । प्रथमं निनर्दलक्षणमुक्तं प्लुतः प्रथमः (आश्रौ ७, ११, १३) इति। तदिह उदात्तस्य[15] भवति । तस्मादुदात्तः[16] तस्मादनुदात्तः प्लुतश्च निनर्दो भवति निनर्देद् इतिवचनात्, तदेवाक्षरं यथाम्नातमेव निनर्देत् । ओंकारं न कुर्यादित्यर्थः । निनर्देदित्यनुक्ते[17] ओंकारश्च[18] निनर्दः प्राप्तः ॥९॥

१-१. नास्ति मूको । २. निनर्द्य BI । ३. विग्राहो ब' । ४. °सूत्रार्थम् मूको । ५. तु. ऋखि ५,८-११ । ६. °विग्रह मूको । ७. न्यूङ्ख मूको । ८-८. नैवेव च निनर्देत् ब'; नैवैव नर्देत् मै । ९. विग्रहणानन्तरो ब' । १०. °जनः ब' । ११. प्लवते य ब'; तु अथर्व २०,१२७,९ । १२. उदात्तानुदात्तं (°त्ता मै) मूको । १३. यथानि ब' । १४. निनर्दोव ब'; निनर्दः मै; तु. आश्रौ ८,३,१० । १५. उदात्तश्च ब' । १६. तस्मा उदात्तः ब' । १७. °र्देदित्युक्ते मूको । १८. °रस्य ब' ।

[निनर्दोदाहरणकथनम्]

**तदपि निदर्शनायोदाहरिष्यामः 'इदं जना उपश्रुत नराशंस स्तविष्यते । षष्टिं सहस्रा नवतिं च कौरम आ रुशमेषु दद्महो३म्' ॥ १० ॥**

तदेतन्निनर्दविधानं यदुक्तं तदपि निदर्शनायापि निपातनाय उदाहरिष्यामः असंशयार्थम् ।[1] अप्राप्ते अप्रमाणं च ।[1] पदान्ते पदादाविति[2] संशयः । ओंकारं कुर्यादिति संशयः । '[3]प्लवते न प्लवते'[3] अनुदात्तपरमिति[4] उभयथा[5] विग्रहो दृश्यते ।[5] अनुदात्तात्परमिति अनुदात्तः[6] परो यस्मात्तदनुदात्तपरमिति[6] च । तस्मादसंशयार्थं निदर्शनम् । अप्राप्तं च निपात्यते[7] उदात्तमित्युक्तम् । उदात्तश्रुतिश्च निपात्यते ।[7] निनर्दो[8] भवति । तस्य पूर्वमर्द्धमुदात्तं भवति । उत्तरमर्द्धमनुदात्तश्रुति[9] निपात्यते । यथा स्वरितस्य कन्या इत्यत्र । [10]निनर्दः प्लुतो[10] भवति । [11]प्लुतादस्याधिको निपात्यते । यथा स्वरितस्याधिकः कालः । **इदं जना उपश्रुत नराशंस स्तविष्यते । षष्टिं सहस्रा नवतिं च कौरम आ रुशमेषु दद्महो३म्** (शौ २०,१२७,१) इति निदर्शनम् । **तस्मादूर्ध्वं कुन्तापम्** (आश्रौ८, ३,७) इत्युक्ते न जानीमः कुन्ताप इति, तस्मादादिग्रहणम् (द्र. आश्रौ ८, ३, ४) । नित्यानां सूक्तानां स्थाने आदिष्टानि शिल्पानि । तस्मात् तेषां स्थानिवद्भावात् पच्छः शस्ये प्राप्ते अर्धर्चशः प्राप्त्यर्थं सूक्तमर्धर्चशः पठति । विग्रहार्थं निनर्द[12] तन्न भवति ।[12] सिद्धो विग्रहनिनर्दोऽयं[13] न्यूङ्ख[13] एवेति व्याख्यातम् । तस्मात् न्यूङ्खात् परमनुदात्तं यथा, एवमिहापि[14] अनुदात्तत्वे प्राप्ते एकश्रुत्यर्थमेकशेषं[15] पठति ॥ १० ॥

[निनर्दस्य प्रतिगरकथनम्]

**'ओथामो दैवोम्' इत्यस्य प्रतिगरः ॥११॥**

ओथामो दैवोम् इत्ययमस्य[16] निनर्दस्य प्रतिगरो भवति । **व्युपरमं हैके** (आश्रौ ७, ११, २०), **यथा वा संपादयिष्यन्तो मन्येरन्** (आश्रौ ७, ११, २१) इति प्रतिगरो व्याख्यातः ॥ ११ ॥

[चतुर्दश्यामृचि विग्रहविधानम्]

**चतुर्दश्यामेकेन द्वाभ्यां च विग्रहः ॥ १२ ॥**

---

१-१. असंशयार्थमप्राप्तमप्रमाणे व ब'; असंशयार्थमप्राप्ते अप्रमाणं च मैं । २. पदानि ते पदा° मूको । ३-३. स्तवने न स्तवते ब'; प्लवने न प्ल° मैं । ४. अनुदात्तमिति मैं; तु. आश्रौ ८,३,९ । ५-५. निग्रहो सुते (युते मैं) मूको । ६-६, अनुदात्तात् परमनुदात्तपरमिति मूको । ७-७. नास्ति; ब' । ८. निनर्दं मूको । ९. उदात्तमर्धमुदात्तश्रुतिः (°तिः) मूको; तु. पा १,२,३२ । १०-१०. निनर्दप्लुतो मूको । ११. स्तुतादस्याधिका ब'; °स्याधिका मैं । १२-१२. तन्प्रभ° ब' । १३-१३. °र्दो यन्न्यूङ्ख ब' । १४. एवमपि ब' । १५. °र्थमृवशेषं मैं । १६. °वोमित्यस्य ब' ।

चतुर्दश्यामृचि एकेन पादेन द्वाभ्यां च पादाभ्यां विग्रहो भवति। पञ्चपदा[1] **उप वो नर एमसि** (ऋखि ५, ११, ४) इति। प्रथमाया निदर्शनादेवार्धर्चशस्यं सर्वासां भवति। पङ्क्तिषु पङ्क्तिशंसनं[2] भवति यथा वालखिल्यासु **अचेत्यग्निः** (ऋ ८, ५६,५) इति। तस्मात् पङ्क्तिशंसप्रतिषेधार्थम् अर्द्धर्चप्राप्त्यर्थम् एकेन द्वाभ्यां च विग्रहः इत्युच्यते। तस्मादर्धर्चशस्या भवति। **विग्राहं निनर्दं शंसेत्** (आश्रौ ८,३,८) इति वचनाद् विग्रहादनन्तरो निनर्दो भवति। तस्मादस्यामृचि चतुर्थे पादे निनर्दो भवति ॥ १२ ॥

[शेषस्यार्धर्चशः शस्यत्वम्]

**शेषोऽर्धर्चशः ॥ १३ ॥**

शेषोऽर्धर्चशस्यो भवति। स्थानिवद्भावात् पच्छःशस्ये[3] प्राप्ते अर्धर्चशः विधीयते। एवं चेन्न वक्तव्यम्। अर्धर्चाधिकाराद्[4] यदधिकृतमर्धर्चं, तत् सर्वासु भविष्यति। इदं प्रयोजनम्। शस्त्रादौ 'न्यूङ्खनिनर्दौ सूक्तमनिदिश्यान्ते[5] विहितौ। सर्वत्र शस्त्रे प्राप्ते चतुर्दशस्वृक्षु **विग्राहं निनर्देत्** (आश्रौ ८, ३, ८) इति नियमात् न्यूङ्खो 'विवृत्तो विग्राहं निनर्दमिति[6] भवति। नियमाभावाद्[7] न्युङ्खनिनर्दौ प्राप्नुतः। तयोः प्रतिषेधार्थं शेषोऽर्धर्चशः इत्युच्यते। ब्राह्मणेऽपि **तासु न न्यूङ्खयेन्नैवैव च निनर्देत्** (ऐब्रा ६,३२) इति प्रतिषेधः। ता इमा ब्राह्मणे क्लृप्ता[8] अनुक्रमेण लिङ्गैर्ग्राह्याः **यः सभेयः** (ऋखि ५,१२,१) इत्येवमादि पञ्च ऋचः दिशां क्लृप्तयः[9]। ताभ्य उत्तरा जनकल्पाः। **तासु तोता कल्पेषु संमितः** (ऋखि ५,१३,१-६) इति पुंलिङ्गम्। प्रथमायां द्वितीयस्यां च संमितः इति भवति। तृतीयादिषु तोता कल्पेषु [10]संमिता इति स्त्रीलिङ्गमेव।[10] सर्वासु संमिता इति व्यत्यासं ग्राह्याः।[11] उत्तराः पञ्च इन्द्रगाथाः। एताः सर्वाः षोडश भवन्ति। अत ऊर्ध्वम् **ऐतशप्रलापं शंसति** (ऐब्रा ६,३३) इति ब्राह्मणम् ॥१३॥

[अनन्तरं सप्ततिपदानां शंसनम्]

**'एता अश्वा आ प्लवन्ते' इति सप्तति पदानि ॥ १४ ॥**

---

१. पापं च यदा ब'। २. तु. आश्रौ ५,१४,११; ८,३,५। ३. शस्ये ब'। ४. अध्यर्धादि° मूको। ५-५. न्यूङ्खनिनर्दो (°निन ब') सूक्तामनिद्दिश्यते (°मतिदिश्यते) ब'; मै। †. °निनसूक्त° ब'। ६-६. निवृत्त (°त्ता मै। इति ह (इह मै) निमिति (निमित्तमिति मै) मूको। ७. तृतीयादिषु तु तोता कल्पेषु संमिता इति स्त्रीलिङ्गमेव सर्वासु संमितासु समिता इति द्वात्यासंयमाभावात् ब'; तृतीयादिषु रुतो वा कल्पेषु सम्मिता इति स्त्रीलिङ्गमेव सर्वासु संमितासु संमिता इति व्यता संयामाभात् मै। ८. कता ब'। ९. कल्पिः ब'; क्लपि मै। १०-१०. संमित इति पुँल्लिङ्गम् प्रथमादि पञ्च ऋचः ता इति स्त्रीलिङ्गमेव ब'। ११. त्याह्या ब'; त्याह मै।

**एता अश्वा आ प्लवन्ते** (ऋखि ५, १५, १) इति यथासमाम्नातानि सप्तति पदानि । **तं हैके भूयांसं शंसन्ति** (ऐब्रा ६, ३३) इति ब्राह्मणम् ।। १४ ।।

[अष्टादशपदानां शंसनविकल्पः]

**अष्टादश वा ।। १५ ।।**

अष्टादश वा पदानि शंसति[1] इति । शाखान्तरे अष्टादशैवाम्नातानि, तस्माद् विकल्पः । तानि पदानि[1] वक्ष्यन्ते[2] ।। १५ ।।

[आद्यानां नवपदानां निर्देशः]

**नवाऽऽद्यानि ।। १६ ।।**

नव पदान्याद्यानि[3] । **एता अश्वा आ प्लवन्ते** (ऋखि ५, १५, १; शौ २०, १२६, १) इति यथासमाम्नातानि सप्तति पदानि । **तं हैके भूयांसं शंसन्ति** (ऐब्रा ६, ३३) इति ब्राह्मणम् । अष्टादश वा पदानि वक्ष्यति । नवाद्यानि[3] **एता अश्वा आ प्लवन्ते** इत्येवमादि **शृङ्गं धमन्त आसते** (ऋखि ५,१५,३) इति पर्यन्तम् ।।१६।।

[शिष्टानां पदानां निर्देशः]

**'अलाबुकं निखातकम्' इति सप्त । 'यर्दी हनत् कथं हनत्', 'पर्याकारं पुनः पुनः' इति चैते ।। १७ ।।**

**अलाबुकं निखातकम्** (ऋखि ५,१५,१५; शौ २०,१३२,१-८) इत्येवमादीनि सप्तपदानि **क एषां कर्करिं लिखत्** (ऋखि ५, १५, १७; शौ २०, १३२,८) इति पर्यन्तानि । **यर्दी हनत् कथं हनत् पर्याकारं पुनः** [4]पुनर् इत्येते द्वे पदे च[4] नव[5] सप्त एते च द्वे पदे एतान्यष्टादश पदानि भवन्ति । च-शब्दः समुच्चयार्थः । **यर्दी हनत् कथं हनत्, पर्याकारं पुनः पुनः** समाम्नायादेकं पदं[6] प्राप्तम् [7]**ऐतशप्रलापं शंसति पदावग्राहम्** (ऐब्रा ६, ३३) इति ब्राह्मणम्[7] ।। १७ ।।

[अनुष्टुप्छन्दस्कानां षण्णामृचां शसंनम्]

**'विततौ किरणौ द्वौ' इति षडनुष्टुभः' ।।१८।।**

[8]ततः ऐतशप्रलापाद्[8] ऊर्ध्वम् **विततौ किरणौ द्वौ** (ऋखि ५, १६,१, शौ २०, १३३, १-६) इत्येवमाद्याः षड्चः अनुष्टभः शंसति । **प्रवह्लिकाः शंसति** (ऐब्रा ६, ३३) इति ब्राह्मणम् । शाखान्तरे [9]जनाः यथा[9] ऐतशप्रलापः[10] ।

---

१. मै. मातृकायां त्रयोदशसूत्रव्याख्यान्ते प्रमादाद् एष व्याख्याभागो लिखितः । २. वक्ष्यन्ति मै । ३. नवाद्यानि नव पद्यानि मूको । ४-४. पुनरिति त्यंते वर्द्धपदेन व'; °रित्येते चे द्वे पदे मै । ५. नास्ति ब' । ६. पादं मूको । ७-७. एते प्र द्विवत् इति ब्रा० व'; एते द्विवदिति वशाद् द्वे पदे भवतः मै । ८-८. शाखान्तरे तनाः यथा ऐतशयो व' । ९-९. तनाः यथो ब' । १०. °लाप ब' ।

तस्मान्नियमार्थं षड्ग्रहणम् । अनुष्टुभ इति वचनादर्धर्चशस्यं स्थानिवद्भावात् पच्छःशस्यं प्राप्तम् । अर्धर्चशः शंसति (ऐब्रा ६,३३) इति ब्राह्मणम् ॥१८॥

[अवसानेषु षण्णां प्रतिगराणां शंसनम्]

**'दुन्दुभिमाहननाभ्यां जरितरोथामो दैव कोशबिले जरितरोथामो दैव, रजनि ग्रन्थेर्धानां जरितरोथामो दैव, उपानहि पादं जरितरोथामो दैव, उत्तरां जनीमां जन्यां जरितरोथामो दैव, उत्तरां जनीं वर्त्मन्यां जरितरोथामो दैव' इति प्रतिगरा अवसानेषु ॥ १९ ॥**

**दुन्दुभिमाहननाभ्याम्** (तु. शौ २०,१३५,१-५) इत्येवमादियथाम्नाताः षट् प्रतिगराः 'प्रवह्लिकानामध्ययनेषु[१] अनुक्रमेण भवन्ति । प्रणवेषु नित्यः प्रतिगरः । प्रतिगरा[१]' इति वचनात् प्रतिगरा भवन्ति । अन्यथा न जानीमः किमर्था इमे मन्त्रा इति । एते एवावसानेषु[२] । एते एव प्लुतादयः । प्रणवेषु प्राप्तास्तस्माद-वसानेषु[३] इत्याह ॥ १९ ॥

[चतुर्णां मन्त्राणां विशेषविधिना शंसनम्]

**'इहेत्थ प्रागपागुदग्' इति चतस्रो द्वेधाकारं प्रणवेनासंतन्वन् ॥२०॥**

**इहेत्थ प्रागपागुदक्** (शौ २०, १३४, १-४) एता[४] यथाम्नाताश्चतस्र ऋचः । एकैकामृचं द्विधाकृत्य ऋगन्तेन प्रणवेनासंतन्वन् शंसेत् । **आजिज्ञासेन्याः शंसति** (ऐब्रा ६, ३३) इति ब्राह्मणम् । आम्नाये संदेहः किमेतानि[५] अष्टौ सूक्तपदानि[५] 'उत ऋचश्चतस्र[६]' इति । तस्मादाह—चतस्र इति । प्रणवेनासंतन्व न्निति ऋगन्तेऽवसानवचनादर्धर्चावसानप्रतिषेधे[७] प्राप्ते द्वेधाकारमिति वचनाद् अर्धर्चावसानं भवति । **ता अर्धर्चशः शंसति** (ऐब्रा ६, ३३) इति ब्राह्मणम् । संताने[८] प्राप्ते असंतन्वन्नित्याह । संताने प्रतिषिद्धे संतानार्थस्य 'प्रणवस्य प्रति-षेधः[९]' । तस्मादाह—प्रणवेनासंतन्वन् इति ॥ २० ॥

**'अलाबूनि जरितरोथामो दैवो३म्, पृषातकानि जरितरोथामो दैवो३म्, अश्वत्थपलाशं जरितरोथामो दैवो३म्, पिपीलिकावटो जरितरोथामो दैवो३म् इति प्रतिगराः प्रणवेषु ॥ २१ ॥**

अलाबूनि जरितः इत्येवमादि यथासमाम्नाताश्चत्वारः प्रतिगराः अनु-क्रमेण चतुर्षु प्रणवेषु भवन्ति । **यथा वा सम्पादयिष्यन्तो मन्येरन्** (आश्रौ ७, ११, २१) इत्युक्तम् । प्रतिगराः इति वचनात् प्रतिगरा भवन्ति । प्रतिगरा अवसानेष्वित्यधिकारात् प्रणवेष्वित्याह ॥ २१ ॥

---

१-१. नास्ति मैं । †. प्रविष्टानामध्य° ब' । २. एते एवावसानेषु इति सूत्रपाठः प्रतीयते देवत्रातमते । ३. °साने मूको । ४. एते मूको । ५-५. अष्टौ सूक्तानि पदानि ब'; अष्टापदानि मैं । ६-६. उक्तं श्चतस्रं ब'; उक्तश्चतस्र मैं । ७. °साने प्रति° मूको । ८. संगतेन ब'; ऋगन्तेन मैं । ९-९. प्रणवप्रति° मूको ।

[त्रयाणां पदानां शंसनम्]

**'भुगित्यभिगतः' इति त्रीणि पदानि सर्वाणि यथानिशान्तम् ॥ २२ ॥**

**भुगित्यभिगतः** (शौ २०, १३५, १) इत्येवमादियथासमाम्नातानि त्रीणि पदानि शंसति । सर्वाणि पदानि यथानिशान्तं यथासमाम्नातं शस्यन्ते ॥ २२ ॥

[त्रिषु पदेषु त्रयाणां प्रतिगराणामनुष्टभश्च शंसनम्]

**'श्वा जरितरोथामो दैव, पर्णशदो जरितरोथामो दैव, गोशफो जरितरोथामो दैव' इति प्रतिगराः, 'वीमे देवा अक्रंसत' इत्यनुष्टुप् ॥२३॥**

'श्वा जरित' इत्येवमादियथासमाम्नातास्त्रयः प्रतिगरा अनुक्रमेण[1] त्रिषु पदेषु[1] कर्तव्याः । **यथा संपादयिष्यन्तो मन्येरन्** (आश्रौ ७, ११, २१) इति व्याख्यातम् । **वीमे देवाः इति** यथासमाम्नाता अनुष्टुप् । स्थानिवद्भावात् पच्छःशस्ये प्राप्ते अनुष्टुब् 'ग्रहणादर्धर्चशः शंसति । **अतिवादं.. अर्धर्चशः शंसति**' (ऐब्रा ६, ३३) इति ब्राह्मणम् ॥२३॥

[अवसानप्रणवयोर्द्वयोः प्रतिगरयोः शंसनम्]

**'पत्नी यीयप्स्यते जरितरोथामो दैव, होता विष्टीमेन जरितरोथामो दैव' इति प्रतिगरौ ॥२४॥**

पत्नी यीयप्स्यत इति यथासमाम्नातौ द्वौ प्रतिगरौ भवतः । आद्यः अवसाने, द्वितीय प्रणवे[4] भवति । '**प्लुतादिः प्रणवे**' (आश्रौ ५, ९, ६) इति जरितरो३ इति प्लुतो भवति 'अप्रणवान्तौ आम्नातौ' यस्मात् । **पत्नी यीयप्स्यते** (तु० शांश्रौ १२, २३, ५) इति द्वौ आदावन्ते च प्रकारौ[7] वक्तव्यौ । 'आ यस्योन्योयं' (? अनयोर्न्यूङ्खं) कुर्वन्ति पारिक्षितीः[9] यभ मैथुने इत्यस्य धातोरभ्यासः ॥ २४ ॥

[सप्तदशपदानां व्यत्ययस्य प्रतिगरयोश्च शंसनम्]

**'आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयन्' इति सप्तदश पदानि 'ओं ह जरितरोथामा दैव, तथा ह जरितरोथामो दैव' इति प्रतिगरौ व्यत्यासम् ॥ २४ ॥**

**आदित्या ह जरितः** (ऋखि ५, २०, १; शौ २०, १३५, ६) इत्येवमादीनि यथासमाम्नातानि सप्तदश पदानि, **देवनीथं शंसति पदावग्राहं**

---

१-१. प्रतिगराः मूको । २-२. पदे मूको । ३-३. °हणादर्धर्चः (°र्चं मै) प्रतिवादं शंसति (दर्शयन्ति मै) मूको । ४. अष्टावो व' । ५-५. °दि कर्तव्य मूको । ६-६. °णवः अअन्ते व' । †. °णवं ते मै । ७. यकारो मै । ८-८. आद्यस्योन्योपं मै । ९. आविक्षिताः मै ।

यथानिविदम् (ऐब्रा ६, ३५) इति वचनात्। 'अवग्रहः मात्रा ह्रस्वः।' तावदवग्रहान्तरम् (ऋप्रा १, २७-२८) इति मात्राकालो[1] भवति ।[1] [2]इति सप्तदश पदानि पदाम्नायेषु[2] च शाखान्तरे[3] अधिकान्यपि विद्यन्ते, तस्मात् सप्तदशेत्याह । तृचाधिकारात्[4] पदग्रहणम्[5] । ओं ह जरितः इति यथासमाम्नातौ द्वौ प्रतिगरौ पादावसानेषु भवतो व्यत्यस्य व्यत्यस्य । प्रथमः प्रतिगरः प्रथमे पादावसाने, द्वितीयो द्वितीये । पुनः प्रथमस्तृतीये[6], द्वितीयश्चतुर्थे[7] । एवं व्यत्यासं प्रतिगरौ भवतः । अर्द्धेषु पदेषु प्रथमः, शिष्टेषु द्वितीयः, एवं प्राप्ते व्यत्यासमित्याह ॥ २५ ॥

[उत्तमप्रतिगरस्य मध्ये प्रणवशंसनम्]

**मध्येप्रणव[8] उत्तमः ॥२६॥**

उत्तमः[9] प्रतिगरो मध्येप्रणवो भवति । मध्ये प्रणवो यस्य स मध्येप्रणवो[10] भवति । तथा[11] ह जरितरोथामो दैव इति । उत्तमेन पदेन[12] प्रणौति, यथा निविदः । तस्मात् प्लुतादिः प्रणवे (आश्रौ ५.९,६) इति यदुक्तं,[13] तदेवात्र भवति ।[13] मध्येप्रणव उत्तम इत्येवं चेद्,न वक्तव्यं प्राप्तत्वात्, यथा अतिवादे ।[14] तस्मात् प्राप्ते आरम्भो नियमार्थः । मध्ये एव प्रणवो भवति । आदौ न भवति "[15]तथा ह[15] जरितरोथामो दैव इति । प्रणवग्रहणं प्रणवप्रतिषेधार्थमेव । मध्येप्लुत इति वचस्युच्यमाने[16] प्रणवप्रतिषेधो न प्राप्नोति । प्रणवे प्लुतादिः प्रतिगरो भवति, प्रणवान्तो वा । तस्मात् "[17]पुनः प्रणव[17]" इत्याह । प्रणवश्च प्रतिगरः[18] ओं [? ओ] कारः शुद्धो भवति मकारान्तो वा शाङ्खायनकेन दृष्टः । न प्रतिगरादौ[19] मकारान्तः प्रणवो दृश्यते । तस्मात् प्रणव इत्युक्ते प्लुतादिरेव भवति ॥२६॥

[भूतेच्छदानां शंसनम्]

**'त्वमिन्द्र शर्मरिणा' इति भूतेच्छदस्तिस्र एता अनुष्टुभः ॥ २७ ॥**

**त्वमिन्द्र शर्मरिणा** (शौ २०, १३५, ११-१३) इत्येतास्तिस्र ऋचः अनुष्टुभः भूतेच्छद इत्युच्यन्ते । **भूतेच्छदः शंसति** (ऐब्रा ६, ३६) इति ब्राह्मणम् । ब्राह्मणोक्तायाः संज्ञाया ज्ञाने धर्मः । शाखान्तरे "[20]बह्वृचः, तस्मात् तिस्र एता[20]" इत्याह । संज्ञाया व्यवधानाद् एता इत्याह । अनुष्टुब्ग्रहणमर्द्धर्चार्थम् ॥२७॥

---

१-१. नास्ति मूको । २-२. निविन्यददशपदाम्नायेषु ब'; निवि अपरादशमाम्नायेषु मै । ३. संख्यान्तरे मै; तु. वैताश्रौ ३२, २८ पदान्यष्टादश इति भाष्यम् । ४. ऋगाधि° मै । ५. पदा° मै । ६. °तीयेषु मूको । ७. °र्थेषु ब' । ८. अत्ये° ब'; मन्त्ये° मै । ९. नास्ति मूको । १०. प्रणवो ब' । ११. तथा ब': या मै । १२. पादेन ब' । १३-१३. °वानुभवति मूको । १४. प्रतिवादे मूको । १५-१५. इति या मै । १६-१६. इत्युच्यमाने मै । १७-१७. पुतप्र° ब'; प्लुतप्र° मै । १८. द्विप्रकारः मै । १९. °रादे मूको । २०-२०. बह्वृग्रस्मातिष्ठात ब'; बह्वाः तस्मात् तिष्ठत मै ।

[आहनस्यासंज्ञानामृचां शंसनम्]

**'यदस्या अंहुभेद्याः' इति शिष्टा आहनस्याः ॥ २८ ॥**

**यदस्या अंहुभेद्याः** (शौ २०, १३६, १-१०) इत्येताः शिष्टाः 'शिष्टा **ऋचः** आहनस्यासंज्ञाः,' ताः शंसति[१] इति। असंभूतप्रलाप आहनस्याः । आहनस्याज्ञाने धर्मः ॥ २८ ॥

[आहनस्यानाम् ऋचां निर्देशः]

**आज्याद्ययोक्ताश्चतुर्थे** ॥ २९ ॥

पृष्ठ्यस्य चतुर्थेऽहनि आज्यस्य आद्ययर्चा उक्ता आहनस्याः । तस्माद्विग्रहो न्यूङ्खो निनर्दश्च आहनस्यासु भवति ॥ २९ ॥

[द्वयोर्ऋचोराहनस्यासु परिगणनम्]

**'कपृन्नरः', 'यद्ध प्राचीरजगन्त' इति चैते ॥३०॥**

**कपृन्नरः** (ऋ १०, १०१, १२), **यद्ध प्राचीः** (ऋ १०, १५५, ४) इत्येते च द्वे ऋचौ आहनस्यासंज्ञे भवतः । **आहनस्याः शंसति** (ऐब्रा ६, ३६) इति[२], **'ता दश शंसति** (ऐब्रा ६, ३६) इति च[३] ब्राह्मणम् । च-शब्दः आहनस्यासंज्ञासमुच्चयार्थः । आहनस्या इति बहुवचनाधिकाराद् बह्व्यः प्राप्ताः तस्मात् एते-वचनाद् द्वे भवतः ॥ ३० ॥

[आहनस्यानां प्रतिगरनिर्देशः]

**'ई ३ इ इ इ इ इ ई ३ इ इ इ इ इ ई ३ इ इ इ किमयमिदमाहो३ ॐ ॐ ३ मोथामो दैवो३म्' इत्यासां प्रतिगरः ॥३१॥**

ई ३० किमयम् इदमाहो३° इति यथासमाम्नातः आसामाहनस्यानां प्रतिगरः ॥ ३१ ॥

[चतसृणामृचां शंसनम्]

**'दधिक्राव्णो अकारिषम्' 'इत्यनुष्टुप्, 'सुतासो मधुमत्तमाः' इति च तिस्रः ॥३२॥**

**दधिक्राव्णः** (ऋ ४,३९,६) इत्येतामृचमनुष्टभम् आहनस्यातोऽनन्तरं शंसतीति । **इदं वा इदं व्याहनस्यां वाचमवादीत्तद् देवपवित्रेण वाचं पुनीते** (ऐब्रा ६, ३६) इति ब्राह्मणम् । अनुष्टुब्ग्रहणमर्द्धर्चार्थम्[४] । **वाग्वा अनुष्टुप् तत् स्वेनैव छन्दसा वाचं पुनीते** (ऐब्रा ६, ३६) इति[५] च ब्राह्मणम् । **सुतासो मधुमत्तमाः** (ऋ ९, १०१, ४-६) इत्येताश्च ऋचः, तिस्र ऋचः अनुष्टुभः शंसति इति[६] च-

१-१. शिष्टा इत्याह त तस्याः संज्ञा ब[१] । २. तु. ऐब्रा ६, ३६ । ३. नास्ति मै । ४-४. नास्ति ब[१] । ५. अनुष्टुप् ग्रहणमर्धर्चं वार्थ ब[१] । ६-६. नास्ति मै ।

शब्दः अनुष्टुबधिकारसमुच्चयार्थः। अनुष्टुब्ग्रहणे[1] [2]उक्तं प्रयोजनम्[2]। [3]तमेवार्थं चाह होतृब्राह्मणे[3]॥ ३२॥

[तिसृणामृचां शंसनम्]

**'अव द्रप्सो अंशुमतीमतिष्ठत्' इति तिस्रः॥ ३३॥**

**अव द्रप्सो अंशुमतीमतिष्ठत्** (ऋ ८, ९६, १३-१५) इत्येताः तिस्र ऋचः शंसति॥ ३३॥

[नित्यस्यैकाहिकसूक्तस्य शंसनम्]

**'अच्छा म इन्द्रम्' इति नित्यमैकाहिकम्॥३४॥**

**अच्छा म इन्द्रम्** (ऋ १०, ४३, १) इत्येतत् सूक्तं नित्यम् अच्युतम्। ऐकाहिकं नित्यम्[4]। अन्यानि[5] शस्यन्ते न वा। एवं हि ब्राह्मणम्—तदाहुः '[6]संशंसे३त् षष्ठेऽहा३न् न संशंसे३त्[6]' इति (ऐब्रा ६, ३६)। श्रुत्यन्तरे सर्वाणि शस्यन्ते[7]। इह न शस्यन्ते[8]। तदेतन्नित्यमाचार्येण[9] दर्शितम्॥ ३४॥

॥ इति अष्टमे तृतीयः खण्डः॥

---

१. °हणम् ब[1]। २-२. उक्तप्र° ब[1]। ३-३. स एव हो ब्राह्मणे ब[1]; स एवार्थं वा हो ब्राह्मणे मै। ४. द्र. आश्रौ ८,२, १६। ५. अन्यानि अन्यानि मै। ६-६. सं शंसेत् से ते होरात्रे शंसये ब[1]; शंशंसेत्येते अहोरात्रे शंसयेत् मै। ७. शंस्यायेश ब[1]। ८. शंस्यन्ते ब[1]। ९. °न्नित्यं नाचा° मै।

# अथ अष्टमेऽध्याये चतुर्थः खण्डः

[अच्छावाकस्योक्थ्ये स्तोत्रियानुरूपकथनम्]

अथाच्छावाकस्य 'प्र व इन्द्राय वृत्रहन्तमाय' इति स्तोत्रियानुरूपौ ॥१॥

अथ ब्राह्मणाच्छंसिनोऽनन्तरम् अच्छावाकस्योक्थ्यं वक्ष्यते । प्र व इन्द्राय (कौसं १, ४४६-५१) इत्येता द्विपदाः स्तोत्रियानुरूपौ[1] । यत्रैकं[2] प्रतीकं गृहीत्वा स्तोत्रियानुरूपावित्याह, तत्र ताः षड् भवन्तीति व्याख्यातं प्रातःसवने ब्राह्मणाच्छंसिनः (द्र. आश्रौ ८,२,१) ॥ १ ॥

[एवयामरुतः शंसनविधिस्तन्निर्देशश्च]

अथैवयामरुदुक्तो वृषाकपिना ॥ २ ॥

[3]अथ एवयामरुद्[3] ऋषिः पश्यति । एवयामरुतं शंसति (ऐब्रा ६, ३०) इति [4]ब्राह्मणे चोदितम्[4], तथैवेहापि चोदितम् । होतैवयामरुतमाग्निमारुते (आश्रौ ८, ४, १२) इत्युक्ते एतस्य ग्रहणम् । उक्तो [5]वृषाकपिना स हि[5] व्याख्यातो वृषाकपिना[6] । यथा वृषाकपौ विग्रहो न्यूङ्खो निनर्दः पङ्क्तिशंसम्[7] इत्येतानि, एवमेवयामरुति । अन्यथाऽतिदेशेऽक्रियमाणे[8] अर्द्धर्चशस्यं प्राप्नोति यथा आहनस्यासु[9], तस्मात् पङ्क्तिशंसप्राप्त्यर्थः[10] वृषाकपिना इत्यतिदेशः । वृषाकपिनातिदेशात् पङ्क्तिशंसं[11] भवति ॥ २ ॥

[प्रतिगरकथनम्]

'ओ ३ ३ऽ ३ऽ ३ऽ ३ऽ ३ऽ ओ ३ ३ऽ ३ऽ ३ऽ ३ऽ ३ऽ ओ ३ ३ऽ ३ऽ ३ऽ मदे मधोर्मदस्य मदिरस्य मदैवो ३ ३ऽ३ ३ऽ३ ३ऽ३ मोथामो दैवोम्' इत्यस्य प्रतिगरः । 'ऋतुर्जनित्री' इति नित्यान्यैकाहिकानि ॥ ३ ॥

अप्रणवान्तश्च प्रतिगरो द्वितीये पाङ्क्तावसाने (आश्रौ ८,३,६) भवति, यद्यपि प्रणवान्तः प्रतिगर आम्नातः । [12]मदे मधोः इति यथासमाम्नातः अस्य सूक्तस्य प्रतिगरो भवति[12] । [13]प्रणवान्त आम्नातश्चत(?)र्भवति[13] द्वितीये पाङ्क्तावसाने वृषाकपिनाऽतिदेशात् । प्रणवान्तस्तु शाखान्तरे आम्नातः । यथाम्नातः आचार्य-

---

१. °रूपाः व[1]; °रूपं मै । २. तत्रैकं मै । ३-३. यथैवया° व[1] । ४-४. ब्राह्मणा चोदिता मूको । ५-५. वृषाकपिः स सविः व[1]; वृषाकपि स सर्वे मै । ६. वृषाकपिसखिना मूको । ७. °शंसम् मूको । ८. अवयाद्यातिदेशे क्रिय° मै; °देशे क्रिय° व[1] । ९. °नस्याः व[1]; °नस्यात् मै । १०. पङ्क्ति शंस्यप्रात्यर्थः व[1]; °शस्यप्राप्त्यर्थं मै । ११. द्र. आश्रौ ८,४,९ । १२-१२. नास्ति मै । १३-१३. प्रणवान्तश्चतुर्भवति मै ।

णोपदिष्टः, तस्य प्रयोगः शाखान्तरे एव। ऋतुर्जनित्री[1] (ऋ २, १३, १) इत्येवमादीनि सर्वाणि सूक्तानि ऐकाहिकानि नित्यानि[2] न च्यवन्ते। पूर्वयोर्होत्रकयोः एकमेवान्त्यं[3] सूक्तं नित्यम्[4], उत्तराण्यनित्यानि। अथाच्छावाकस्य सर्वाण्येकाहानि कानि कस्माद् इति। ब्राह्मणवचनादितरयोरुक्तम्[5], तस्मान्न शंसेदिति। अच्छावाकस्य नोक्तम्, तस्मात् सर्वाणि शंसतीति[6]। 'अनारब्धे ते न[7] प्राप्नुवन्ति, कथम् ऊर्ध्वमनुरूपेभ्यः (आश्रौ ७, २, १०) सूक्तानि आदिष्टानि नित्यानां स्थाने प्राप्तानि[8] अस्माद् वचनात् स्थाने भवन्ति[9]। इतरयोस्तु[10] अन्त्यमेकं[11] वचनान्नित्यम्[12] ॥ ३ ॥

[द्विपदानां स्तोत्रे कर्तव्यम्]

**एवमुक्थानि यत्र यत्र द्विपदासु स्तुवीरन् ॥ ४ ॥**

[13]इतरेषां स्थाने भवन्ति यथा[13], एवमुक्थानि भवन्ति, यत्र यत्र [14]द्विपदासु छन्दोगा स्तुवीरन्। षष्ठेऽहनि[14] आम्नातानि[15] अन्यत्र न प्राप्नुवन्ति, तस्मादिदमुच्यते। यथा पृष्ठ्यस्य[16] प्रथमेऽहनि द्वितीये[17] च विश्वजिदतिरात्रे[18] यदि [19]द्विपदासु स्तुतेऽप्तोर्यामेऽभिप्लवस्य[19] षष्ठेऽहन्यभिषेच (?) मैत्रावरुणस्यैवं[20] शिल्पं न भवति नेतरयोः[21]। [22]अन्यत्र तानि[22] सहचराणि स्युः शिल्पानि, तान्यहःसु यदि सर्वत्र सहचराणि स्युः[23], षष्ठेऽहनि सहचराणि न भवन्ति। एवमुक्थानि यद् द्विपदासु स्तुवीरन् इत्युक्थान्येव[24] उपदिशन्ति। नाभानेदिष्ठं नोपदिशन्ति। तस्मादपि सर्वत्र सहचराणि न[25] भवन्ति। एवं तस्मात् [26]पृष्ठ्यस्य प्रथमेऽहनि[26] द्वितीये च यदि द्विपदासु स्तुवीरन् [27]उक्थ्येषु शिल्पानि शंसन्ति[27] होत्रकाः, होता नाभानेदिष्ठं न शंसतीति वचनाभावात्। यथा विश्वजित् (आश्रौ ८, ४, ६) इति शिल्पिवचनान्[28] नाभानेदिष्ठ एवयामरुच्च[29] वचनादेव शस्यते [30]'अप्तोर्यामे अद्विपदोक्थ्ये'[30] (द्र. आश्रौ ६, ११, १२)। तस्माद्[31], द्विवचनाद् दृष्टे नाभानेदिष्ठो न शस्यते पृष्ठ्यस्य प्रथमेऽहनि द्वितीये च। तस्मादभिप्लवस्य षष्ठेऽहनि द्वितीये च[32] **मैत्रावरुणो वालखिल्याः शंसति...वा** (ऐब्रा ६, ३१) ॥४॥

---

१. ......नित्रीणि मैः भर्तुर्जनिजी व[1]। २. नास्ति मूको। ३. एकमेवात्यं व[1]। ४. नास्ति व[1]। ५. °वियोतेर° व[1]। ६. शंसति मैं। ७-७. अनारभ्यते जोत्तन मैं। ८. प्राप्नोति मैं। ९. न भवन्ति मैं। १०. इत्यायोस्तु व[1]। ११. अत्यमेकं व[1]। १२. °त्यमेवंम् व[1]। १३-१३. इतरेषां स्थाने भवन्ति स्थाने यथा व[1]; इतरेषां स्थाने भवन्ति एवमुक्तानि यथा एव सूक्तानि मैं। १४-१४. द्विपदा छन्दोगास्ते वीरनूषं बृहति व[1]। १५. आम्नातानि आम्नातानि व[1]। १६. पृष्ठस्य मूको। १७. हितो य व[1]। १८. विश्वजिदिति° व[1]। १९-१९. द्विपदास्तं ते व[1]। २०. °णस्येवं व[1]। २१. तेनरयोः व[1]। २२-२२. आःन्येतानि व[1]। २३. षु मूको। २४. इत्युक्तान्ये नव व[1]। २५. नास्ति व[1]। २६-२६. पृष्ठस्याप्र° मैं; पृष्ठ° व[1]। २७-२७. उपवक्थे प उ शिल्पानि शंसति व[1]। २८. शिल्पव° व[1]। २९. °रुच्यः व[1], रुद्भ्या मैं। ३०-३०. आप्तोर्यामे अद्विपदोक्थ (°पदोछे मैं) मूको। ३१. एत° व[1]। ३२. च नोपे च व[1]।

स्तुतिशिल्पानि शस्यन्ते—

[नित्यशिल्पशंसनम्]

**नित्यशिल्पं त्विदमहः ॥५॥**

इदं षष्ठमहर्नित्यशिल्पं तु । षष्ठेऽहनि नित्यानि शिल्पानि शस्यन्ते। नाभानेदिष्ठो[1] वालखिल्या वृषाकपिरेवयामरुदित्येतानि षष्ठेऽहनि नित्यानि न च्यवन्ते। नित्यानि शिल्पानि यस्मिन्नहनि तन्नित्यमहः। तु-शब्दः अन्येषाम् अह्नां व्यावृत्त्यर्थः। **यत्र यत्र द्विपदासु स्तुवीरन्** (आश्रौ ८,४,४) इति बहून्यधिकृतानि। इदमहः[2] इति षष्ठाहं (? षष्ठमहः)। त्रिविकृतान्निदर्शयति। षष्ठेऽहनि[3] **नाभानेदिष्ठं शंसति** (ऐब्रा ५, १४; ६,२७) इति ब्राह्मणम्। एवं नित्यं श्रुतिवचनात्। इतराणि शिल्पानि[4] छन्दोगवशाद् यजमानसंस्कारार्थानि च श्रूयन्ते—**तान्येतानि सहचराणीत्याचक्षते। नाभानेदिष्ठं वालखिल्या वृषाकपिमेवयामरुतं तानि सहैव शंसेद् यदेषामन्तरियात् तद् यजमानस्यान्तरियात्** (ऐब्रा ५, १५) इति। नाभानेदिष्ठं नित्यम्। तस्य नित्यत्वादितराण्यपि नित्यान्येव। तस्माद् [5]द्विपदास्वस्तूयमानेऽपि तान्यत्र शस्यन्ते[5] एव ॥ ५ ॥

[विश्वजितो नित्यत्वम्]

**विश्वजिच्च ॥६॥**

[6]विश्वजित् सात्रमहरुत्तरां वक्ष्यते। तच्च नित्यशिल्पं भवति। च-शब्दः समुच्चयार्थः। षष्ठमहश्च[6] विश्वजिच्च नित्यशिल्पे भवतः। उभे अप्यहनी समानविधाने श्रूयेते—**तदाहुर्यदस्मिन् विश्वजित्यतिरात्र एवं षष्ठेऽहनि कल्पते यज्ञः कल्पते यजमानस्य प्रजातिः** (ऐब्रा ६, ३१) इति। तस्माद् विश्वजिति नाभानेदिष्ठो नित्यः। तस्य नित्यत्वादितराण्यपि नित्यानि। सूत्रकारोऽपि वक्ष्यते -**उक्तं तृतीयसवनम् उत्तमेन पृष्ठ्याह्ना** (आश्रौ ८,७,११)। शिल्पानां नित्यत्वाद् द्विपदास्वस्तवनेऽपि[7] शिल्पान्यनुशस्यन्ते ॥ ६ ॥

द्विपदास्वस्तवने[8] कथं शिल्पान्यनुशस्यन्त इति तदुच्यते—

[द्विपदास्वस्तवने नित्यशिल्पशंसनम्]

**तौ चेदग्निष्टोमौ अपि[9] वोक्थ्येष्वद्विपदासु स्तुवीरन् माध्यंदिन एवोर्ध्वमारम्भणीयाभ्यः प्रकृत्या शिल्पानि शंसेयुः ॥७॥**

तौ विश्वजित्षष्ठौ यदि चेदग्निष्टोमसंस्थौ भवतः, कथं वालखिल्यादि-

---

१. नास्ति मूको। २. इन्द्रमहः ब'। ३. षतिषष्ठेऽ° ब'। ४. शिल्पान्यनित्यानि मै। ५-५. यदा सुस्तूयमाने पि नात्र शस्यते मूको। ६-६. नास्ति मै। †. सत्र° ब'। ७. विपदासु स्तुवतेऽपि मूको। ८. द्विपदास्तुतेः मूको। ९. यदि Bl. आन.।

शिल्पानि अनुशस्यन्त[1] इति । तदुच्यते । 'अपि वा[2] षष्ठस्य 'प्रथममहरुक्थ्येषु भवति ।[3] अद्विपदासु स्तुवीरन् । न[4] द्विपदा अद्विपदाः तासु[5] अद्विपदासु चेत्[6] स्तुवीरन् । वा-शब्दोऽधिकृतसमुच्चयार्थः । अपि-शब्दः अनित्याभावे[7] । नित्यासु स्तुवतेऽद्विपदासु स्तवनमनित्यम् । षष्ठस्य द्वितीयेऽहनि यदा द्विपदासु स्तुवते[8], विश्वजित् स संवत्सरादन्यत्र उक्थ्यवत्[9] अतिरात्रो वा । तस्मिन्नद्विपदादौ च छन्दोगाः स्तुवते, द्विपदादावपि[10] कदाचित् । तथा सति कथं शिल्पान्यनुशस्यन्त[11] इति । तदुच्यते । माध्यंदिन एव नोक्थ्येपूर्ध्वमारम्भणीयाभ्यो होत्रकाः । **विश्वजिति सांवत्सरिके द्वे मध्यन्दिनमभिप्रत्येतोः** (ऐब्रा ६, ३०) इति ब्राह्मणम् । तस्मान्मध्यंदिने पवमानोक्थ्येषु द्विपदाभावाद् ऊर्ध्वमारम्भणीयाभ्य इति वचनात् प्राक् पारुच्छेपीभ्यो भवन्ति । प्रकृतिराम्नायो[12] भवति । यथाम्नातानि शस्यन्ते, "विग्रहाविग्रहन्यूङ्खनिनर्दा न[13] विद्यन्ते । शिल्पग्रहणाद् "यानि विकृतानि,[14] तान्येव "प्रकृत्या शस्यन्ते[15] "**शिल्पान्यविकृतानि शंसेयुः** (आश्रौ ६, १०, ११) इत्युक्ते तानि[16] वक्ष्यन्ते ॥७॥

[मैत्रावरुणकरणीयं वालखिल्यानां बार्हतसूक्तशंसनम्]

**बार्हतान्येव सूक्तानि वालखिल्यानां मैत्रावरुणः ॥ ८ ॥**

बार्हतान्येव[17] प्राप्तानि यथाच्छावाकस्यान्यदेवसूक्तं, तस्माद् वालखिल्यानामित्याह ।[18] शंसेयुरिति सर्वेषामधिकारान्मैत्रावरुणग्रहणम् ॥८॥

[ब्राह्मणाच्छंसिकरणीयं सुकीर्तेर्वृषाकपेश्च शंसनम्]

**सुकीर्तिं ब्राह्मणाच्छंसी वृषाकपिं च पङ्क्तिशंसम् ॥ ९ ॥**

अप प्राच इन्द्र (ऋ १०, १३१) इति सुकीर्तिः । तं सुकीर्तिमपि ब्राह्मणाच्छंसी शंसति । ऊर्ध्वमारम्भणीयायाः, ऊर्ध्वमेव नाधः[19] । "आरम्भणीयाभ्य ऊर्ध्वमेव वृषाकपिं च पङ्क्तिशंसं[20] शंसति । **ऊर्ध्वमारम्भणीयायाः प्रकृत्या** (आश्रौ ८, ४, ७) इति वचनात्, स्वाध्याये यथाम्नाता अर्द्धर्चावसाना, तथा पङ्क्तीनामर्द्धर्चशस्ये प्राप्ते पुन पङ्क्तिशंसं विधीयते ॥ ९ ॥

[अच्छावाककरणीयं शंसनम्]

**'द्यौर्न य इन्द्र' इत्यच्छावाकः ॥ १० ॥**

---

१. नानुशस्यन्ते ब[1] । २-२. यथा मूको । ३-३. °रुक्थे संस्थं भवति ब[1]; °रुक्थ्ये संभवति मै । ४. न भवति मूको । ५. नास्ति मूको । ६. वे ब[1]; चे मै । ७. नित्या° ब[1] । ८ च ते ब[1] । ९. उक्थवत् ब[1]; उक्थ्यावत् मै । १०. द्विपदादपि मूको । ११. शेसान्यनु° ब[1] । १२. कृत्तिरा° ब[1]; कृतिरा° मै । १३-१३. °ग्रहोन्यूङ्ख° ब[1]; °नर्दानि मै । १४-१४. योनिविकृ° ब[1] । १५-१५. प्रत्याशस्यन्ते मूको । १६-१६. शिल्पान्यधिकृतानि ब[1] । १७. द्र. ऋ ८, ४९-५४ । १८. °मित्या मूको । १९. नाकः मूको । २०-२० नास्ति मूको ।

**द्यौर्न य इन्द्र** (ऋ६,२०) इत्येतत् सूक्तम् ऐन्द्रम्, 'विष्णुन्यङ्गम् आरम्भणीयाया ऊर्ध्वमेव नाधः' शंसति । **स होवाचैन्द्रमेव विष्णु न्यङ्गं शंसतु** (ऐब्रा ६, ३०) इति ब्राह्मणम् । एवयामरुत् जागतत्वाच्च शस्यते । **छन्दस्त्विवदमसध्यंदिनसाचि० ० मारुतो मैव शसिष्ट** (ऐब्रा ६, ३०) इति च ब्राह्मणम् ॥१०॥

[प्रत्येवयामरुदितिसंज्ञाकरणम्]

**प्रत्येवयामरुदित्याचक्षते ॥ ११ ॥**

एवयामरुतः प्रतिनिधिः शस्यते । प्रत्येवयामरुत्सूक्तमाचक्षते[1] ब्रुवते ब्रह्मवादिनः । श्रुतिवचनमेतत् प्रदर्श्यते ॥ ११ ॥

[आग्निमारुते होतृकर्तृकमेवयामरुच्छंसनम्]

**होतैवयामरुतमाग्निमारुते पुरस्तान्मारुतस्य पच्छः समासमुत्तमे पदे ॥ १२ ॥**

होता एवयामरुतम् ऋषिम्[3] आग्निमारुते शंसति । मारुतस्य सूक्तस्य पुरस्तात् पच्छःशस्यं भवति । समासमुत्तमे पदे । उत्तमे[4] द्वे पदे अवशिष्येते तयोः समासः । **अथ त्वमेतं होतरुपरिष्टाद्रौद्र्यै धाय्यायै पुरस्तान्मारुतस्याप्यस्याथा०** (ऐब्रा ६, ३०) इति ब्राह्मणम् । **अथैतं होतैवयामरुतं तृतीयसवने शंसति तद् याऽस्य प्रतिष्ठा** (ऐब्रा ६,३१) इति च । होतृग्रहणम् अच्छावाकाधिकारात् । अक्रियमाणे [5]होतृग्रहणे तु[5] अच्छावाक आग्निमारुते शंसतीति प्राप्नोतीति । एवं सत्यस्मिन्नहनि आग्निमारुतम्[6] । प्रकृत्या शिल्पानि (आश्रौ ८, ४, ७) इति वचनादर्धर्चशस्ये प्राप्ते पच्छःशस्यं विधीयते । उत्तमे[4] द्वे पदे अवशिष्येते, तयोः समासः ॥१२॥

[षष्ठे पृष्ठ्याहनि अहरहःशस्यमेकाधिकं शस्त्वा मैत्रावरुणकर्तृकं दूरोहणशंसनम्]

**षष्ठे त्वेव पृष्ठ्याहन्यहरहःशस्यस्यैकभूयसीः शस्त्वा मैत्रावरुणो दूरोहणं रोहेत् ॥ १३ ॥**

षष्ठे त्वेव न[4] विश्वजिति, पृष्ठ्याहनि नाभिप्लवाहन्यहरहःशस्यस्य **सद्यो ह जातः** (ऋ ३,४८,१) इत्येकयर्चा भूयस्य एकभूयस्यः । एकभूयसीः ऋचस्तिस्रः शस्त्वा मैत्रावरुणो दूरोहणं रोहेत् । **हंसः शुचिषत्** (ऋ ४, ४०, ५) इत्येतद् दूरोहणम् । विश्वजित्षष्ठावधिकृतौ[7] । तस्माद् विश्वजिन्निवृत्त्यर्थं षष्ठग्रहणम् । **स्वर्गो वै लोकः षष्ठमहः** (ऐब्रा ६,२६), **स्वर्गो वै लोको दूरोहणम्** (ऐब्रा ४, २०) इति ब्राह्मणम् । तस्मात् षष्ठेऽहनि दूरोहणं भवति, न विश्व-

---

१-१. °धिष्णवन्यूंखे आरंभणीयाः ऊर्ध्वमेकनाकः मूको । २. प्रत्येतया एतत्सू° मै । ३. ऋचि ब[1]; ऋषि मै । ४. नास्ति मूको । ५-५. °हणे ब[1]; °हणेषु मै । ६. नास्ति मै । ७. °जित्पृष्ठा° मूको ।

जिति । तु-शब्दो विश्वजिदधिकारनिवृत्त्यर्थः । एवेत्यवधारणात् षष्ठ एव नान्यत्र । पृष्ठ्याहनीत्यधिकारार्थम्[1] । वक्ष्यति—**संपातसूक्त एकाहीभवत्सु** (आश्वौ ८, ४, १४) इति । तत्र बहुवचनात् षष्ठादन्येष्वप्यहःस्[2] साम्पातिकेषु दूरोहणप्राप्तिः स्यात् । तस्मात् षष्ठाधिकाराच्चापाष्ठिकात्[3] षष्ठादन्येष्वहःस्[4] दूरोहणं भवति । अहरहःशस्ये दूरोहणं विधीयते । तदेतत्सूक्तस्य स्वर्गत्वमिति[5] । ब्राह्मणे **स्वर्गो वै लोको दूरोहणम्** (ऐब्रा ४,२०) इति । तस्मादहःशस्ये दूरोहणं, न संपाते । **एषा ह वा अत्र निवित्** (ऐब्रा ६,२५) इति ब्राह्मणम् । तस्मान्मध्यंदिने एकभूयसीः शस्त्वा दूरोहणं विधीयते । तृतीयसवने च 'एकभूयसीः शस्त्वा दूरोहणं'[6] विधीयते, **तस्माद् उपैव यजमानं निगृह्णीत योऽस्य प्रियः स्यात्** (ऐब्रा ३, १९), **निविदा वै कामा आप्यन्ते** (ऐब्रा ६, २५) इति हि[6] ब्राह्मणम् । होतुरधिकारः । शस्यं च सर्वेषां विद्यते, तस्मान्मैत्रावरुणग्रहणम् । सर्वत्र **आहूय दूरोहणं रोहेत्** (आश्वौ ८,२, १३) इत्याह । इह वचनाभावादाहावो न क्रियते । पञ्चाहावपरिमितत्वाच्चाहावस्त[7] कर्तव्यः श्रुतिवचनात् । **आहूय दूरोहणं रोहति** (ऐब्रा ४, २१) इति श्रुतिः, **ब्रह्मणाऽऽह्वावेन स्वर्गं लोकं रोहति** (ऐब्रा ४, २१) इति च । अस्मादेतत् सूत्रकारेण सर्वत्र आहूय आहूयेत्युक्तम्[8] । यो हि महति विषये न्यासः, स एव [10]अविहितेऽपि देशे[10] कर्तव्यः । यथा **उपांशु सत्रणवम्** (आश्वौ ५ ९,१) इति । सर्वं[11] च उदितम् अविहितेऽपि देशे भवति महान्यायात्, मानगे सामिधेनीषु च । एवं दूरोहणेऽपि श्रुतिवचनान्महान्यायाच्च भवत्याहावः[12] । न[13] च पञ्चाहावत्वं[14] विहन्यते, यथैव चतुराहावत्वं न विहन्यते ॥१३॥

[एकाहीभवत्स्वहःसु संपातसूक्ते एकभूयसीः शस्त्वा दूरोहणशंसनम्]

**संपातसूक्त एकाहीभवत्सु ॥ १४॥**

उक्थ्ये[15] (? उत्तमे) संपातसूक्ते एकभूयसीः शस्त्वा दूरोहणं रोहेत् **कथा महाँ** (ऋ ४, २३) इत्येतस्मिन् एकाहीभवत्स्वहःसु[16] । [17]एकाहधर्माणि एकाहीभवन्ति । वक्ष्यति[17] – **न ह्येकाहीभवत्स्वहरहःशस्यानि नारम्भणीया न कहन्तः** (आश्वौ ८, ४, १५) इति । येष्वहस्सु[18] एतानि न विद्यन्ते, तान्येकाहीभवन्ति ।

---

१. षष्ठ्या° मूको । २. षष्ठ्याव° मै । ३. षेष्ठाधिकाराच्चाषाष्टिकात् व[1]; षष्ठ्याधिकारात् षष्ठ्याधिकाराच्च । पाष्टिकात् मै । ४. षष्ठ्याद° मै । ५. स्वर्गस्यमिति मूको । ६-६. एका शब्दा च (च मै) मूको । ७. नास्ति व[1] । ८. °हावे परि° मै; द्र. आश्वौ ५, १०, १२ । ९. अ हूयेत्यक्त व[1]; °येत्युक्ते मै । १०-१०. °हितेऽपिदेशे व[1] । ११. सर्वे व[1] । १२. °हावः व[1]; स्याभावः मै । १३. नव मूको । १४. °हावं व[1] । १५. उक्थे व[1]; अच्छ्ये मै । १६. एकां भवत्स्व° व[1]; एकाभवस्त्वहस्सु मै । १७-१७. एतानि न विद्यन्ते तानि एकाहीभवन्ति व[1] । १८. एष्वहस्सु मूको ।

तेष्वहरहःशस्याभावात् संपातसूक्ते दूरोहणं भवति, यथा ऋतूनां[1] षडहे, व्रात्यस्तोमानां चतुर्थे, असमाम्नातेषु च। स्तोमपृष्ठसंस्थाभिर्यत्र व्यवस्था, तत्रापि षष्ठेऽहनि भवति। बहुवचनादेकाहेष्वपि[2] भवति व्रात्यस्तोमेषु[3]। बहुवचनेऽक्रियमाणेऽहर्गणेष्वेव भवति। कथम्। अनेकाहा एकाहधर्मा एकाहीभवन्ति। अभूततद्भावे "कर्तृकर्मणोः कृभ्वस्तियोगे संपद्यकर्तरि च्विरिति[4]"। एकाहीभूतेषु "अहरहःशस्यानां स्थाने[5]" संपातो भवति। स्थानिवद्भावाद् य एव 'अहरहःशस्ये विवादः[6]' श्रूयते, स एव संपातेऽपि भवति। तदेतत् सक्तं संपाते दूरोहणमुपदिष्टम्। कानि "एकाहीभूतान्यहानीति न जानीमः[7]"। तस्मादिदमुच्यते ॥ १४ ॥

[एकाहीभवत्स्वहःस्वहरहःशस्यानामारम्भणीयानां कद्वतां च निषेधः]

**न ह्येकाकीभवत्स्वहरहःशस्यानि नारम्भणीया न कद्वन्तः ॥ १५ ॥**

अहरहःशस्याहेष्वहःस्वहरहःशस्यानि न विद्यन्ते। तान्येकाकीभूतानि। हीति हेत्वर्थे। यस्मादहरहःशस्यादीनि तायमानरूपाणि न विद्यन्ते, तस्मादेकाहीभवन्ति। उक्तान्युदाहरणानि पुनरेकाहीभवन्ति। तस्मादेवंविधान्येकाहीभवन्ति इति[8] दर्शनार्थम्। एवं वर्ण्यमाने[9] सार्थकं सूत्रं भवति। अन्यथाऽनर्थकम्। नारम्भणीयाः[10]। एकाहेष्वहःस्वारम्भणीयाद्या[11] न विद्यन्ते[12]। अस्मात्[13] सूत्रारम्भात्माध्यंदिनीयानामप्यारम्भणीयानां तायमानरूपसंज्ञा भवति। न प्राप्ता[14] हि पर्यासेभ्यः[15] प्रागाम्नातत्वात्, यद्येकेन वाक्येन "उभयीनां तायमानरूपसंज्ञा[16]" विधीयते। एकेनैव "उभयीनां प्रतिषेधोऽपि[17]" भविष्यति। द्विःप्रतिषेधोऽनर्थकः[18]। प्रातःसवने प्रतिषिद्धा "**नारम्भणीया न पर्यासाः**[19]" (आश्रौ ७, ५, १४) इति। एतेनैव[20] माध्यंदिनेऽपि[21] प्रतिषेधे प्राप्ते नारम्भणीया न[22] कद्वन्त इति पुनः प्रतिषेधेऽनवकाशात्[23] "तायमानरूपसंज्ञा प्राप्ता[24]" दर्शयति, अन्यथा न प्राप्नोति[25]। प्रकरणान्तरे चोदितत्वात् **आरम्भणीयाः पर्यासान् कद्वतोऽहरहःशस्यानि** (आश्रौ ७, १, १५) इति प्रकरणान्तरगतत्वान्न प्राप्नोति[25]। "कद्वन्तो न विद्यन्ते[26]" ॥ १५ ॥

---

१. ऋतूनाम् मको। २. बहुवचने एका° मै। ३. °स्तोमे मै; व्राह्मस्तोमे व[1]। ४-४. कर्तृकर्मणो इतोस्त्रे योगे संपद्यते कर्तरिच्चिरिति व[1]: कर्तृकर्मणो इति स्त्रियोगे संपद्यते। कर्तरि त्वरिति मै: द्र. पा. ५, ४, ५०। ५-५. °शस्यास्थाने मूको। ६-६. °शस्येविवादः व[1]। ७-७. एकाहीभूत्यहानीतीमः व[1] : एकाहिभूत्यहमिति मै। ८. नास्ति मको। ९. वर्ण्यमाने व[1]। १०. °णीयायां व[1] : °णीयायाः मै। ११. °णीयाज्या मूको १२. विद्यते मूको। १३. तस्मात् मूको। १४. प्रा प्रा व[1]। १५. पर्यासेभ्यः व[1]। १६-१६. उभयीनासाय° व[1]। १७-१७. उभयैनोभप्रति° व[1]। १८. द्वि प्रति° व[1] १९-१९. °णीयात्पर्यासाः मको। २०. एतेनैव वाक्येन मै। २१. °द्वितोऽपि मको। २२. नास्ति मको। २३. °षेधे नवकात व[1] : °षेधे न च कात् मै। २४-२४. संज्ञा प्राप्ता मूको। २५-२५. प्रकरणां चोदितरे चोदिता आरंभणीयाः पर्यासात्कद्वन्तो यारणः शस्यानीति प्रकरणान्तगतान्नप्नोति व[1] : प्रकरणान्तरे चोदितत्वात् आरंभणीयाः पर्यासात्कद्वन्तो यारणः शस्यानीति प्रकरणान्तरगता न प्राप्नोति मै। २६-२६. कद्वन्त न विद्यते मूको।

[कद्वदादीनां स्थाने शस्यसूक्त-कथनम्]

**कद्वतां स्थाने नित्यान् प्रगाथाञ्शस्त्वा संपातानेव संपातवत्स्वहीनसूक्तानीतरेषु ततोऽन्त्यान्यैकाहिकानि ॥ १६ ॥**

कद्वन्तो येष्वहस्सु तेषु कद्वतां प्रगाथानां स्थाने नित्यान् प्रगाथान् ऐकाहिकान् प्रगाथान् शस्त्वाऽनन्तरं संपातानेवावपन्ते होत्रकाः संपातवत्स्वहस्सु[1] नेतरेषु। **अभिप्लवपृष्ठ्याहानि** (आश्वौ ७,५,१), **संपातसूक्त[2] एकाहीभवत्सु** (आश्वौ ८,४, १४) इत्यधिकृतम्। 'अनेकाद् वा'[3] एकाहधर्माणः[4] एकाहीभवन्ति। तस्मादहीनेष्वाद्यन्तयोरह्नोः पारे[5] (? प्राप्ते) कद्वतां स्थाने नित्यान् प्रगाथान् शस्त्वा संपातावापः स्यात्। ऐकाहिकेषु[6] कद्वन्त इत्याह। यत्र कद्वन्तो न विद्यन्ते, ऐकाहेष्वपि[7] दानेषु चतस्रः कद्वतां[8] स्थाने नित्यान् प्रगाथान् शस्त्वा संपातानावपन्ते। एवमपि कद्वन्तो स्थानिनो न वक्तव्यं (?), विद्यमानेषु कद्वत्सु तदेव[9] नित्यानां प्रगाथानां स्थानं भविष्यति। अन्यथा **नित्यान् प्रगाथाञ्छस्त्वा संपातानावपेत**[10] (?) इत्युक्ते वैराजादीनां [11]"तृचानां लोपः"[11] स्यात्। नित्यान् प्रगाथानिति कद्वत्सु प्रतिषिद्धेषु नित्या भविष्यन्ति। अनुक्रमविधानार्थं वक्तव्यम्। नित्यान् प्रगाथाञ्छस्त्वा संपातानेवेति। एव-शब्दोऽवधारणार्थे वर्तते। अवधारणार्थे प्रयोजनमुक्तम्। मैत्रावरुणस्य द्वितीयमहीनसूक्तं प्राप्तम्। सांपातिकेभ्य[12] आहीनिकेभ्यश्च[13] "यान्यन्यानि तान्यैकाहिकानि भवन्ति। नित्यान्येवां भवन्ति। ततोऽन्यो नैकाहिकानगदः। तेभ्यश्च[14] **अहीनसूक्ते** (आश्वौ ७, ४, ८) अहीनसूक्तान्येव प्राप्तानि, तस्मादैकाहिकादीनि द्वितीयानि विधीयन्ते[†]। [15]"अनुक्रमात् प्रागाथानि"[15] प्राप्तानि, तस्मादन्यानि विधीयन्ते। संपातवत्सूक्तं यातयन्ति ॥१६॥

[अहीनसूक्तानां विधानम्]

**संपातवत्सु तु सर्वस्तोमेषु प्राकृते वैकाहेऽहीनसूक्तान्यादितस्तृतीयानि ॥१७॥**

अभिप्लवपृष्ठ्यानि भवन्ति। तेषु संपातवत्सु सर्वस्तोमेषु सत्सु यः सर्वयज्ञानां प्रकृतिः[16] एकाहो[17] ज्योतिष्टोमसंज्ञः[18] तस्मिन् प्राकृते वैकाहे सर्वस्तोमे वा सति अहीनसूक्तान्यादितः[19] शस्यन्ते। तृतीयानि भवन्ति। सांपातिकेष्वहःस्वहीनसूक्तं[12], संपातः, अन्त्यमैकाहिकम्[20], इति त्रीणि सूक्तानि भवन्ति। ज्योतिष्टोमे-

---

१. संपाती (°ते ब[1]) भत्स्व° मूको। २. संघातं चेति मूको। ३-३. अनेकाद्वा मै। ४. °हं ध° मै। ५. वारे मै। ६. एकाहेषु मूको। ७. एका° मै। ८. कद्वन्तः (°न्ता ब[1]) मूको। ९. तें देव मै। १०. °तानेव मै। ११-११. तवा लोपः ब[1]; तृचा लोपः मै। १२. °संपा° मूको। १३. अही° मूको। १४-१४. नास्ति मै। †. त्रिधान्येव ब[1]। १५-१५. °क्रमा प्रगा° मूको। १६. प्रवृतिः ब[1] १७. °हा मूको। १८. °ज्ञाः मूको। १९. सूक्तानामादितः मूको। २०. अन्यमं° मूको।

ष्वहीनसूक्तं, नित्ये ते द्वे सूक्ते, इत्येतानि त्रीणि सूक्तानि भवन्ति। **अहीनसूक्तानि पेळहस्तोत्रियानावपत्सु** (आश्वौ ७, ४, ११) इति वचनात्[1] प्राप्तानि। पुनरुच्यते स्थानविवक्षार्थम्। [2]अधिकप्राप्तौ मैत्रावरुणस्य[2] 'द्वितीयं प्राप्तम्', **अहीनसूक्तं द्वितीयं मैत्रावरुणः** (आश्वौ ७, ४, ६) इति वचनात्। तद्वा अन्त्यस्य[4] स्थाने भवति[5]। इतरयोस्त्वन्ये भवतः। आद्ययोः स्थाने च[3] सर्वत्र प्राप्त आदितस्तृतीयानीत्युच्यते[7]। आद्यानां चानुद्धारार्थं 'तृतीयानीत्याह। किं कारणम्[8]। एकाहेष्वन्त्यान्यैकाहिकानीष्यन्ते। तस्मादादितो न विधीयन्ते। अथ[3] यद्याद्यानि सूक्तानि उद्ध्रियन्ते[9], असांपातिकान्यहानि संपद्यन्ते। प्रकृतौ तु नैमित्तिकान्यधिकानि भवन्ति। यथा वयमासास्ति (?) योनिशंसनम्। संपातवत्सु तु सर्वस्तोमेषूदाहरणं साकमेधानां तृतीयमहरव्युष्टिद्विरात्रस्य[10] द्वितीयमहः स्तोमेषु श्रूयते[11] इति। स प्राकृत एवैकाहः[12]। प्रकृतिरिह[13] ज्योतिष्टोमः। कामान्निमित्ताच्च[14] सर्वस्तोमो भवति तथा क्षुद्रेषु छन्दोगानाम्। तु-शब्दः अहीनसूक्तानामधिकारव्यावृत्त्यर्थः[15]। अहीनसूक्तेषु[16] द्वे एव सक्ते। यथा विश्वजिति सर्वस्तोमेषु[17] सर्वपृष्ठेषु च[18] इति समानविधानदर्शनादिहापि समानविधाने[19] एव भवतस्तस्मात् सर्वस्तोमवचनं प्रदर्शनार्थम् एव भवति। तत्रापार्ष्ठिकेष्वेव[20] अस्वस्तोमेषु[21] सर्वस्तोमसंज्ञा छन्दोगानां, नान्येषु स्तोमेषु, षट्स्विव पार्ष्ठिकेषु[22] पृष्ठेषु[23] सर्वेषु पृष्ठसंज्ञा,[24] नान्येषु, छन्दोगविषये सिद्धाभिरिह संव्यवहार उक्तो विधिः सर्वस्तोमेषु[25] सर्वपृष्ठेषु[26] च ॥१७॥

इदानीं सर्वपृष्ठेष्वेव[27] अधिको[28] विधिर्वक्ष्यते।[29]

[सर्वपृष्ठेषु पृष्ठसूक्तानां विधानम्]

**सामसूक्तानि सप्रगाथानि सर्वपृष्ठेषु पृष्ठानि ॥ १८ ॥**

[29]सर्वपृष्ठेषु क्रतुषु[29] सामसूक्तानि पुरस्तात् सूक्तानां ससंमितानि विश्वजिति वक्ष्यन्ते[30]। सप्रगाथानि च पृष्ठानि[31] शंसति, यथा विश्वजिति। तथा

---

१-१ °यापतिवतिवच° ब[1]। २-२. अधिक प्रावा(°या मै) मित्रा° मूको। ३-३. °यप्रा° मूको। ४. अन्यस्य मूको। ५. भवन्ति मूको। ६. नास्ति मै। ७. आदितो भवन्तीत्यु° मूको। ८-८. °यानो (°नि मै)। त्याह्निको (°को मै) का° मूको। ९. आद्रियन्ते मूको। १०. तयोपहव्युष्टि° ब[1]; तृतीयसहर° मै। ११. भूयते मूको। १२. °हाः मूको। १३. प्रकृतेरेव (°वं मै) मूको। १४. °न्निति-ताच्च ब[1]। १५. °नकामानाम° ब[1]; °नकानाम° मै। १६. अहीनवे (°के मै) षु मूको। १७. स वंस्तोमा मूको। १८. वा मै। १९. °धान ब[1]। २०. तत्रा पार्श्वके° ब[1]; तत्र पार्श्वके° मै। २१. आश्व° ब[1]; अश्व° मै; द्र. निसू ६,९:५। २२. षड्स्वेव मै। २३. षष्ठेषु मै। २४. संज्ञा ब[1]; षष्ठसंज्ञा मै। २५. द्वे स्तोमेषु मूको। २६. सर्वषष्ठेषु मै। २७. सर्वषष्ठेस्वेव मै। २८-२८. अधिवंक्ष्यते ब[1] २९-२९. नास्ति मै। ३०. द्र. आश्वौ ८,७,१०। ३१. षष्ठ्यानि मै।

विश्वजित्युक्तो विधिरन्यत्र न प्राप्नोति। तस्मात् सर्वत्र सर्वपृष्ठेषु[1] प्राप्त्यर्थोऽयमारम्भः। सामसूक्तानि विश्वजित्याम्नातानि तान्येव[2] सर्वत्र, संभवन्ति[3] तदेव, स्थाने सप्रगाथानीति न[4] वक्तव्यं **पृष्ठ्य एवैकैकमन्वहम्** (आश्वौ ७, ३, २०) इति वचनात् पृष्ठ्यादन्यत्र सामान्वयिनो[5] भवन्ति। अर्थादापत्तिस्तस्मात् सामसु[6] प्रयुज्यमानेषु सामप्रगाथा प्राप्ता एव होतुः पृष्ठस्थाने क्रियमाणानां "साम्नां ये[7] सामप्रगाथाः[8] 'प्राप्नुवन्ति, ते होत्रकाणां[9], तस्माद्धोत्रकाणामपि पृष्ठस्थाने क्रियमाणानां साम्नां सामप्रगाथाः। तत्प्राप्त्यर्थोऽयमारम्भः[10]। विश्वजिति त्वारम्भः सामप्रगाथानां स्थाने विवक्षार्थः। तस्मात्तदेव स्थानमन्यत्रापि। पुनरेव पृष्ठग्रहणं सर्वस्तोमाधिकारनिवृत्त्यर्थम् ॥१८॥

[पृष्ठ्यषडहेऽह्नां संस्थाक्रमस्य कथनम्]

**पृष्ठ्ये संस्थाः ॥१९॥**

व्याख्यातः पृष्ठ्यः षळहः। तस्मिन्नह्नां[11] संस्था वक्ष्यन्ते[12]। प्रकृतौ ज्योतिष्टोमिकानां[13] संस्थानियमस्तद्व्याख्या[14] तेष्वपि तद्वदेव[15] संस्थानियमे प्राप्ते तन्निवृत्त्यर्थमिह[16] पुनश्चतुर्विंशादिषु संस्था नियम्यन्ते। चतुर्विंशेऽभिप्लवे चोक्थ्याः संस्थाः। इदानीं पृष्ठ्या[17] वक्ष्यन्ते। अतः[18] पुनः पृष्ठ्यग्रहणम् अन्येषामह्नामधिकारादित[19] ऊर्ध्वं याः वक्ष्यन्ते संस्थास्ताः[20] पृष्ठ्यस्य वेदितव्याः ॥१९॥

[संस्थाकथनम्]

**अग्निष्टोमः प्रथमं षोळशी चतुर्थमुक्थ्या इतरे ॥२०॥**

[21]"अग्निष्टोमः प्रथमं पृष्ठ्यस्य[21] प्रथममहरग्निष्टोमो भवति। षोळशी चतुर्थं पृष्ठ्यस्य चतुर्थमहः षोळशीसंस्थं[22] भवति। उक्थ्या इतरे। पृष्ठ्ये[23] प्रथमाच्चतुर्थाच्चेतरे ये[24] पञ्च [25]दिवसाः, ते उक्थ्यसंस्था[25] वेदितव्याः। [26]द्वितीयतृतीयपञ्चमाः पृष्ठ्याः[26] उक्थ्या[27] अभिप्लवे, [28]ता इह उक्थ्यसंस्थाः प्राप्ताः[28]

---

१. सर्वषष्ठेषु मै। २. तन्य ब' ३. भवन्ति मै। ४. नास्ति ब' ५. समा° मूको। ६-६. समासु मूको। ७. सनाम्नाय मूको। ८-८. °प्रगा ब'। ९. °वन्ति तं हो° ब'; °वन्तीत्यहो° मै। १०. न प्राप्त्यर्थोऽयमारंभः विश्वजिति ब'; न प्राप्त्यर्थोऽयमारम्भविश्वजिति मै। ११. तस्मिन्नह्ना (°न्नन्ह्ना ब') मूको। १२. °क्ष्यते मूको। १३. °ष्टोमका° ब'। १४. संस्थानियमसमस्तद्व्याख्यो तष्वपि ब'। १५. कामदेव मूको। १६. °त्यर्थः मिह मूको। १७. अष्टौ मै। १८. स मूको। १९. °मन्नामधिकां° ब'। २०-२०. स्थाताः ब'; संख्याताः मै। २१. अग्निष्टोम पृथक् पृष्ठस्य (षष्ठस्य मै) मूको। २२. °शीसंस्थो मूको। २३. °ष्ठ्ये ब'। २४. नास्ति मूको। २५-२५. यदि वताः ते उक्थ्या संस्था मै। २६-२६. °पञ्चमषष्ठ्या ब'; °पञ्चमं षष्ठ्या मै। २७-२७. उक्था ब'। २८. तानिवशा संस्था प्राप्ता मूको।

न वक्तव्याः[1]। षोळशी चतुर्थमित्येतावदेव वक्तव्यम्। वक्तव्याः[2] एव संस्थाः। [3]ज्योतिष्टोमे नोक्तानि[3], व्याख्यातानि [4]तानि अभिप्लवे[4], उक्थ्येषु विशेषे विधानाभावात् ॥२०॥

[प्रत्यक्षपृष्ठसंज्ञाकरणम्]

**इति पृष्ठ्यः। प्रत्यक्षपृष्ठः ॥२१॥**

इति पृष्ठ्य एवं क्लृप्तः [5]पृष्ठ्यः प्रत्यक्षपृष्ठो नाम[5] वेदितव्यः। प्रत्यक्षाणि षट् पृष्ठानि[6] क्रियन्ते, स्वास्वृक्षु रथन्तरादीनि सामानि गीयन्ते। [7]संज्ञानां ज्ञाने[7] धर्मः संव्यवहाराभावात्। पुनः पृष्ठ्यग्रहणं पृष्ठ्यस्याधिकारान्त्यत्वात् संज्ञाविवक्षार्थम्[8] ॥२१॥

[परोक्षपृष्ठसंज्ञाकरणम्]

**अन्यैः परोक्षपृष्ठः ॥२२॥**

अन्यैः सामभिः क्रियमाणे परोक्षपृष्ठो[9] नाम भवति। अनन्तरादिषु षट्सु पृष्ठेषु प्रत्यक्षपृष्ठसंज्ञा, अन्येषु पृष्ठेषु परोक्षपृष्ठसंज्ञा ॥२२॥

[ऋगन्तरसम्बद्धैरेतैः पृष्ठकार्ये परोक्षपृष्ठसंज्ञाकरणम्]

**एतैर्वोपसृष्टैः[10] ॥२३॥**

एतैरेव वा[11] रथन्तरादिभिः शब्दान्तरेणोपसृष्टैः[12] क्रियमाणैः। वा-शब्दः[13] परोक्षप्रत्यक्षसंज्ञासमुच्चयार्थः। यथा कं च रथंतरं रथंतरं कं च-शब्देनोपसृष्टं तथा कं च-शब्दहृतम्[14] अवैरूपं च शिष्टवैराजं च शिष्टस्य [15]शाक्वरं वा[15] रैवतमेवमेतैः परोक्षपृष्ठो[16] भवति ॥२३॥

[पृष्ठ्यस्तोमसंज्ञाकरणम्]

**वैरूपादीनामभावे पृष्ठ्यस्तोमः ॥२४॥**

वैरूपवैराजशाक्वररैवतानामसत्त्वे [17]पृष्ठ्यस्तोमो[17] नाम भवति। [18]बृहद्रथन्तरपृष्ठ्य एव भवति। पृष्ठ्यस्तोमो[18] (आश्वौ १०,३,१५) इत्युक्त एतस्य ग्रहणम् ॥२४॥

[आपवर्यपृष्ठ्यसंज्ञाकरणम्]

**पवमानभाव आपवर्यपृष्ठ्यः ॥२५॥**

वैरूपादीनि चत्वारि [19]पवमाने भवन्ति[19] स आपवर्यपृष्ठ्यो भवति ॥२५॥

---

१. °व्या मूको। २. °व्य मूको। ३-३. °ष्टोमो नोक्तानि मै। ४-४. ताभिप्लवे (°वते मै) मूको। ५. प्रत्यक्षो (°क्षा मै) नाम मूको। ६. पृष्ठ्यानि ब[1]; षष्ठ्यानि मै। ७-७. सप्तानां शताने ब[1]; सप्तानां ज्ञाने मै। ८. °क्षार्थे मै। ९. परोक्षं पृष्ठो (°ष्ठ्यो मै) मूको। १०. एतैश्चनोप° ब[1]; एतैश्च नोपपृष्ठैः मै। ११. नास्ति मूको। १२. शब्दान्तरे (शंबातरे ब[1]) नोपदिष्टैः मूको। १३. नास्ति मूको। १४. वृहत मै। १५-१५. साक्षरं गचा मै। १६. परोक्षपृष्ठ्या ब[1]; परोक्षं पृष्ठ्यो मै। १७. रवत (°ता मै) नामरुतपृष्ठ्या (°ष्ठ्य मै) स्तोमो मूको। १८-१८. तरपृष्ठ्यस्तोम मै। १९-१९. पवमानो भवति मै।

[तनूपृष्ठ्यसंज्ञाकरणम्]

**तनूपृष्ठ्यो होतुश्चछ्यैतनौधसे ॥२६॥**

तनूपृष्ठ्यो नाम भवति होतुः पृष्ठे[1] चेत् श्यैतं च नौधसं च श्यैतनौधसे सामनी भवतः। प्रकृतौ होत्रकयोरेते सामनी। तस्माद्धोतुर्ग्रहणात् ते चेत् सामनी होतुः पृष्ठस्थाने[2] भवत इति। चेदित्यनित्यभावे[3], एवमेते पृष्ठ्याधिकारादुक्ताः[4]। अन्येऽपि बहव एवंप्रकाराः सन्ति छन्दोगानाम्। आचार्येण प्रदर्शनार्थमेत उक्ताः। एते गवामयनविकल्पेषु[5] प्रयुज्यन्ते ॥२६॥

॥ इत्यष्टमे चतुर्थः खण्डः ॥

१. षष्ठ्ये ब'; पृष्ठ्ये मै। २. पृष्ठ्यस्थाने मूको। ३. चेन्नि-(चेनि ब') त्यनित्याभावे मूको। ४. °कारानुक्ताः ब'; °कारा उक्ताः मै। ५. °यननि (°धि ब') कल्पेषु मूको।

# अष्टमेऽध्याये पञ्चमः खण्डः

[अभिजिन्नाम्नो बृहत्पृष्ठस्य संज्ञाकरणम्]

**अभिजिद् बृहत्पृष्ठः ॥१॥**

**अथ षष्ठं संभरन्ति[1]** । **त्रीनभिप्लवान् पृष्ठ्यमभिजितं स्वरसाम्नः** (आश्वौ ११,७,३;४) इति षष्ठो मासः । तस्मिन् पृष्ठ्यादनन्तरम् अभिजिद् भवति । अभिजिन्नाम बृहत्पृष्ठो[2] वक्ष्यते । अभिजिदित्युक्त एतस्य ग्रहणम् । **एतेनाह्ना सुत्यानि** (आश्वौ ७, १,३) ऐकाहिकशस्या विशेषा वक्ष्यन्ते । ऐकाहिके आज्य-प्रउगे[3] । होत्रकाणां '[4]स्तोत्रियानुरूपारम्भणीया परिशिष्टावापाः[4] पर्यासाः । ऐकाहिको मरुत्वतीयस्यातानः । स[5] बृहत्पृष्ठः । प्रकृतौ ज्योतिष्टोमे रथंतरं बृहद्वेति विकल्पः । तेनातिदेशादिह विकल्पे अविकल्पार्थं[6] बृहत्पृष्ठ इत्युच्यते ॥१॥

[अभिजित उभयसामत्वम्]

**उभयसामा यद्यपि रथंतरं यज्ञायज्ञीयस्य स्थाने ॥२॥**

अभिजिदुभयसामा भवति, यद्यपि रथंतरं साम यज्ञायज्ञीयस्य स्थाने क्रियते, यद्यपि पवमाने क्रियते । उभयसामत्वान्निष्केवल्ये योनिशंसनं भवति । प्रकृता उक्तम् स यदुभयसामा यः पवमाने तस्य "योनिरनुरूपः योनिस्थान एवैनामन्यत्र" शंसेत् (आश्वौ ५,१५, १६-१७) इति । पवमानादन्यत्र साम्नि क्रियमाण उभय-सामसंज्ञा[8] न प्राप्नोत्युभयसामसंज्ञाभावात् । निष्केवल्ये योनिशंसनं न प्राप्नोति । यथा प्रकृतावेवं विकृतावपि प्राप्त इदमुच्यते उभयसामा यद्यपि रथंतरं यज्ञा-यज्ञीयस्य स्थाने इतीदं प्रदर्शनम् । अस्मात् प्रदर्शनादन्येष्वहस्सु पवमानादन्येषु सामसु साम्नि क्रियमाणे उभयसामा[9] भवति । यथा वाजपेयेऽतिरिक्तोक्थ्ये बृहद् भवति । उभयसामत्वाद् "[10]बृहतो योनिर्निष्केवल्ये[10]" शस्यते[11] । यस्मिन् स्तोत्रिये साम क्रियते, तस्य योनिरस्मिन्नेव शस्त्रे प्राप्ता, यथाऽऽश्विने । एवं प्राप्त उभयसामत्वान्निष्केवल्ये योनिशंसनं भवति ॥२॥

---

१. भरन्ति मूको । २. बृहत् मूको । ३. आज्ये प्रउगे मूको । ४-४. °णीयपरिशिष्टा वा मूको । ५. ध ब'; नास्ति मै । ६. अधिक° मै । ७-७. नास्ति मूको । ८. उभयसामत्वं संज्ञा ब' । ९. °सामाम ब' । १०-१०. बहतः यो निष्केवल्ये ब'; बृह यो निष्के° मै । ११. शिष्यते मूको ।

[पिबवतः सामप्रगाथस्य कथनम्]

**पिबवांस्त्विह सामप्रगाथः ॥३॥**

इह त्वभिजिति बृहत्पृष्ठे **पिबा सुतस्य** (ऋ ८, ३, १) सामप्रगाथो भवति। **मा नः स्तरभिमातये** (ऋ ८, ३, २) इत्यभिलिङ्गोऽभिजितो भवति। तु-शब्दः प्राप्तव्यावृत्त्यर्थः। बृहत्पृष्ठ 'उभयवान् न प्राप्तः', इहेति। इहैव पिबवान् भवति, अन्यत्र बृहत औभयसाम्यमेव[1], इह 'उभयं प्रदर्शितम्[2]'। औभयसाम्यमन्यत्रापि भवति। एवमिदमपि प्रदर्शनं न स्यात्, तस्मादिहेत्याह। इहैव बृहतः पिबवान् सामप्रगाथो भवति। अन्यत्र औभयसाम्यमेव[4] ॥३॥

[माध्यंदिनशस्त्रशंसनम्]

**'पिबा सोमं', 'तमु ष्टुहि' इति मध्यंदिनः ॥४॥**

**पिबा सोमम्** (ऋ ६,१७), **तमु ष्टुहि** (ऋ ६, १८) इति मध्यन्दिनः[5]। **मध्यंदिन इत्युक्त एते शस्त्रे प्रतीयात्** (आश्रौ ७,५,१९)। ऐकाहिकयोः स्थान एते भवतः। **पिबा सोममभि** इति मरुत्वतीयं[6] सूक्तम्, **तमु ष्टुहि** इति निष्केवल्यम्[7]। तत्र **पिबा सोमम** इति द्वयोः सूक्तयोः (ऋ ६,१७;१०,११६) समानं प्रतीकम्। पूर्वत्वाद भारद्वाजं भवति निष्केवल्यसूक्तेन[8] समास्यत्वात्[9] समासेनैकत्वाच्च, उभयेऽपि यथा दर्शनाच्च, एवमादिसादृश्याच्च। उभयोः प्रथमे पादेऽभिलिङ्गमस्ति। न चैतद सूक्तं मरुत्वतीयं मरुच्छब्दाभावात्। तस्माद् भारद्वाजमेव कार्यमित्येके। अपरे पुनः **पिबा सोमं महते** (ऋ १०,११६,१) इत्येतदेव[10] शंसन्ति। छन्दोगेषु **पिबा सोममभि** (ऋ ६, १७) इति विशेषवचनादिह विशेषाभावादवशिष्टं यत् सूक्तं "तद् भवति[11]"। अभिलिङ्गं[12] चाऽस्ति[13]— **ओजः स्थिरेव धन्वनोऽभिमातीः** (ऋ १०, ११६, ६) इति, **वावृधानः सहोभिः** (ऋ १०, ११६,६) इति। मारुती विधीयते, अन्त्या च मारुती, तस्मान्मरुत्वतीयम् ॥४॥

[माध्यन्दिनसूक्तयोः पुरस्तात् शंसनीयसूक्तयोः सविकल्पं कथनम्]

**तयोरैकाहिके पुरस्तादन्ये वा शंसेयुः ॥५॥**

तयोः सूक्तयोः पुरस्तादैकाहिके शंसेयुः **जनिष्ठा उग्रः** (ऋ १०, ७३), **इन्द्रस्य** (ऋ १,३२) इतिः अन्ये वा तल्लिङ्गे सूक्ते शंसेयुः। **पिबा सोमं महते** (ऋ १०,११६), **इन्द्रं स्तवा** (ऋ १०, ८९) इत्येते सूक्ते अभिलिङ्गे। इदमपि प्रदर्शनार्थमेव। एवमन्यत्राप्यावापः कर्तव्यः। यल्लिङ्गं निविद्धानीयं, तल्लिङ्गा-

---

१-१. उभयवानप्राप्ते मै। २. उभयसाम्यमेव मूको। ३-३. उभयप्रद° मूको। ४. उभयसामेव (°म्येव ब[1]) मूको। ५. नास्ति ब[1]। ६. °तीये मूको। ७. °ल्ये ब[1]। ८. °ल्येसू° मूको। ९. समासस्यत्वात् मै। १०. °दिव ब[1]। ११-११. न भवति ब[1]। १२. अतिलिङ्ग मूको। १३. वा ऽस्ति ब[1]।

न्येव सूक्तानि । आवापः कर्तव्यः । यदि तल्लिङ्गानि नोपलभ्यन्ते ततः[1] ऐकाहिके भवम् अनयोः सर्वार्थत्वादेकाहस्य । कथं प्रयोगः । ऐकाहिको मरुत्वतीयस्यातानः । **पिबा सोमं महते** (ऋ १०, ११६), **पिबा सोममभि**[2] (ऋ ६, १७) इति सूक्ते, इति मरुत्वतीयम् । स्तोत्रियानुरूपौ[3], रथंतरस्य योनिः, पिबवान् सोमप्रगाथः, **इन्द्रं स्तवा** (ऋ १०, ८९), **तमु ष्टुहि** (ऋ ६, १८) इति सूक्ते निष्केवल्यम् । शंसेयुरिति वचनाद् होत्रका इति । ऊर्ध्वमष्टर्चेभ्य[4] ऐकाहिकानि शंसेयुः, अन्यानि वैन्द्राणि त्रैष्टुभान्यमरुच्छब्दानि[5] । एतदावापविधानं होतुः प्रकरणे-नोक्तं प्रदर्शनार्थम् । बहुवचनाद्धोतुश्च होत्रकाणां च भवति ॥५॥

[गौतममते पूर्वोक्ताऽऽवापनिषेधः]

**एते एवेति गौतमः सप्तदशत्वात् पृष्ठस्य ॥६॥**

**पिबा सोमम्** (ऋ ६, १७), **तमु ष्टुहि** (ऋ ६, १८) इत्येते एव सूक्ते शंस्तव्ये, आवापो न कर्तव्य इत्येवं गौतम आचार्यो मन्यते । कस्माद्धेतोरिति[6]? सप्तदशत्वात् पृष्ठस्य । [7]पृष्ठे हि[7] सप्तदशः स्तोमः । सप्तदशे तु स्तोमे एकमेव सूक्तं शस्यते ॥६॥

[निष्केवल्यस्य स्तोत्रियानुसारेण माध्यंदिनसूक्तसंख्यानियमः]

**यावत्यो यावत्यः कुशानां नवतो दशतो वा निष्केवल्ये तावतिसूक्ता मध्यंदिनाः स्युरिति महान्यायः ॥७॥**

प्रकृतौ ज्योतिष्टोमे पृष्ठ्यस्य च तृतीयेऽहनि अभिप्लवे च निष्केवल्यस्य स्तोत्रियाः कुशाः, तासां कुशानां नवतः दशतो वा, गण्यमानानां यावत्यो यावत्यः संपद्यन्ते, तावन्ति सूक्तानि निष्केवल्ये तावतिसूक्ता मध्यंदिनाः स्युः भवन्ति । **मध्यंदिन इत्युक्ते एते[8] शस्त्रे प्रतीयात्** (आश्वौ ७, ५, १९) । कुशानां यावन्तो नवका दशका वा तावन्ति सूक्तानीत्यर्थः । इति महान्यायः । इत्ययं[9] "[10]महति विषये[10]" न्यायः । प्रथमादन्येष्वहःसु सर्वत्रायं न्यायः । तस्मान्महति[11] विषये न्यायो महान्यायः "[12]इति । अपरस्तु[12]" अल्पविषये न्यायः । स आचार्येण कल्पितः, सप्तदशे[13] स्तोमे द्वे सूक्ते भवत इतीति । अष्टमेऽहनि पञ्चमो नवक एकया पूर्यते, पञ्च सूक्तानि कल्पितानि । अयं न्यायोऽस्मिन्नहनि न[14] दृश्यते, तस्मान्महान्यायो भवति । सप्तदशेऽपि[15] द्वितीयो नवकः एकया पूर्यते[16] । सूक्ते क्लृप्ते अल्पत्वात्[17] स आचार्येण[18] गौतमेन प्रतिषिद्धः । अल्पविषयत्वात् **एते एव** (आश्वौ ८,५,६) इति वचनान्निविद्धाने[19] भवत्यावापः[20] । गौतमग्रहणाद् विकल्पः ।

१. तन्नः ब[1] । २. सोममहि मूको । ३. मरुत्स्तोत्रि° मूको । ४. द्र. आश्वौ ७,१२,१ । ५. द्र. आश्वौ ७,१२,२ । ६. तस्माद्ध (°द्धो ब[1]) तोरिति मूको । ७-७. पृष्ठेऽहि मैं । ८. नास्ति मूको । ९. इतोयं ब[1]; इतीयं मैं । १०-१०. प्रहता विष्कये ब[1] । ११. तस्महती ब[1]; तस्मान्महती मैं । १२-१२. इत्यपरस्तु मूको । १३. °दशमे मूको । १४. त ब[1] । १५. °शेति मूको । १६. न पूर्यते मैं । १७. अल्पवान् मैं । १८. °र्यो ब[1]; °र्ये मैं । १९. वचनानविद्धानो ब[1]; वचनान्नविधाने मैं । २०. भवतावापः ब[1]; भवति तावापः मैं ।

सप्तदशत्वादिति हेतुवचनान् न्यायप्रदर्शनाच्चोत्तरपक्षो भवति। पूर्वपक्ष एवान्तकालाकल्पित आचार्यकल्पत्वाद्[1] विशेषा बलीयान्। महान्यायः सामान्यविधिर्महाविषयत्वाद्, इतरस्तु विशेषविधिरल्पविषयत्वाद्। विशिष्टं च न्यायमुपदिशति[2]। आवापे कृते सदृशौ पक्षौ भवतः। उत्तरपक्षे विश्वजिति द्विसूक्तो[3] मध्यंदिनः। पूर्वे[4] पक्षेऽप्यभिजिति द्विसूक्त[5] एव मध्यंदिनः सदृशत्वाद्, यथा महाविषयत्वादष्टमेऽहनि[6] चतुश्चत्वारिंशे पञ्च सूक्तानि, महान्यायोऽपि[7] श्रुतिवचनमितरोऽपि श्रुतिवचनमेव। तत्र[8] पञ्च सूक्तानि शस्यन्त इति। यदि च महाविषयो विधिः प्रमाणमितरश्च प्रमाणम्, अत आवापः अल्पविषयत्वाद्[9] विधिं कल्पयतीति। यथा नवतो दशतः कुशा इत्याह। न हि दशतः प्रयोगो दृश्यते। निनर्देष्वनुदात्ततरः स्वरतो वा इत्युक्तम्[10]। स्वरित एव सर्वत्र प्रतिगरेषु आम्नातः[11], न बहुविषयप्रयोगादितरस्य विधिः। तस्मात् सामान्यविधानाद्विशेषः। "[12]स बलीयस्त्वात्तु[12] "आचार्यपक्ष एव न्यायः, तस्माद् द्विसूक्ते[13] एव भवतः[14]। निष्केवल्यग्रहणान्निष्केवल्ये[15] यत् परिसंख्यानं क्रियते तन्मरुत्वतीये। मध्यंदिनग्रहणान् मध्यं मरुत्वतीयं भवति। यावन्ति सूक्तानि निष्केवल्ये, तावन्त्येव "[16]मरुत्वतीये भवन्ति[16]"। महान्याय इति विख्यातम्। यथैव[17] होत्रकाणामवच्छसन[18] प्राप्तं तथैव होतुरपि प्राप्ते तावन्ति[19] सूक्तानीति सूक्तावापो[20] विधीयते ॥७॥

[मरुत्वतीयसूक्तस्योत्तमयोर्ऋचोर्वैपरीत्यम्]

**मरुत्वतीयस्योत्तमे विपरीते ॥८॥**

मरुत्वतीयस्य सूक्तस्योत्तमे ऋचौ विपरीते भवतः। उत्तमामुपसन्धायोपोत्तमया[21] परिधानं **स नो वाजाय** (ऋ ६,१७,१४) "[22]इत्येतया। **अया वाजम्**[22] (ऋ ६.१७,१५) इति द्विपदया परिधानप्रतिषेधार्थमिदमुच्यते। यदीतरं[23] सूक्तं शस्येत तस्मिन्नन्त्यो[24] मरुत्वतीयाद्विपर्यासो[25] भवति, यथा कयाशुभीये, अक्षीदिन्द्र (ऋ १०, ११६, ८) इत्येतया परिधानं न भवति। होत्रकाणां

---

१. 'र्यकल्पत्वात् ब'। २. °शान्ति मूको। ३. द्वे सूक्ते मूको। ४. पूर्वं ब'। ५. द्विसूक्तम् ब'; द्विरुक्तम् मै। ६. महापविष्टमेष्टहमेनि ब'. महापिदृष्टवाप्तमेऽहनि मै। ७. °योविपि ब'। ८. पञ्च मूको। ९. अल्प अविपत्वात् ब' १० द्र. आश्रौ ७,११,१२;१६। ११. आम्नात (°ता मै) मूको। १२-१२. स ब लोपस्ता तु ब'; सबलीयस्त्वा तु मै। १३. आचार्यपक्षमेवं न्यायस्तु (न्याय त मै) स्माद् द्वि° मूको। १४. भवति ब'। १५. तं नि° ब'। १६-१६. °तीयं भवति ब'। १७. यत्रैव ब'। १८ °णामचच्छसनं ब'। १९. भवन्ति मूको। २०. वापे मै। २१. °मुप सन्दध्योपोत्त° मूको। २२-२२. नास्ति मूको। २३. यदीवर ब'। २४. तस्मि नत्यो ब'। २५. मरुत्वतो यदि पर्यासो ब'।

स्तोत्रियानुरूपप्रगाथारम्भणीयाहीनसूक्तान्यहरहः शस्यानि । 'अभीवर्त-योनिः† अभिप्लवद्वितीयेऽहनि अभिप्लवाः॥ स्तोत्रियेणैवानु॑शस्ता' भवन्तीत्यभिप्रायः[1] । अयमपि स्तोत्रियोऽभीवर्तयोनिरेव । अभिप्लवस्य द्वितीयेऽहनि अभि प्र वः सुराधसम् (ऋ ८, ४६, १) इत्यस्मिन्[3] 'प्रगाथेऽभीवर्तब्रह्मसाम'[4] भवति, आद्यसम्बन्धादेव[5] । तदुक्तं श्लोकेषु—

अभिजिद्विषुवतोश्च सर्वत्रशंस्तव्ये 'तस्मात् ।
चातुर्विशतिके तयोः[6] पृष्ठग्रहणात्[7] तत्सिद्धम् ।
संख्या-सम्बन्धात् षळह आद्यसम्बन्धादेतयोः ॥ इति ॥८॥

[तृतीयसवनस्य चातुर्विंशिकत्वम्]

**चातुर्विंशिकं[8] तृतीयसवनम् ॥९॥**

चतुर्विंशे भवं चातुर्विंशिकम्[9] ऐकाहिकः आतानः[10] **'उदु ष्य देवः सविता हिरण्यया'** (ऋ ६,७१,१-३) **इति तिस्रः, 'ते हि द्यावापृथिवी'**, (ऋ १,१६०), **'यज्ञस्य वो रथ्यम्'** (ऋ १०,९२), **इति वैश्वदेवम्** (आश्रौ ७, ४,१२), **पृक्षस्य वृष्णः** (ऋ ६,८,१), **वृष्णे शर्धाय** (ऋ १, ६४,१), **यज्ञेन वर्धत** (ऋ २,२,१), **इत्याग्निमारुतम्** (आश्रौ ७, ४, १३) । भौवदस्या[11] अग्निष्टोमोऽयम्[12] । अभिप्लवतृतीयमहः ॥९॥

अभिजिद् व्याख्यातः । इदानीं स्वरसामानो वक्ष्यन्ते—

[अभिप्लवस्य पूर्वत्र्यहस्य स्वरसामसंज्ञात्वम्]

**अभिप्लवत्र्यहः पूर्वः स्वरसामानः ॥१०॥**

अभिप्लवस्य पूर्वः[13] त्र्यहः[14] स्वरसामानो भवन्ति । संज्ञा चेयं आवृत्ताः **स्वरसामानः** (आश्र ८, ६ २५) इत्युक्त एते स्वरसामानः प्रत्येतव्याः । पूर्व इति वचनादुत्तरो न भवति ॥१०॥

[साम्नां पृष्ठत्वम्]

**स्वराणि त्विह पृष्ठानि[15] ॥११॥**

इह तु स्वरसामसु स्वराणि सामानि पृष्ठानि[16] भवन्ति, तानि वक्ष्यन्ते । तु-शब्दः प्राप्तव्यावृत्यर्थः । बृहद्रथन्तरे प्राप्ते इह-वचनादिह स्वराण्येव भवन्ति, न बृहद्रथन्तरे । यदि "समुच्चयार्थं इष्टः स्यात् स्वराणि चेह[17] प्राप्नोतीति ब्रूयात् । समुच्चयाभावात् स्वराण्येवेह भवन्ति, न[18] बृहद्रथन्तरे ॥११॥

---

१-१. अभीवर्त्तयोनि अन्विकल्पेनास्य कल्पिताः स्तोत्रियेणैवाशु शस्ता मै । †. °योनि ब' । ॥. °प्लव ब' । ॰. °णैवाशु ब' । २. °भिप्रामियः ब' । ३. इत्येतस्मिन् मै । ४-४. °थे योवर्तं ब्रह्म° ब'; प्रगादे ही वर्तं ब्रह्म° मै । ५. अद्यसं° मै । ६-६. तस्माच्चतुर्विशतिकतयोः मै । ७. पृष्ठाग्र° मै । ८. चातुर्विशतिकं मै । ९. °विंशकम् मै । १०. नास्ति ब' । ११. भौतवदस्या मै । १२. °ष्टोमोप ब' । १३. अभिप्लवहः ब' । १४. पूर्वस्याहः मै । १५. पृष्ठ्यानि मूको । १६. पृष्ठ्यानि मै । १७-१७. समुच्चया इष्टत्वात् स्वराणि (स्वस्रराणि) विह (चेह मै मूको । १८. नास्ति मै ।

[स्वराणां स्तोत्रियाणां कथनम्]

**तेषां स्तोत्रियाः 'यज्जायथा अपूर्व्य', 'मत्स्यपायि ते महः', 'एमेनं प्रत्येतन' इति ॥१२॥**

तेषां स्वराणां स्तोत्रिया वक्ष्यन्ते । **यज्जायथाः** (ऋ ८, ८९, ५-७), **मत्स्यपायि ते** (ऋ १, १७५, १-३), **एमेनम्** (ऋ ६, ४२, २-४) इति त्रिष्वहः-स्वनुक्रमेण स्तोत्रिया एकैका एकैकस्मिन्[1] । न क्वचिदप्येता[2] आम्नाताः, तस्मादुच्यन्ते । छन्दोगप्रत्ययात्[3] तृचा भवन्ति । तृतीये तु **प्रत्यस्मै पिपीषते** (ऋ ६, ४२, १-२) इति द्वे, **अस्मा**[4] **अस्मा इदन्धसः** (ऋ ६,४२,४) इत्येका, स्तोत्रियः छन्दोगवशात् ॥१२॥

[आद्यस्तोत्रियस्य सर्वेषां साम्नां स्तोत्रियत्वमिति विकल्पः]

**आद्यो वा सर्वेषाम् ॥१३॥**

आद्यो वा स्तोत्रियो भवति सर्वेषां साम्नाम् ॥१३॥

[स्तोत्रियाणामनुरूपाणां कथनम्]

**'वयं घ त्वा सुतावन्तः,' इति तिस्रो बृहत्यः, 'यस्ते साधिष्ठोऽवसे' इति षडनुष्टुभ इत्यनुरूपाः ॥१४॥**

**वयं घ त्वा सुतावन्तः** (ऋ ८,३३, १-३) इत्येतास्तिस्र ऋचो बृहत्यः । पादग्रहणात् तिस्र इत्याह । बृहत्य इत्युत्तरसूत्रार्थम् । **स्तोत्रिये यथा युक्ता बृहती** (आश्रौ ८,५,१५) इत्युक्त एता एव भवन्ति, नान्याः । **यस्ते साधिष्ठोऽवसे** (ऋ ५,३४,१-६) इत्येताः षड् ऋचोऽनुष्टुभः । पादग्रहणात् षळित्याह । अनुष्टुब्ग्रहणाद् यथा स्तोत्रियेऽनुष्टुभौ[5] युक्ते तथानुरूपे[6]ऽपि भवतः । इत्यनुरूपा इत्येते त्रयस्तृचा अनुरूपास्तेषां स्तोत्रियाणाम् । एतेऽनुरूपास्तिस्रो बृहत्यः, षडनुष्टुभस्त्रयस्तृचा भवन्ति । एकैका[7] बृहती द्वे द्वे चानुष्टुभौ तृचा भवन्ति त्रयः । 'तथाऽऽदिष्टं भवति' प्रथमा बृहत्युत्तरे द्वे अनुष्टुभाविति । एवं तृचा अनुरूपाः । तस्मादिदमुच्यते ॥१४॥

[बृहत्या ऋचो यथा स्तोत्रिये प्रयोगस्तथैवानुरूपेऽपि कर्तव्यः]

**स्तोत्रिये यथा युक्ता[9] बृहती तथाऽनुरूपे ॥१५॥**

स्तोत्रिये यथा बृहती युक्ता प्रथमा मध्यमोत्तमा वा तथा अनुरूपेऽपि[10] बृहती भवति । "इतरे चानुष्टुभौ" । एवं तृचा अनुरूपाः कल्प्याः[12] **यज्जायथाः**

---

१. एकस्मिन् मूको । २. °चिदप्राप्ता मूको । ३. °या ब[1] । ४. नास्ति मै । ५. द्र. ऋ ८, ८९, ५;६, ४२, २ । ६. तस्मादनु° मूको । ७. एका ब[1]; एकाहिका मै । ८-८. यथादिष्टं भवन्ति मूको । ९. उक्ता ब[1] । १०. नास्ति ब[1]; यथा मै । ११-११. इत एव नुष्टुभौ ब[1]; इतरावनुष्टुभौ मै । १२. कल्पाः मूको ।

(ऋ ८, ८६, ५-७; कौ ६०१; १४२६) इत्येतस्मिन् स्तोत्रिये 'तृतीया बृहती' भवति। **यस्ते साधिष्ठः** (ऋ ५,३५,१-२) इति द्वे, **वयं घ त्वा** (ऋ ८,३३,१) इत्येका च अनुरूपः। **मत्स्यपायि ते** (ऋ १,१७५,१-३) इत्येतस्मिन्नाद्या बृहती[1]। अनुरूपेऽप्याद्या एव भवति। **स्वरन्ति त्वा** (ऋ ८, ३३, २) इति बृहती, **आ ते ऽवो वरेण्यम्** (ऋ ५,३५.३-४) इति द्वे अनुष्टुभौ, इत्यनुरूपः। **प्रत्यस्मै** (ऋ ६, ४२, १-३) इत्येतस्मिन् स्तोत्रिये[2] तृतीया बृहती। **अस्मा अस्मा इदन्धसः** (ऋ ६, ४२,४-६) इत्यनुरूपे तृतीया भवति। **त्वं तमिन्द्र मर्त्यम्** (ऋ ५,३५,५-६) इति द्वे, **कण्वेभिर्धृष्णवा** (८, ३३, ३) इत्येका बृहती, इत्यनुरूपाः ॥१५॥

[स्वरपृष्ठानां स्थायित्वम्]

**स्थायीन्येतानि यथा बृहद्रथन्तरे ॥१६॥**

एतानि स्वराणि न च्यवन्ते यथा बृहद्रथन्तरे अच्युते, एवं स्वराण्यपि स्थायीनि; तस्माद् यथा बृहद्रथन्तरयोरक्रियायां[4] योनिशंसनमेवं स्वराणामपि स्थानेऽक्रियमाणानां योनिं शंसेत्। स्थायीनीति वचनादेव योनिशसनं भविष्यति, न वक्तव्यं यथा बृहद्रथन्तरे इति। इदं प्रयोजनम्[5]। अप्राप्तप्राप्त्यर्थम्[6]। यथा बृहद्रथन्तरयोरस्वयोनिभावेऽपि योनिशंसनमेवं स्वरसाम्नामप्यस्वयोनिभावे योनिशंसनप्राप्त्यर्थं[7] यथा बृहद्रथन्तरे इत्याह।

ततः स्वरसाम्नां शस्यं वक्ष्यते। अभिप्लवस्य[8] पूर्वेण त्र्यहेण शस्यं होत्रकाणां स्तोत्रियानुरूपारम्भणीयाः[9] पञ्च पञ्चावापपर्यासाः। सर्वेष्वहःसु होत्रकाणां च बृहतीकारं प्रगाथाः। सर्वत्र निष्केवल्ये स्वराणां स्तोत्रियानुरूपौ धाय्या योनिशंसनं न विद्यते। यदि स्वराण्यस्वयोनिषु स्तूयन्ते[10] तथा सति स्वरस्तोत्रियाः स्वरस्तोत्रियाणां योनिशंसनं कर्तव्यम्। नात्र स्वराणां योनिशंसनमस्ति स्तोत्रियैरेवानुशस्तत्वात्। स्वरेष्वक्रियमाणेषु[11] सर्वेष्वहःसु पिबवानेव सामप्रगाथो भवति। ज्योतिष्टोमेन[12] अविशेषेण चोदितत्वात्[13] सर्वपृष्ठानामयं सामप्रगाथो भवति। "यदि बृहद्रथन्तरे[14] अस्वयोनी[15] भवतः, तदा पिबवन्तौ प्रगाथौ भवतः। यद्युक्थ्यो[16] भवति[17] ऊर्ध्वं स्तोत्रियानुरूपेभ्य ऐकाहिकान्युक्तानि[18]। व्याख्यातोऽभिजित् स्वरसामानश्च[19] ॥१६॥

॥ इति अष्टमे पञ्चमः खण्डः ॥

---

१-१. त तो पा छ हृ ती व'। २. नास्ति मूको। ३. स्तोत्रे व'। ४. °न्तरयोरक्रियाणां व'; °न्तरयोःक्रियाणां मै। ५. °जनम् अश्वयोनिभावेऽपि शसनं भविष्यति न वक्तव्यम्, यथा बृहद्रथन्तरे इतिद्र (इतीदं मै) मूको। ६, अप्राप्तेप्यर्थे व'; प्राप्त्यर्थम् मै। ७. °सनं प्रा° मूको। ८. अभिप्लवस्य पूर्वे अभिप्ल° व'। ९. °रम्भणं मूको। १०. स्तूप्यन्त व'; सूयन्ते मै। ११. स्वरे क्रिय° मै। १२. °ष्टोमे मै। १३. वो चोदि° व'। १४-१४. यदिष्ट बृह° मै। १५. अश्वयोनै व'; अशयोनौ मै। १६. यद्युत्का (°क्ता मै) मूको। १७. भवन्ति मै। १८. °ह्निकायुक्तानि मै; °हिंकाद्युक्तानि व'। १९. स्वरसामासु (°मन मै) श्च मूको।

# अष्टमेऽध्याये षष्ठः खण्डः

[विषुवतोऽह्नो दिवाकीर्त्यत्वम्]

**विषुवान् दिवाकीर्त्यः ॥१॥**

इति 'नु पूर्वं पक्षः । अथ **विषुवानेकविंशः, न पूर्वस्य पक्षसो नोत्तरस्य** (आश्रौ ११,७,६-८) इति विषुवान् [इति] वक्ष्यति । विषुवानित्यह्नः संज्ञा' । **अथ विषुवानेकविंशः** (आश्रौ ११,७,७) इत्युक्त एतदहः प्रत्येतव्यम् । दिवाकीर्त्यो विषुवान् दिवसो दिवाकीर्त्यो दिवा च कर्तव्यः, न रात्रौ कीर्तयितव्यः' इत्यर्थः । **सर्वं ह्येवैतद् अहर्दिवाकीर्त्यं भवति** (ऐब्रा ४, १६) इति ब्राह्मणम् । तस्मादेष' दिवसः' अह्ना समापयितव्यो न रात्रौ कर्तव्यः ॥१॥

[उदित आदित्ये प्रातरनुवाककथनम्]

**उदिते प्रातरनुवाकः ॥२॥**

उदित आदित्ये प्रातरनुवाको भवति । **उदित आदित्ये प्रातरनुवाकमनुब्रूयात्** (ऐब्रा ४, १६) इति ब्राह्मणम् । दिवाकीर्त्यः' (आश्रौ ८,६, १) इत्येतेनैव सिद्धे न वक्तव्यम् उदिते प्रातरनुवाक इति । वक्तव्यं, प्रातरनुवाकस्य स्वकाले विध्यविधानादस्यकाले' एव प्रातरनुवाकः स्यात् । प्रकृतावपि ज्योतिष्टोमे प्रातरनुवाकः स्वकाल एव । ज्योतिष्टोमस्तु दिवैव क्रियते । **सहैवाह्ना संस्थापयेयुः साह्नो वै नाम** (ऐब्रा ३, ४४) इति ब्राह्मणम् । प्रकृतिवद् विकृतावपि प्राप्त उदिते प्रातरनुवाक इत्युच्यते ॥२॥

[सामिधेनीधाय्यानां कथनम्]

**'पृथुपाजा अमर्त्यः' इति षड् धाय्याः सामिधेनीनाम्' ॥३॥**

**'पृथुपाजा अमर्त्यः** (ऋ ३, २७, ५-१०) इत्येताः षड् ऋचो धाय्यासंज्ञाः सामिधेनीनामावापः । **एकविंशतिं सामिधेनीरनुब्रूयात्** (ऐब्रा ४, १६) इति

---

१-१. इति तु पूर्वपक्षः । अविषु न्येषु (येषु मै) वाकेन मिसो नु (विसोल मै) पूर्वस्य पक्षसो (°स्य मै) नो (उ मै) त्तरस्येति विषुवान् वक्ष्य (°क्ष मै) नि (ति मै) तित्यन्द्रः संज्ञा (नित्यह्नः संज्ञा मै) मूको । २-२. न कीर्तं° मूको । ३. स्यादिवं ब'; स्यादयं मै । ४. दिवसा ब'; । ५. दिवाकीर्ति मूको । ६. विध्याधानाजूस्वकाले ब'; °नात् स्वकाले मै । ७. ८,६,३ सूत्रस्य व्याख्यामारभ्य ८,७,२१ सूत्रव्याख्यास्थ-इन्द्रस्य नु वीर्याणीति इति पर्यन्तो भागः ८, १३, ३ सूत्रव्याख्यानन्तरमापतितः मै ।

ब्राह्मणम्। पादग्रहणात् षड्ग्रहणम्[1]। धाय्या इति वचनाद् धाय्यास्थाने भवन्ति। 'समानो जातिधर्मः[2]। सामिधेनीनाम् इत्यनुच्यमाने[2] मरुत्वतीये[3] धाय्यानां स्थाने स्युः ॥३॥

[सवनीयपशुसमीपे सौर्यपशूपालम्भनम्]

**सौर्यः सवनीयस्योपालम्भः ॥४॥**

सूर्योऽस्य देवता सौर्यः पशुः सवनीयस्य पशोः, उपालम्भ्यो[4] भवति[5]। सवनेषु यः पशुः अन्वहं[6] प्रक्रान्तः[8], तमालभ्य तम् उप समीपे अनन्तरं सौर्य आलभ्यते। आलभ्यः आरम्भो भवति। **सौर्यं पशुमन्यङ्गश्वेतं सवनीयस्योपालम्भ्यमालभेरन्त्सूर्यदेवत्यं ह्येतदहः** (ऐब्रा ४, १९) इति ब्राह्मणम् ॥४॥

[सवनीयपशुसमीपे सोमापौष्णपशूपालम्भनविकल्पः]

**सोमापौष्णो वा ॥५॥**

सोमापूषणौ देवता यस्य पशोः स सोमापौष्णः। सोमापौष्णो वा 'पशुः सवनीयस्य[9] उपालम्भ्यो भवति विकल्पेन[10]। **सोमापूषणा रजसो विमानम्** (ऋ २,४०,३) इत्येतयर्चैतदेवोक्तम् ॥५॥

[आज्यमरुत्वतीयसूक्तयोः कथनम्]

**'समुद्रादूर्मिः' इत्याज्यम्; 'त्वं सुमेषं', 'कया शुभा' इति च मरुत्वतीयम् ॥६॥**

**समुद्रादूर्मिः** (ऋ ४, ५८) इत्येतत् सूक्तमाज्यं भवत्यैकाहिकस्य स्थाने। ऐकाहिकं प्रउगम्[11]। होत्रकाणां स्तोत्रियानुरूपारम्भणीयापरिशिष्टावापपर्यासाः। ऐकाहिको मरुत्वतीयस्यातानः। बृहतीकारं प्रगाथाः। **त्वं सुमेषम्** (ऋ १,५२), **कया शुभा** (ऋ १,१६५) इति च द्वे सूक्ते मरुत्वतीयम्। च-शब्दः समुच्चयार्थः। जागतं त्रैष्टुभं च भवति। **मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानि च** (ऐब्रा ४, २१) इति ब्राह्मणम्। मरुत्वतीयग्रहणं मरुत्वतीय एकस्य स्थाने द्वे सूक्ते भवतः एकविंशत्वात्स्तोमस्य[12] ॥६॥

इदानीं निष्केवल्यं वक्ष्यते—

[महादिवाकीर्त्यस्य साम्नः पृष्ठत्वम्]

**महादिवाकीर्त्यं पृष्ठम् ॥७॥**

१. मदोषानां ब'; मदीयानां मँ। २-२. °नजा° मूको। ३. इत्युच्च° मूको। ४. मरुतो ये ब'। ५. उपलभ्यो मूको। ६. वा...ते ब'। ७. अन्वाह मूको ८. प्राक्कान्तः ब'। ९-९. पशुस° मूको। १०. विकल्पः मूको। ११. प्राक् मूको। १२. °शत्वामस्य ब'; °शत्वासोमस्य मँ।

'महादिवाकीर्त्यमुखं सामपृष्ठं' भवत्यैकाहिकस्य स्थाने ॥७॥

[महादिवाकीर्त्यस्य स्तोत्रियानुरूपयोः कथनं बृहद्रथन्तरयोः पवमानयोः करणे योनिशंसनं च]

**'विभ्राड् बृहत् पिबतु सोम्यं मधु', 'नमो मित्रस्य वरुणस्य चक्षसे' इति स्तोत्रियानुरूपौ । यदि बृहद्रथन्तरे पवमानयोः कुर्युर्योनी एनयोः शंसेत् ॥८॥**

**विभ्राड् बृहत्** (ऋ १०, १७०, १-३), **नमो मित्रस्य** (१०,३७, १-३) इत्येतौ तृचौ स्तोत्रियानुरूपसंज्ञौ महादिवाकीर्त्यस्य भवतः ।

यदि बृहद्रथन्तरे पवमानयोः कुर्युः, 'महादिवाकीर्त्यमुखं सामपृष्ठं' भवति । **विकर्णं ब्रह्मसामभासमग्निष्टोमसामोभे बृहद्रथन्तरे पवमानयोर्भवतः** (ऐब्रा ४, १९) इति ब्राह्मणम् । यदि बृहच्च रथन्तरं च' पवमानयोः छन्दोगाः कुर्युः, रथन्तरं माध्यदिने, बृहदार्भवे; एतयोर्बृहद्रथन्तरयोर्योनी' शंसेत् ॥८॥

[रथन्तरस्य बृहतश्च साम्नोः पौर्वापर्यनियमः]

**रथंतरस्य पूर्वाम् ॥९॥**

रथन्तरस्य पूर्वा, अनन्तरं बृहदित्यर्थादापन्नम्' । यदि (आश्रौ ८,६,८) इति वचनात् पवमानयोर्भवतः, न वा भवतः । यदा 'महादिवाकीर्त्यं सामपृष्ठमत्र न क्रियते' तदा' बृहत्पृष्ठं भवति । **रथन्तरं पवमाने भवति**, तस्मादाह—यदीति । प्रकृतौ 'एका योनिरुपदिष्टा' **यत् पवमाने तस्य योनिः** (आश्रौ ५, १५, १६) इति । तस्माद् द्वयोर्योनिशंसनमप्राप्तं विधीयते विषुवान् बृहत्पृष्ठः । 'महादिवाकीर्त्येऽक्रियमाणे' बृहत्पृष्ठं क्रियते । तस्माद् बृहत्पृष्ठमन्तिमेऽहनि प्रधानम् । तस्य योनिशंसनं पूर्वं प्राप्तम् । प्रयोगानुक्रमाद्रथन्तरस्य पर्व योनिशंसनं विधीयते । पूर्वग्रहणादुत्तरं बृहतो योनिः ॥९॥

[सन्निपाते बृहद्रथन्तरयोर्योन्योराद्यत्वम्]

**आद्ये भवतोऽन्याभिरपि सन्निपाते ॥१०॥**

"बृहद्रथन्तरयोर्योनी" आद्ये" भवतोऽन्याभिरपि "योनिभिः सन्निपाते" सति। **यथा** परोक्षपृष्ठे तनूपृष्ठ्ये **च** । तृतीयादिष्वहःसु तृतीये **रथन्तरवैरूपयोः**, चतुर्थे बृहद्वैराजयोः, पञ्चमे रथन्तरशाक्वरयोः, षष्ठे बृहद्रैवतयोस्तत्रायं क्रम

१-१. °कीर्त्ये मुखसाम ब'; °कीर्त्यमुखसाम मै । २-२. °कीर्त्यमुखसाम मै । ३.नास्ति ब' । ४. °र्योनिः मूको । ५. बृहदि बृहदित्यर्थादापन्नं ब' । ६-६. °कीर्त्यमपृष्ठमनुक्रियते मूको । ७. तद्वा ब' । ८-८. एकयोनि° मूको । ९-९. °कीर्त्यमक्रिय° मूको । १०-१०. नास्ति मै; योनिः ब' । ११. तद्यो ब' । १२-१२. योनिभिः निपाते ब' ।

उपदिश्यते—बृहद्रथन्तरयोः आद्ये भवतः। अपि-शब्दः समुच्चयार्थः। बृहद्रथन्तरयोः सन्निपाते 'उक्तवैरूपादिभिरपि सन्निपाते आद्ये भवतः ॥१०॥

[उत्तमस्य सामप्रगाथत्वम्]

**उत्तमस्त्विह सामप्रगाथः ॥११॥**

उत्तमस्तु सामप्रगाथ इह निष्केवल्ये भवति। **पिबा सुतस्य रसिनः** (ऋ ८, ३, १) इति सामप्रगाथः प्राप्तः प्रकृतावविशेषेण चोदितत्वात् सर्वपृष्ठाना भवति। तु-शब्दः[2] प्राप्तव्यावृत्त्यर्थः। इदं वचनं सूर्यलिङ्गत्वादुत्तमः प्रगाथो भवति। सूर्यदेवत्यमेतदहः ॥११॥

[सामप्रगाथादनन्तरं शंसनीयानां सूक्तानां कथनम्]

**'नृणामु त्वा नृतमं गीर्भिरुक्थैः' इति तिस्रः 'यस्तिग्मशृङ्गः', 'अभि त्यं मेषम्', 'इन्द्रस्य नु वीर्याणि' इति ॥१२॥**

सामप्रगाथादनन्तरम् नृणामु त्वा (३, ५१, ४-६) इत्येतास्तिस्र ऋचः। पादग्रहणात् तिस्र इत्याह। **यस्तिग्मशृङ्गः** (ऋ ७, १९) इति सूक्तम्, **अभि त्यं मेषम्** (ऋ १, ५१) इति[3] सूक्तम्[4] **'इन्द्रस्य नु वीर्याणि** (ऋ १, ३२) इति सूक्तम्[5] ॥१२॥

[ऐन्द्रीं निविदं शस्त्वोत्तराणां षण्णां सूक्तानां शंसनम्]

**एतस्मिन्नैन्द्रीं निविदं शस्त्वा शंसेदेवोत्तराणि षट्। 'दिवश्चिदस्य', 'सुतमित्त्वम्', 'एष प्र पूर्वीः', 'वृषा मदः', 'प्र मंहिष्ठाय', त्यमू षु' इति ॥१३॥**

**इन्द्रस्य नु वीर्याणि** (ऋ १, ३२) इत्येतस्मिन् सूक्ते यथास्थान ऐन्द्रीं निविदं शस्त्वानन्तरं शंसेदेवोत्तराणि सूक्तानि षट्, यानि वक्ष्यामः। अन्त्ये निविदं दध्यात् प्राप्ते एतस्मिन् निविदं निदध्यादित्याह। ऐन्द्री निविदिति वचनात् सौर्यपि[6] निविदस्तीति सिद्धं दूरोहणे[7] सौर्यनिवित्[8]। **इन्द्रस्य नु वीर्याणि** (ऋ १, ३२) इत्यैन्द्रीं निविदं शस्त्वा इत्येवमुक्तेऽप्येतस्मिन्नेव[9] निविद्भविष्यत्युपदिष्टानां सूक्तानामन्ते निविद् भविष्यति। न वक्तव्यम् एतस्मिन्निति। इदं प्रयोजनम्। **एकभूयसीः** (आश्रौ ५, १४, २०) इति यत् प्राप्तं तद्व्यावृत्त्यर्थं प्राप्त्यर्थं च एतस्मिन्नित्युच्यते। एतस्मिन् सूक्ते [10]निविद दध्याद्[10] "यथा शस्त्रमध्ये"[11] भवति। **एकपञ्चाशतं द्विपञ्चाशतं वा शस्त्वा मध्ये निविदं दधाति तावतीरुत्तराः शंसति** (ऐब्रा ४, १९) इति ब्राह्मणम्। द्विपञ्चाशत्पक्ष एतस्मिन् सूक्तेऽष्टौ शस्त्वा निविदं दध्यात्। महादिवाकीर्त्ये[12] पृष्ठेऽसति[12]

१. उक्तं वैरू° मूको। २. च-शब्दः मूको। ३. नास्ति मूको। ४. सूतू ब[1]। ५-५. नास्ति मूको। ६. सौर्येऽपि मूको। ७. दूरोहणं मूको। ८. सूर्यासौ निवित् ब[1]। ९. इत्येना उक्तेऽपि मूको। १०-१०. निविदध्यात् मूको। ११. यदा शास्त्रमध्ये मै। १२-१२. °कीर्त्यं (°र्यं ब[1]) पृष्ठे शति (पृष्ठे ति ब[1]) मूको।

द्विपञ्चाशतं शस्त्वा निविदं दध्यात्। यदि बृहत्पृष्ठं भवति, तदा[1] रथंतरस्यैव योनिः[2]। एकपञ्चाशतं] च[3] शस्त्वा निविदं दध्यात्। शंसेदेवेत्येवकारकरणात् शंसेदेवोत्तराणि सूक्तानि, न तेषु पुनः निविदं दध्यात्। प्राप्ता [4]हि पुनः निविदन्त्ये। निविदं दध्याद् इति† पूर्वस्मिन् सूक्ते वचनान्निविद्॥ ϕअन्त्ये पुनःϕ प्राप्ता एव[4]। तस्मादाह—शंसेदेवोत्तराणीति। षड्ग्रहणाद् एकपञ्चाशतं द्विपञ्चाशतम् (ऐब्रा ४, १६) इति ऋक्संख्यायां षडेव सूक्तानि गण्यन्ते, न दूरोहणम्। तानि षट् सूक्तानि वक्ष्यन्ते—दिवश्चिदस्य (ऋ १,५५); सुतमित्त्वम् (ऋ ६,२३); एष प्र पूर्वीः (ऋ १, ५६); वृषा मदः (ऋ ६, २४); प्र मंहिष्ठाय (ऋ १,५७); त्यमू षु (ऋ १०,१७८) इत्येतानि षट् सूक्तानि ॥१३॥

[इह शस्त्रे निष्केवल्यात् पश्चात् तार्क्ष्यशंसनम्]

**इह तार्क्ष्यमन्ततः ॥१४॥**

इह शस्त्रे तार्क्ष्यम् अन्ततः शंसेत्। अस्माद् वचनात् तार्क्ष्यम्[5] अग्रे निष्केवल्यसूक्तानां[6] न शस्यते। अग्रे तार्क्ष्यः[7] प्राप्तः **तार्क्ष्यम् अग्रे निष्केवल्यसूक्तानाम्** (आश्रौ ७,१,१३) इति वचनात् ॥१४॥

[तार्क्ष्यस्यैकामृचं शस्त्वाऽऽहूय दूरोहणशंसनम्]

**तस्यैकां शस्त्वाऽऽहूय दूरोहणं रोहेत् ॥१५॥**

तस्य तार्क्ष्यस्य ऋषेः एकामृचं शस्त्वा आहूय आहावं कृत्वा दूरोहणं रोहेत्। दूरोहणं[8] व्याख्यातम्[9]। **तार्क्ष्ये स्वर्गकामस्य रोहेत्** (ऐब्रा ४, २०) इति ब्राह्मणम्। [10]निविद्वा एषा[10] शस्यते। निविद्धावादाहावोऽपि[11] विधीयते। **आह्वानं च निविदाम्** (आश्रौ ५,६, १६) इति प्राप्ते [12]आरम्भः परोक्षत्वात्[12]। [13]परोक्षा हि[13] निविद् दूरोहणम् ॥१५॥

[विकर्णे ब्रह्मसामनि ब्राह्मणाच्छंसिनः श्यैतनौधसयोन्योः शंसनम्]

**इति निष्केवल्यम्। विकर्णं चेद् ब्रह्मसामोर्ध्वमनुरूपात् 'तं वो दस्ममृतीषहम्', 'अभि प्र वः सुराधसम्' इति ब्राह्मणाच्छंसी श्यैतनौधसयोर्योनी शंसेत् ॥१६॥**

---

१. तथा मूको। २. योनि मूको। ३. नास्ति ब[1]। ४-४. नास्ति ब[1]। ॥. नास्ति मै। †. निवित मै। ϕ-ϕ. अन्त्येषु मै। ५. नास्ति मूको। ६. °ल्यसूक्तासूक्तानां मूको। ७. सु मूको। ८. °हणे मूको। ९. °ताः मूको; द्र. आश्रौ ८,२,१३-१५। १०-१०. न विद्वा एकां ब[1]; निविद्वादेकां शस्त्वा मै; द्र. ऐब्रा ६, २५। ११. विद्धादाहावोपि ब[1]; विद्वादाहावापि मै। १२-१२. आरम्भप° मूको। १३-१३. °क्षादि मूको।

 

इति निष्केवल्यं व्याख्यातम् । अस्माद् वचनादैकाहिकस्य सूक्तस्य स्थाने वक्ष्यन्ते । तत्र विकर्णं ब्रह्मसाम चेद् भवति । ब्रह्मणः साम ब्रह्मसाम । ब्राह्मणाच्छंसिन इत्यर्थः । **इन्द्र क्रतुं न आ भर** (ऋ ७,३२,२६) इत्येतासु 'विकर्णं साम'[1] भवति । चेदिति वचनादनित्यम् । यदा महादिवाकीर्त्यपृष्ठं[2], तदा विकर्णं ब्रह्मसाम भवति । यदा बृहत्पृष्ठं भवति तदा श्यैतं[3] ब्रह्मसाम । तस्मादाह— विकर्णं चेदिति । ऊर्ध्वमनुरूपात् **तं वो दस्मम्** (ऋ ८, ८८, १), **अभि प्र वः** (ऋ ८, ४९, १) इत्येते ब्राह्मणाच्छंसी श्यैतं[3] च साम नौधसं च साम तयोः[4] श्यैतनौधसयोः साम्नोर्योनी शंसेत् । ऊर्ध्वं धाय्यायाः,[5] 'योनिस्थान एवेति'[6] वचनादिहारम्भणीयाया ऊर्ध्वं योनिस्थानं प्राप्तं तस्मादूर्ध्वमनुरूपाद् विधीयते । श्यैतनौधसयोर्योनी[6] शंसेदित्युक्ते न जानीम एतयोः साम्नोः के योनी इति । तस्मादिदमुच्यते—**तं वो दस्मम्** (ऋ ८, ८८, १), **अभि प्र वः** (ऋ ८, ४९, १) इत्येते[7] योनी एतयोः साम्नोरिति । होतुरधिकाराद् होतुः शस्त्र ऊर्ध्वमनुरूपाद् योनिशंसनं प्राप्तं, तस्मादाह—ब्राह्मणाच्छंसी इति । श्यैतनौधसयोरिति[8] साम्नोर्ग्रहणात् सवनवशाद्[9] योनिशंसनं दर्शयति, न[10] वचनवशात् । तस्मात् पृष्ठस्थाने यत् तत्स्तस्य योनिशंसनं भवति । श्यैतं[4] तदा ब्रह्मसाम भवति, तदा नौधसश्यैतयोनी[11] शस्येते[12] । समासे श्यैतम् ऊर्ध्वं निपतत्यल्पाक्षरत्वात् । तस्मात् श्यैतनौधसयोरित्युक्त आनन्तर्येण **तं वो दस्मम्** (ऋ ८, ८१, १) इति श्यैतस्य योनिः प्राप्ता, उत्तरा नौधसस्य । एवं प्राप्ते उत्तरसूत्रार्थं प्रारभ्यते ॥१६॥

[नौधसस्य श्यैतस्य च योन्योः शंसने पौवापर्यविधानम्]

**नौधसस्य पूर्वां श्यैतस्योत्तराम् ॥१७॥**

नौधसस्य साम्नः पूर्वां योनिं जानीयात् **तं वो दस्मम्** (ऋ ८,८१,१) इत्येताम् । श्यैतस्य तु प्राप्ता, तस्मादिदमुच्यते । श्यैतस्य साम्न "उत्तरां योनिं" जानीयात् **अभि प्र वः** (ऋ ८,४९,१) इत्येताम् । नौधसस्य तु प्राप्ता, तस्मादिदमुच्यते— "श्यैतस्य साम्नः"[13] । नौधसस्य पूर्वामित्युक्ते परिशेषादुत्तरस्यैतद् भविष्यति, तस्माच्छ्यैतस्योत्तरामिति न वक्तव्यम् । इदं प्रयोजनम्[14] । योनिबहुत्वे दर्शयति । योनिबहुत्वे सति एतयोः पूर्वत्वं दर्शयति नौधसस्य पूर्वां[15] शंसेत्, श्यैतस्योत्तराम्[16] । "अनन्तरा अनन्तरा इतरा इतरा"[17] अभीवर्तस्य इन्द्रक्रतोश्च[18] । यद्येते

१-१. °र्णंसाम मूको । २. महाकीर्त्यं पृष्ठं मै । ३. श्यैत्यं मूको । ४. नास्ति मूको । ५. धाय्याभ्यः मूको । ६-६. °स्थाने वेति (चेति मै) मूको । ७. इत्येतयोः मूको । ८. श्यैतनौधसयो° ब'; स्यैत्यमौधसयो° मै । ९. सनवशाद् ब'; सवनशाद् मै । १०. नास्ति मै । ११. °सश्यैत्ययोनिः मूको । १२. शस्यते मूको । १३-१३. उत्तरयोनिं मूको । १४-१४. नास्ति मै । १५. प्रयातं (°त्रं मै) मूको । १६. पूर्वं मूको । १७. °त्तश मूको । १८-१८. अनन्तरइतरा मै । १९. इन्द्रक्रतोश्च ब'; ईक्षतोश्च मै ।

पवमानगते भवतः, तदा योनिं[1] शंसति—यथा अभीवर्तस्य योनिशंसनम्, यथ च इन्द्रक्रतोरुत्तरे पक्षसि । एवं विषुवत्युभयोः पवमानयोर्योनिशंसनं कर्तव्यमुभय-पक्षानुग्रहार्थम् । सर्वत्र[2] यदा पवमाने स्याताम् (द्राश्रौ ६,२,१७) इति छन्दोगानां वचनम् । यदा विकर्णं ब्रह्मसाम भवति तदा नौधसस्याभीवर्तस्य च **मा चिदन्यत्** (ऋ ८,१,१) इति योनिः । विकर्णस्तोत्रियेणैवेन्द्रक्रतुरनुशस्तः । यदा तु श्यैतं ब्रह्मसाम भवति, तदा नौधसस्याभीवर्तस्य इन्द्रक्रतोश्चेति तिस्रो योनीः[3] । तदुक्तं शान्तिव्रातेन—अभिजिद्विषुवतोश्च सर्वत्र । यदेते यस्माच्चतुर्विंशति[4] (?) एतयोः पृष्ठग्रहणान्तं सिद्धम् । संख्यासम्बन्धात् षडह आस्येत्सम्बन्धादेतयोरिति[5] ॥१७॥

[होत्रकाणां योनिस्थानं तद्विशेषश्च]

**एतद्धोत्रकाणां योनिस्थानम् । यच्च प्रगाथ आह्वानमेताभ्यस्तत्पञ्चाहावपरिमितत्वात् ॥१८॥**

एतद्धोत्रकाणां योनिस्थानमुक्तमूर्ध्वमनुरूपादिति । ब्राह्मणाच्छंसिनः सूक्तं योनिस्थानम् । एतदेव सर्वेषां होत्रकाणां योनिस्थानं वेदितव्यं यत्र योनिशंसनं भवति विश्वजिति । विश्वजितोऽन्यत्र योनिशंसनं न[6] विद्यते । तस्मात् सूत्रारम्भोऽनर्थकः । न ह्येकमुदाहरणं[7] योगारम्भं प्रयोजयति[8] । वक्तव्यं[9] तु विश्वजिति **ऊर्ध्वमनुरूपेभ्यः** (आश्रौ ८, २,२) इति लघुतरं भवति सप्तभिरक्षरैः सिद्धम् । दशाक्षरा तु परिभाषा । न वक्तव्या परिभाषा । [10]अस्मात् परिभाषा-रम्भाद् दर्शयति[10] । छन्दोगवशादिद योनिशंसनम् । अभीवर्तस्य पवमानगतस्य[11] ब्राह्मणाच्छंसी [योनिं शंसति । **कालेस्य अच्छावाकः** (आश्रौ ८,७,८) उत्तरे पक्षसि[12] इन्द्रक्रतोः । विश्वजिति पृष्ठ्यस्य[13] च । विषुवति[14] तु या अभीवर्तस्येन्द्र-क्रतोश्च । यत्र[15] प्रगाथ आह्वानम् एतद्धोत्रकाणां योनिस्थानमुक्तम् । इदं चाधिकं होत्रकाणां[16] विधीयते । यच्च प्रगाथे[17] आह्वानं प्राप्तं, तदेवान्ययोनिभ्यो भवति । कस्माद्धेतोः । पञ्चाहावपरिमितत्वात् । **पञ्चाहावानि माध्यंदिने** (आश्रौ ५, १०, १२) इति पञ्चैव परिमिता आहावा भवन्ति यस्मात्, तस्मात् पञ्चाहावपरिमितत्वात् । च-शब्दो होत्रकाधिकारसमुच्चयार्थः । तस्माद्धोत्र-काणामेतद् भवति न होतुः । **तेभ्यश्चान्यदनन्तरम्** (आश्रौ ५, १०,१५) इति [18]योनिनित्यत्वे प्राप्ते[18] आरम्भः प्रगाथ आहावप्रतिषेधार्थः । ताभ्य एवाहावो

१. योनिः मूको । २. नास्ति मै । ३. योनिः मूको । ४. येऽस्माच्च° ब[1]; । ५. आस्ये सं° मै । ६. नास्ति मूको । ७. तद्यमुदा° मूको । ८. ता पाम १,१,१२ । ९. विवक्तव्य ब[1] । १०-१०. अस्मात् परिभाषारम्भात् दर्शयति इति रेखाङ्कितयोर्मध्ये पाठत्रुटिं सूचयति ब[1] । ११. नास्ति ब[1] । १२. पक्षसो मूको । १३. पृष्ठ्य यस्य मूको । १४. वर्तति ब[1] । १५. त्र ब[1] । १६. °काणां रिषु ब[1] । १७. यत्र प्रगाथे ब[1] । १८-१८. योनित्यप्राप्ते मूको ।

भवति न प्रगाथ इति। अन्यथा प्रगाथे चतुराहावस्य[1] हेतुवचनं[2], तस्मादनेकानन्तर्ये[3] सकृत्पृथग् वाऽऽह्वानम् (आश्रौ ५, १५, १९) इति वचनाद् योनीनां प्रगाथानां च विकल्पे प्राप्ते सकृदाहावप्राप्त्यर्थं हेतुवचनम्। तस्माद्धोत्रकाणां प्रगाथेषु च सकृदाहावो भवति। होतुः त्रिविकल्पः। तस्माद्धोत्रकाणां विश्वजिति सर्वपृष्ठे च प्रगाथेषु सकृदाहावो भवति। प्रगाथ आह्वानम् एताभ्यस्तद् इति वचनाद् योनीनामपि सकृदाहावा एव।

होत्रकाणां शस्त्राणि स्तोत्रियानुरूपप्रगाथारम्भणीयाहीनसूक्ताहरहःशस्यानि[4]। ब्राह्मणाच्छंसिनस्तूर्ध्वमनुरूपात् **तं वो दस्मम्** (ऋ ८,८८,१), **अभि प्र वः** (ऋ ८, ४९, १), **मा चिदन्यत्** (ऋ ८,१,१) इति तिस्रो योनयः। ऐकाहिकौ (आश्रौ ८, ६,२०) वैश्वदेवस्य प्रतिपदनुचरौ। षष्ठादाभिप्लविकाद् वैश्वदेवमाग्निमारुतं च यज्ञायज्ञीयस्य स्थाने **मूर्धानं दिवः**[5] (ऋ ६, ७, १), **त्वां विश्वे** (ऋ ६, ७,४), **नाभिम्** (ऋ ६,७,२) इति स्तोत्रियः। **मूर्धा दिवः** (ऋ १,५९, २) इत्यनुरूपः। यज्ञायज्ञीयस्य च सानुरूपा योनिर्जातवेदस्या। अग्निष्टोमोऽयम्॥१८॥

[षष्ठेनाभिप्लविकेन तृतीयसवनविधानम्]

**उत्तमेनाऽऽभिप्लविकेनोक्तं तृतीयसवनम् ॥१९॥**

अभिप्लवे भवम् आभिप्लविकम्। उत्तमेन षष्ठेनाभिप्लविकेनोक्तं व्याख्यातं तृतीयसवनम्। वैश्वदेवाग्निमारुते चोत्तमेनान्त्येनाभिप्लविकेन[6], न पार्ष्ठिकेन[7]॥१९॥

[वैश्वदेवस्य प्रतिपदनुचरयोः कथनम्]

**ऐकाहिकौ तु प्रतिपदनुचरौ ॥२०॥**

एकाहे भवावैकाहिकौ तु प्रतिपदनुचरौ भवतो वैश्वदेवस्य **तत्सवितुः** (ऋ ५, ८२, १-३), **अद्या नो देव** (ऋ ५, ८२, ४-६) इति[8]। तु-शब्दः प्राप्तव्यावृत्त्यर्थः। पार्ष्ठिकौ तु प्राप्तौ **विश्वो देवस्य** (ऋ ५,५०, १-३), **आ विश्वदेवम्** (ऋ ५, ८२, ७-९) इति[9]। ऐकाहिकौ प्रतिपदनुचरौ भवतः। वरसाम (?) भवति॥२०॥

[यज्ञायज्ञीयस्य स्थाने भाससाम्नःकरणम्]

**भासं च यज्ञायज्ञीयस्य स्थाने ॥२१॥**

---

१. चतुर्थ आहा° मूको। २. होतुव° ब[1]। ३. कस्मादने° ब[1]। ४. °रूपा-प्रगा° मूको। ५. मृदिवः मूको। ६. °नान्येना° मूको। ७. पार्ष्णिकेन मै। ८. द्र. आश्रौ ५,१८,५। ९. द्र. आश्रौ ७,६,६।

'भासं च' साम भवति यज्ञायज्ञीयस्य स्थाने । 'अन्यत् पार्ष्ठिकं' सर्वम् । च-शब्दः समुच्चयार्थः । पार्ष्ठिकादन्यत्तु प्रतिपदनुचरौ । 'भासं चेति' साम चोदितम् । तस्माद् भासे' सामनि क्रियमाण एतौ स्तोत्रियानुरूपौ भवतः । 'भासं च' यज्ञायज्ञीयस्य स्थाने भवति', अन्यथा स्थानमनुपदिष्टं स्यात् ॥२१॥

[भाससाम्नःकरणे स्तोत्रियानुरूपयोः कथनम्]

**'पृक्षस्य वृष्णो अरुषस्य नू सहः' इति स्तोत्रियानुरूपौ ॥२२॥**

**पृक्षस्य वृष्णः** (ऋ ६,८, १-६) इत्येतौ स्तोत्रियानुरूपौ । भासे क्रियमाण एतौ स्तोत्रियानुरूपौ भवतः । छन्दोगवशात् तृचस्तोत्रियादनन्तरः' तृचोऽनुरूपः ॥२२॥

[स्तोत्रियानुरूपयोर्विकल्पः]

**'मूर्धानं दिवो अरतिं पृथिव्याः', 'मूर्धा दिवो नाभिरग्निः पृथिव्याः' इति वा ॥२३॥**

**मूर्धानं दिवः** (ऋ ६, ७, १-३), **मूर्धा दिवः** (ऋ १, ५९,२-४) इति वा । तौ' स्तोत्रियानुरूपौ' भवतो भासस्य साम्नः । छन्दोगवशाद् विकल्पः । अनुक्रमेण प्रथमः स्तोत्रियो द्वितीयोऽनुरूपः । छन्दोगवशात् तृचोऽन्यथाऽऽनुपूर्व्यः' **मूर्धानं दिवः** (ऋ ६,७,१), **विश्वे** (ऋ ६,७,४), **नाभिम्** (ऋ ६,७,२) इति ॥२३॥

[लिङ्गानुसारेणानुरूपग्रहणव्यवस्था]

**अन्यासु चेदेवंलिङ्गास्वतोऽनुरूपः ॥२४॥**

अन्यासु चेदृक्ष्वेवंलिङ्गासु छन्दोगा स्तुवते, अत उक्ताभ्य ऋग्भ्योऽनुरूपो ग्राह्यः । एवंलिङ्गासु' मूर्धलिङ्गासु । मूर्धन् शब्दो' यासु विद्यते ताः' तल्लिङ्गा भवन्ति' । अग्निष्टोमोऽयम् । **सर्वे अग्निष्टोमाः** (आश्रौ ८,७,१२) इति वचनात्, आभिप्लविकेनातिदेशाच्च' ॥२४॥

[प्रतिलोमानां स्वरसाम्नामत्र विधानम्]

**आवृत्ताः स्वरसामानः ॥२५॥**

स्वरसामानो', व्याख्याताः' । आवृतं' शब्द्यम् इदानीं वक्ष्यते । **स्वरसाम्नो विश्वजितं पृष्ठ्यं त्रीनभिप्लवान्** (आश्रौ ११, ७,१०) इति सप्तमो मासो

---

१-१. नास्ति मूको । २-२. अन्यवार्षिकं मूको । ३-३. भासां वति (चति मै) मूको । ४. नास्ति मूको । ५. भवतः मूको । ६. °त्रिय (°या मै) श्चान मूको । ७. तौ वा ब' । ८. °पौ यौ ब' । ९. °पूर्व्यं (°र्व्यं मूको । १०-१०. लिङ्गासु वैश्यः नि (नै मै); रियासु मूर्धाने लिङ्गासु मूर्धा (मृद्धा मै) शब्दो मूको । ११. नास्ति मूको । १२. भवति मूको । १३. अभिद्व्यभिप्ल° ब'; अभिप्ल° मै; द्र. आश्रौ ७, ७, १० । १४. व्याख्यातः मै; द्र. आश्रौ ८,५,°-१६ । १५. यस्य ब'; अस्य मै ।

वक्ष्यते। व्याख्याताः[1] स्वरसामान एव[2] इहावृत्ता आदिश्यन्ते, तृतीयं प्रथमं क्रियते, अथ द्वितीयप्रथमे इति, एवमावृत्ता भवन्ति। ऊर्ध्वं विषुवत एवमावृत्ताः स्वरसामानो भवन्ति। इदं न वक्तव्यं गवामयने सिद्धत्वात्। वक्तव्यं तु नवरात्रसाधनार्थम्। यत्र नवरात्र उपदिश्यते, तत्राप्येत आवृत्ता इष्यन्ते संवत्सरसंमितासु ॥२५॥

॥ इत्यष्टमे षष्ठः खण्डः ॥

---

१. आवृत्ताः मूको। २. इव मूको।

# अथाऽष्टमेऽध्याये सप्तमः खण्डः

[विश्वजिदहर्वर्णन आज्यसूक्तकथनम्]

**विश्वजितो 'अग्निं नरः' इत्याज्यम् ॥१॥**

स्वरसामभ्य ऊर्ध्वं विश्वजिदहर्भवति[1]। तस्य विश्वजितः शस्यं वक्ष्यते। संज्ञा चेयम्। **विश्वजितम्** (आश्वौ ११, ७, १०) इत्युक्त एतस्य ग्रहणम्। **अग्निं नरः** (ऋ ७, १) इत्याज्यं, विश्वजितः अग्निं नरः इत्येतत् सूक्तमाज्यं भवत्यैकाहिकस्य स्थाने। ऐकाहिकं प्रउगं भवति। होत्रकाणां स्तोत्रियानुरूपारम्भणीयापरिशिष्टावापपर्यासाः ॥१॥

[मरुत्वतीयनिष्केवल्यशस्त्रयोश्चतुर्विंशादह्नः पूर्वं कथितत्वम्]

**चतुर्विंशेन मध्यंदिनः ॥२॥**

चतुर्विंशेनाह्ना मध्यंदिनो व्याख्यातः। **मध्यंदिन इत्युक्त एते शस्त्रे प्रतीयात्** (आश्वौ ७, ५, १६)। मरुत्वतीयनिष्केवल्यै चतुर्विंशेन व्याख्याते। बृहतीकारं प्रगाथानां वैराजपृष्ठत्वात् ॥२॥

**वैराजं तु पृष्ठं सन्यूङ्खम् ॥३॥**

चतुर्विंशेनातिदेशाद् बृहत्पृष्ठं रथंतरं वा प्राप्तम्[2], वैराजं तु सामपृष्ठं भवति निष्केवल्ये। सन्यूङ्खम्, सह न्यूङ्खेन सन्यूङ्खम्। वैराज-शब्दः[3] प्राप्तव्यावृत्त्यर्थः। **बृहत्पृष्ठम्** (आश्वौ ७, ३, ६), **रथन्तरं वा** (आश्वौ ७, ३, १०) इति[4]। **विराजां मध्यमेषु पादेषु** (आश्वौ ७,११,३०) इति। **चतुर्थेऽहनि**[5] (आश्वौ ७,११,१) इत्युक्ते 'अस्मिन्नहनि न'[6] प्राप्नोति न्यूङ्खः, तस्मादिह सन्यूङ्खम्[7] इत्याह। तस्मात् स्तोत्रियानुरूपयोः न्यूङ्खो भवति ॥३॥

[वैरूपयोन्याः प्राग् बृहतो योनेः शंसनम्]

**बृहतश्च योनिं प्राग्वैरूपयोन्याः ॥४॥**

रथंतरादीनां योनीः शंसति, बृहतश्च[8] योनिमधिकं शंसति। तस्य स्थानं प्राग्वैरूपयोन्याः। रथंतरस्य बृहतो वैरूपस्य शाक्वरस्य रैवतस्येति पञ्च योन्योऽनेनानुक्रमेण शस्यन्ते। तत्र चतुर्विंश उक्तम् **तयोरक्रियमाणस्य योनिं शंसेत्** (आश्वौ ७, २,११) इति। पृष्ठस्थाने ऽक्रियमाणस्यैकस्य साम्नो योनिं

---

१. °जिदिह भ° मूको। २. द्र. आश्वौ ७,३,९-१०। ३. बृहच्छब्दः मूको। ४. नास्ति मूको। ५. °नीत्युक्तं ब[1]। ६-६. अन्यस्मिन्न......सह ना ब[1]। ७. न्यूङ्खम् मै। ८. द्वे बृ° ब[1]।

शंसेत् तदुपदिष्टयोः[1] साम्नोः। एवं विश्वजित्यपि चतुर्विशेनातिदशाद् यत्पवमाने कृतं तस्यैव योनिः प्राप्ता,[2] नेतरस्य। पवमाने च रथंतरं क्रियते। तस्यैव योनिः प्राप्ता, न बहतः, तस्मादिह बृहतो योनिर्विधीयते। चतुर्विंशिकां योनिं शस्त्वा वैरूपस्य योनिः शस्यते। तथैवेहापि[3] प्राप्तम्, बृहतोऽन्ते प्राप्तम्। तस्माद् वैरूपयोन्याः[4] प्राग् विधीयते। बृहतो योनिशंसनं भवति देशात् तस्माद् वक्तव्यम्। च-शब्दः समुच्चयार्थः। बृहतश्च इतराश्च योन्यः (?) इति। वैराजस्य[5] स्तोत्रियानुरूपौ सन्यूङ्खौ धाय्या। रथंतरस्य बृहतो वैरूपस्य शाक्वरस्य रैवतस्य पञ्च योन्यः। ततो वैराजस्य सामप्रगाथः। रथंतरस्य बृहतो वैरूपस्य[6] शाक्वरस्य रैवतस्येति सामप्रगाथः। तार्क्ष्यः। **तदिदास** (ऋ १०,१२०, १), **इन्द्रस्य नु वीर्याणि** (ऋ १, ३२,१) इति निष्केवल्यम् ॥४॥

[होत्रकाणां पृष्ठसाम्नां कथनम्]

**होत्रकाणां पृष्ठानि शाक्वरवैरूपरैवतानि ॥५॥**

होत्रकाणां शस्त्रेषु[7] पृष्ठानि क्रियन्ते। शाक्वरं च वैरूपं च रैवतं च शाक्वरवैरूपरैवतानि। अनुक्रमेण त्रयाणां त्रीणि पृष्ठानि भवन्ति—शाक्वरं मैत्रावरुणस्य, वैरूपं ब्राह्मणाच्छंसिनः, रैवतमच्छावाकस्य ॥५॥

[होत्रकाणां योनिशंसनम्]

**ते योनीः शंसन्ति ॥६॥**

ते होत्रकाः पृष्ठानि शंसन्तो[8] 'योनीः शंसन्ति[9]'। ता योन्यो वक्ष्यन्ते। [10]'ते इति'[10] वचनाद् इहैव ते योनिं शंसन्ति। इह दृष्टमन्यत्रापि तत्[11] प्राप्तं वचनात्। विषुवत्यभीवर्तेन्द्रक्रतुकालेयानां छन्दोगवचनाद् [12]"योनेः शंसनम्"[12]। [13]"अन्यत्र होत्रकाणां"[13] योनिशंसन न[14] विद्यते वचनाभावात् ॥६॥

[मैत्रावरुणब्राह्मणाच्छंसिनोर्योनिनिरूपणम्]

**वामदेव्यस्य मैत्रावरुणः। उक्ते ब्राह्मणाच्छंसिनः ॥७॥**

वामदेव्यस्य साम्नो योनिं मैत्रावरुणः शंसति **कया नश्चित्रः** (ऋ ४, ३१, १-३) इति तृचम्। होत्रकाणामधिकारान्मैत्रावरुणग्रहणम्। उक्ते ब्राह्मणाच्छंसिनः। द्वे योनी उक्ते[15] विषुवति नौधसस्य श्यैतस्य तृचे **तं वो दस्मम्** (ऋ ८,८८, १-३), **अभि प्र वः** (ऋ ८, ४९, १-३) इति। उक्तवचनादेते योनी इह ब्राह्मणाच्छंसी शंसति। मैत्रावरुणाधिकाराद् ब्राह्मणाच्छंसिन इत्याह। उक्ते इति वचनाद् यथा विषुवति पवमानगतयोर्योन्योः[16] शंसनमेवमिहापि पवमाने

---

१. तमुपदि° मूको। २. द्र. आश्री ५, १५, १६। ३. तस्यैवेहापि ब'। ४. °योन्योः मूको। ५. °जस्य तस्य ब'। ६. वैराजस्य ब'; वैरस्य मै। ७. शस्येषु मूको। ८. शस्यंतो ब'; शंसति मै। ९-९. नास्ति मूको। १०. नास्ति मूको। ११. त्राः ब'; नास्ति मै। १२-१२. योन्योः शंसनम् ब'; योनीशंसनम् मै। १३-१३. अन्यहो° मै। १४. नास्ति ब'। १५. द्र. आश्री ८, ६, १६। १६. °तयोर्योनिः ब'; °तयो योनिः मै।

स्तुतत्वाद् योनिशंसनम्। विषुवति तु पवमानयोरेवानुशंसनं यदि बृहद्रथंतरे पवमानयोर्भवतः[1] इत्यधिकारात्। तस्मात् सर्वत्र[2] पवमाने स्तुतानामेव[2] योनिशंसनं न क्रियते। तस्मादिह विश्वजिति जनित्रं चेत् पवमाने क्रियत इन्द्रक्रतोरपि योनिः शंस्तव्यैव छन्दोगानां वचनम्। जनित्रेऽक्रियमाणेऽपीन्द्रक्रतोश्च योनिशंसनं [3]छन्दोगानामेव वचनम्। तस्माद् विश्वजिति ब्राह्मणाच्छंसिनस्तिस्रो योन्यो नौधसस्य, श्यैतस्य इन्द्रक्रतोश्च[4] ॥ ७ ॥

[अच्छावाकस्य योनेर्निरूपणम्]

**कालेयस्याऽच्छावाकः ॥ ८ ॥**

कालेयस्य योनिमच्छावाकः शंसति तरोभिर्वः (ऋ ८, ६६, १-३) इति। **ब्राह्मणाच्छंसिनः** (आश्वौ ८, ७,७) इत्यधिकाराद् अच्छावाकग्रहणम्॥ ८ ॥

[वामदेव्यकालेययोर्योनिनिर्देशः]

**ऐकाहिकौ स्तोत्रियावेतयोर्योनी ॥ ९ ॥**

एकाहे भवावैकाहिकौ स्तोत्रियौ। एतयोर्वामदेव्यकालेययोः साम्नोर्योनी भवतः। **कया नः** (ऋ ४, ३१, १-३) **तरोभिर्वः** (ऋ ८, ६६, १-३) इति। अन्यास्वप्यृक्षु वामदेव्यं स्तूयते,[5] कालेयमपि। तस्मादिदमुच्यते। एतयोः साम्नोरैकाहिकावेव[6] स्तोत्रियौ योनी भवतो, नान्ये इति॥ ९ ॥

[पूर्वोक्तपृष्ठानां सामप्रगाथानां शंसनकालः]

**ता अन्तरेण कद्वतश्चैतेषामेव पृष्ठानां सामप्रगाथान् ॥ १० ॥**

ता योनीः कद्वतश्चान्तरेण मध्येनैतेषामेव पृष्ठानां शाक्वरवैरूपरैवतानां सामप्रगाथान् तु शंसेत्। **मो षु त्वा** (ऋ ७, ३२, १-२; कौ २८४; १६७५) इति समे (? साम) द्विपदः शाक्वरस्य। **इन्द्रमिद्देवतातये** (ऋ ८, ३, ५-६; कौ २८४ १५८७) इति रैवतस्य। [7]**सामसूक्तानि सप्रगाथानि सर्वपृष्ठेषु पृष्ठानि** (आश्वौ ८, ४, १८) इति प्राप्ते[8] आरम्भः। स्थानविवक्षार्थमेतेषामेव। पृष्ठानामिति वचनादितरेषामपि पृष्ठानां सामप्रगाथाः[9] सन्तीति[10] सिद्धम्[10]। तस्माद् वामदेव्यानामपि पृष्ठसंज्ञा, ऐकाहिकानां च सामप्रगाथसंज्ञा भवति। तस्मात् **साम्नानन्तर्येण द्वौ द्वौ प्रगाथौ** (आश्वौ ९, ११, १०) इत्युक्ते सामप्रगाथाः। नित्या इतरे भवन्ति॥ १० ॥

---

१. द्र. आश्वौ ८, ६, ८,। २-२. °पवमानस्तुतानामिव ब[1]। ३. शंसिदो° ब[1]। ४. °क्रतोस्य मूको। ५. सूयते ब[1]। ६. द्र. आश्वौ ५, १६, १; २। ७. नास्ति मूको। ८. प्रारम्भे मं। ९. सप्रगाथाः ब[1]; °गाथः मं। १०-१०. संतो निसिद्धम् ब[1]।

[विश्वजित्यभिजिदादिनवरात्रप्रकाराणां वर्णनम्]

**'सत्रा मदासः', 'यो जात एव', 'अभूरेकः' इति सामसूक्तानि पुरस्तात् सूक्तानामुक्तं तृतीयसवनमुत्तमेन पृष्ठयाह्नैकाहिकौ तु प्रतिपदनुचरौ बृहच्चेदग्निष्टोमसाम 'त्वमग्ने यज्ञानाम्' इति स्तोत्रियानुरूपाविति नवरात्रः ॥ ११ ॥**

**सत्रा मदासः** (ऋ ६, ३६), **यो जात एव** (ऋ २, १२), **अभूरेकः** (ऋ ६, ३१), इत्येतानि सूक्तानि सामसूक्तसंज्ञानि। अनुक्रमेणैकैकमेकैकः[1] शंसति। पुरस्तात् सूक्तानाम् अहःशस्याहीनसूक्तानां पुरस्तात् सामसूक्तानि शंसति। प्रगाथानां योऽधिकारस्तत्सूक्तानामित्युच्यते। सामसूक्तानीति [2]संज्ञा। सामसूक्तानीत्युक्ते[2] एतानि प्रत्येतव्यानि[3]। सामसूक्तेभ्यः पुरस्तात् शिल्पानि भवन्त्यूर्ध्वमारम्भणीयाभ्यश्चोदितानि हि यस्मात्। शस्त्राणि वक्ष्यन्ते। स्तोत्रियानुरूपयोनिसामप्रगाथाः कद्वान् आरम्भणीया बार्हतसूक्तानि[4] सामसूक्ते अहरहः शस्याहीनसूक्तानि मैत्रावरुणस्य। स्तोत्रियानुरूपौ योनी तिस्रो वा ततः सामप्रगाथः कद्वानारम्भणीया सुकीर्तिर्वृषाकपिः सामसूक्ताहीनसूक्ताहरहःशस्यानीति ब्राह्मणाच्छंसिनः। स्तोत्रियानुरूपयोनिः सामप्रगाथः कद्वानारम्भणीयाः प्रत्येवयामरुत्सामसूक्ताहीनसूक्ताहरहः[5]शस्यानीति अच्छावाकस्य[5]। उक्तं तृतीयसवनम्। उक्तं व्याख्यातं तृतीयसवनम् उत्तमेन पृष्ठ्याह्ना पृष्ठ्यस्य षष्ठेन अह्ना। वैश्वदेवमाग्निमारुतं च व्याख्यातम्। ऐकाहिकौ तु प्रतिपच्च अनुचरश्च प्रतिपदनुचरौ। [6]बृहच्चेदग्निष्टोमसाम, **त्वमग्ने यज्ञानाम्** (ऋ ६, १६, १-३), **त्वामीळे अध** (ऋ ६, १६, ४-६) इति स्तोत्रियानुरूपौ। यज्ञायज्ञीयस्य सानुरूपयोनिः। जातवेदस्यम् **इमं स्तोमम्** (ऋ १, ९४)। आग्निमारुतशेषं समानमग्नीष्टोमीयम् [7]बृहच्चेदग्निष्टोमसाम बृहत्साम[8] चेदेवमग्निष्टोमसाम भवति। आग्निमारुते यत् साम, [9]तदग्निष्टोमसामेत्युच्यते। चेदितिवचनादनित्यं बृहद् भवति, यज्ञायज्ञीयं वा भवति। स्तोत्रियानुरूपाविति वचनात् स्तोत्रियानुरूपौ स्थाने भवतः। छन्दोगवशात् स्तोत्रियस्तृचो भवति [10]तत्प्रामाण्यादनुरूपोऽपि तृचः। इति नवरात्रः। इत्ययं नवरात्रो व्याख्यातोऽभिजिदादिः। [11]अभिजित्त्रयः स्वरसामानः विषवान् पुनरावृत्ताः[12] स्वरसामानः विश्वजिच्चेत्ययं नवरात्रो व्याख्यातः। संज्ञा चेयं **नवरात्रस्याभिजिद्विश्वजितोः स्थाने** (आश्रौ ११, ३, २) इत्युक्त एतस्य ग्रहणम् ॥ ११ ॥

---

१. °कैकं ब[1]; °कैक मै। २-२. संज्ञायामसूक्तानि सामसूक्तं संज्ञानीत्युक्ते ब[1]। ३. द्र. आश्रौ ९, १०, १२। ४. °सूक्ता मूको। ५. °सूक्ताहरहःशस्यानि इत्यारभ्य ८, ७, ११ सूत्रव्याख्यास्थ-इन्द्रस्य नु वीर्याणीति इतिपर्यन्तः पाठो नास्ति मै। ६. नास्ति मूको। ७. यदग्निष्टो° मूको। ८. बृहत्स्तोम मूको। ९. दत्तमग्नि° मूको। १०. तत्प्राणत्मदनुरू° मूको। ११, अभिव्ययः मूको। १२. पुरमास्वृताः मूको।

[नवरात्रे सर्वेषामह्नाम् अग्निष्टोमत्वम्]

**सर्वेऽग्निष्टोमाः ॥१२॥**

नवरात्रे सर्वे दिवसा अग्निष्टोमसंस्थाः, **एतेनाह्ना सुत्यानि** (आश्वौ ७, १,३), अनियमे प्राप्ते नियमः क्रियते । सर्वग्रहणे क्रियमाण उत्तरत्र 'स्वरसामग्रहणात् स्वरसाम्नामेव विकल्पः स्यात्, 'इतरेषां त्रयाणामनियमः' स्यात् ॥१२॥

[एकेषां मतेन स्वरसाम्नामुक्थ्यत्वम्]

**उक्थ्यानेके स्वरसाम्नः ॥१३॥**

एके शाखिनः स्वरसाम्न उक्थ्यसंस्थान्' मन्यन्ते । तस्मात् स्वरसाम्नां' विकल्प उक्थ्या वा भवन्ति, अग्निष्टोमा वा । नवरात्राधिकारात् स्वरसाम्न इत्याह ॥१३॥

[अभिप्लवे द्वितीयतृतीययोरह्नोः क्रमशो गौरायुष्ट्वम्]

**द्वितीयमाभिप्लविकं गौरायुरुत्तरम् ॥१४॥**

**स्वरसाम्नो विश्वजितं पृष्ठं त्रीनभिप्लवानिति सप्तमं द्विरात्रोनं कृत्वाऽथ पृष्ठ्यमुखांश्चतुरभिप्लवांश्चतुरो मासानुपयन्ति । अथोत्तमं संभरन्ति त्रीनभिप्लवान् गोआयुषी दशरात्रम्** (आश्वौ ११,७,१०-११) इति । तस्माद् गोआयुषी वक्तव्ये, दशरात्रश्च, तदर्थमिदमुच्यते—द्वितीयमाभिप्लविकं गौः । अभिप्लवे भवमाभिप्लविकं द्वितीयमहर्गौर्भवति । गौरित्युक्त अभिप्लवस्य द्वितीयमहः कर्तव्यम् । संज्ञा चेयम् । **गौरभिजिच्च** (आश्वौ १०,१,४) इति चोदित एतस्य गोर्ग्रहणम् ।

आयुरुत्तरम् । द्वितीयादाभिप्लविकादुत्तरमहस्तृतीयमहरायुर्भवति । संज्ञा चेयम् । **आयुर्दीर्घव्याधेः** (आश्वौ १०, १, ६) इत्युक्ते' अभिप्लवस्य तृतीयमहः कर्तव्यम् । 'उक्ताभ्यामतिदेशादुभयत्र गौरायुश्च भवत.' ॥१४॥

[आभिप्लविकाभ्यां पूर्वोत्तरत्र्यहाभ्यां सवनशो गोआयुषोः प्रकारः]

**त्र्यहक्लृप्ते पूर्वस्मात्त्र्यहात्सवनशो यथान्तरं गौरायुरुत्तरात् ॥१५॥**

त्र्यहक्लृप्ते गोआयुषी वक्ष्येते' । त्र्यहेण क्लृप्ते' त्र्यहक्लृप्ते' । कथं त्र्यहक्लृप्त इति । उच्यते । पूर्वस्मात् त्र्यहात्' अभिप्लवत्र्यहाद् गौः सवनशः' सवनं सवनं' च यथान्तरं' यथायथोत्तरं यथानुक्रमेण कल्पते । प्रथमादाभिप्लविकात् प्रथमसवनं', द्वितीयाद् द्वितीयसवनं, 'तृतीयात् तृतीयसवनम्', एवं

१. सामग्र° मूको । २-२. इतरेषामन्द्रामनियमः मूको । ३. उक्थ्यसंज्ञा मूको । ४. °साम्नः मूको । ५. °त्युक्तं मूको । ६-६. उक्ता आमितिदेशादुवच्चयोर्भवतः मूको । ७. वक्ष्यते मूको । ८. कल्पते मूको । ९. अहःकृप्ते मूको । १०-१०. रसहात् अभिप्लवत्र्यहाः शवशः मूको । ११-११. समामंव यथायथोन्तरं मूको । १२. प्रथमं मूको । १३-१३. तृतीयासवनं मूको ।

त्रीणि सवनानि त्रिभिरहोभिर्यथानुक्रमेण कल्पन्ते। छन्दोगवशादयं कल्पः, न स्ववशात्। आयुरुत्तरात्। आभिप्लविकादुत्तरात् त्र्यहात् सवनशो यथोत्तरमायुः कल्पते। चतुर्थेन प्रातःसवनं, पञ्चमेन माध्यंदिनं सवनं च, षष्ठात्तृतीयसवनम्। एवं छन्दोगवचनम्। एवं छन्दोगवशादेतदुच्यते, न स्ववशात् ॥१५॥

[आभिप्लविकेभ्यो युग्मायुग्मेभ्योऽहोभ्यः सवनशो गोआयुषोः प्रकारः]

**षळहक्लृप्ते[1] युग्मेभ्यो गौरयुजेभ्य आयुः ॥१६॥**

षळहक्लृप्ते गोआयुषी वक्ष्येते[2]। षळहेन क्लृप्ते[3] षळहक्लृप्ते। कथं षळहक्लृप्तिरिति तदुच्यते। अभिप्लव इति वर्तते षळहस्य युग्मेभ्यः[4] समेभ्योऽहोभ्यो द्वितीयचतुर्थषष्ठेभ्यः सवनशो यथान्तरं गौः कल्पते—द्वितीयात् प्रातःसवनं, चतुर्थान्माध्यंदिनं, षष्ठात् तृतीयसवनमेवेति। एवमेतच्छन्दोगवशाद् भवति, न स्ववशाद् भवति। अयुजेभ्यो विषमेभ्यः सवनशो यथान्तरम् आयुः कल्पते। प्रथमात् प्रातःसवनं, तृतीयान्माध्यदिनं, पञ्चमात्तृतीयसवनम्। एवमेतच्छन्दोगवशाद् भवति, न स्ववशात् ॥१६॥

[दशरात्राधिकारप्रवर्तनम्]

**दशरात्रे ॥१७॥**

गोआयुर्भ्यामनन्तरं[5] दशरात्रो वक्ष्यते। दशरात्र इत्यधिकारः। यदित ऊर्ध्वं वक्ष्यामस्तद् दशरात्रे शस्यविधानं वेदितव्यम्। संज्ञा चेयम्। **गोआयुषी दशरात्रम्** (आश्वौ ११,७,११) इत्युक्त एतस्य ग्रहणम् ॥१७॥

[दशरात्रे नवरात्रगणनम्]

**पृष्ठ्यः षळहः पूर्वत्र्यहः पुनश्छन्दोमाः ॥१८॥**

पृष्ठ्यः षळहो यथाम्नातः पूर्वं क्रियते। गोआयुषी कल्पे अभिप्लवतृतीयमहः अह्नो विकृतात् तस्मादभिप्लवाधिकारात् पृष्ठ्यग्रहणम्। '[6]त्र्यहाधिकारात् षडहग्रहणम्[6]'। पूर्वत्र्यहः पृष्ठ्याधिकारात् पृष्ठ्यस्य पूर्वस्त्र्यहः षडहादनन्तरं पुनः क्रियमाणः। तानि त्रीण्यहानि छन्दोमा इत्युच्यन्ते। संनिकृष्टोऽन्त्यत्र्यहः[7], स प्राप्तस्तस्मात् पूर्वत्र्यहः[8] इत्याह। पुनरितिवचनात् षडहादनन्तरं क्रियते। अन्यथा अस्यावृत्तिर्न[9] प्राप्नोति। षडहस्थस्यैव त्र्यहस्य छन्दोमा इत्येषा संज्ञा, "[10]**पृष्ठ्यस्तोमच्छन्दोमाः** (आश्वौ १०,४,१) इत्युक्त[10]" एते प्रत्येतव्याः ॥१८॥

१. कल्पे मूको। २. वक्ष्यते मूको। ३. कल्पते मूको। ४. षडहानुपमेभ्यः मूको। ५. गोआयुषोभ्याम° मूको। ६-६. अहाधिकारात् दत् षडग्रहणम् मूको। ७. °ष्टोऽयं त्र्यहः मूको। ८. पूर्वस्त्र्यहः मूको। ९. अन्त्यावर्तुन मूको। १०-१०. °स्तोम इत्युक्ते मूको।

[छन्दोमेषु तृतीयेऽह्नि वैरूपस्य स्थायित्वप्रतिषेधः]

**न त्वत्र स्थायि वैरूपं तृतीये ॥१९॥**

अत्र 'छन्दोमेषु तृतीयेऽहनि' तु वैरूपं 'स्थायि न' भवति। अस्थायित्वात् षष्ठस्थानेऽक्रियमाणस्य वैरूपस्य योनिर्न शस्यते। नेति प्रतिषेधार्थः। तु-शब्दः प्राप्तव्यावृत्त्यर्थः। अक्रियमाणस्य योनिशंसनं प्राप्तम्। अत्रेति छन्दोमा निर्दिश्यन्ते। दशरात्राधिकाराद् दशरात्रे तृतीयस्य मा भूदिति। तृतीय इति तृतीयवचनात् तृतीये वैरूपमेव 'स्थायि न' भवति 'अपरं तु भवति' ॥१९॥

[छन्दोमेषु प्रथमेऽह्नि मध्यंदिनस्य द्विसूक्तत्वम्]

**प्रथमस्य च्छान्दोमिकस्य द्विसूक्तो मध्यंदिनः ॥२०॥**

प्रथमस्य छान्दोमिकस्य[1] छन्दोमेषु[1] भवः छान्दोमिकः[7] तस्य छान्दोमिकस्य[8]। द्वे सूक्ते यस्य द्विषूक्तः मध्यंदिनः। **मध्यंदिन इत्युक्त एते[9] शस्त्रे प्रतीयात्** (आश्वौ ७,५,१६)। मध्यंदिने तृतीयाधिकारात्[10] प्रथमस्येत्युच्यते। दशरात्राधिकारात् छान्दोमिकस्येत्याह[11]। द्विषूक्त इति वचनाद् उत्तरसूत्रे "वाकारः समुच्चयार्थो[12] भवति, न विकल्पार्थः। विकल्पे सति एकैकं सूक्तं प्राप्नोति ॥२०॥

[विषुवति निविद्धानद्वयं मरुत्वतीयनिष्केवल्ये सूक्ते वा]

**वैषुवते निविद्धाने पूर्वे[13] वा[14] ॥२१॥**

निविद्धाने वैषुवते[15] मरुत्वतीयं[16] निविद्धानीयं सूक्तं च। निष्केवल्ये[17] सति एकैकं सूक्तं प्राप्नोति। वैषुवते निविद्धाने निविद्धाने विषुवति मरुत्वतीये **अभि त्यं** (ऋ १, ५१) निष्केवल्ये, एवं द्वे सूक्ते। वाकारः समुच्चयार्थः। अस्याह्नः क्लृप्तिः। **उपप्रयन्तः** (ऋ १, ७४) इत्याज्यम्[18]। ऐकाहिकं प्रउगम्[19]। होत्रकाणां स्तोत्रियानुरूपारम्भणीयाः, यद्वा दशमावापपर्यासाः। प्रथमो[20] मरुत्वतीयस्यातानः। **त्यं सुमेषं** (ऋ १, ५२,१), **कया शुभा** (ऋ १, १६५, १) इति मरुत्वतीयम्। बृहतो स्तोत्रियानुरूपाः धाय्या। रथन्तरस्यातानविधानात्[21] सामप्रगाथः[22] तार्क्ष्यः। **अभि त्यं मेषम्** (ऋ १,५१,१), **इन्द्रस्य नु वीर्याणि** (ऋ

---

१-१. छन्दोगं अहे मूको। २-२. स्थापितं मूको। ३-३. स्थानिव मूको। ४-४. रं तु मूको। ५. छन्दोगस्य मूको। ६. प्रथमछन्दोगेषु मूको। ७. छान्दोगिकः मूको। ८. छान्दोगिकस्य मूको। ९. नास्ति मूको। १०. तृतीयानिरात्रात् मूको। ११. छान्दोगिकस्ये° मूको। १२-१२. वकारसमु° मूको। १३. नास्ति मूको। १४. व मूको; च BI आन.। १५. विषुवति मूको। १६. °तीयेयं मूको। १७. °द्धानोयं मूको। १८. द्र. आश्वौ ७,१०,२। १९. द्र. आश्वौ ५,१०,४-९। २०. प्रथमा मूको। २१. °स्यातानः विधा° मूको। २२. °गाथाः मूको

१,३२,१) इति[1] निष्केवल्यम्[2]। होत्रकाणां शस्त्राणि तृतीयसवनं च प्रथमेनाह्ना समानम्। **आ याहि वनसा सह** (ऋ १०,१७२,१) इति पुरस्ताद् द्वैपदं सूक्तस्य[3]। अच्छावाकस्य **नकिष्टं कर्मणा नशत्** (ऋ ८,७०,३) इति स्तोत्रियम्[4]। [5]छन्दोगाश्च जगतीकारं शंसन्ति[5] पृष्ठवशात्। होत्रकाणां प्रगाथाः पृष्ठवशाच्छस्यन्ते, न यथा स्तुताः। होत्रकाणां प्रथमप्रगाथेभ्यो हि अन्यद् यथा स्तुतं शस्यते। उक्थ्योऽयम्। स्तोत्रियानुरूपेभ्य ऐकाहिकान्युक्तानि ॥२१॥

[छन्दोमेषु द्वितीयस्याह्नो मध्यंदिने मरुत्वतीयशस्त्राणाम् कथनम्]

**द्वितीयस्य शंसा महाम् 'महश्चित्त्वमिन्द्र', 'पिबा सोममभि', 'तमस्य द्यावापृथिवी', 'महाँ इन्द्रो नृवद्', इति मरुत्वतीयम् ॥२२॥**

द्वितीयस्य छान्दोमिकस्य मध्यंदिनो वक्ष्यते[6]। **शंसा महाम्** (ऋ ३, ४६), **महश्चित्त्वमिन्द्र** (ऋ १, १६६), **पिबा सोममभि** (६, १७)। अभीति विशेषग्रहणात् **पिबा सोमं महतः** (ऋ ६, ११६) इति न भवति। इह विशेषवचनादभिजिति तु इतरद्[7] भवति। कथं ज्ञायते। पुनरिति[8] मूर्ताविशेषग्रहणात्, यदि च छन्दोगैस्तु कृतं विशेषणं, तदेतदभिजित्यपि भवति। अनरिति (?) मूर्त्ताविशेषग्रहणमनर्थकम्। यत उभयत्र विशेषणम्, तस्मादभिजिति[9] इतरसूक्तं भवति। **तमस्य द्यावापृथिवी** (ऋ १०, ११३), **महां इन्द्रो नृवत्** (ऋ ६, १६, १६) इति पञ्चसूक्तानि मरुत्वतीयं चतुश्चत्वारिंशत्वात् स्तोमस्य। नृवदिति[9] विशेषणम् **महाँइन्द्रो य ओजसा** (ऋ ८,६) इति मा भूदिति। गायत्रमिति चेन्न, जागतान्यपि विद्यन्ते, तस्माद गायत्रनिवृत्त्यर्थं नृवदिति विशेषणम। मरुत्वतीयग्रहणात् प्राप्तस्य सूक्तस्य स्थाने सूक्तानां कृशानि पञ्चनवकानि पूर्यन्ते। पञ्च सूक्तान्यादिष्टानि श्रुतिवचनात् [10]**पञ्च सूक्तानि शस्यन्ते** (ऐब्रा ५, १८) इति। **मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानि च** (ऐब्रा ५, १८) इति ॥२२॥

[छन्दोमेषु द्वितीयस्याह्नो निष्केवल्यसूक्तानां तृतीयस्य च मरुत्वतीयसूक्तानां कथनम्]

**'अपूर्व्या पुरुतमानि', 'तां सु ते कीर्ति', 'त्वं महाँ इन्द्र यो ह', 'दिवश्चिदस्य', 'त्वं महाँ इन्द्र तुभ्यम् इति निष्केवल्यम्। तृतीयस्य 'इन्द्रः स्वाहा', 'गायत्साम', 'तिष्ठा हरी', 'प्रमन्दिने', 'इमा उ त्वा' इति मरुत्वतीयम् ॥२३॥**

---

१. ८,७,११ सूत्रव्याख्यास्य सूक्ताहरहः शस्यानि इत्यारम्भ इन्द्रस्य नु वीर्याणीति इति पर्यन्तः पाठो नास्ति गै। २. वल्यं मै। ३. द्र. आश्रौ ८, ७, २४। ४. द्र. आश्रौ ७,४,४। ५-५. °गा च तग तोकारं (चणतिकार मै) शंसति मूको। ६. वक्ष्यन्ते मूको। ७. ति इत एद् ब[1]। ८. मूतोवि° ब[1]। ९. °जिति इति ब[1]। १०. पञ्च पञ्च मै।

अपूर्व्या पुरुतमानि (ऋ ६,३२), ता सु ते कीर्तिम् (ऋ १०,५४), त्वं महाँ इन्द्र यो ह (ऋ १, ६३), दिवश्चिदस्य (ऋ १, ५५), त्वं महाँ इन्द्र तुभ्यम् (ऋ ४, १७) इत्येतानि पञ्चसूक्तानि निष्केवल्ये । त्वं महाँ इन्द्र यो ह इति विशेषणं तुभ्यमित्येतस्य प्रतिषेधार्थम् । पुनः त्वं महाँ इन्द्र तुभ्यम् इत्यत्र विशेषणेऽक्रियमाणे यत् पूर्व्यं विशेषणं कृतं तदेवेह पुनः प्राप्नोति, तस्माद् विशेषणकरणम्[1] । विशेषवचनाद् आम्नायस्य यत्पूर्व्यं, तद् व्याहतम्[2] । तस्मादुभयत्र विशेषणम् । निष्केवल्यग्रहणात्[3] प्राप्तस्य सूक्तस्य स्थाने पञ्च सूक्तानि भवन्ति । द्वितीयस्याह्नः क्लृप्तिः । अग्निं दूतम् (ऋ १, १२, १) इत्याज्यम्[4] । गार्त्समदं प्रउगम्[5] । होत्रकाणां स्तोत्रियानुरूपारम्भणीया द्वात्रिंशदावापपर्यासाः[6] । द्वितीयो[6] मरुत्वतीयस्यातानः । शंसा महाम् (ऋ ३, ४९) इति पञ्चसूक्तानि मरुत्वतीयम् । रथंतरस्य स्तोत्रियानुरूपौ धाय्या बृहतो योनिरुभयवान् प्रगायश्च । अपूर्व्या पुरुतमानि (ऋ ६, ३२) इति पञ्च सूक्तानि निष्केवल्यम् । होत्रकाणां स्तोत्रियानुरूपप्रगाथारम्भणीया[7] (?) अष्टर्चानि पूर्वयोर्द्वयोः[8] दशदशावापाः[9] । ततः द्वितीयाः संपाताः । अहरहःशस्यानीति । द्वितीयाद् वैश्वदेवाग्निमारुते । इमा नु कम् (ऋ १०, १५७) इति द्विपदासूक्तं पुरस्ताद् वैश्वदेवस्य । ऊर्ध्वं स्तोत्रियानुरूपेभ्य ऐकाहिकान्यहानि । सूक्तानामेकैकं शिष्ट्वाऽऽवपेरन् (आश्वौ ७, ८, ४), 'इमा उ वाम्' (ऋ ३, ६२, १-३) इति तिस्रः (आश्वौ ७, ९, २), 'इन्द्रा को वाम्' (ऋ ४, ४१-४२) इति सूक्ते 'यज्ञे दिवः' (ऋ ७, ९७-९८) इति सूक्ते (द्र. आश्वौ ७, ९, ३), 'विष्णोर्नु कम्' (ऋ १, १५४-१५५) इति सूक्ते (द्र. आश्वौ ७,९,४) इत्यावापाः ।

तृतीयस्य छान्दोमिकस्य मध्यंदिना वक्ष्यन्ते । इन्द्रः स्वाहा[10] (ऋ ३,५०), गायत्साम (ऋ १,१७३), तिष्ठा हरी[10] (ऋ ३,३५), प्र मन्दिने (ऋ १,१०१), इमा उ त्वा (ऋ ६,३१) इति पञ्च सूक्तानि मरुत्वतीयम् । मरुत्वतीयग्रहणात् प्राप्तस्य स्थाने पञ्च सूक्तानि भवन्ति ॥२३॥

[तृतीयास्याह्नो मध्यंदिने निष्केवल्यसूक्तानां कथनमावापकरणं च]

'सं च त्वे जग्मुः' इति सूक्ते, 'आ सत्यो यातु', अहं भुवं', 'तत्त इन्द्रियम्' इति निष्केवल्यम्, 'आ याहि वनसा', 'इमा नु कं', 'बभ्रुरेकः' इति द्विपदासूक्तानि पुरस्ताद् वैश्वदेवसूक्तानाम् ॥२४॥

सं च त्वे जग्मुः (ऋ ६,३४-३५) इति द्वे सूक्ते, आ सत्यो यातु (ऋ ४,१६), अहं भुवम् (ऋ १०,४८), तत्त इन्द्रियम् (ऋ १,१०३) इत्येतानि पञ्च सूक्तानि

---

१-१. विशेषणवचनात् ब[1] । २. व्याहने मूको । ६-३. °ल्यग्रहणं (°णा मै) मूको । ४. द्र. आश्वौ ७,१०,३ । ५. द्र. आश्वौ ७,६,२-३ । ६-६. °पर्यासो (°सा मै) द्वितीया मूको । ७. °रूपाप्रगा° मै । ८. पूर्वयोः ब[1] । ९. °दशावापः मूको; द्र. आश्वौ ७,१२,१ (?) । १०-१०. इन्द्रपहेति मूको ।

निष्केवल्ये। अष्टचत्वारिंशस्तोमस्य पञ्च सूक्तानि भवन्ति। 'निष्केवल्यम् इति' वचनात् प्राप्तस्य सूक्तस्य स्थाने पञ्च सूक्तानि भवन्ति। तृतीयस्याह्नः क्लृप्तिः **युक्ष्वा हि** (८, ७५) इत्याज्यम्[२]। औष्णिहं प्रउगम्[३]। होत्रकाणां स्तोत्रियानुरूपारम्भणीया षट्त्रिंशदावापपर्यासाः। षष्ठस्य तृतीयो[४] मरुत्वतीय-स्यातानः। **इन्द्रः स्वाहा** इति पञ्च सूक्तानि इति मरुत्वतीयम् (आश्वौ ८,७,२३)। बृहतः स्तोत्रियानुरूपौ। धाय्या। रथंतरस्य योनिः। **इन्द्र त्रिधातु** (ऋ ६, ४६, ९-१०) इति सामप्रगाथः। ताक्ष्यः। **सं च त्वे जग्मुः** इति पञ्च सूक्तानि निष्केवल्यम्। होत्रकाणां स्तोत्रियानुरूपारम्भणीयाष्टर्चावापाः पूर्वयोर्द्वयोः पञ्चदश[५] पञ्चदशावापाः[६], अच्छावाकस्य तु दश। ततस्तृतीयः[७] संपातः[८]। अहरहःशस्यानीति।

तृतीयेनाह्ना वैश्वदेवाग्निमारुते। **बभ्रुरेकः**[९] (ऋ ८, २९) इति द्विपदासूक्तं पुरस्ताद् वैश्वदेवसूक्तस्य। उक्थेषु[१०] स्तोत्रियानुरूपेभ्यः ऐकाहिकान्युक्तानि। **सूक्तानामेकैकं शिष्ट्वाऽऽवपेरन्** (आश्वौ ७, ८, ४), **'श्रुष्टी वां यज्ञो', 'युवां नरा', 'पुनीषे वाभिमानि वाम्'** (आश्वौ ७,९,२), **'आयात्विन्द्रः स्वपतिः** (ऋ १०,४४), **'इमां धियम्'** (ऋ ७,९,३), **'विष्णोर्नु कम्'** इति सूक्ते **'परो मात्रया'** (आश्वौ ७,९,४) इत्यावापः। अत्र[११] **'य एक इद्विदयते'** (ऋ १, ८४, ७) इत्येतयोः अनुरूपयोस्तृतीयस्य पादस्यादावष्टाक्षरोऽभ्यासः[१२] कर्तव्यः। बृहतीसंप्रत्ययार्थं[१३] **यथास्तुतम्**[१४] (आश्वौ ५, १५, १४) इति वचनात्। **गायन्ति त्वा गायत्रिणः** (ऋ १,१०,१) इत्येतत्स्तोत्रियानुरूपयोश्चतुर्थं पादमभ्यस्यन्ति[१५] च्छन्दोगाः। तत्र **यथास्तुतम्** (आश्वौ ५,१५,१४), इति वचनादभ्यासः प्राप्तो न क्रियते, "कस्मात् पाशुका" भवति इति छन्दोगब्राह्मणम्। तत्र **गायन्ति त्वा**[१६] (ऋ १, १०, १) इत्येतत् छन्दोगवशात् उद्वंशीयं[१७] "पाङ्क्तं संपद्यते। गायत्रीषु च उष्णिक्षु च गीयते उद्वंशीयम्"[१८]। **आ त्वा विश न्त्विन्दवः** (ऋ ८,९२, २२; कौ १९७, १६६०), **इन्द्रः सुतेषु सोमेषु**[१९] (ऋ ८,१३, १), कौ ३८१; ७४६) इत्येतासु च, तस्मात्पाङ्क्तं साम भवतीति सर्वार्थं ब्राह्मणं[२०] न भवतीति उक्तार्थमेव। तस्मादुद्वंशीयेऽभ्यासः छन्दःसंपादनार्थं न भवति। यदिदं छन्दः संपादस्यार्थत्वात्[२१] पाङ्क्तं साम च भवति। वचनात् सर्वत्र पङ्क्तयः संपद्येरन्। न च संपद्यन्ते। तस्मादभ्यासो[२२] न कर्तव्यः। अस्माकं च सूत्रकारेण "छन्दस्कार्यतोऽभ्यास

---

१-१. °वल्य इति मूको। २. द्र. आश्वौ ७,१०,१४। ३. द्र. आश्वौ ७,१०, ५। ४. तृतीया मूको। ५. नास्ति ब'। ६. °वाप मूको। ७. °या मूको। ८. °ता मूको। ९. अभ्रूरेकः मूको। १०. उक्थ्येषु मै। ११. यत्र ब'। १२. पादस्याष्टा° ब'। १३. बृहतो संपत्ययार्थं ब'। १४. यथास्तवमिति मूको। १५. पादमन्ते (°ते ब') मूको। १६-१६. कस्माणांशुकाम मै। १७. त्वेतेशा उटं शोयं (उद्वंशीयं मै) मूको। १८-१८. नास्ति ब'। १९. सोम मूको। २०-२०. सर्वार्थं ब्राह्मणा ब'। २१. सम्पदस्या° मै। २२. यस्माद° ब'। २३. छन्द-स्कारीतोभ्यास ब'; छंस्करोतीभ्यास मै।

उपदिष्टः । **बहतीकारं चेत्** (आश्वौ ५,१५,७,) इति वचनात्, **होतुराद्यां वर्जयित्वा** (आश्वौ ६,४,६) इति वचनात्, **चतुरक्षराणि त्वच्छावाकः** (आश्वौ ६,४; ६) इति वचनात्, यत्र च्छन्दःसंपदर्थोऽभ्यासो[1] न भवति तत्रास्माभिः अभ्यासो न कर्तव्यः । यथा 'विराजे राजनि च †न किंचिच्छन्दः† सम्पद्यते [2]उद्वंशीयेऽभ्यासः[3] कर्तव्य इति[2], शान्ति-आनपाङ्क्त साम[4] भवतीति ब्राह्मणवचनादुवथ्येऽभ्यासः[5] क्रियते । पर्यायेषु तु **आ ये** (ऋ ५, ६०,२), **स तु** (ऋ ६, ३६,५), **आ तु** (ऋ ४,३२,१), **आनुष्टुभी वै रात्रिः** (ऐब्रा ४,६) इति ब्राह्मणवचनाद् एवमनुष्टुप्संपदेऽभ्यासः[6] । तस्मादुभयत्रापि श्रुतिवचनाद् एवोभयथाभ्यसन्ति[7] । तस्मादुभयत्रापि बह्वादेरभ्यासः कार्यः । पङ्क्तिसंपदर्थमुक्थ्ये[8], अनुष्टुप्संपदर्थं पर्यायेषु ।

**आ याहि वनसा** (ऋ १०,१७२), **इमा नु कम्** (ऋ १०,१५७), **बभ्रुरेकः** (ऋ ८,२९) इत्येतानि त्रीणि द्विपदासूक्तानि द्विपदानामृचां सूक्तानि वैश्वदेवानि सूक्तानि द्विपदासूक्तानि यानि[10] सूक्तानि तेषां पुरस्तादन्वहं छन्दोमेषु[11] प्रयोक्तव्यानि । **आ याहि** इति सप्तमेऽहनि । **इमा नु कम्** इत्यष्टमेऽहनि । **बभ्रुरेकः** इति नवमेऽहनि । द्विपदासूक्तानीति संज्ञाव्यवहारार्थम्[12] आहावार्थं च यथा तार्क्ष्यं इति । **नित्यानि द्विपदासूक्तानि** (आश्वौ ८, ९,६) प्रत्येतव्यानि । छन्दोऽन्यत्वात् संज्ञान्यत्वाच्च पृथगाहावो भवति । यथा [13]तार्क्ष्ये संज्ञान्यत्वाद्[13] देवतान्यत्वाच्च पृथगाहावो भवति, यथा एवयामरुति[14] । यत्र देवता छन्दः संज्ञा[15] इत्येतानि भवन्ति, [16]ततस्तेषां सत्त्वादाहावयथा निविद्धानीयानि[16] ॥२४॥

[नवरात्रस्य समूढहकरणम्]

**इति तु[17] समूळ्हः ॥२५॥**

इत्येवं क्लृप्तो नवरात्रः समूळ्हसंज्ञो भवति । अवयवशः समुदितस्य षडहस्य नवरात्रस्य दशरात्रस्य[18] च समूळ्ह इति संज्ञा[19] । समूळ्हानि छन्दांसि यस्मिन् स समूळ्हः । समुह्यन्ते[20] स्वस्मात् स्थानात् तथा तानि । गायत्रमेव प्रातःसवनं त्रैष्टुभमेव[21] माध्यंदिनं, जागतं वै तृतीयसवनम् (?) इति ॥२५॥

॥ इत्यष्टमे सप्तमः खण्डः ॥

---

१. °पदार्थोऽ (°र्थऽ मै) भ्यासो मूको । २-२. विराजनि च नश्चि छन्दःसंपधन्ते ब' । †-†. न श्चि छल्दः मै । ३. वशीयोऽ° (°वेऽ° मै) मूको । ४. अत सै । ५. सोम ब' । ६. °दुवच्चाभ्यासं ब' । ७. पदोभ्यासः मूको । ८. °राद्यो भ° ब' । ९. °मुक्थे ब' । १०. नास्ति ब' । ११. छन्दोगेषु मूको । १२. संज्ञानव्य° मै । १३-१३. तार्क्ष्यसंज्ञा° मूको । १४. °मरुत्वती ब'; °मरुती मै । १५. संता ब' । १६-१६. ततस्तेषा (षां मै) मत्वदाहावय यथा (सत्वदाहाव यथा मै) विविधानोयानि (विधिधानीयानि मै) मूको । १७. नु मै । १८. नास्ति मै । १९. नास्ति मूको । २०. समूळ्हति मूको । २१. त्रैष्टुभावेव मै ।

# अथाष्टमेऽध्यायेऽष्टमः खण्डः

[व्यूढे षडहे मध्यंदिने सवने निविदाधानम्]

**व्यूळ्हश्चेत् पृष्ठ्यस्योत्तरे त्र्यहे मध्यंदिनेषु गायत्रांस्तृचानुपसंशस्य तेषु निविदो दध्यात् ॥१॥**

व्यूढहः षडहः नवरात्रो दशरात्रो वा । व्यूळ्हसंज्ञो[1] वक्ष्यते । [2]इत उत्तरा ये[2] विशेषा वक्ष्यन्ते, ते[3] व्यूळ्हस्य भवन्ति । चेदिति वचनाद् विकल्पेन[4] भवन्ति । सर्वत्र समूळ्ह एव, वचनाद् व्यूळ्हो भवति । यथा [5]**पृष्ठ्यः**† **समूळ्हो व्यूळ्हो वा**[5] (आश्रौ १०,३,२), **व्यूळ्हो**[6] **नवरात्रो** (आश्रौ १०,४,१), **महाव्रतम्**[7] (आश्रौ १०,४,६), **तावन्तरेण**[8] **व्यूळ्हो दशरात्रः** (आश्रौ ११,१,६), **पञ्चमेन पृष्ठ्याह्ना**[9] **शस्यं व्यूळ्हस्य** (आश्रौ १०,६, ८) । वचनाभावात् समूळ्ह एव भवति । यथा **पृष्ठ्यमभितस्त्रिकद्रुकाः** (आश्रौ ११,२,७), **व्रात्यस्तोमाश्च** (आश्रौ ९,८,२५), **पृष्ठ्याहान्यादितः** (आश्रौ १०,१,७), [10]**पृष्ठ्यपञ्चाहोऽभ्यासक्तः**† (आश्रौ १०,३,४) । एते चत्वारः पृष्ठ्या महाव्रतं च । षष्ठस्योत्तरे त्र्यहे व्यूळ्हे यो विशेषः स वक्ष्यते[10] । पृष्ठ्यषडहस्य उत्तरे त्र्यहे चतुर्थादिष्वहःसु [11]**मध्यन्दिनेषु मध्यन्दिन इत्युक्ते एते शस्त्रे प्रतीयात्** (आश्रौ ७,५,१९) । चतुर्थेष्वहस्सु[11] [12]ये मध्यन्दिनाः[12], येषु मध्यंदिनेषु निष्केवल्ये मरुत्वतीयेषु यानि सूक्तान्यादिष्टानि, [13]तेषां याज्या सूक्तान्तेषु । याज्या सा गायत्रांस्तृचानुपसंशस्य वृता सूक्तान्तेन । उप सामीप्येन सम्यक् शस्त्वा उपसंशस्य[13] । तेषु तृचेषु निविदो दध्यात् । पृष्ठ्यग्रहणं[14] दशरात्राधिकारात् पृष्ठ्य[15] एवमिह व्यूळ्हो भवति । मध्यंदिनेष्विति वचनात् तृतीयसवने वक्ष्यमाणो विधिर्न भवति । गायत्रग्रहणाद् अर्द्धर्चं भवति, सूक्तान्तेन उपसमस्य शंसनात् पच्छःशस्यं प्राप्तम् । पादग्रहणात् तृचानित्याह । उपसंशस्येति[16] वचनात् सूक्तेन सह तृचस्य उपसमासादेकं[17]

---

१. संज्ञा मूको । २-२. इतवत्तरायो ब' । ३. नास्ति मूको । ४. विकल्पो न मूको । ५-५. यष्पो समूळहो ळ्हो ब' । †. पृष्ठ्या मै । ६. नास्ति ब' । ७. °व्रततं मूको । ८. नावान्तरणे ब'; नावान्त° मै । ९. पृष्ठ्या न वा ब; षष्ठ्या न वां मै । १०-१०. नास्ति ब । †. पृष्ठ्या पञ्चहोमाभ्यासः मै । ११-११. नास्ति ब' । १२-१२. उर्योर्मध्य° ब'; योर्मध्य° मै । १३-१३. तेषां सूक्तांस्तेषु याज्या सा गायत्रां तृचां तानुपशस्य वृता सूक्तं तेन उपशमाणनं शस्त्वा उपशंस्य ब'; तेषां याच्या सूक्तांस्तेषु याच्या सा गायत्रां तृचां तानुपशस्य वृतास्सूक्तं तेन उप शमाणनं शस्त्वा उपशंस्य मै । १४. पृष्ठग्र° मूको । १५. पृष्ठ्या मूको । १६. उपसमस्य मूको । १७. °मासादिकं ब' ।

सूक्तं भवति, अन्यथा अधिकं स्यात् । चतुर्थेऽहनि[1] एकविंशे स्तोमे उपसमासात्[2] त्रीणि सूक्तानि भवन्ति । द्वे एव सूक्ते भवतः । उपसमासे कृते सतृचस्य सूक्तस्य ऋचः प्रसंख्याय निविदः स्थाने[3] प्राप्ते तेषु निविदो दध्यादित्याह । व्यूळ्हे[4] दशरात्रे व्यूळ्हानि छन्दांसि शस्यन्ते । अन्योन्यस्य स्थाने गच्छन्ति छन्दांसि वा **अन्योन्यस्यायतनमभ्यध्यायन् गायत्री त्रिष्टुभश्च जगत्यै चायतनमभ्यध्यायन्** (ऐब्रा ४, २७) । तस्मादिह[5] गायत्राणि माध्यंदिनानि त्रैष्टुभान्यपि शस्यन्ते । तथा हि ब्राह्मणे क्लृप्तिः । उपसमासः कस्मात्[6] । **पर्यासः** (ऐब्रा ५, ४) इति[7] ब्राह्मणम् । तस्मादुपसमासः । तेषु निविदो दध्यात् इति । कस्मात् । **तस्माद्गायत्रीषु निविदं दधाति**[8] (ऐब्रा ५, ४) इति ब्राह्मणम् ॥१॥

[निविदामाधानार्थं तृचानां कथनम्]

**'इमं नु मायिनं हुवे,' 'त्यमु वः सत्रासाहं,' 'मरुत्वाँ इन्द्र मीढ्वः', 'तमिन्द्रं वाजयामसि', 'अयं ह येन वा इदम्', 'उप नो हरिभिः सुतम्' इति** ॥२॥

इदानीं तृचा वक्ष्यन्ते । **इमं नु मायिनं हुवे** (ऋ ८, ७६, १-३) इत्येवमादीनि[9] प्रतीकानि । चतुर्थादिषु मध्यंदिनेषु एकैकस्मिन् द्वौ द्वौ तृचौ भवतः । **इमं नु मायिनं हुवे** इति चतुर्थेऽहनि तृचो मन्त्र इति मरुत्वतीये, **त्यमु वः** (ऋ ८, ९२, ७-९) इति निष्केवल्ये । पञ्चमेऽहनि **मरुत्वाँ इन्द्र** (ऋ ८, ७६, ७-९) इति मरुत्वतीये तृचः,[10] **तमिन्द्रम्**[10] (ऋ ८, ९३, ७-९) इति निष्केवल्ये । षष्ठेऽहनि **अयम्** (ऋ ८, ७६, ४-६) इति तृचो मरुत्वतीये, **उप नः** (ऋ ८, ९३, ३१-३३) इति निष्केवल्ये । तृचेष्वेकैकं[11] शस्त्वा निविदं दध्यात् । समूळ्हेन समानं प्रातःसवनम् । तृचानां वाऽत्राधिकारः ॥२॥

[चतुर्थादीनामह्नां तृतीयसवनेषु त्रैष्टुभानां सूक्तानां कथनम्]

**त्रैष्टुभान्येषां तृतीयसवनानि** ॥३॥

गायत्राणि माध्यंदिनानि । येष्वहःसु येषामह्नां[12] त्रैष्टुभानि तृतीयसवनानि भवन्ति, तानि वक्ष्यन्ते । जागतानि त्रैष्टुभानि वक्ष्यन्ते । **त्रिष्टुब् गायत्र्यै च जगत्यै च** (ऐब्रा ४, २७) इति ब्राह्मणम् । त्रैष्टुभानि[13] कल्पन्ते[14] । न वक्तव्यं त्रैष्टुभान्येषां[15] तृतीयसवनानि इति । इदं प्रयोजनम् । **तृचानुपसंशस्य तेषु निविदो दध्यात्** (आश्रौ ८, ८, १) इत्यधिकाराद् यानि प्रतीकानि वक्ष्यामः, ते तृचाः भवन्ति । उपसंशस्य तेषु निविदो दध्याद् इति च प्राप्नोति, यथा

१. °र्थे ह्नाने ब' । २. °समास ब' । ३. स्थानि मूको । ४. व्यूळ्हो मूको । ५. तस्मा हि ब' । ६. कस्मा ब' । ७. नास्ति ब' । ८. दध्यासतीति मै । ९. °वयमादिषु ब' । १०-१०. तिमिन्द्र ब'; तृचः मिन्द्र मै । ११. तृचेवैकां ब'; तृचेषु का मै । १२. एषामह्नां ब' । १३. त्रैष्टुभानां मूको । १४. कल्प्यन्ते ब' । १५. त्रैष्टुभानि मूको ।

मध्यंदिने[1] नित्यानि[2] शस्यन्ते । गायत्राण्येव तृतीयसवनेऽपि नित्यानि सूक्तानि, त्रैष्टुभानि च प्राप्नुवन्ति नित्यानि[3] च । त्रैष्टुभान्येषां तृतीयसवनानीत्युच्यन्ते न मिश्राणि ॥३॥

[चतुर्थेऽहनि तृतीयसवने शस्यानां सूक्तानां कथनम्]

**चतुर्थेऽहनि 'आ देवो यातु', 'प्र द्यावा' इति वासिष्ठम् । 'प्र ऋभुभ्यः', 'प्र शुक्रैतु' इति वैश्वदेवम् । 'वैश्वानरस्य सुमतौ', 'क ईं व्यक्ता', 'अग्निं नरः' इत्याग्निमारुतमष्टादशोत्तमे विराजः ॥४॥**

चतुर्थेऽहनि तृतीयसवनं वक्ष्यते । एषामिति बहुवचनाधिकाराच्चतुर्थ-ग्रहणम्[4] । **आ देवो यातु** (ऋ ७, ४५), **प्र द्यावा** (ऋ ७, ५३) इति वासिष्ठम्, वसिष्ठेन दृष्टम् वासिष्ठम् । **प्र ऋभुभ्यः** (ऋ ४, ३३), **प्र शुक्रैतु** (ऋ ७,३४) इत्येतानि चत्वारि सूक्तानि वैश्वदेवं शस्त्रम्[5] । **प्र द्यावा** (ऋ १, १६६) इति **दैर्घतमसम्** (आश्वौ ५,१८,५) इत्युक्तम् । तदेवेह विशेषणं प्राप्तम् । तस्मादाह-वासिष्ठम् इति । त्रैष्टुभत्वान्न वक्तव्यं विशेषणमिति चेत्,न, तत् सर्वहेतुभ्यो हि । वचनं प्रमाणम् । तृतीयसवनाधिकाराद् 'वैश्वदेवमित्याह । **वैश्वानरस्य सुमतौ** (ऋ १, ९,८), **क ईं व्यक्ता** (ऋ ७, ५६), **अग्निं नरः** (ऋ ७, १) इत्येतानि सूक्तानि आग्निमारुतम् । वैश्वदेवाधिकाराद्[6] आग्निमारुतमित्याह । **अष्टादशोत्तमे विराजः** (आश्वौ ८, ८,४) । [6]आग्निमारुतस्योत्तमसूक्तेऽष्टादश ऋचः[7] आदिप्रभृतयः (ऋ ७, १, १-१८) विराजो भवन्ति । शिष्टाः सप्त त्रिष्टुभः । **ता उ विच्छन्दसः सन्ति विराजः सन्ति त्रिष्टुभः** (ऐब्रा ५, ५) इति ब्राह्मणम् । **अग्निं नरः** (ऋ ७, १ ) इत्येतस्य जातवेदस्यस्य[8] आद्या अष्टादश विराजः, अन्त्याः सप्त त्रिष्टुभः । **मा नो अग्ने** (ऋ ७, १, १९-२५) इत्येवमाद्याः सप्त त्रिष्टुभः[9] । पच्छःशस्यस्य स्थाने अदिष्टस्य स्थानिवद्भावात् पच्छःशस्ये[10] प्राप्ते विराजामर्द्धर्चशस्यप्राप्त्यर्थम्[11] विराड्ग्रहणम् । अष्टादशेतिसंख्यावचनात् शिष्टाः त्रिष्टुभो भवन्ति ॥४॥

[चतुर्थेऽहनि मारुतवैश्वदेवसूक्तयोर्द्विपदानामृचां संख्याकथनम्]

**द्विपदा एकादश मारुते । एकविंशतिर्वैश्वदेवसूक्ते ॥५॥**

द्विपदाः[12] मारुते सूक्ते एकादश । **द्विपदाः सन्ति चतुष्पदाः** (ऐब्रा ५, ५) इति ब्राह्मणम् विच्छन्दसामृचाम् । **न तु पच्छोऽन्यास्त्रिष्टुब्जगतीभ्यः** (आश्वौ ६, ५,१६) इति वचनाद् द्विपदानां[13] पच्छःशस्ये प्रतिषिद्धे आम्नायप्रामाण्यादर्धर्च-शस्ये प्राप्ते पच्छःशस्यप्राप्त्यर्थं[14] द्विपदाग्रहणम् । एकादशेति[15] संख्यावचनात्

---

१. मध्यन्दिनेन ब[1]; माध्यदिने मै । २. इति त्यानि ब[1] । ३. व्रतानि मूको । ४. °बहूनामधि मै । ५. शस्त्रे मै । ६-६. नास्ति ब[1] । ७. °सूक्ते द्वादश-कृत्वः ब[1] । ८. °दस्य मूको । ९. त्रैष्टुभः मूको । १०. पञ्चशस्ये मूको । ११. °र्चशस्याप्रा ब[1] । १२. द्विपदाः एकादश मूको । १३. द्विपदाः मूको । १४. °शस्ये प्रा° मूको । १५. एकादशे मूको ।

शिष्टास्त्रिष्टुभो भवन्ति । एकविंशतिर्वैश्वदेवसूक्ते । वैश्वदेवसूक्ते आद्या[1] एकविंशतिद्विपदा: प्र शुक्र[2] (ऋ ७, ३४,१-२१) इति । शिष्टास्त्रिष्टुभ:, ता नो रासन् (ऋ ७,३४,२२-२५) इत्येवमाद्या: । ता उ विच्छन्दस: सन्ति द्विपदा: सन्ति चतुष्पदा: (ऐब्रा ५,५) इति ब्राह्मणम् । द्विपदाग्रहणम् उक्तसंख्यावचनम्[3] ॥५॥

[पञ्चमेऽहनि तृतीयसवने शस्यशस्त्रनिरूपणमध्यासव्यवस्था च]

**पञ्चमस्य 'उदु ष्य देव: सविता दमूना:' इति तिस्रो, 'मही द्यावापृथिवी इह ज्येष्ठे' इति चतस्र:, 'ऋभुर्विभ्वा', 'स्तुषे जनम्' इति वैश्वदेवम्, 'हविष्पान्तं', 'वपुर्नु तद्', 'अग्निर्होता गृहपति: स राजा' इति तिस्र इत्याग्निमारुतम् । उत्तमा वैश्वदेवसूक्ते साध्यासा उत्तमा जातवेदस्ये ॥६॥**

पञ्चमस्याह्न: तृतीयसवनं वक्ष्यन्ते । **उदु ष्य देव: सविता दमूना:** (ऋ ६, ७१, ४-६) इत्येतास्तिस्र: ऋच:, [4]**मही द्यावापृथिवी इह ज्येष्ठे** इत्येताश्चतस्र ऋच:[4] (ऋ ४, ५६, १-४) द्यावापृथिवीयं सूक्तम् । पादग्रहणाच्चतस्र इत्याह । [5]**ऋभुर्विभ्वा** (ऋ ४, ३४,१), **स्तुषे**[6] **जनम्** (ऋ ६, ४९) इत्येतानि सूक्तानि वैश्वदेवं शस्त्रम् । वैश्वदेवग्रहणात्सूक्तस्थानेषु[7] भवन्ति । **हविष्पान्तम्** (ऋ १०, ८८,१) इति वैश्वानरीयम्, **वपुर्नु तत्** (ऋ ६,६६,१) इति मारुतम्, **अग्निर्होता गृहपति: स राजा** (ऋ ६ १५, १३-१५) इति तिस्र ऋच आग्निमारुतम् । पादग्रहणात् तिस्र इत्याह । आग्निमारुतग्रहणात् सूक्तस्य स्थाने भवन्ति ।

उत्तमा वैश्वदेवसूक्ते साध्यासा । **स्तुषे जनम्** (ऋ ६, ४९) इत्येतस्य वैश्वदेवसूक्तस्य या उत्तमा[8] ऋक् सा साध्यासा **नू नो रयिं रथ्यम्** (ऋ ६, ४९, १५) इति । अध्यासेन सह ऋक् साध्यासा । चतुष्पदा त्रिष्टुप् । तस्या उपरि †अध्यस्त: पाद:† पञ्चम:, सह तेन साध्यासा । ‡ **विश आदेवीरभ्यश्नवाम**(ऋ ६,४९, १५) इति ।‡ उत्तमा जातवेदस्ये । **अग्निर्होता** (ऋ ६, १५, १३-१५) इत्येतस्मिन् जातवेदस्ये उत्तमा ऋक् साध्यासा **अभि प्रयांसि** (ऋ ६, १५,१५) इति । पञ्चम: पाद: अध्यासो भवति—**ता तरेम तवावसा तरेम** (ऋ ६, १५, १५) इति । तेन सह साध्यासा । अनुद्धारार्थ: सूत्रारम्भ: । अध्यासवत् (ऐब्रा ५, ८) इति ब्राह्मणम्[8] ॥६॥

[अध्यासानामुपसमासं कृत्वा प्रणवकरणम्]

**सर्वत्राध्यासानामुपसमस्य प्रणुयात् ॥७॥**

१. आद्या: आद्या मूको । २. पाशुकेति ('केष्विति मै) मूको । °हणे मूको । ३. उक्तं संख्यावचने च (°ने मै) मूको । ४-४. नास्ति ब' । ५-५. ऋभुर्थिच्य (ऋभुभुर्विभ्वा ब') कैतवान् (°त् ब') स्तुषे मूको । ६. °देवं ग्रहाणां (°हणं मै) सूक्त° मूको । ७. नास्ति मूको । ८-८. प्रथमसूत्रव्याख्यायां (८,८,१) प्रविष्टोऽयं व्याख्याभाग: ब' । †-†. अध्यस्तपदा: मूको । ‡-‡. तिस्र आदे वीरमिति (वर° मै) मूको ।

सर्वत्र इह चान्यत्र च यत्र अध्यासाः पञ्चमपादाः[1] भवन्ति, तानध्यासानुपसमस्य[2] 'पूर्वेण पदेनोपसमासं[3] कृत्वा प्रणुयात् प्रणवं कुर्यात्। यथा **त्वं शतान्यव शम्बरस्य** (ऋ ६, ३१,४), **तुविग्रीवः** (ऋ ५, २, १२), **स त्वं दक्षस्य** (ऋ ६, १५,३), **अग्निर्मग्नि वः** (ऋ ६, १५,६) इत्येवमादि। यत्र शक्वर्यो भवन्ति, 'तत्र तासां[4] पञ्चमः पादः अध्यास इत्युच्यते। तानध्यासानुपसमस्य प्रणुयात्। पञ्चमेऽहनि[5] शक्वर्योरुक्त[6] शस्यमन्यत्र न प्राप्नोति। सर्वत्रेति वचनादन्यत्रापि शक्वरीणामेतच्छस्यं भवति नान्येषाम्[7]। शक्वरीणां ब्राह्मणं श्रूयते—**अध्यासवत्** (ऐब्रा ५, ६; ८) इति। तस्मादन्यस्मिन् छन्दसि पञ्चमः पादः अध्यासो न भवति अतिजगतीषु **कथा दाशेम नमसा सुदानून्** (ऋ ५, ४१, १६) इति। तस्मादतिजगतीषु पञ्चपदासु यद् दृष्टं तदेव भवति '**एवयामरुतमाग्निमरुते पुरस्तान्मारुतस्य पच्छः 'समासमुत्तमे पदे**' (आश्रौ ८, ४, १२) पदानां[10] पच्छः शस्यं दृष्टं, तदध्यासानां प्राप्तं, तस्मादुपसमस्येत्याह[11]। उपसमासे[12] प्रणवनिवृत्तिः। उपसमस्येति वचनादन्ते[13] प्रणवो[14] न प्राप्नोति, तस्मात् प्रणुयादित्याह ॥७॥

**षष्ठस्य 'उदु ष्य देवः' इति गार्त्समदं', 'किमु श्रेष्ठः,' 'उप नो वाजाः' इति त्रयोदशाऽऽर्भवं चतस्रश्च। वैश्वदेवसूक्ते तृचमन्त्यमुद्धरेदिति वैश्वदेवम् ॥८॥**

षष्ठस्याह्नः तृतीयसवनं वक्ष्यते। **उदु ष्य देवः** (ऋ२,३८) इत्येतत् सूक्तम्। इदं गार्त्समदं[15] सावित्रं भवति। गृत्समदेन ऋषिणा दृष्टं गार्त्समदमिदम्[16]। गार्त्समदमिदमिति[17] विशेषणम्। अक्रियमाणे तु विशेषणे अधिकृतं यद्विशेषेण[18] पञ्चमेऽहनि[19] **उदु ष्य देवः सविता दमूनाः** (ऋ ६,७१, १) इति[20] प्राप्नोति[21]। तन्मा भूदिति गार्त्समदमित्याह[22]। [23]**किमु श्रेष्ठः** (ऋ १, १६१, १-१३) इति त्रयोदश, **उप नो वाजाः** (ऋ ४, ३७, १-४) इति चतस्रः, इति सप्तदशर्चं आर्भवम्। उक्तं वैश्वदेवसूक्तम्[†][23]। तस्मिन् वैश्वदेवसूक्ते तृचमन्त्यमुद्धरेत्[24]

---

१. यद्यदा ब'; यदा मै। २. तानव्यम° (°ध्य मै) भशोनु° मूको। ३-३. सर्वेण पदेन नोपस° मूको। ४-४. तंस्र ब'; तंसं मै। ५. पञ्चमे ह मूको। ६. द्र. ऐब्रा ५,८। ७. तान्येषां (°षा ब') मूको। ८-८. °मरुतो पच्छ मूको। ९. पञ्च मै। १०. एकपदानां मूको। ११. तस्मादुपसमास ह मूको। १२. °मास मूको। १३. °नादन्ये मूको। १४. प्रणवे मूको। १५. गायत्रमिदं मै; नास्ति ब'। १६. गायत्रमिदम् मूको। १७. गायत्रमिदम् ब'; गायत्रमिदं गायत्रमदमिति मै। १८. °शेषणं मूको। १९. पञ्चमेऽहनि न प्राप्नोति मूको। २०. द्र. आश्रौ ८,८, ६। २१. नास्ति मूको। २२. एतदनन्तरम्— षष्ठस्याह्नः तृतीयसवनं वक्ष्यते। उदु ष्य देव इत्येतत् सूक्तम् मूको। २३-२३. नास्ति मूको। †. द्र. आश्रौ ८,१, २१;२२;२४। २४. °मन्त्यमुद्धारं मूको।

**स्वस्ति नो मिमीताम्** (ऋ ५.५१,११-१३) इत्येतमुद्धरेत्। **इदमित्था** (ऋ १०, (६१), **ये यज्ञेन** (ऋ १०,६२) इति वैश्वदेवम्। एवं ब्राह्मणेऽपि[1]। एवमित्येतद् वैश्वदेवं शस्त्रमिति। वैश्वदेवमिति वचनाद् वैश्वदेवसूक्तानां स्थाने सूक्तानि भवन्ति, अन्त्ये[2] त्रैष्टुभे तृचे[3] निविदं दध्यात् **स गृणानः** (ऋ १०, ६१, २६) इत्येतस्मिन् तृचे[3] ॥८॥

[तत्राऽऽग्निमारुतशस्त्रे सूक्तानां कथनम्]

**'अहश्च कृष्णं', 'मध्वो वो नाम', 'स प्रत्नथा', इत्याग्निमारुतमिति पृष्ठ्यः ॥९॥**

**अहश्च कृष्णम्** (ऋ ६, ९), **मध्वो वो नाम** (ऋ ७,५७), **स प्रत्नथा** (ऋ १, ९६) इत्येतानि त्रीणि सूक्तानि आग्निमारुतं शस्त्रम्। आग्निमारुतग्रहणाद् आग्निमारुतसूक्तस्थानेषु सूक्तानि भवन्ति।

तृतीयसवनस्य क्लृप्तिः—**अभि त्यं येषम्** (ऋ १,५१,१), **तत्सवितुर्वरेण्यम्** (ऋ ३, ६२, १०-११), **दोषो आगात्** (आश्रौ ८,१, १९) इति प्रतिपदनुचरौ। **उदु ष्य देवः सविता सवाय** (ऋ २, ३८, १), **कतरा पूर्वा** (ऋ १, १८५,१), **किमु श्रेष्ठः** (१,१६१,१), **उप नो वाजाः** (ऋ ४,३७,१), **इदमित्था** (ऋ १०, ६१,१), **ये यज्ञेन** (ऋ १०,६२,१) इति वैश्वदेवम्। **अहश्च कृष्णम्** (ऋ ६,९); **माध्वो वो नाम** (ऋ ७,५७), **यज्ञा यज्ञा वः** (ऋ ६,४८,१), इति[4] जातवेदस्यम्। **स प्रत्नथा** (ऋ ८,६३,४) इति[4] आग्निमारुतम्। द्विपदासूक्तानि। शिल्पानि च। इति पृष्ठ्य [5]इत्ययं व्यूळ्हः[5] पृष्ठ्यो व्याख्यातः पृष्ठ्यस्योत्तरस्त्र्यहः इति। पृष्ठ्याधिकारे[6] पुनः पृष्ठ्यग्रहणं छन्दोमविवक्षार्थम्[7]। उत्तरत्र छन्दोमाः[8] (आश्रौ ८, ९, १) इत्युक्ते उक्तानामह्नां छन्दोमसंज्ञा[9] प्राप्नोति, तस्मात् पृष्ठ्य इत्याह ॥९॥

॥ इत्यष्टमेऽष्टमः खण्डः ॥

१. द्र. ऐब्रा ५, १३। २. प्रत्ये मूको। ३. द्र. ऋ १०,६१,२६;२७;६२,११। ४. नास्ति मूको। ५-५. इत्यर्थ व्यूळ्हः ब[1]; इतप्यमाहुः मै। ६. °कारि ब[1]; °कारः मै। ७. छन्दोग° मूको। ८. छन्दोगाः मूको। ९. छन्दोमं ब[1]; छन्दोग मै ?

# अथाऽष्टमेऽध्याये नवमः खण्डः

[छन्दोमव्यूळ्होपक्रमः]

**अथ छन्दोमाः ॥१॥**

अथ व्यूळ्हपृष्ठ्यादनन्तरं छन्दोमव्यूळ्हं वक्ष्यते । उक्तान्येव त्रीण्यहानि[1] । विशेषा एव वक्ष्यन्ते ॥१॥

[प्रथमे छान्दोमिकेऽहनि प्रातस्तृतीयसवनयोः आज्यसूक्तस्यैकपातिनीनामृचां प्रउगशस्त्राणाञ्च कथनम्]

**'समुद्रादूर्मिः' इत्याज्यम् । 'आ वायो भूष शुचिपा उप नः', 'प्र याभिर्यासि दाश्वांसमच्छा', आ नो नियुद्भिः शतिनीभिरध्वरं', 'प्र सोता जीरो अध्वरेष्व-स्थाद्', 'ये वायव इन्द्र मादनासः', 'या वां शतं नियुतो याः सहस्रम्' इत्येक-पातिन्यः, 'प्र यद्वां मित्रावरुणा स्पूर्धन्', 'आ गोमता नासत्या रथेन', 'आ नो देव शवसा याहि शुष्मिन्', 'प्र वो यज्ञेषु देवयन्तो अर्चन्', 'प्र क्षोदसा धायसा सस्र एषा' इति प्रउगम् ॥२॥**

**समुद्रादूर्मिः** (ऋ ४, ५८) इत्येतत्सूक्तम् आज्यं भवति । प्रउगस्य[2] स्थाने ऐकाहिके प्रउगे प्राप्ते त्रैष्टुभं प्रउगं विधीयते । **आ वायो भूष** (ऋ ७, ९२, १), **प्र याभिर्यासि** (ऋ ७, ९२,३), **आ नो नियुद्भिः** (ऋ १,१३५,३) इति वायव्य-स्तृचः । **प्र सोता जीरः** (ऋ ७, ९२, २), **ये वायव इन्द्र** (ऋ ७, ९२,४), **या वां शतम्** (ऋ ७,९१,६) इत्यैन्द्रवायवस्तृचः[3] । इत्येकपातिन्यः । इत्येतानि षट् प्रतीकानि एकपातिन्यः, एकैका पतन्तीति[4] एकपातिन्यः । तृचाः प्रउगे (आश्रौ ७,१,१०) इति तृचेषु प्राप्तेषु एकपातिन्य इत्याह । **प्र यद्वां मित्रावरुणा** (ऋ ६, ६७, ९-११) इति मैत्रावरुणस्तृचः । **आ गोमता** (ऋ ७,७२,१-३) इत्याश्विन-स्तृचः । **आ नो देव** (ऋ ७, ३०, १-३) इति[5] ऐन्द्रस्तृचः । **प्र वो यज्ञेषु** (ऋ ७, ४३, १-३) इति वैश्वदेवस्तृचः । **प्र क्षोदसा** (ऋ ७, ९५,१-३) इति सारस्वत-स्तृचः । इति प्रउगम् इत्येतत् प्रउगम् । 'अत्र छन्दोमेषु[6] त्रैष्टुभानि प्रातःसव-नानि माध्यंदिनानि [? च] गायत्राणि तृतीयसवनानि[7] । एवं[8] ब्राह्मणम् । व्यूळ्हेन होत्रकाणां शस्त्राणि ॥२॥

---

१. त्र्यहाणि ब'; अहनि मै । २. प्राप्तस्य मूको । ३. वस्य च मै; तस्यैन्द्र-वायवस्य च ब' । ४. सति ब'; स प्रति मै । ५. नास्ति मूको । ६-६. अन्वब (अत्वच्छ मै) न्दोमेषु मूको । ७. °सवनी ब' । ८. एव मूको ।

[छान्दोमिके प्रथमे (सप्तमे)ऽहनि माध्यन्दिने सवने निविदाधानविधानम्]

**माध्यंदिने सूक्ते विपरिहृत्येतरयोर्निविदो दध्यात् ॥३॥**

मरुत्वतीयं निष्केवल्यं माध्यंदिने **मध्यंदिन इत्युक्त एते शस्त्रे प्रतीयात्** आश्वौ ७,५,१९) इति। समूळ्हे ये मध्यंदिने भवतः सूक्ते मध्यंदिने ते विपरिहृत्य। अन्योऽन्यस्य स्थानगमनं विपरिहारः। प्रथमं द्वितीयं भवति द्वितीयं प्रथममेवं विपरिहारं कृत्वा इतरयोः प्रथमादितरयोः द्वितीययोः निविदो दध्यात्। **कया शुभा** (ऋ १, १६५), **त्यं सं मेषम्** (ऋ १,५२) इति मरुत्वतीये। इन्द्रस्य (ऋ १, ३२), **अभि त्यं मेषम्** (ऋ १, ५१) इति निष्केवल्ये। विपरिहारो निविद्धानार्थम्[1]। **जागतीषु निविदं दधाति** (ऐब्रा ५, १६-२१) इति ब्राह्मणम्। निविदा सह[2] सूक्तयोर्विपरिहारे प्राप्ते इतरयोर्निविदो दध्यादित्याह ॥३॥

[अष्टमनवमयोरह्नोर्माध्यन्दिने सवने निविदाधानविधानम्]

**एवमुत्तरयोश्चतुर्थपञ्चमे ॥४॥**

यथा सप्तमेऽहनि माध्यंदिने उक्तम्, एवमुत्तरयोरह्नोरष्टमे नवमेऽहनि च चतुर्थपञ्चमे सूक्ते विपरिहृत्य इतरयोः[3] निविदो दध्यात्। अष्टमेऽहनि **शंसा महाम्** (ऋ ३, ४९), **महश्चित् त्वमिन्द्र** (ऋ १, १६९), **पिबा सोममभि** (ऋ ६, १७), **महाँ इन्द्रो नृवत्** (ऋ ६, १९), **तमस्य द्यावापृथिवी** (ऋ १०, ११३) इत्येतस्मिन्निविदं दध्यात्[4]। **अपूर्व्या** (ऋ ६, ३२), **तां सुते कीर्तिम्** (ऋ १०, ५४), **त्वं महाँ इन्द्र यो ह** (१, ६३), **त्वं महाँ इन्द्र तुभ्यम्** (ऋ ४, १७), **दिवश्चिदस्य** (ऋ १, ५५) इत्येतस्मिन्[5] निविदो दध्यात्[6]। **इन्द्रः स्वाहा** (ऋ ३,५०) **गायत्साम** (ऋ १, १७३), **तिष्ठा हरी** (ऋ ३, ३५), **इमा उ त्वा** (ऋ ६,२१), **प्र मन्दिने** (ऋ १,१०१) इत्येतस्मिन् निविदं दध्यात्[4]। **सं च त्वे** इति सूक्ते जग्मुः (ऋ ६, ३४;३५) **आ सत्यो यातु** (ऋ ४,१६), **तत्त इन्द्रियम्** (ऋ १, १०३), **अहं भुवम्** (ऋ १०, ४८) इत्येतस्मिन् निविदं दध्यात्। विपरिहारो निविद्धानार्थम्। **जगतीषु निविदं दधाति** (ऐब्रा ५, १६-२१) इति ब्राह्मणम्। होत्रकाणां शस्त्राणि [7]समूल्हे तु[7] तृतीयसवनमेव वक्ष्यन्ते ॥४॥

[प्रथमे छान्दोमिकेऽहनि प्रातस्तृतीयसवनयोः सावित्रद्यावापृथिवीयाऽऽर्भववैश्वदेवशस्त्राणां कथनम्]

**'अभि त्वा देव सवितः', 'प्रेतां यज्ञस्य शंभुवा', 'अयं देवाय जन्मने', इति तृचाः। 'ऐभिरग्ने दुवः' इति वैश्वदेवम् ॥५॥**

---

१. 'नार्थे ब'। २. स ब'। ३. इतराणि ब'। ४. द्र. आश्रौ ८, ७, २२; २३। ५. °स्मिन् न मूको। ६. द्र. आश्रौ ८,७,२३,२५। ७-७. समूहे न ब'; नास्ति मै।

**अभि त्वा देव सवितः** (ऋ १, २४, ३-५), **प्रेतां यज्ञस्य शंभुवा** (ऋ २, ४१, १९-२१), **अयं देवाय जन्मने** (ऋ १, २०.१-३) इत्येते त्रयस्तृचाः सावित्रं द्यावापृथिवीयम् 'आर्भवं चेति' दैवतेन व्यवस्था। पादग्रहणात् तृचा इत्याह। **ऐभिरग्ने दुवः** (ऋ १,१४) इत्येतत् वैश्वदेवं सूक्तम्। इति वैश्वदेवम्। इत्येतद् वैश्वदेवं शस्त्रम्। वैश्वदेवग्रहणाद् वैश्वदेवसूक्तानां स्थाने भवन्ति **ध्रुवा शस्त्राणामातानाः** (आश्रौ ७,१,७) 'ततो द्वैपदानि' सूक्तानि अभ्यूहतीत्यर्थः[3] ॥५॥

[द्विपदासूक्तानां समूळ्हवन्नित्यत्वम्]

**नित्यानि द्विपदासूक्तानि** ॥६॥

समूळ्हे क्लृप्तानां शस्त्राणामिति विशेष उच्यते। अन्यत् समानं भवति। तस्मात् नित्यानि द्विपदासूक्तानि इति न वक्तव्यम्। इदं प्रयोजनम्। द्वैपदान्यपि[4] वैश्वदेवसूक्तान्येव। छन्दोऽन्यत्वाच्च पृथगाहावः। तस्माद् वैश्वदेवमित्युक्ते **ऐभिरग्ने** (ऋ१,१४) इत्येतद्[5] द्वयोरपि स्थाने भवति। 'तस्मात् पुनरित्युच्यते'[6]— नित्यानि द्विपदासूक्तानि। अस्मादारम्भान्नैमित्तिकानि[7] भवन्ति, तायमानरूपाच्च। तस्मात् पृथगाहावः ॥६॥

[प्रथमे छान्दोमिकेऽहनि प्रातस्तृतीयसवनयोः आग्निमारुतशस्त्रकथनम्]

**'वैश्वानरो अजीजनद्' इत्येका, 'स विश्वं प्रति चाक्लृपदृतूनुत्सृजते वशी। यज्ञस्य वय उत्तिरन्* ॥ वृषा पावक दीदिह्यग्ने वैश्वानर द्युमत्। जमदग्निभिराहुतः', 'प्र यद् वस्त्रिष्टुभ', 'दूतं वः' इत्याग्निमारुतम्** ॥७॥

**वैश्वानरो अजीजनत्** (ऐब्रा ५,१७; आश्रौ २,१५,२) इत्येका ऋक्, **स विश्वं प्रति चाक्लृपत्** इति यथासमाम्नाते द्वे। एका द्वे च तृचो वैश्वानरीयं सूक्तम्। **प्र यद् वस्त्रिष्टुभम्** (ऋ ८, ७, १), **दूतं वः** (ऋ ४,८,१) इत्याग्निमारुतम्[8]। आग्निमारुतग्रहणात् सूक्तानि सूक्तस्थानेषु[9] भवन्ति। अन्यत् समानम्। उक्तानि समूळ्हेन[10] ॥७॥

[इति अष्टमे नवमः खण्डः]

१-१. °भर्वति व; °भवति मै। २-२. तिचो द्वं द्वैप° व'; निचो द्वैप° मै। ३. अभुतीत्यर्थः मूको। ४. द्विप° मूको। ५. इत्येते मूको। ६-६. तस्मादित्युच्यते व'। ७. तस्मादारम्भा (°म्भ मै) तिमित्रकानि मूको। * मन्त्रोऽयमत्रैव। ८. इति व'। ९. °स्थानिषु व'। १०. समूळ्हेत् (°त मै) मूको।

# अष्टमेऽध्याये दशमः खण्डः

[द्वितीयछान्दोमिकस्याह्नः प्रातस्तृतीयसवनयोः शस्त्राणां निरूपणम्]

**द्वितीयस्य 'अग्निं वो देवम्' इत्याज्यम् । 'कुविदङ्ग नमसा ये वृधासः', 'पीवो अन्नाँ रयिवृधः सुमेधाः', 'उच्छन्नुषसः सुदिना अरिप्राः' इत्येकपातिन्यः । 'उशन्ता दूता न दभाय गोपा', 'यावत्तरस्तन्वो यावदोजः' इत्येका द्वे च । 'प्रति वां सूर उदिते सूक्तैः', 'धेनुः प्रत्नस्य काम्यं दुहाना', 'ब्रह्माण इन्द्रोप याहि विद्वान्,' 'ऊर्ध्वो अग्निः सुमतिं वस्वो अश्रेद्', 'उत स्या नः सरस्वती जुषाणा' इति प्रउगम् ॥१॥**

द्वितीयस्य छान्दोमिकस्य प्रातःसवनं तृतीयसवनं च वक्ष्यते । **अग्निं वो देवम्** (ऋ ७,३) इत्याज्यम् । **कुविदङ्ग** (ऋ ७,९१, १), **पीवो अन्नाँ** (ऋ ७,९१, ३), **'उच्छन्नुषसः** (ऋ ७, ९०,४) इत्येतास्तिस्र ऋचः एकपातिन्यः वायव्यस्तृचो भवति[1] । **उशन्ता दूता** (ऋ ७,९१,२), **यावत्तरः** (ऋ ७,९१,४-५) इत्यानन्तर्येण एका द्वे च प्रथमं प्रतीकं एका द्वितीयं च द्वे, ऐन्द्रवायवस्तृचो भवति[1] । च-शब्दः समुच्चयार्थः । तृचौ प्राप्तौ एका द्वे चेत्याह । **प्रति वां** (ऋ ७,६५,१-३), **धेनुः** (ऋ ३,५८,९-११), **ब्रह्मा णः** (ऋ७,२८,१-३), **ऊर्ध्वो अग्निः** (ऋ ७,३९,१-३), **उत स्या नः** (ऋ७,९५,४-६) इत्येते मैत्रावरुणाश्विनैन्द्रवैश्वदेवसारस्वतास्तृचाः । होत्रकाणां शस्त्राणि समूळ्हेन । माध्यंदिनं च कृत्स्नं मध्यंदिने[2] । चतुर्थपञ्चमयोस्तु सूक्तयोर्विपरिहार उक्तः[3] । तृतीयसवनं तु वक्ष्यते ॥१॥

**'हिरण्यपाणिमूतये' इति चतस्रः 'मही द्यौः पृथिवी च नो', 'युवाना पितरा पुनः' इति तृचौ; 'देवानामिदमवः' इति वैश्वदेवम् ॥२॥**

**हिरण्यपाणिमूतये** (ऋ १, २२, ५-८) इति चतस्र ऋचः सावित्रसूक्तम् । पादग्रहणाच्चतस्र इत्याह । **मही द्यौः पृथिवी च** (ऋ १,२२, १३-१५), **युवाना पितरा पुनः** (ऋ १, २०, ४-६) इत्येतौ द्वौ तृचौ । [5]पादग्रहणात् तृचाविति । तच् च एव[5] द्विपदासूक्तम । **देवानामिदमवः** (ऋ ८, ८३,१) इत्येतद् वैश्वदेवं शस्त्रम् । वैश्वदेवग्रहणात् (?) सूक्तानि[6] सूक्तस्थानेषु भवन्ति ॥२॥

---

१-१. नास्ति ब[1] । २. भवन्ति मूको । ३. मदनं मूको । ४. द्र. आश्वो ८, ९, ४ । ५-५. क्लृप्ताविति तृत ब[1]; ऋचानि पितृत एव मे । ६. नास्ति मूको ।

[आग्निमारुतशस्त्रनिरूपणम्]

'ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्ममीमहे' ॥ 'दिवि पृष्टो अरोचताग्निर्वैश्वानरो महान् । ज्योतिषा बाधते तमः' ॥[1] 'अग्निः प्रत्नेषु धामसु कामो भूतस्य भव्यस्य । सम्राळेको वि राजति †' ॥ 'क्रीळं वः शर्धः', 'अग्ने मृळ' इत्याग्निमारुतम् ॥३॥

ऋतावानम् (शौ ६, ३६,१) इति यथासमाम्नातस्तृचो वैश्वानरीयं सूक्तं भवति । क्रीळं वः (ऋ १,३७,१), अग्ने मृळ (ऋ ४, ९,१) इत्याग्निमारुतम् । आग्निमारुतग्रहणात् (?) सूक्तानि सूक्तस्थानेषु । समानमन्यत् समूळ्हेन उक्तानि (?) ॥३॥

[इत्यष्टमे दशमः खण्डः]

---

१. द्र. वासं ३३, ९२ । †. द्र. शौ ६, ३६, ३ ।

# अष्टमेऽध्याये एकादशः खण्डः

[तृतीयस्य छान्दोमिकस्याह्नः प्रातस्तृतीयसवनयोः शस्त्राणां निरूपणम्]

**तृतीयस्य 'अगन्म महाँ' इत्याज्यम् । 'प्र वीरया शुचयो दद्रिरे', 'ते सत्येन मनसा दीध्यानाः', 'दिवि क्षयन्ता रजसः पृथिव्याम्', 'आ विश्ववाराऽश्विनागतं नः', 'अयं सोम इन्द्र तुभ्यं सुन्वे आ तु', 'प्र ब्रह्माणो अङ्गिरसो नक्षन्त', 'सरस्वतीं देवयन्तो हवन्ते', 'आ नो दिवो बृहतः पर्वतादा', 'सरस्वत्यभि नो नेषि वस्य' इति प्रउगम् ॥१॥**

तृतीयस्य छान्दोमिकस्य प्रातःसवनं तृतीयसवनं च[1] वक्ष्यते । **अगन्म महाँ** (ऋ ७, १२) [2]इत्याज्यं तृतीयस्य प्रातःसवने[2] ।

**प्र वीरया शुचयो [3]दद्रिरे ते[3]** (ऋ ७, ९०,१-३) इति वायव्यस्तृचः । दद्रिरे ते इति द्विवचनस्य स्थाने एकवचनमाम्नातं ब्राह्मणकृतम् । [4]शाखान्तरे च[4], एवमाम्नायोऽस्ति । अस्माकं तु शाखायाम् [5]ऐन्द्रवायवी । तत्र ऊहे[5] कृते वायव्या भवति । ते [6]**सत्येन** (ऋ ७, ९०,५-७) इति ऐन्द्रवायवः[6]; [7]**दिवि क्षयन्ता** (ऋ ७, ६४, १-३) इति मैत्रावरुणः; **आ विश्ववाराऽश्विना** (ऋ ७, ७०, १-३) इत्याश्विनः[7]; **अयं सोम इन्द्र** (ऋ ७, २९, १-३) इत्यैन्द्रः । आ तु इति विशेषणं पावमानस्य तृचस्य प्रतिषेधार्थम्[8] । अत्राविशेषे[9] तु विशेषणम् ऐन्द्रत्वाच्च पूर्वत्वाच्च । इतरस्तु[10] पावमानः । इदं प्रयोजनम् । [11]अर्थात् पूर्ववचनस्य[11] बलीयस्त्वं[12] दर्शयति । वचनात्तु पावमानोऽपि विकल्पेन स्यात् । तस्माद्विशेषणं क्रियते शाखान्तरे च अस्त्यन्यस्तृचः । **प्र ब्रह्माणः** (ऋ ७, ४२, १-३) इति[8] वैश्वदेवः । **सरस्वतीं देवयन्तः** (ऋ १०, १७, ७), **आ नो दिवः** (ऋ ५, ४३, ११), **सरस्वत्यभि नः** (ऋ ६, ६१, १४) इति तिस्रः एकपातिन्यः सारस्वतस्तृचः । इति प्रउगम् इत्येतत् प्रउगं भवति, औष्णिहं प्राप्तम् ॥१॥

[उत्तमस्य तृचस्य ऋचामेकपातिनीत्वम्]

---

१. नास्ति मूको । २-२. समूळ्हतस्य प्रातः स्थोन (°स्थाने मं) मूको । ३-३. दद्रिरे वाम् इति संहितापाठः । दद्रिरे ते इति प्रयोगपाठः । द्र. ऐब्रा ५, २० ४-४. °न्तरेण मूको । ५-५. °वायवो यत्र गूहे ब'; °वायवीयऋग्गृहे मं । ६-६. सत्येतेनैन्द्रवायवं (°व ब') मूको । ७-७. नास्ति मूको । ८. द्र० ऋ ९,८८,१-३ । ९. मतवि° ब'; अतवि° मं । १०. इतरस्तु ब' । ११-११. अथ द्विवच° ब'; अर्थाद्विवच° मं । १२. बोलोयरूवं ब' ।

**एकपातिन्य उत्तमः ॥२॥**

'एकपातिन्यस्तिस्र ऋच' उत्तमस्तृचो भवन्ति। तृचाः प्राप्ताः, तस्मादेकपातिन्य इत्याह। होत्रकाणां शस्त्राणि समूळ्हेन। माध्यंदिनश्चेत् कृत्स्नम। विपरिहारस्तु चतुर्थपञ्चमयोः। तृतीयसवनं च वक्ष्यते ॥२॥

[तृतीयस्य छान्दोमिकस्याह्नः प्रथमतृतीयसवनयोः शस्त्राणां निरूपणम्]

**'दोषो आगात्', 'प्र वां महि द्यवी अभि' इति तृचौ: 'इन्द्र इषे ददातु नः', 'ते नो रत्नानि धत्तन' इत्येका द्वे च; 'ये त्रिंशति' इति वैश्वदेवम् ॥३॥**

**दोषो आगात्** (आश्रौ ८, १;१९), **प्र वां महि द्यवी अभि** (ऋ ४,५६,५-७) इत्येतौ तृचौ। पादग्रहणात् तृचावित्याह। **इन्द्र इषे** (ऋ ८, ९३, ३४), **ते नो रत्नानि** (ऋ १,२०,७-८) इत्यानन्तर्येण एका द्वे तृचो[2] भवति। द्विपदासूक्तम्[3]। **ये त्रिंशति** (ऋ ८, २८) इति वैश्वदेवशस्त्रम्। दैवतेन व्यवस्था। वैश्वदेवग्रहणात् सूक्तानि सूक्तस्थानेषु भवन्ति। अन्यत् समानम् ॥३॥

[आग्निमारुतशस्त्रकथनम्]

**'वैश्वानरो न ऊतये आ प्र यातु परावतः। अग्निर्नः सुष्टुतीरुप॥ वैश्वानरो न आगमदिमं यज्ञं सजूरुप। अग्निरुक्थेन वाहसा॥ वैश्वानरो अङ्गिरोभ्यः स्तोम उक्थ्यं च चाकनत। एषु द्युम्नं स्वर्यमत्'[4]॥ 'मरुतो यस्य हि', 'प्राग्नये वाचम्' इत्याग्निमारुतम् ॥४॥**

**वैश्वानरो न ऊतये** (वासं १८, ७२) इति यथा समाम्नातस्तृचो वैश्वानरीयम्। **मरुतो यस्य हि** (ऋ १, ८६), **प्राग्नये वाचम्** (ऋ १०, १८७) इत्याग्निमारुतम्। सूक्तानि सूक्तस्थानेषु[5]। समानमन्यत्। उक्तानि 'होत्रकाणां शस्त्राणि' समूळ्हेन। व्याख्यातो नवरात्रः। **दशरात्रे** (आश्रौ ८, ७, १७) इत्यधिकृत्य समूळ्हो व्यूळ्हश्च नवरात्रो व्याख्यातः। इदानीं दशममहः वक्ष्यते ॥४॥

[इत्यअष्टमे एकादशः खण्डः]

---

१-१. °तिन्यस्तृचः ब'; °तिन्यस्तिस्र मै। २. तृतीयो ब'। ३. °सूक्ते ब'। ४. द्र. शौ ६, ३५, १-३। ५. स्थानेषु बं'। ६-६. नास्ति मूको।

# अष्टमेऽध्याये द्वादशः खण्डः

[दशरात्रे दशमेऽहनि शस्त्राणां निरूपणोपक्रमः]

**दशमेऽहनि ॥१॥**

अधिकारसूत्रमेतत् । यदित ऊर्ध्वं वक्ष्यते तद् दशमेऽहनि विधानं वेदितव्यम् । दशरात्राधिकाराद् दशरात्रे दशममहर्भवति । संज्ञा चेयम् । **दशमञ्चाहः**[1] (आश्रौ ८, १३, ३२; १०, ३, २४) इत्युक्त एतस्य ग्रहणम् । तस्मात् दशमेऽहनीत्यधिकृत्य यदुच्यते, तत् सर्वं भवति । न च तत्र संख्यया दशमं भवति छन्दोमवतो दशरात्रे[2] प्रथमे च त्रयोदशरात्रे[3] ॥१॥

[आग्नेये क्रतौ प्रातरनुवाकेऽनुष्टुभां स्थाने तृचादेशः]

**अनुष्टुभां स्थाने 'अग्नि नरो दीधितिभिररण्योः' इति तृचमाग्नेये क्रतौ ॥२॥**

अनुष्टुभां स्थाने दशमेऽहनि या अनुष्टभ ऋचः प्राप्ताः, तासां स्थाने अन्या वक्ष्यन्ते । **आनुष्टुभमेतदहर्भवति** (? ? ऐब्रा ५,४) इति श्रुतिः । तस्मादनुष्टुभ उद्धियन्ते अस्मात् सूत्रारम्भात् । तृचमाग्नेये क्रतौ इत्युक्ते अनुष्टुभां[4] स्थाने तृचो भवति । अन्यथा न ज्ञायते कस्य स्थाने तृचो भवतीति । **अग्नि नरो दीधितिभिररण्योः** (ऋ ७, १, १-३) इत्येतं तृचम् आग्नेये क्रतौ आनुष्टुभस्य छन्दसः स्थाने **त्वमग्ने वसून्** (ऋ १, ४५; आश्रौ ४, १३,७) इत्येतस्य । पादग्रहणात् तृचम् इत्याह । विद्यमानास्वपि विराट्सु तृच एव भवति वचनाद् अपरिमिते प्रातरनुवाके तृच एवेति वचनादनुष्टुबित्यधिकारत्वाद् विराजो[5] विधीयन्ते ॥२॥

[उषस्ये क्रतौ प्रातरनुवाकेऽनुष्टुभां स्थाने द्विपदायाः पच्छः त्रिः शंसनम्]

**'उषा अप स्वसुस्तमः' इति पच्छो द्विपदां त्रिरुषस्ये ॥३॥**

**उषा अप स्वसुस्तमः** (ऋ १०, १७२, ४) इत्येतां द्विपदां पच्छस्त्रिः शंसेद् उषस्ये क्रतौ आनुष्टुभस्य **उषो भद्रेभिः** (ऋ १,४९; आश्रौ ४,१४,२) इत्येतस्य स्थाने । अध्यासवदिति प्राप्ते पच्छ इत्याह । 'तथाहि बह्वीनामध्यास[6] उपपद्यते । न चार्द्धर्चं उपपद्यते । तस्मादप्राप्ते[7] पच्छ इत्याह । 'तथा द्विपदानामध्यर्द्धतृचाधिकारनिवृत्यर्थम्[8] । **तृचावमं याज्ञिकाः सूक्तमाहुः** (बृदे ८, ९९) । आग्नेयाधिकाराद् उषस्य इत्याह ॥३॥

---

१. दशं महचा ब[1]; दशमं पञ्चाह मै । २. द्र. आश्रौ १०, ३, २४ । ३. द्र. आश्रौ ११, २, २ । ४. अनुष्टुभो ब[1] । ५. विराजा मूको । ६-६. ताहि बह्वीतामध्यास मूको । ७. तस्मान्न प्राप्तां (°प्तं मै) मूको । ८-८. तद्विपदानामध्यर्धतृचाधिकाराभिवृद्धयर्थं (°कारात् निवृत्यर्थम् म) मूको ।

[आश्विने क्रतौ अनुष्टुभां स्थाने तृचादेशः]

**'आ शुभ्रा यातमश्विना स्वश्वा' इति तृचमाश्विने क्रतौ** ॥४॥

**आ शुभ्रा यातम्** (ऋ ७, ६८ १-३) इत्येतं[1] तृचम् (आश्रौ ४, १५,२) आश्विने क्रतौ आनुष्टुभस्य स्थाने **यदद्य स्थः** (ऋ ५,७३) इत्येतस्य । पादग्रहणादृगधिकाराच्च[2] तृचमित्याह । उषस्याधिकारादाश्विनग्रहणम् । क्रतुग्रहणादाश्विने शस्त्रे न भवति प्रातरनुवाकन्यायेनेति[3] प्राप्तम् । अतिरात्रेऽ(?)ऽपि दशममहर्भवति । अहीनेष च षोडशिनि अतिरात्रादाश्विने च अनुष्टुभामुद्धारो न क्रियते । 'आश्विने इति[4] वचनाद् **दशमेऽहनि अनुष्टुभां स्थाने** (आश्रौ ८, १२, १-२) इत्याह (?) ॥४॥

[स्तोकसूक्तस्यानुष्टुभोर्द्वितीयतृतीययोर्ऋचोः स्थाने गायत्र्योर्ऋचोरादेशः]

**स्तोकसूक्तस्य द्वितीयतृतीययोः स्थाने 'अग्ने घृतस्य धीतिभिः', 'उभे सुश्चन्द्र सर्पिषः' इत्येते** ॥५॥

स्तोकसूक्तस्य पशोः स्तोकस्य[5] **इमं नो यज्ञम्** (ऋ ३ २१; आश्रौ ३,४,१) इत्येतस्य[6], [स्तोकसूक्तं, तस्य ?] द्वितीया च तृतीया च द्वितीयातृतीययोः ऋचोः स्थाने **घृतवन्तः पावक** (ऋ ३,२१, २-३) इत्येतयोः अनुष्टुभोः स्थाने **अग्ने घृतस्य** (ऋ ८,१०२,१६), **उभे सुश्चन्द्रः** (ऋ ५,६,६) इत्येते गायत्री पङ्क्तिश्च भवतः । सूक्तग्रहणाद् अनुवचनस्य द्वितीयतृतीययोः[7] स्थाने न भवतः । तृचाधिकारसमुच्चयार्थमेते[8] इत्याह । अन्यथा[9] यथैव प्रातरनुवाके अपरिमितानां स्थाने तृचो भवति, तथैवेह "स्तोकस्यापि स्थाने तृचः स्यात्" ॥५॥

[अनुष्टुभां स्थानेऽच्छावाककर्तृकमृगन्तरशंसनम्]

**'इदमापः प्रवहत' इत्येतस्याः स्थाने 'आपो अस्मान्मातरः शुन्धयन्तु' इति; 'अच्छा वो अग्निमवसे', 'प्रत्यस्मै' इति तृचयोः स्थाने 'अच्छा नः शीरशोचिषं', 'प्रतिश्रुताय वा धृषद्' इति तृचावच्छावाकः** ॥६॥

पशोमार्जने, **इदमापः** (ऋ १,२३,२२; आश्रौ ३,५,२) "इत्येतस्या अनुष्टुभः" स्थाने **आपो अस्मान्** (ऋ १०,१७,१०) इत्येतां त्रिष्टुभं ब्रूयात् । एतस्या इति "वचनादृच एव स्थाने भवति, नोत्तरस्य मन्त्रस्य"[13] । उत्तरस्य मन्त्रस्याप्युद्धारः ऋचां समुद्धतत्वादेकार्थत्वाच्च । **अच्छा वोऽग्निमवसे** (ऋ ५, २५, १-३)

---

१. इत्येकं मैं; इत्ये ब' । २. ग्रहणा° मूको । ३. द्र. आश्रौ ६, ५, ८ । ४-४. अन्वनो (°नी मै) ति मूको । ५. स्तोक-सूक्तस्य मै । ६. इत्येतत् मूको । ७. द्र. ऋ १,७५,३,२१,१ । ८. °कारस° मूको । ९. नास्ति मूको । १०-१०. कस्यापि (तस्या अपि मै) स्थाने तृतीयस्याम् मूको । ११-११. इत्येतस्य अनुष्टुभस्य मूको । १२. °नादच ब' । १३. द्र. आश्रौ ३, ५,२ ।

प्रत्यस्मै (ऋ ६, ४२, १-३) इत्येतयोः तृचयोः स्थाने **अच्छा नः शीरशोचिषम्** (ऋ ८, ७१, १०-१२), **प्रतिश्रुताय वो धृषत्** (ऋ ८, ३२, ४-६) इत्येतौ द्वौ तृचौ आनन्तर्येण अच्छावाको[1] ब्रूयात् । प्रथमस्य स्थाने प्रथमः, द्वितीयस्य स्थाने द्वितीयः । प्रथमे तु प्रतीके पादग्रहणात् तृचग्रहणम् । द्वितीये तु प्रतीके [2]सूक्तादौ हीनपादग्रहणात्[2] सूक्तस्य स्थाने तृचः प्राप्तस्तस्मात्तृचग्रहणात् तृचस्य स्थाने तृचो भवति । चतुर्थी बृहती नोद्ध्रियते[3] । पुनस्तृचग्रहणं पादग्रहणादेकाऽपि तृचस्थाने भवति । यथा प्रातरनुवाकेऽपरिमितानां स्थाने तृचो भवति । [4]अच्छावाकग्रहणं मैत्रावरुणनिवृत्त्यर्थम्[4] । [5]उन्नीयमानसूक्तं मैत्रावरुणस्य प्राप्तम् । इहागत्याचार्येणाच्छावाक इत्युक्तम् । प्रकृतौ च[5] उन्नीयमानसूक्तम् अच्छावाकस्य भवति । न वक्तव्यम् । **उन्नीयमानायानूच्य 'प्रातर्यावभिरा गतम्'** (ऋ ८, ३८, ७) इति यजति (आश्रौ ५, ७, ६) इति[6] साकाङ्क्षवचनादेव सिद्धम् । न सिध्यति[7] वाक्येन विना । कथम् । यथा **आज्याहुतिं हुत्वा मुख्यं धनं दद्यात्** (आश्रौ ३, १३, १८) इति तादृशमेव तत् ॥६॥

[घृतयाज्यायाम् अनुष्टुभां स्थाने गायत्र्यादेशः]

**'परि त्वाऽग्ने पुरं वयम्' इत्येतस्याः स्थाने 'अग्ने हंसि न्यत्त्रिणम्' इति, 'उत्तिष्ठताऽव पश्यत' इत्येतस्याः स्थाने 'उत्तिष्ठन्नोजसा सह' इति, 'उरु विष्णो विक्रमस्व' इति घृतयाज्यास्थाने 'भवा मित्रो न शेव्यो घृतासुतिः' इति ॥७॥**

परि त्वाऽग्ने **पुरं वयम्** (ऋ १०, ८७,२२; आश्रौ ५,१३,६) [8]इत्येतस्या अनुष्टुभः[8] स्थाने **अग्ने हंसि न्यत्त्रिणम्** (ऋ १०,११८,१) इत्येतां गायत्रीं जपेत् । एतस्या इति वचनाद् उपहवलोपो[9] न भवति । उपहवेन हि सम्बद्धो[10] जपः । जपे लुप्ते तत्संबद्धस्योपहवस्यापि[11] लोपः प्राप्तः । **उत्तिष्ठताव पश्यत** (ऋ १०,१७९, १); आश्रौ ५, १३,४) इत्येतस्या अनुष्टुभः स्थाने **उत्तिष्ठन्नोजसा सह** (ऋ ८, ७६, १०) इति गायत्रीमनुब्रूयात् । एतस्या इति वचनादुत्तरस्या[12] उद्धारो न भवति । अन्वाहेति[13] वचनादनुवचनम् । सा [14]पूर्वया सह सम्बद्धा भवति **उरु विष्णो विक्रमस्व** (शौ ७, २७, ३; आश्रौ ५,१९,३) [15]इत्येतस्या घृतयाज्यायाः स्थाने[15] **भवा मित्रः** (ऋ १,१५६, १) इत्येतया जगत्या यजति । प्रतीकग्रहणादितरस्य[16] घृतयाज्यायाः स्थाने न भवति । घृतयाज्याग्रहणमुत्तरसूत्रार्थम्[17] ॥७॥

---

१. °वाकान् (°त् मै) मूको । २-२. सूक्तानि दौहीनपा° ब'; सूक्तादाहीनपा° मै; द्र. आश्रौ १,१,१८, । ३. ०धेते मूको । ४-४. °हणान्मैत्रा° ब'; हण मै, °त्रा° मै । ५-५. नास्ति ब' । ६. नास्ति ब' । ७. सिध्यन्ति ब'; सिद्धान्ति मै । ८-८. इत्येतावानुष्टुभः ब'; इत्येकावास्यानुष्टुभः मै । ९. द्र. आश्रौ ५, १३, ६ । १०. संबन्धो मूको । ११. बन्धस्यो° मूको । १२. द्र. ऋ १०, १७९, २ । १३. द्र. आश्रौ ५, १३, ५ । १४. द्र. ऋ १०, १७९,१ (? ऋ ८, ७६, १०) । १५-१५. नास्ति ब' १६. द्र. आश्रौ ५, १९, ३ अग्नाविष्णू महि । १७. °सूत्रार्थे ब'

[अहरहश्चाहर्गणेषु घृतयाज्यास्थाने ऋगन्तरादेशः]

**अहरहश्चाहर्गणेषु यत्रैतदहः स्यात् ॥८॥**

अह्नां गणा अहर्गणाः, तेषु[1] सत्रेषु अहीनेषु च, अहर्गणेषु अहरहश्च घृतयाज्यास्थाने **भवा मित्रः** (ऋ १,१५६,१) इत्येतया यजति । यत्रैतदहः स्याद् यस्मिन्नहर्गणे दशममहर्भवति । यथा त्रयोदशरात्रयोः[2] द्वादशाहे छन्दोमे च[3] दशरात्रे षोडशरात्रादिषु च रात्रिसत्रेषु गवामयनादिषु संवत्सरसत्रेषु चाऽहरहर्घृतयाज्यास्थाने **भवा मित्रः** इति । घृतयाज्याधिकारो वर्तते । तस्माद् [4]'घृतयाज्यासु तद्विधानं'[4] भवति । घृतयाज्याधिकारेऽक्रियमाणे यदुक्तं सर्वमहरहः स्यात् । सत्राधिकारात् सत्रेष्वेव प्राप्तेऽहर्गणग्रहणादहीनेष्वपि भवति । द्वादशाहे छन्दोमवति[5] च दशरात्रे । यत्रैतदहः स्यादिति वचनाद् द्वादशाहादिषु भवति । गर्गत्रिरात्रादिषु न[6] भवति । चतुर्दशरात्रादिषु च यत्र दशममहर्न विद्यते ॥८॥

[पत्नीसंयाजेषु सिनीवालीदेवताया याज्यानुवाक्ययोरन्त्यपादस्य मतान्तरेणाभ्यासविधानम्]

**सिनीवाल्या अभ्यस्येदित्येके[7] ॥९॥**

पत्नीसंयाजेषु[8] प्रजाकामस्य[8] सिनीवाली देवता इज्यते[9] । तस्याः सिनीवाल्या ये याज्यानुवाक्ये, ते अभ्यस्येत्[10] । तयोर्याज्यानुवाक्ययोः अन्त्यं[11] पादं द्विरभ्यस्येदित्येक आचार्या मन्यन्ते । नाभ्यस्यन्त्यन्य आचार्याः । **प्रजां देवि दिदिड्ढि नः, प्रजां देवि दिदिड्ढिनोम्** (ऋ २,३२, ६) इति, **सिनीवाल्यै जुहोतन, सिनीवाल्यै जुहोतनोम्** (ऋ २, ३२, ७) इत्यभ्यासे कृते । सिनीवाल्या इति [12]देवताचोदितत्वाद् याज्यानुवाक्ययोरभ्यासः[12] । अन्त्यपदाभ्यासः, अन्त्यलोपो वृद्धिर्वा चेति । सिनीवालीदेवत्या अन्या ऋचोऽचोदितत्वाद् याज्यानुवाक्ययोर्न विद्यन्ते । तस्मादभ्यासो विधीयते । अस्मादेव दर्शनाद् आप्रीसूक्ते[13] आनुष्टुभे[14] सति अभ्यासो[15] युक्तः[16] दशमेऽध्याये पादमाने[17] च । अथवा तस्मिन् व्रतादेव जामदग्न्य एव प्रयोक्तव्यास्तथापि दृष्टं घृतयाज्ययोः । ग्रावस्तोत्रे तु पावमान्योऽनुष्टुभः प्रयोक्तव्याः । सिनीवाल्या ऋगभावादभ्यस्येदित्युक्तम्[18] ।

अनभ्यासो[19] वा । कस्मात् । ऐकाहिकं हि कर्म यथादृष्टं क्रियमाणं फलाय भवति । विगुणे सति फलाय न भवति । अभ्यासे च क्रियमाणे विगुणं संपद्यते ।

---

१. नास्ति मूको । २. त्रयोः ब[1] । ३. ब मूको । ४-४. °याज्या युतद्वि° ब[1]; °याज्या एतद्वि° मै । ५. छन्दोगवंतो ब[1]; छन्दोगवती मै । ६. अभ्यसे° मै । ७. द्र. आश्रौ १, १०, ५-७ । ८. नास्ति ब[1]; प्रजामास्य मै । ९. इत्येते ब[1] । १०. °सेत् मूको । ११. अन्त्य° मूको । १२-१२. °तावोदिनात्वा याज्यानु° ब[1] । १३. आप्र (°प्र मै) सूक्ते मूको । १४. अनु° मूको । १५. आयासो ब[1] । १६. युक्त मूको । १७. द्र. ऋ १,१४२; ९,५, ८-११ । १८. °दभ्यसेदि इत्युक्तम् ब[1]; °दभ्यासे इत्युक्तं मै । १९. अभ्यासो ब[1] ।

तस्मादनभ्यासः। तस्मिन्नहनि यदि कश्चिद् अधीयन्नुपहन्यादन्यं 'विवक्तार-मिच्छेत्' (ऐब्रा ३,३५) इत्यन्यो विवक्ता कर्तव्यः'[1]। उत्तरवचनादस्मिन्नहनि केन [2]विधति (?) पुनः। अभ्यस्येदिति[2] वचनादहर्गणेऽधिकारोऽनुवर्तत इति 'सिद्धं भवदहरहश्चाहर्गणेषु'[3] यत्रैतदहः स्यादित्यधिकारः। तस्मादिति। सिनीवाल्यां यद्यभ्यासः क्रियते अहरहश्चाहर्गणेषु (आश्रौ ८,१२,८) एतदहर्विद्यते। ब्राह्मणे वचनात् [4]तद् यदन्या अन्या धाय्याश्च याज्याश्च कुर्युरुन्मूलमेव तद् यज्ञं कुर्युः[4] (ऐब्रा ३,३१) इति। अभ्यासे कृतेऽन्या भवति। तस्मात् कृत्स्नेष्वहर्गणेष्वभ्यासः[5] प्रकृतौ ब्राह्मणे[6], विकृतावप्येतदेव[7] भवति। एवं पूर्वं[8] प्राप्ते दशमेऽहनी-होच्यते ॥९॥

[दशमस्याह्नः विवादराहित्यादविवाक्यसंज्ञाकरणम्]

**नास्मिन्नहनि केनचित् कस्यचिद् विवाच्यमविवाक्यमित्येतदाचक्षते ॥१०॥**

दशमेऽहनि केनचित् कर्मण्यधिकृतेन अनधिकृतेन[9] च कस्यचिदपि संदिग्धं न विवाच्यं, कस्यचिद् हौत्रकर्मणि[10] नियुक्तस्याध्वर्युकर्मणि [11]च नियुक्तस्य[11] संदिग्धं [12]न वाच्यम्[12]। कस्मात्। न विवाच्यमिति[13] अविवाक्यमित्येतदाचक्षते ब्रुवते वादिनः। ततः प्रतिषेधः। सन्देहेषु[14] उपदेशः प्रतिषिध्यते। अस्मिन्नहनीति पुनरुच्यते। अहर्गणाधिकारादहर्गणेष्वहरहर्मा भूदिति। केनचिदिति कर्मण्यनधि-कृता[15] यज्ञे ये दिदृक्षवः, तेषामपि प्रतिषेधः केनचित्[16] न विवाच्यमिति। चिदिति निपातः, निरवशेषवाचकः[17]। [18]गृहपतिर्वा ब्रूयाद् इत्यन्येषां[18] श्रुतिः। निरवशेषवचनादत्यन्तं न प्रतिषेधः। कस्यचिदिति वचनाद् [19]हौत्रे कर्मण्यधि-कृतानाम्[19] अध्वर्युप्रभृतीनां च प्रतिषेधः। विवाक्यमिति [20]वीति वैविध्येन विधानि कर्तृद्रव्यमन्त्रक्रियादेशकालादीनि[ψ] न विवाक्यानि[20]। एवमहरविवाक्य-मित्याचक्षते[21] दशममहरविवाक्यं भवति (ऐब्रा ५,२२) इति ब्राह्मणम् ॥१०॥

[अविवाक्येऽहनि मन्त्रे वाक्यविनाशेऽनधिकृतैर्ब्राह्मणैर्बहिर्वेदिस्वाध्यायप्रयोगः]

**संशये बहिर्वेदिस्वाध्यायप्रयोगः ॥११॥**

---

१-१. विविक्तारमितिच्छेदिति कर्त्तव्यः मूको। २-२. विधृति पुनरस्मदिति (°रस्मिन्निति मै) मूको। ३-३. सि भवदगंणेषु ब'। ४-४. तद्यदन्या वायाश्च याज्याश्च (याल्पाश्च मै) कुर्यात् तन्मूलमेव दद्य (तद्य मै) यशं (यज्ञ मै) कुर्युः मूको। ५. कृछेष्वह (कृच्छेऽह मै) गंणेऽभ्यासः मूको। ६. °णं मूको। ७. विकृतादप्ये° मूका। ८. यूवं ब'; पूर्वं मै। ९. अधि° ब'। १०. होत्र° मूको। ११-११. चानियु° मूको। १२. नास्ति ब'। १३. विच (°चा मै) यंमिति मूको। १४. सेदहेहे ब'। १५. कर्मण्य (°ण्या मै) धिकृतात् मूको। १६. केनचिदिति मूको। १७. °चकः मूको। १८-१८. °पति र्वाविति ब्रूया° मूको; द्र. शांब्रा २७,१। १९-१९. होत्रे (°त्र ब') क° मूको। २०-२०. वैवध्ये नियमविधानि कर्त्तव्यमन्त्रक्रिया-देशः कालोदो नि न वि ब'। ψ. °देशः काला° मै। २१. °महरहविवा° मूको।

संशये कस्यचिन्न विवाच्यमित्युक्तम् । अनुच्यमाने[1] तु यज्ञाविशेषः स्यात्। तस्मात् संशये वाच्यम्, अन्येषां यत्तस्मिन्निदमुच्यते[2] अविवाक्येऽहनि मन्त्रे कर्तुः कर्मणि मन्त्रे वा यदि[3] संशयो भवति। संशयो वाक्यमोहो[4] विनाशः। ततः मन्त्रे संशये सति बहिर्वेद ये दिदृक्षवः [5]सन्ति ते[5] मन्त्रं संदिग्धं स्वाध्याय-न्यायेन[6] प्रयुञ्जन्ति, अधीयते कर्तुरसंशयार्थम् । ब्राह्मणशेषस्य यज्ञस्य प्रति-पादयन्ति[7] मन्त्रवादाः। संशय इति वचनादसंशयेन विवाच्यम्। एतदहरवि-वाक्यम् (ऐब्रा ५, २२) इति श्रुतिः। अहरिति कर्मणो नामधेयम्। कर्म च वेद्यां क्रियते। तस्माद् बहिर्वेदिस्वाध्यायो विधीयते। बहिर्वेदीति वचनादनधिकृताः स्वाध्यायं कुर्वन्ति । अधीष्टाध्यायोऽविकृतो[8] भवति । संदिग्धमात्रस्यैव वचने प्राप्ते स्वाध्यायग्रहणाद् [9]'ऋचं द्व्यृचं[+] तृचं वाऽधीते'[9]। प्रयोग इति वचनाद् यथा कर्ता शृणोति, तथा स्वाध्यायः प्रयोक्तव्यः ॥११॥

[मतान्तरेणान्तर्वेदिपूर्वोक्तस्वाध्यायप्रयोगः]

**अन्तर्वेद्यामित्येके**[10] ॥१२॥

अन्तर्वेद्यां स्वाध्यायः प्रयोक्तव्य इत्येक आचार्या मन्यन्ते। अन्तर्वेदिवचनात् कर्मण्यधिकृता[11] एव [12]स्वाध्यायमधीयते। बाह्येष्वविद्यमानेष्वयं[12] पक्षो भवति। नायन्तुल्यविकल्पः[13]। संशये यदि बाह्या[14] विवक्तारो न विद्यन्ते, अधिकृता एव विब्रूयुरित्यर्थः[15]। अथवा अन्तर्वेद्यामपि यदि अनधिकृता दिदृक्षवो[16] विद्यन्ते, त एव विब्रूयुः। [17]**एतदहरविवाक्यम्**[+] (ऐब्रा ५, २२) इति श्रुतिः। अहरिति कर्मनामधेयम्। तस्मात् कर्मण्यधिकृता एवोदाहरेयुः । तेषामभावे त्वधिकृता अपि विब्रूयुः[17]। अन्तर्वेदीत्येक इत्यविशेषवचनात् कर्मणे विशेषाय ॥१२॥

[तत्र याज्ञिकस्वाध्यायनिषेधः शब्दान्तरेण तदर्थप्रतिपादनं वा]

**न व्यञ्जनेनोपहितेन वाऽर्थः** ॥१३॥

व्यञ्जनेन विशेषणेन स्वाध्यायो न प्रयोक्तव्यः । स्वाध्यायो द्विप्रकारः [18]"प्राकृतो याज्ञश्च"[18]। प्राकृतः समाम्नायः। यज्ञकर्मणि विशेषैः युज्यते याज्ञः[19]। एकश्रुतिप्रणवागूर्वषट्कारावसानान्तराभ्यासाहावादयो[20] विशेषाः[21]।

---

१. अनूच्य° मूको। २. यत्तस्मिन्निविदमुच्यते ब१; य तस्मिन्निविदमुच्यते मै। ३. नास्ति ब१। ४. °मोदो मूको। ५-५. नास्ति मै; इति ब१। ६. °यान्यपि न ब१। ७. °पादयत्ति ब१; °पा इति मै। ८. आधीष्टाध्योयो विकृतो ब१; अविष्टाध्यायो निकृतः मै। ९-९. ऋचं द्वं तृचं विधीयते ब१। +. द्व्यृ ऋ ब१। १०. °र्वेदीत्येके आन. BI.। ११. °धिकामा मूको। १२-१२. स्वाध्यामष्वविवाद्येष्व-वाद्येष्वविद्य° ब१; स्वाध्यायमधीते वाद्येष्वपि विद्य° मै। १३. मत्तुल्यवि° ब१; यमतुल्यवि° मै। १४, वाद्याः मूको। १५. विब्रयेयु° मूको। १६. दृशी (°शो ब१) कवो मूको। १७-१७. नास्ति ब१। +. एतदहरहः विवाक्यम् मै। १८-१८. प्रकृतो यज्ञश्च मूको। १९. नास्ति मूको। २०. °कारः अव° मूको। २१. विशेषः मूको।

अनेन विशेषेणानेन व्यञ्जनेन स्वाध्यायो न प्रयोक्तव्यः **दशमनहरविवाक्यम्** (ऐब्रा ५,२२) इति श्रुतिवचनात्। यज्ञेन व्यञ्जनेन स्वाध्यायो न प्रयुज्यते। व्यञ्जने तु संदिह्यमान उत्तरेण सूत्रेण ब्रूयादुपहितेन वार्थम्[1] इति। गृहपतिर्वा विब्रूयादित्यन्येषाम्। उपहितेन वाऽर्थः। **स्वाध्यायप्रयोगः** (आश्रौ ८,१२,११) इत्युक्तम्। अथवोपहितेन शब्देन पदार्थो वक्तव्यः। अन्येन शब्देन स एवार्थो वक्तव्यः। यथा **इन्द्रापर्वता बृहता रथेन** (ऋ ३, ५३,१) शक्राशैला महता स्यन्दनेनेति[2] ब्रूयात्। वा-शब्दो विकल्पे[3]। स्वाध्यायः प्रयोक्तव्यः, शब्दान्तरेण वाऽर्थो[4] वक्तव्य इति विकल्पः। **अविवाक्यम्** (आश्रौ ८,१२,१०) इति वचनाद-स्मिन्नहनि [5]प्रयुज्यमाने न[5] शब्देन[6] ब्रूयात्, शब्दान्तरेण वाऽर्थं ब्रूयादित्याह। एतद्विधानं [7]मन्त्रे च[7] कर्मणि च युज्यते। उपहितेन वेति सिद्धेऽर्थग्रहणाद् येषां शब्दानां पर्यायवाचकाः शब्दा न विद्यन्ते, ते[8] स्वशब्देनैव वक्तव्याः। उपसर्गाश्च वि परि अनु, वा[9] अथ नु[9] ओम्[10] नैतेषां[11] पर्यायवाचकाः शब्दाः सन्ति। न चैतैर्विनार्थनिर्वृत्तिः[12]। **इन्द्र मरुत्व इह पाहि सोमं** (ऋ १३, ५१, ७) [13]शक्र गणवन् इह पिब चन्द्रं[13] यथा शार्याते पीतवानसोन्दोः[14] ॥१३॥

[प्रमाद् वाक्यलोपे पूर्वोक्तोपायैर्विबोधनाभावे प्रायश्चित्तम्]

**प्रत्यसित्वा प्रायश्चित्तं जुहुयुः ॥१४॥**

प्रत्यसित्वा प्रतिसन्धानं कृत्वा प्रायश्चित्तं जुहुयुः **ऋक्तश्चेद्भूरिति गार्हपत्ये** (आश्रौ १, १२,३२) एवमादि यथाम्नातम्। [15]तस्मादृक्तोऽन्यत्र विप्रमोहे[15] सति प्रतिसन्धानं[16] कृत्वा प्रायश्चित्तं न हूयते। इह कस्माद् विधीयत[17] इति। इहापि विप्रमोहे सति यदि स्वयं प्रतिसंदधाति, तदा प्रायश्चित्तं न[18] विद्यते। [19]यदि तथा सत्यन्येन[19] प्रोक्तं संदधाति, तदा प्रायश्चित्तं विधीयते **अविवाक्यम्** (ऐब्रा ५,२२) इति श्रुतिवचनात्। एवमपि प्रत्यसित्वेति न वक्तव्यम्। प्रायश्चित्तं जुहुयुरिति वक्तव्यम्। एवं सिद्धे प्रत्यसित्वेति वचनाद् यदि स्वाध्यायप्रयोगेण[20] उपहितेन वा शब्देन यदि कर्ता न विबुध्यते[21], तदा[22] [23]प्रतिपाद्यते येन[23] केन-चिदुपायेन। प्रत्यसित्वा प्रायश्चित्तं जुहुयुरिति वचनात् सर्वकर्तृणामिदं विधानम्। तथा गार्हपत्ये जुह्वतीति। अनुष्टुभां स्थानेऽन्या आदिष्टाः। आप्री-सूक्ते[24] तु नादिष्टाः, वैकल्पिकस्य विद्यमानत्वात्। **जामदग्न्यः सर्वेषाम्** (आश्रौ

---

१. वाचं ब'; वार्च्चं मै। २. स्यनेनेति ब'; यातेनेति मै। ३. विकल्पः मूको। ४. चार्थो ब'; °र्थं मै। ५-५. °मानेन मै। ६. शब्दो न मूको। ७-७. मन्त्रेण मूको। ८. नास्ति मूको। ९-९. आथ मै। १०. ॐ ब'। ११. तेषां बा; चंतेषां मै। १२. °निवृत्तिः मूको। १३-१३. सत्र (सक्त मै); गणत्वमिक्ष्य द्रै (°त्वमिह ऋक्षद्रे मै) मूको। १४. योवनानं सोदः ब'; °नसीन्द्रः मै। १५-१५. °दृक्तोऽन्यविप्र° मूको। १६. सन्धानं मूको। १७. द्वितीय मूको। १८. नास्ति मै। १९-१९. परि यथासन्ये ब'; यथामन्येन मै। २०. °प्रउगेन (°त ब') मूको। २१. विद्यते मूको। २२. तथा ब'; यथा मै। २३-२३. प्रतिपद्यतेऽपि न ब'; प्रतिपद्यते येन मै। २४. आशो युक्ते ब'; आशीपूरो मै।

३, २,८) इति । तस्य प्रयोगे न्याय उक्तः । अभ्यासो वा भवतीत्युक्तम् । स न कर्त्तव्यः अविद्यमानत्वात् । अभ्यासो दृष्टः सिनीवाल्याः[1] । इह च विद्यन्ते वैकल्पिक्यो[2] याज्याः[3], तस्माज्जामदग्न्य एव प्रयोक्तव्याः । दशमेऽहनि सामान्यविधानं व्याख्यातम् । इदानीं शस्यं वक्ष्यते । एतेनाह्ना सुत्यानि (आश्रौ ७,१,३) इत्यैकाहिकं शस्यं भवति । विशेष एव वक्ष्यते ।।१४।।

[आज्यसूक्तनिर्देशः]

**'अग्ने तमद्याश्वं न स्तोमैः' इत्याज्यम् ।।१५।।**

**अग्ने तमद्य** (ऋ ४, १०) इत्येतत् सूक्तमाज्यं भवति ।।१५।।

[विग्रहनियमः पर्यासविधानञ्च]

**पञ्चाक्षरेण विग्रहः । दशाक्षरेण वा । 'आ त्वा रथं यथोतयः' इत्येतस्याः स्थाने 'त्रिकद्रुकेषु महिषो यवाशिरम्' इति ।।१६।।**

**अग्ने तमद्य** (ऋ ४, १०, १) इति पञ्चाक्षरेण पादेन[4] विग्रहः । प्रकृतौ द्विपदेऽर्द्धर्च उक्तो[5] विग्रह इह चतुष्पदे कथं भवतीति तदुच्यते—पञ्चाक्षरेण विग्रह इति । नायं न्यायः (?) सर्वत्र पदपङ्क्तयः[6] दशाक्षरेणैकपादा[7] दशाक्षरेण वा पादेन विग्रहः कर्त्तव्यः । पञ्चाक्षरेणेत्युक्ते दशाक्षरेण न प्राप्नोति, तस्माद् दशाक्षरेण वेति विभाषा विधीयते । सर्वत्र हि एता एव ऋचः दशाक्षरेण वादिष्टा[8] पिण्डपितृयज्ञे[9] पुनराधेये[10] । इहाक्षरग्रहणाद् "[11]विकल्पो न[11]" प्राप्नोति । पादाधिकाराद् विकर्षेणावपूर्यते । ऐकाहिकं प्रउगम् ।

होत्रकाणामूर्ध्वं स्तोत्रियानुरूपेभ्य आरम्भणीयाभ्यश्च[12] ऐकाहिकानि शस्त्राणि । अन्त्यानामैकाहिकानां[13] तृचानां स्थाने पर्यासा भवन्ति । **प्रगाथतृचसूक्तागमेष्वैकाहिकं तावदुद्धरेत्** (आश्रौ ७, १, २२) इति वचनात् ।

ऐकाहिको मरुत्वतीयस्यातानः । बृहतीवारं प्रगाथाः । आ त्वा (ऋ ८, ६८,१) विकर्षेणावपूर्यते[14] । "[15]ऐकाहिकं प्रउगम्, होत्रकाणामूर्ध्वं स्तोत्रियानुरूपेभ्य आरम्भणीयाभ्यश्चैकाहिकानि शस्त्राणि । अन्त्यानामैकाहिकानां स्थाने पर्यासा भवन्ति । ते[15] "[16]कृत्स्नस्या ऽऽत्वेति प्रतिपत्तृचस्य[16]" स्थाने प्राप्ताः, यथा प्रातरनुवाके तृचः कृत्स्नस्य छन्दसः स्थाने "आद्यायाः स्थाने त्रिकद्रुकेषु (ऋ २, २२,१) इति भवति । उत्तरे द्वे नित्ये । अनुचरस्तु प्राकृत एव[17]" ।।१६।।

---

१. द्र. आश्रौ ८,१२,९ । २. °लिपका मूको । ३. अन्याः मूको । ४. यदि न ब[1] । ५. द्र. आश्रौ ५,१४,१० । ६. व पं तु यः ब[1] । ७. 'रेणैव पादः मूको । ८. वाष्टाः ब[1]; वारिष्टाः मै । ९. द्र. आश्रौ २,७,१० । १०. आश्रौ २,८,१४ । ११-११. विकल्पेन मूको । १२. °णीयायाभ्यश्च ब[1]; °णीयाश्यश्च मै । १३. असाना° ब[1] । १४. °र्यतेति ब[1] । १५-१५. नास्ति ब[1] । १६-१६. कृत्स्नस्याते प्रति° ब[1]; कृत्स्नस्य ते प्रति° मै । १७-१७. नास्ति मूको । †. द्र. आश्रौ ५,१४,४ ।

[मरुत्वतीयशस्त्रकथनम्]

**'सखाय आ शिषामहि' इति तिस्र उष्णिहो 'मरुत्वाँ इन्द्र' इति मरुत्वतीयम् ॥१७॥**

**सखाय आशिषामहि** (ऋ ८, २४, १-३) इत्येतास्तिस्र उष्णिहः। उष्णिक् छन्दः। **मरुत्वाँ इन्द्र** (ऋ ३, ४७) इत्येतत्[1] सूक्तम्, इत्येते द्वे सूक्ते मरुत्वतीय-शस्त्रं भवति ऐकाहिके[2] प्राप्ते। पादग्रहणात्[3] तिस्र इत्याह। ऐकाहिकस्य[4] स्थान आदिष्टे सूक्ते। स्थानिवद्भावात्पच्छस्ये[4] प्राप्त उष्णिग्ग्रहणादर्धर्चं भवति। द्वे सूक्ते भवतः। स्तोमो हि चतुर्विंशः। मरुत्वतीयग्रहणात् सूक्तस्य स्थाने भवतः, तस्मात् सकृदाहावः। यथा[5] छन्दोमेषु विषुवति च। मिथुनानि शस्यन्ते। सूक्त-स्थान आदिष्टत्वादाहावः। छन्दोऽन्यत्वात्तु पृथगाहावः प्राप्तः, यथा दिपदा-सूक्तेषु ॥१७॥

[रथन्तरपृष्ठयोनिनियमः]

**'कया नश्चित्र आ भुवद्' इत्येतासु रथंतरं पृष्ठं तस्य योनिं शंसेत् ॥१८॥**

**कया नश्चित्रः** (ऋ ४, ३१, १) इत्येतास्वृक्षु रथन्तरं [6]पृष्ठं भवति[6]। बृहत् प्राप्तं युग्मान्वयत्वाद्[7], रथन्तरं विधीयते। स्वासु[8] प्राप्ते (?प्राप्तासु) एता[9] विधी-यन्ते, [10]नाह्नातिदेशाः। विकल्पे[10] प्राप्ते रथंतरं नियम्यते। तासु प्राप्ते (?प्राप्तासु) एता विधीयन्ते। तस्य योनिं शंसेत्। [11]"तस्य रथंतरस्य योनिं शंसेत्"[11]। सर्वत्र योनिभाव इति प्राप्ते न वक्तव्यम्। बृहतश्च योनिम्[12]। गाणगारिरित्युक्ते यदुक्तं तत्[13] सर्वं गाणगारिपक्ष एव स्यात् ॥१८॥

[गाणगारिमतेन रथंतरयोनिशंसनानन्तरं बृहतो योनिशंसनम्]

**बृहतश्च गाणगारिर्दशरात्रे युग्मान्वयत्वात् ॥१९॥**

रथंतरस्य योनिशंसं शंसत्वा बृहतश्च योनिं गाणगारिराचार्यो मन्यते। कस्माद्धेतोः। सत्रे [14]"दशरात्रे युग्मान्वयत्वात्। कृत्स्ने[14] दशरात्रे युग्मान्यहानि बृहन्तीति[15] युग्मान्वयं भवति, तस्माद् युग्मान्वयत्वात्। दशरात्रग्रहणात् प्रकरणं दर्शितं भवति। दशरात्रो हि प्रकृतः[16]। **प्रकरणेन विधयो बध्यन्ते** (आपश्रौ २४, २,२७) इत्यन्येषाम्। प्रकृते [17]"दशरात्रे तु[17] युग्मान्वयं बृहत्। कृत्स्ने दशरात्रे यो न्यायः स[18] दशमेऽह्न्यपि कर्त्तव्यो, महान्यायात्। न प्राप्तं हि योनिशंसनं, पृष्ठ्या-भिप्लवयोरेव विधानाद् **बृहत्पृष्ठानीतराणि** (आश्रौ ७, ५, ३) इति दशमेऽहनि (आश्रौ ८, १२, १) इति। प्रकरणबलीयस्त्वादेव बृहतो योनिं गाणगारिराचार्यो

१. एतत् ब'। २. द्र. आश्रौ ५,१४,१९। ३. °हणं मूको। ४. °वाच्छस्ये मूको। ५. यस्या ब'; पयस्या मै। ६-६. नास्ति मूको। ७. यस्यान्वयित्वस्त्वा ब'; यस्मान्वयित्वाद् मै; द्र. आश्रौ ७,५,३; ८, १२, १९। ८. आसु मूको। ९. यथा ब'। १०-१०. °देशविकल्पे ब'। ११-११. नास्ति ब'। १२. योनिं गाण° मूको। १३. नास्ति मूको। १४-१४. नास्ति ब'। ५. बृहदिति ब'; बृहन्तेति मै। १६. कृतः ब'। १७-१७. °रात्रेषु ब'; °रात्रे मै। १८. नास्ति मूको।

मन्यते । परस्मिन् न्याये क्रियमाणेन चतुर्थेन पृष्ठ्याह्ना शस्यं प्राप्नोति । तद्धि युग्मं भवति । युग्मान्वयत्वादिति चोक्तम्[1] । दृश्यते **चतुर्थेन व्यूळ्हस्येतराणि सूक्तानि** (आश्रौ ८,१२,२५) इति । चत्वारः[2] छन्दोमा[3] इति चान्यां (?) छन्दोगाश्च(?) पार्श्वगात्येहानि भवति[4] । पृष्ठ्याहत्वाद् बृहतो योनिर्युज्यते । एवं [5]चेद् वैराज्यस्यापि[5] योनिः प्राप्नोति । **न त्वत्र स्थायिवैरूपं तृतीये** (आश्रौ ८, ७, १६) इति वचनाद् वैरूपादीनां स्थायित्वमनुपदिष्टं[6] भवति । बृहद्रथन्तरपृष्ठा[7] एव छन्दोमा[8] भवन्ति[9] । छन्दोमत्वाद्[10] मिथुनानि शस्यन्ते, त्रैष्टुभानि जागतानि च । उष्णिक्षु[11] जागताः पादाः सन्ति । आचार्येण तु दशममहरैकाहिकशस्यं[12]क्लृप्तम् । **पूर्वस्त्र्यहः पुनश्छन्दोमाः** (आश्रौ ८,७,१८) इति त्र्यहग्रहणात् छन्दोमचतुर्थमैकाहिकं[13] भवति । ऐकाहिकत्वादप्राप्तं विधीयते । **चतुर्थेन व्यूळ्हस्येतराणि सक्तानि** (आश्रौ ८, १२,२५) । ऐकाहिकत्वाद् बृहतो योनिर्न क्लृप्ता, न्यायपक्षस्तु[14] प्रदर्शितो बृहतश्च गाणगारिर्दशरात्रे युग्मान्वयत्वादिति ॥१६॥

[एकपदयोस्तार्क्ष्यगावानसूक्तयोः क्रमशः शंसनम]

**तार्क्ष्येणैकपदा उपसंशस्य ऋगावानमेकपदाः शंसेत्, 'इन्द्रो विश्वस्य गोपतिः' इति चतस्रः ॥२०॥**

तार्क्ष्येण सूक्तेन एकपदा[15] ऋचः [16]उपसंशस्य उपशंसनं[16] कृत्वा ता एकपदा ऋगावानं [17]शंसेत । एतद् व्याख्यातं प्रवर्गे । उपसंशस्येति[17] वचनादाहावप्रतिषेधः । **उपसंतनुयादेकपदाः** (आश्रौ ६.५,१२), **ताभ्यश्चोत्तराः** (आश्रौ ६.५,१३) इति प्राप्त ऋगावानं विधीयते । बह्वीनां[18] चोपसंतानस्यानुपपत्तिः । पुनरेकपदाग्रहणादेकपदानामेवर्गावानं भवति । अधिकारात् तु तार्क्ष्यस्यापि प्राप्तम् । एकपदा इत्युक्ते न जानीमः का[19] एकपदा इति । ता इमा वक्ष्यन्ते । **इन्द्रो विश्वस्य गोपतिः** आश्रौ (८,२,२१) इत्येताश्चतस्रो यथासमाम्नाताः । [20]महावालभिदि ता[20] ऋगावानं शस्यन्ते । महावालभिदि पञ्चैकपदाः, तस्माच्चतस्र इत्याह ॥२०॥

---

१. चोदिवतं (°तं) मै । २. श्चत्वा° (ततश्चत्वा°) मूको । ३. °न्दोगा मै । ४. भवन्ति मै । ५-५. चेद्धेतरातस्यापि ब' । ६. स्थायिच्चनुप° मूको । ७. ७. °पृष्ठ्य ब' । ८. छन्दोगा मूको । ९. भवति मूको । १०. छन्दोगत्वात् मूको । ११. उष्णिक् मूको । १२. °हिकस्य स्यं (श्य° मै) मूको । १३. वोच तुर्थमैका° ब'; नृचतुर्थमैका° मै । १४. न्यायमा (°म मै) क्षस्तु मूको । १५. एकपक्षस्तु प्रदर्शितः दा ब' । १६-१६. उपशस्य उपसमानं (°सं मै) मूको । १७-१७. शस्ते (शस्तै ब') तद् व्याख्यातं प्रवर्ग्यो (°र्ग्ये मै) यद (पद मै) शस्येति (शंसस्येति मै) मूको । †. द्र. आश्रौ ४, ६, १;२ । १८. बहोनां ब' । १९. नास्ति मूको । २०-२०. °भिदिति मूको; द्र. आश्रौ ८,२,२०;२२ ।

[उत्तमयर्चोपसन्तानविधानम्]

**उत्तमयोपसन्तानः ॥२१॥**

उत्तमयैकपदयोपसन्तानो भवति । ऋगावानमिति वचनादुपसंतानो न प्राप्तः, तस्मादुपसन्तानो विधीयते । उपसन्तानो भवत्याहावश्च । **आदौ निविद्धानीयानाम्** (आश्री ५, १०,१६) इति वचनादाहूयोष्णिहः शंसति ॥२१॥

[निष्केवल्यशस्त्रनिरूपणम्]

**'य इन्द्र सोमपातमः' इति षळुष्णिहः, 'युध्मस्य ते' इति निष्केवल्यम् ॥२२॥**

**य इन्द्र सोमपातमः** (ऋ ८, १२, १-६) इत्येताः षडृच उष्णिहः शंसन्ति। उष्णिक्छन्दः । **युध्मस्य ते** (ऋ ३, ४६, १) इत्येतत् सूक्तं निष्केवल्ये भवति । पादग्रहणात् षडित्याह । उष्णिग्ग्रहणमर्द्धर्चप्राप्त्यर्थम्[1] । 'पादशस्यसूक्तस्य[2] स्थान[2] आदिष्टत्वात् स्थानिवदभावात् पच्छःशस्ये प्राप्तेऽर्द्धर्चं विधीयते । '[3]निष्केवल्यग्रहणान्निष्केवल्यसूक्ते द्वे[3] सूक्ते भवत एकविंशत्वात्[4] स्तोमस्य ।

शस्त्रक्लृप्तिः[5]—**कया नश्चित्र आ भुवत्** (ऋ ४,३१,१), **कया त्वं नः** (ऋ ८, ९३, १९) इत्येतौ स्तोत्रियानुरूपौ धाय्या रथंतरस्य योनिर्बृहतश्चेति[6] गाणगारिः । पित्र्यवान् सामप्रगाथः । तार्क्ष्य एकपदा[7] षडुष्णिहः सूक्तं चेति निष्केवल्यम् । होत्रकाणां स्तोत्रियानुरूपप्रगाथारम्भणीया एकैकमैकाहिकम् अहरहःशस्यानि च यथास्थाने । '[8]अत्रेन्द्रक्रतोर्योनिर्न विद्यतेऽभीवर्तस्य[8] विद्यमानत्वात् ॥२२॥

[अनुष्टुभः स्थाने ऋगन्तरादेशः]

**'तत् सवितुर्वृणीमहे' इत्येतस्याः स्थाने 'अभि त्यं देवं सवितारमोण्योः' इति ॥२३॥**

**तत् सवितुर्वृणीमहे** (ऋ ५,८२,१) इत्येतस्याः[9] "स्थानेऽनुष्टुभः स्थाने" **अभि त्यं देवम्** (आश्री ४,६,३) इत्येतां शस्त्वा **अस्य हि स्वयशस्तरम्** (ऋ ५, ८२, २-३) इति द्वे ऋचौ शंसेत् । अस्या इति वचनादस्या एव स्थाने भवति, न कृत्स्नस्य तृचस्य स्थाने प्राप्तः, यथा प्रातरनुवाके "[12]तृचः कृत्स्नस्य छन्दसः स्थाने[12]", ऋक्षु (?चां) स्थाने ॥२३॥

---

१. °र्थें ब' । २-२. °सूक्तसमाने मैं; सूक्तस्य समाने ब' । ३-३. °वल्यसूक्तं संत एव सूक्ते भवतः द्वे मूको । ४. चतुर्विंशत्वात् मैं । ५. क्लृप्तिः मूको । ६. योनिबृ° मूको । ७. एकपादः मूको । ८-८. °र्योनिर्वि° ब' । ९. इत्यस्याः इति पाठो देवत्रातमते संभाव्यते, तद्व्याख्यादर्शनात् । १०. इत्येतस्य मूको । ११-११. अनुष्टुप्स्थाने मूको । १२-१२. तृचकृत्स्नस्य (°त्स्न मैं); छन्दस्य स्थाने मूको ।

[द्विप्रतीकस्य जातवेदस्यसूक्तस्य निरूपणम्]

**'ऋभुक्षणः' इत्यार्भवं, 'पश्वा न तायुम्' इति द्वैपदं, 'समिद्धमग्निं समिधा गिरा गृणे' इति तृचश्च द्विप्रतीकं जातवेदस्यम् ॥२४॥**

**ऋभुक्षणो वाजाः** (ऋ ७,४८, १) इत्येतत् सूक्तमार्भवं भवति । **ऋभुक्षणो वैश्वदेवम्** (ऋअ २, ७, ४८ ) इत्युक्तमनुक्रमण्याम् । तस्मादाह 'आर्भवमिति । पश्वा न तायुमिति द्वैपदम् **पश्वा न तायुम्** (ऋ १, ६५, १) इत्येतत् सूक्तं द्वैपदं द्विपदाच्छन्दो यस्य तद्' द्वैपदं सूक्तम् । **समिद्धमग्निं समिधा गिरा गृणे** (ऋ ६, १५, ७-९) इत्ययं तृचश्च । द्विप्रतीकं जातवेदस्यं सूक्तं भवति । द्वैपदग्रहणं पच्छःशस्यप्राप्त्यर्थम् । विच्छन्दसां पच्छःशस्ये प्रतिषिद्ध 'आम्नायादर्द्धर्चे प्राप्नम्' । च-शब्दः समुच्चयार्थः । द्विप्रतीकग्रहणान्मध्यंदिनग्रहणेष्वाहावप्रतिषेधः' । द्वैपदमिति संज्ञावचनात्' प्राप्तः, यथा द्विपदासूक्तस्यानिविद्धानीयस्य च मध्ये आहावः तार्क्ष्यः प्राप्तः, शंसेत् । त्रैष्टुभेनाभिभवति । व्य(?) मिति प्राप्ते द्विप्रतीकमित्याह । आर्भवाधिकाराज्जातवेदस्यमित्याह ।

तयोः शस्त्रयोः क्लृप्तिः'—**अभि त्यं देवं सवितारमोण्योः** (मासं ४, २५; शौ ७, १४, १) इत्येका, **अस्य हि स्वयशस्तरम्** (ऋ ५, ८२, २-३) इति द्वे, **अद्या नो देव सवितः** (ऋ ५,८२,९; साम १४१; तैब्रा २, १४,६,२; तैआ १०, १०,२) इति प्रतिपदनुचरौ । **आ देवो यातु** (ऋ ७, ४५), **प्र द्यावा** (ऋ ७,५३) इति वासिष्ठम्' । **प्र ऋभुभ्यः** (ऋ ४,३३,१), **प्र शुक्रैतु** (ऋ ७,३४, १) इति । **वैश्वानरीयं वैश्वानरस्य सुमतौ** (ऋ १, ९८, १), **क ईं व्यक्ता** (ऋ ७,५६, १), **अग्निं नरः** (ऋ ७, १, १-६) इति षट् स्तोत्रियानुरूपौ । यज्ञायज्ञीयस्य च सानुरूपा योनिः जातवेदस्या **पश्वा न तायुम्** इति द्वैपदम् । **समिद्धमग्निम्** (ऋ ६, १५, ७-९) इति तृचश्च । शेषमैकाहिकम् ॥२४॥

[व्यूळ्हपृष्ठस्य चतुर्थदिवसीयसूक्तानामत्राध्याहारः]

**चतुर्थेन व्यूळ्हस्येतराणि सूक्तानि* ॥२५॥**

[वामदेव्यसाम्नोऽग्निष्टोमनामकरणं स्तोत्रियानुरूपनिरूपणञ्च]

**वामदेव्यमग्निष्टोमसाम 'अग्निं नरो दीधितिभिररण्योः' इति स्तोत्रियानुरूपौ । अग्निष्टोम इदमहः ॥२६॥**

वामदेव्यं सामाग्निष्टोमसाम भवति । आग्निमारुते यत् साम क्रियते, तदग्निष्टोमसामेत्युच्यते । **अग्निं नरो दीधितिभिररण्योः** (ऋ ७, १, १-६)

---

१-१. नास्ति ब' । २-२. °यादर्धर्चे (°र्चे मै) प्राप्ते मूको । ३. °हणाष्वाहाव° मूको । ४. वचनात् ब' । ५. तसिः ब' । ६. द्र. आश्री ८,८,४ । *भाष्यं नास्ति ।

इत्येतावग्निष्टोमसाम्नः स्तोत्रियानुरूपौ भवतः । [1]छन्दोगवशात् तृच †एवानुरूपः ।

अग्निष्टोम†[1] इदमहः । इदं दशममहरग्निष्टोमसंस्थं भवति । व्यूळ्हाधिकारादग्निष्टोम[2] इत्याह । इदमहरिति पुनरुच्यते । अस्याह्नोऽधिकारनिवृत्त्यर्थम्[3] । [4]अधिकारनिवृत्तौ वक्ष्यमाणो मानसविधिः[4] अन्यस्मिन्नप्यहनि भवति । यथा [5]पौण्डरीके गोतमस्तोमे[5] मानसं छन्दोगानां दृष्टम् ॥२६॥

[पत्नीसंयाजेभ्य ऊर्ध्वमितिकर्तव्यता]

**ऊर्ध्वं पत्नीसंयाजेभ्यः*** ॥२७॥

॥ इति अष्टमे द्वादशः खण्डः ॥

---

१-१. °वसादनु° मूको । †-†. °नुरूपौ अग्नि° (°पौ ग्नि° ब[1]) मूको । २. उवव्याधि° ब[1]; उच्याधि° मै । ३. °निवृत्त्यर्थः मूको । ४-४. °निवृत्ति (°त्ते मै) वक्ष्यमाणमासविधिः मूको । ५-५. यौडं रोकं गौत° ब[1]; प्यौण्डरीकेः गौत° मै; द्र. आश्रौ १०,४,१ । *भाष्यं नास्ति ।

# अथाष्टमेऽध्याये त्रयोदशः खण्डः

[गार्हपत्ये होमविधानम्]

**गार्हपत्ये जुह्वति 'इह रमेह रमध्वमिह धृतिरिह स्वधृतिरग्ने वाट् स्वाहा वाट्' इति ।** ।१।।

यस्मिन्नहनि मानसं भवति, तस्मिन्नहनि ऊर्ध्वं पत्नीसंयाजेभ्य इळां प्राश्य सर्वे यजमाना अप उपस्पृश्योत्तरेणाग्नीध्रीयं गत्वा पत्नीशालां प्रपद्य **समन्वारभध्वम्** (ऐब्रा ५, २२) इति होता ब्रूयात् । ततः सर्वेषु समन्वारब्धेषु गार्हपत्य आज्याहुतिं जुहुयात् **इह रम** (मैसं० ३,१२,४) इत्येतेन यथासमाम्नातेन[1] मन्त्रेण । ऊर्ध्वं पत्नीसंयाजेभ्य इति वचनाद् आज्येळां प्राश्येदं कर्म क्रियते । अप उपस्पृश्य पत्नीशालां गच्छति । **ते मार्जयन्ते** (ऐब्रा ५, २२) इति ब्राह्मणवचनात्[2] समन्वारभध्वमिति[3] होता ब्रूयात् । समन्वारब्धेषु होतैव जुहोति । **तेषां य एतामाहुतिं विद्यात् स ब्रूयात् समन्वारब्धम्[4], 'स जुहुयात्** (ऐब्रा ५, २२) इति[4] ब्राह्मणम् । यथा ब्राह्मणे तथा कर्त्तव्यम् । अन्यथा गार्हपत्ये जुह्वतीति वचनात् सर्वेषां पृथग् होमः प्राप्नोति । यथा **विनिःसृप्ताहुती[5] जुह्वति** (आश्रौ ६,१२,२) इति आग्नीध्रीये, आहुतिं जुह्वतीति वचनं तथा[6] क्रियते । तस्माद् यथा[7] ब्राह्मणे तथा कर्त्तव्यम् । मन्त्रान्ते स्वाहाकारो न क्रियते **मध्ये कृतत्वात् न चेन्मन्त्रे पठितः** (आश्रौ १, ११, १०) इति वचनात् । आग्नीध्रीये जुह्वति गार्हपत्ये जुहुयाद् गार्हपत्ये हुत्वा ततो गच्छन्ति[8] ।।१।।

[आग्नीध्रीये होमविधानम्]

**आग्नीध्रीये 'उपसृजं धरुणं मातरं धरुणो धयन् । रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहा' इति** ।।२।।

आग्नीध्रीयं प्राप्य[9] अप उपस्पृश्य प्रपद्य समन्वारभध्वमिति[10] होता ब्रूयात् । ततः समन्वारब्धे होताग्नीध्रीय आज्याहुतिं[11]जुहुयात् **उपसृजं धरुणम्**[11] (द्र. ऐब्रा ५, २२) इति यथासमाम्नातेन मन्त्रेण । एतदपि[12] यथा

---

१. °म्नातेन मडे (मद्रे मै) यस्मा भाकानुतेन (°त्तेन मं) मूको । २. ब्राह्मणं वच° मूको । ३. °रब्ध्रमिति मूको । ४-४. नास्ति व[1] । ५. विनिसृप्ता व[1]; विनिसृप्ताहुति मै । ६. यथा मै । ७. अन्यथा मै । ८. यच्छन्ति मूको ९. प्राप्तं मको । १०. °रब्धमिति मै । ११-११. उपसत (°ज मै) त्व सतत्वसज्ञरजत्वरणं (सजरजत्वरणं मै) मूको । १२. स एत° मै ।

[1]ब्राह्मणे क्लृप्तं[1] तथैव कर्तव्यम् ॥२॥

[सदः प्रसृप्य मानसेन साम्ना स्तवनम्]

**[2]सदः प्रसृप्य मानसेन स्तुवते[2] ॥३॥**

आग्नीध्रीये हुत्वा ततो निर्गत्य[3] सदः प्रसृप्य यथायतनं[4] गत्वोपविशन्ति । **यथायथमन्य ऋत्विजो व्युत्सर्पन्ति** (ऐब्रा ५, २३) इति ब्राह्मणम् । [5]संसर्पन्त्यु-द्गातार समन्विता† उपविशन्तीत्यर्थः‡[6] । उपविश्य[5] मानसोत्तमवसो[7] (?) गीयते । [8]न मानसेन[8] साम्ना स्तुवते (ऐब्रा ५, २३) छन्दोगाः । स्तुवते, इति तत्[9] स्तोत्रं भवति । **स्तोत्रायातिसर्जितावतिसृजतः** (आश्वौ ५, २, ११) । तत्रातिसर्जनोपहवादिषु[10] समीक्षते न संज्ञानमत्र[11] । मनसा जपमतिसर्जनं च ध्यात्वा उद्गात्रादीन्वीक्षते[12] ब्रह्मा[13] एवं प्रशास्ता ॥३॥

[होत्राऽध्वर्योराह्वानम्]

**यर्हि[14] स्तुतं मन्येताध्वर्यवित्याह्वयीत ॥४॥**

यदि स्तुतं मन्येत ज्ञायेत [15]संवीक्षणमात्रेण संविज्ञानम्[15] इति छन्दोगानाम्[16] । यदा प्रस्तोता [17]इत्थं स्तुतेन[17] ईक्षगेन हेतुना स्तुतमिति मन्येत, स्तुतमिति[18] ज्ञात्वा अध्वर्यो इत्येवं होताह्वयीत एवेत्यधिक्रियते[19] यस्मात् तस्मादिद-मुच्यते । तृतीयसवनीय आहावः, तस्मिन् प्राप्तेऽयमाहावो विधीयते । अभिहिङ्कृत्य आह्वयते[20] । अभिहिङ्काराभ्यासौ प्राप्तौ । उत्तमस्वरादारभ्यस्य[21] सप्रतिषेधादभिहिङ्काराहावौ[22] मन्त्रेण भवतः । **ऊर्ध्वं च शंयुवाकात्** (आश्वौ १, ५, २६) इति वचनात् शस्त्रस्वरौ भवतः[23] । आहावे[24] प्राणसंतानो भवति[25] । शस्त्राङ्गत्वाद् **यथाऽऽगूर्वषट्कारौ याज्याया** (आश्वौ २, १५, १५) हुत्वा प्रणवसंतानौ ॥४॥

[अध्वर्युणा होतुः प्रतिगरः]

**हो होतरितीतरः ॥५॥**

---

१-१. ब्राह्मणा क्लृप्तः मूको । २-२. स्थाप्यमानेप्ति (°मानं सि मै); न स्तुवति मूको । ३. गच्छः मूको । ४. यथायतं तं मूको । ५-५. संयत्यु होतारः समन्वता उपदिशन्तीत्यर्थः व' । †. समन्वता मै । ‡. उपदिश° मै । ६. उपदिश्य मूको । ७. मानसीतमवसी मै । ८-८. समानसेन मै । ९. वचनात् मै । १०. यत्रासिसर्ज° व'; तत्रापिसर्ज° मै । ११. °नमन्त्रं मै । १२. उद्गात्रा-न्वीक्षते व'; उद्गात्रीनीक्षते मै । १३. त्रा व' । १४. यदि इति दैवत्रातः पाठः । १५-१५. सवीक्षमाणा (सवीक्षणा मै) न सविज्ञानम् मूको । १६. द्र. आश्वौ ४,८,५ । १७-१७. इत्थ (इच्छ मै) स्तुतेन मूको । १८. नास्ति व' । १९. एषेतिमधी (°धि व') येते मूको । २०. आहूयते मै । २१. उत्तरस्त्वपरादारभ्यस्य मै । २२. °दाहावो मै । २३. न भवतः मै । २४. °वो मूको । २५. न भवति मै ।

हो होतरित्येवमितरः । अध्वर्युराहावे कृते प्रतिगृणाति । नित्ये[1] प्रतिगरे प्राप्तेऽयं विधीयते । होतुरधिकारादितर इत्यध्वर्युर्व्यपदिश्यते । अध्वर्युरेव प्रतिगृणाति यथा होतुः ॥५॥

[होतृकर्तृकं शंसनं चतुर्होतृणामाहावश्च]

**'आऽयं गौः पृश्निरक्रमीत्' इत्युपांशु तिस्रः पराचीः शस्त्वा व्याख्यास्वरेण चतुर्होतॄन् व्याचक्षीत ॥६॥**

**आऽयं गौः पृश्निरक्रमीत्** (ऋ १०, १८९,१-३) इत्येता उपांशु[2] तिस्र ऋचः पराचीरनभ्यस्ताः शंसति । **ऊर्ध्वं च शंयुवाकात्** (आश्रौ १, ५, २६) इति 'मन्द्रःस्वरः'[3] प्राप्तः[4] स्तोत्रस्य मानसत्वाद् मनसा शस्त्रं प्राप्तम्, उपांशु[5] विधीयते [6]श्रुतिसामर्थ्यात् । **मनसा प्रस्तौति, मनसोद्गायति, मनसा प्रतिहरति, वाचा शंसति** (ऐब्रा ५, २३) इति ब्राह्मणम् । मनसः संनिकृष्टत्वाद् उपांशु विधीयते[7] । पादग्रहणात् तिस्र इत्याह । **एतेन** (आश्रौ १, २, २३) इति प्रथमोत्तमयोर्ऋचोस्त्रिर्वचने[8] प्राप्ते पराचीरित्याह । [9]पराच्यः शस्यन्ते, न पनरावर्त्यन्ते[9] । नित्य इह प्रतिगरः, अवसाने प्रतिगरः । अवसाने [10]च तूष्णींशंसम्; इवावसाने प्रणवं[10] दर्शयति[10] । व्याख्यास्वरेण चतुर्होतॄन् व्याचक्षीत । सार्पराज्ञीः[11] ऋचः शस्त्वा प्रणवेनावसायानुच्छ्वस्य व्याख्यास्वरेण वक्तुर्वचनं श्रोता यथा शृणोति, स व्याख्यास्वरः, तेन स्वरेण चतुर्होतॄन् व्याचक्षीत । इत उत्तरं ये वक्ष्यन्ते होतारस्ते[12] चतुर्होतार इत्युच्यन्ते । तान् विस्पष्टमाचक्षीत यथा सर्वे यजमानाः शृण्वन्ति । [13]शस्त्वेति शस्त्रवचनार्थमुच्यते[13] । संबन्धाद् वक्ष्यमाणस्यापि शस्त्रसंज्ञा भवति । सत्यां[14] शस्त्रसंज्ञायाम् ऋगन्ते[15] अवसानं भवति । अवसानाभावात्[16] प्राणसंतानो न भवति । **अथ चतुर्होतॄन् होता व्याचष्टे तदेव[17] तत् स्तुतमनुशंसति**[18] (ऐब्रा ५, २३) इति ब्राह्मणम् । उपांश्विति [19]दशमे शस्त्रस्वरे[19] प्राप्ते व्याख्यास्वरेणेत्याह ॥६॥

[चतुर्होतृनिगदशंसनम्]

**देवा वा अध्वर्योः प्रजापतिगृहपतयः सत्रमासत ॥७॥**

---

१. नित्यैते मै । २. उद्धिरेव ब[1]; उद्गिरेव मै । ३. उपांशुः मै । ४-४. मन्दस्वरः मै । ५. प्राप्ते मै । ६. उपांशुः मै । ७-७. नास्ति ब[1] । ८. तृचो (तृच मै) वचने मूको । ९-९. पराचो (°ची मै) शंस्यते न पुनरावर्तन्ते मूको । १०-१०. तृष्णो शंसे इव अवसाने प्रणवे दर्शयति ब[1]; प्रणवे च तूष्णीः शंसे इव अवसाने प्रणवे दर्शयति मै । †. द्र. आश्रौ ५,९,१;११ । ११. सर्प° मूको । १२. द्र. आश्रौ ८, १३,९ । १३-१३. शस्त्रेति सवच° मूको । १४. तस्यां मै । १५. अगन्ते मूको । १६. अवसाता वा ब[1] । १७. न तदेव मै । १८. सुत° मूको । १९-१९. दशमे स्तु स्वरे मूको ।

अध्वर्योरित्यध्वर्योः संबोधनं दर्शनात् । यथाऽध्वर्युः शृणोति, तथा व्याचक्षीतेत्येकम् । सर्वे यजमाना यथा शृण्वन्ति तथा व्याचक्षीतेत्यपरम् । **देवतानामेव तद् यज्ञियं गुह्यं नाम प्रकाशं गमयति, तदेनं प्रकाशं गतं प्रकाशं गमयति** (ऐब्रा ५,२३) इति ब्राह्मणम् । चतुर्होतॄन् (आश्रौ ८,१३,६) इति । के चतुर्होतार इति ? वक्ष्यमाणस्य निगदस्य चतुर्होतार 'इति संज्ञा । **तेषां चित्तिः स्रुगासीत्' ..सामाध्वर्युरासीद् वाचस्पतिर्होताऽऽसीद् मन उपवक्ताऽऽसीद्** (ऐब्रा ५,२५) इत्येते चतुर्होतारः । उपवक्ता ब्रह्मा भवति, ब्रह्मापि । 'अथ चतुर्होत्रम्' **होता व्याचष्टे** (ऐब्रा ५.२३) इत्युक्तेऽयमेव प्रतिगर आम्नातः । चतुर्होतारो वक्ष्यन्ते । देवा वाध्वर्यो वेत्येवमादि 'यथासमाम्नातो निगदश्चतुर्होतार इत्युच्यते' ।

सर्वत्र शस्त्रेषु देवताऽन्यत्वाच्[4] छन्दोऽन्यत्वात् संज्ञाऽन्यत्वाच्च[5] पृथगाहावो दृष्टः । इहापि संज्ञान्यत्वान्मन्त्रान्यत्वाच्च[6] पुनराहावः प्राप्तः, अध्वर्यो इत्ययमेवेहाहावो भवति, तस्माद् अन्य इह न चोदितः । **अध्वर्यो इत्याह्वयते चतुर्होतृषु वदिष्यमाणस्तदाहावस्य रूपम्** (ऐब्रा ५, २५) इति ब्राह्मणम् ।।७।।

[अध्वर्युकर्तृकः प्रतिगरः]

**ॐ होतस्तथा होतः' इत्यध्वर्युः प्रतिगणात्यवसितेऽवसिते दशसु पदेषु*** ।।८।।

'ॐ होतः इत्येवमध्वर्युर्व्यत्यासं[7] प्रतिगृणाति प्रतिगरं करोति । 'अवसितेऽवसिते दशसु पदेष्विति वचनाद् दशस्वेव[8] पदेषु, नान्यत्र । प्राकृतप्रतिगरे प्राप्त एतौ प्रतिगरौ विधीयेते । होतुरधिकारादध्वर्युग्रहणम् । प्रतिगृणातीति वचनादेतयोः प्रतिगरसंज्ञा । अवसितेऽवसित इति वचनात्पदेष्ववसानमेव । सन्तानस्तु प्राप्तः । प्रतिगरे प्रणवदर्शनात्, ॐ[9] होतः इति । प्लुतादिः प्रणवः (आश्रौ ५, ९, ६) इति ह्युक्तम् । वीप्सावचनात् सर्वेषु पदेषु 'एतौ प्रतिगरौ' भवतः, न निगदावसानेषु[10] । तानि पदानि वक्ष्यन्ते ।।८।।

[चतुर्होतॄणां दशानां पदानां निर्देशः]

**तेषां चित्तिः स्रुगासी३त् । चित्तमाज्यमासी३त् । वाग्वेदिरासी३त् । आधीतं बर्हिरासी३त् । केतो अग्निरासी३त् । विज्ञातमग्नीदासी३त् । प्राणो हविरासी३त् । सामाध्वर्युरासी३त् । वाचस्पतिर्होताऽऽसी३त् । मन उपवक्ताऽऽसीत्*** ।।९।।

तेषां चित्तिः स्रुगासीत् इत्येवमादि यथासमाम्नातानि दश पदानि । चतुर्होतॄन्

---

१-१. इत्येतेषां संज्ञा विज्ञातमन्तदासीद् मै; इत्येतेषां संज्ञानमन्तदासीद् ब' । २-२. अपि पापहोत्रे ब' । ३-३. यथासमाम्नातीति गतश्चतुर्होतार इत्युक्ते ब' । ४. देवतात्युक्ता मूको । ५. संज्ञानत्वा° ब' । ६. नास्ति मै । ७. द्र. आश्रौ ८,३,२५ । ८-८. अवसिते पदेषु दश°मूको । ९-९. नास्ति मूको । १०. निगदावसृतिसु ब' । *ऐब्रा ५, २५ ।

व्याचक्षीतेत्युक्त्वा[1] दशहोता[2] आम्नातस्तस्मादन्ये होतारो मन्यन्ते ॥९॥

[दशहोतुर्निगदशंसनम्]

**'ते वा एतं ग्रहमगृह्णत । वाचस्पते विधे नामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम्ना द्यां गच्छ । यां देवाः प्रजापतिगृहपतये ऋद्धिमराध्नुवंस्तामृद्धिं रात्स्यामः'* इति ॥१०॥**

ते वा एतं ग्रहमगृह्णत इत्येवमादि यथासमाम्नाता निगदाः शस्यन्ते । दशहोतुरयं ग्रह[3] इत्युपदिशन्ति[4] । इतिकरणं निगदान्तज्ञापनार्थम् ॥१०॥

[अध्वर्योर्गमनविधिः]

**अपव्रजत्यध्वर्युः ॥११॥**

परिसमाप्ते निगदे 'समाप्तेऽनशंसने[5] अपव्रजत्यपगच्छत्यध्वर्युर्होमार्थम् । अस्मात् सूत्रारम्भात् समाप्तमनुशंसमिति[6] दर्शयति । समाप्ते हि शस्त्रेऽध्वर्युर्व्रजति, नासमाप्ते[7] अपव्रजति । वचनादनपगतेऽध्वर्यौ 'उत्तरो निगदो न वक्तव्यः[8] । अध्वर्युग्रहणं[9] होतुरधिकारात् ॥११॥

[होतुरध्वर्युमनुव्रजनम्]

**अथ प्रजापतेस्तनूरितर उपांश्वनुद्रवति ॥१२॥**

अथ शस्त्रादनन्तरं प्रजापतेस्तन्व इति वक्ष्यमाणस्य संज्ञा । **एता वाव द्वादश प्रजापतेस्तन्वः** (ऐब्रा ५, २५) इति ब्राह्मणमिति प्रजापतेस्तन्वः । अध्वर्योरितरो भवति होता, स[10] उपांश्वनुद्रवति[11] अनुव्रजतीति[12] ॥१२॥

[ब्रह्मोद्यविधिः]

**ब्रह्मोद्यं[13] च ॥१३॥**

होता प्रजापतेस्तनूरनुद्रुत्यानन्तरं ब्रह्मोद्यं चोपांश्वनुद्रवत्यनुद्रवतीति[14] चोदितत्वात् । निगदो भवतीति जपो ब्रह्मोद्यम् । ब्रह्म तथा भवति, यथाऽश्वमेधे[15] । तस्मादुच्चैःप्राप्ते प्रश्नप्रतिवचनाभावादुपांशु भवति । ब्रह्मोद्यं होताऽनुद्रवति । इतरेऽन्वारम्भं कुर्वते । **अथ ब्रह्मोद्यं वदन्ति** (ऐब्रा ५, २५) इति बहुवचनस्य सार्थकत्वाय[16] यथा **गार्हपत्ये जुह्वति** (आश्रौ ८, १३, १) इत्यत्र ।

---

१. द्र० आश्रौ ८,१३,६; °त्युक्ता मै । २. °होत्रा मूको । ३. ग्रहण मूको । ४. °शति ब' । ५-५. समाये (°पे मै) अनुशंसते मूको । ६. समाप्तं सुशंमिति (शसुमिति मै) मूको । ७. ता समाप्ते मूको । ८-८. उत्तरो निगदो न वर्तयः ब' । ९. °र्युः प्र° मै । १०. नास्ति मूको । ११. उपांश्वति व्रजति मूको । १२. अनुव्रजीति मूको । १३. ब्राह्मणं ब', ब्रह्माद्यं मै । *ऐब्रा. ५,२५ । १४. °वन्ति चो° ब', °वन्तीतिवेदि° मै, द्र. ऐब्रा ५, २२ । १५. अथाश्व° मूको । १६-१६. °चनसा° ब' ।

च-शब्दोऽधिकारसमुच्चयार्थः । होता उपांश्वनुद्रवति (आश्री ८, १३, १२) इत्यधिकार । काः प्रजापतेस्तन्वः ? किं नु ब्रह्मोद्यमिति ? तदुत्तरं वक्ष्यते ॥१३॥

[प्रजापतेस्तनूनां निगदानां शंसनम्]

'अन्नादा चान्नपत्नी च भद्रा च कल्याणी चानिलया चापभया चानाप्ता चानाप्या चानाधृष्या चाप्रतिधृष्या चापूर्वा चाभ्रातृव्या च' इति तन्वः ॥१४॥

अन्नादा चान्नपत्नी च (ऐब्रा ५,२५) इत्येवमादियथासमाम्नातो निगदः[1] [1]तस्यान्त इति तन्व इत्याह । तस्मात् एतास्तन्वो भवन्ति । एता वाव द्वादश प्रजापतेस्तन्वः[2] (ऐब्रा ५, २५) इति ब्राह्मणम् । इति तन्व इति वचनात् परिशिष्टा निगदा ब्रह्मोद्यमित्यर्थादापन्नं भवति ॥१४॥

[ब्रह्मोद्यस्वरूपम्]

'अग्निर्गृहपतिरिति हैक आहुः, सोऽस्य लोकस्य गृहपतिर्वायुर्गृहपतिरिति हैक आहुः, सोऽन्तरिक्षलोकस्य गृहपतिरसौ वै गृहपतिर्योऽसो तपत्येष पतिॠतवो गृहाः । येषां वै गृहपतिं देवं विद्वान् गृहपतिर्भवति राघ्नोति स गृहपती राघ्नुवन्ति ते यजमानाः । येषां वा अपहतपाप्मानं देवं विद्वान् गृहपतिर्भवत्यप स गृहपतिः पाप्मानं हतेऽप ते यजमानाः पाप्मानं घ्नते' ॥१५॥

अग्निर्गृहपतिः (ऐब्रा ५, २५) इति '[3]यथासमाम्नातो निगदविशेषः[3] ब्रह्मोद्यं भवति । तस्मिन् '[4]ब्रह्मोद्येऽपि यो[4] विशेषः स कर्त्तव्यः । अन्वारब्धेषु[5] कर्तृषु होता ब्रह्मोद्यमनुद्रवति ॥१५॥

[उच्चैःशंस्यस्य निगदस्य स्वरूपम्]

'अध्वर्यो अरात्स्म' इत्युच्चैः ॥१६॥

ततः[6] अध्वर्यो अरात्स्म (ऐब्रा ५, २५) इति निगदशेषमूच्चैर्ब्रूयात । उपांशुप्राप्त उच्चैरित्याह । यथाध्वर्युराहवनीयस्थः[7] शृणोति, तथा उच्चैर्वक्तव्यम् । कथं ज्ञायते । अरात्स्म होतरित्यध्वर्युः प्रत्याह (आश्री ८ १३,२०) इति वचनात् । यथा शृणोति स स्वरो भवति । उच्चैर्वचनेऽन्वारम्भो न विद्यते ॥१६॥

---

१. निगदा ब', निगदात् मै । २-२. ब्रह्मोद्यत्पर्यापन्नं भवति ब' । †ब्राह्मं मै । ३-३. यथासमाम्नातेति निगदः शेषः ब'; यथासमाम्नाते निगतः शेषः मै । ४-४. °द्ये मियो मूको । ५. °रम्भेषु मूको । ६. वक ब', नास्ति मै । ७. °नीयः मूको ।

[होतुर्याज्याविधानम्]

**एषा याज्या ॥१७॥**

एषेतिवचनाद्[1] याज्या सा[2] हि होतुरेव भवति। न[3] सर्वेषाम् [3]एषा याज्या[3]। **अध्वर्यो अरात्स्म** (आश्वौ ८, १३, १६) इति एषा[4] शस्त्रयाज्या भवति एतच्छ्रुत्वाध्वर्युर्जुहोति। तस्मादेषा याज्या भवति निगदान्तं [5]शस्त्रं भवति[5]। तस्माद् निगद एव याज्या, निगदान्त[6] एव याज्या, तस्माद् याज्याभावात्तु आगूर्याज्यादि: (आश्वौ १.५.४) इति याज्यादिशिष्टा[7] आगूर्न[8] क्रियते। निगदान्त एव याज्या, तस्मात् संप्रैषो न काङ्क्ष्यते ॥१७॥

[याज्याया एव वषट्काररूपेण विधानाद् वषट्काराभावः]

**एष वषट्कारः ॥१८॥**

**'वषट्कारोऽन्त्यः सर्वत्र** (आश्वौ १,५,५) इति वषट्कारः[9] प्राप्तस्तत्प्रतिषेधार्थम् एष वषट्कार इत्याह। [10]एष एव वषट्कारः। †आगूः[10] प्राप्ता भवति; वषट्कारत्वान्न [11]क्रियत इति[11]। श्रुतिवचनात् प्राजापत्यो हि ग्रहस्तस्मात् प्रजापतिर्देवता भवति ॥१८॥

[अनवषट्काराभावविधानम्]

**नानुवषट्करोत्युक्तं वषट्कारानुमन्त्रणम् ॥१९॥**

**शस्त्रयाज्यासु** (आश्वौ ५, ५, २०) इत्यनुवषट्कारः प्राप्तः प्रतिषिध्यते नानुवषट्करोतीति। अनुवषट्कारप्रतिषेधाद् द्विर्भक्षणं न भवति। उक्तं वषट्कारानुमन्त्रणम्। उक्तं व्याख्यातं वषट्कारस्यानुमन्त्रणं **वागोजः** (आश्वौ १.५, १७) इति, तत्कर्त्तव्यमित्यर्थः। वषट्कारार्थं प्लुतादयविभक्ति[12] (?) वषट्कारे[13] न प्राप्नुवन्ति। तस्मादनुमन्त्रणं विधीयते। प्लुतिस्तु अनारभ्यमाणा न प्राप्नोति ॥१९॥

[अध्वर्योः प्रतिवचनम्]

**'अरात्स्म होतः' इत्यध्वर्युः प्रत्याह ॥२०॥**

प्राजापत्यं ग्रहं चमसांश्च हुत्वा अरात्स्म होतरित्येवमुच्चैरध्वर्युः प्रत्याह यथा होता[14] शृणोति। अध्वर्युग्रहणं होतुरधिकारात्। प्रत्याहेति वचनात् प्रतिवचनं भवति। प्रतिवचनत्वात् पूर्वोक्तप्रश्नो[15] भवति। अध्वर्यो अरात्स्म इति प्रश्नप्रतिवचनयोः स्वरं यथा शृणोति[16] सः ॥२०॥

---

१. एषां सवतेतिवचनात् मूको। २. नास्ति मूको। ३-३. एषां याज्या (आज्या ब[1], मूको। ४. एषां मूको। ५-५. शस्त्रन्ते मूको। ६. °दान्तं ब[1]। ७. आद्यपरिशिष्टा मूको। ८. आगूर्तं मूको। ९-९. वषट्कारः वषट्कारान्त्यवषट्कारः कारः ब[1]; वषट्कारान्त्यवषट्कारः मै। १०-१०. वषट्कारादेः मूको। †. द्र. नारायणीया वृत्तिः। ११-११. क्रियतेति मूको। १२. प्लुतादय विभक्ति° मै। १३. वषट्कारि ब[1]। १४. नास्ति मूको। १५. पूर्वोक्तप्रप्रश्नो ब[1]; द्र. आश्वौ ८,१३,५। १६. प्रणोति मूको।

[अध्वर्योर्मनसा ग्रहग्रहणं भक्षाहरणं च]

**मनसाऽध्वर्युर्ग्रहं गृहीत्वा मनसा भक्षमाहरति ॥२१॥**

मनसाऽध्वर्युर्ग्रहं गृहीत्वा स्तोत्रमुपाकरोत्यध्वर्युः[1], स्तोत्रोपाकरणात्[2] पूर्वमध्वर्युर्ग्रहं गृह्णाति। तदुच्यते—मनसाऽध्वर्युर्ग्रहं गृहीत्वा इति[3]। मनसाश्राव्य[4] परिमृज्य मनसा सादयित्वा[5] मनसा स्तोत्रमुपाकृत्योपाकृते स्तोत्रे शस्त्रं शस्त्वा होमकाले ग्रहं गृहीत्वा मनसाश्राव्य[6] संप्रेष्य मनसैव हुत्वा **अरात्स्म होतर्** (आश्रौ ८, १३, २०) इति प्रत्युत्वा मनसा भक्षमाहरति। [7]ग्रहग्रहणप्रभृतिभक्षाहरणान्तं[7] सर्वं मनसा क्रियत इत्यर्थः। कर्मणि[8] अस्मात् सूत्रारम्भाद्[9] वषट्कारानुमन्त्रणं होतृकर्म मनसा न क्रियत इति दर्शयति। यथादिष्टमेव[10] क्रियते। होतृकर्मण्यध्वर्युग्रहणात्तावन्मात्रमेव[11] भवति। तस्मात् पुनरध्वर्युग्रहणम्। वाच्यकर्मणि मनसा वचनमपि तावन्मात्रमेव भवति, तस्मात् पुनर्मनसा इत्याह ॥२१॥

[मानसभक्षेषु मानसोपह्वानभक्षणयोर्विधानम्]

**मानसेषु भक्षेषु मनसोपह्वानभक्षणे ॥२२॥**

आपवादिको हि[12] विधिः तावन्मात्र[13] एव भवति, नानुवर्तते। मनसा ध्यायेत। पुनर्भक्षग्रहणं ग्रहाधिकारात् चमसभक्षणानामप्याहरणार्थम्[14] मानसेषु [15]भक्षेषु[†] मनसोपह्वानं च भक्षणं च उपह्वानभक्षणे[15] भवतः। मनसा उपहवप्रत्युपहवौ[16] गमयेत्। न मनसा भक्षमन्त्रं ध्यायेत[17]। मनसा भक्षे मनसा भक्षणं च कुर्यादिति ध्यायेत[18] उक्थपात्रमग्रे भक्षयेत। **ततश्चमसांश्चमसिनः** (आश्रौ ५, ६, २७) इति प्राप्तम्। ग्रहे भक्षिते सर्वे स्वं स्वं चमसं भक्षयन्ति। मानसेषु भक्षेष्विति [19]वचनाद् अन्यत्रापि कर्मण्येवं भक्षे विधिरुपदिष्टो भवति। ग्रहं गृहीत्वेति ग्रहाधिकाराद् ग्रहस्यैव भक्षणे[×] प्राप्ते भक्षेष्विति[19] बहुवचनात् चमसानामपि भक्षणं भवति। प्रश्नप्रतिवचने **उच्चैः** (आश्रौ ८, १३, १५) इत्युक्तम्। तस्मादुपहवप्रत्युपहवावपि[20] उच्चैः प्राप्तौ,[21] तस्मान्मनसोपह्वानमित्याह। यद्यपि चमसा ग्रहोपगृहीताः[22]। शस्त्रस्योपांशुत्वादुपांशु भक्षे प्राप्ते मनसा भक्षणमित्याह ॥२२॥

---

१. नास्ति मै; स्तोत्रमपरोऽध्वर्युः ब१। २. स्तोत्रोपका (°क मै) रणात् मूको। ३. नास्ति मूको। ४. मनसाश्ना ब१; मनसा मै। ५. माद° ब१। ६. °साश्नाव्य ब१। ७. ग्रहस्य ग्रहणप्रवृति (°त्ति मै) आहरणान्त (न्तं मै) मूको। ८. कर्मणं मै। ९. सूत्रारम्भारहकारी वशं मै। १०. यथाकृष्ट° मै; यथाष्ट° ब१। ११. °णाभावामात्रमेव मूको। १२. ह मूको। १३. तावत्तमेव (°त° मेव ब१) मूको। १४. °भक्षणामप्या° मूको। १५-१५. नास्ति ब१। †. भक्षे मानसे कर्मणि सवाभक्षतेषु मानभक्षेषु मै। १६. °हवे मूको। १७. ध्यायेत् मै। १८. ध्यायेरन् मूको। १९-१९. नास्ति ब१। ×. भक्षणा मै। २०. °त्युपहवेऽपि ब१; °त्युपगमेऽपि मै। २१. प्राप्ते मूको। २२. इहोपगृहीतः ब१, ग्रहीगृहीतः मै।

[आत्मन आप्यायनं वाचंयमादिनियमश्च]

**मनसाऽऽत्मानमाप्याय्यौदुम्बरीं समन्वारभ्य वाचं यच्छन्त्या नक्षत्रदर्शनात् तत्रानधरान् पाणींश्चिकीर्षेरन् ॥२३॥**

अत्र समीक्षणेन[1] उपहवप्रत्युपहवसंविज्ञानानि[2] मनसाऽऽत्मानमाप्याय्य[3], मनसात्मन आप्यायनं कर्तव्यम्। मनसा सर्वत्राप्याययेरन्[4], "मुखहृदये अभिमृशेरन्[5] (आश्वौ ५, ६, २६) इति मनसा ध्यायेरन् मनसोपह्वानभक्षणे[6] इति प्रसंख्यानाद् "आत्मन आप्यायनप्रतिषेधे[7] प्राप्त आप्यायनं विधीयते। आप्यायनं चोदितमिह[8] प्रकृतिवत् प्राप्तम्, तस्मात् पुनर्मनसेत्याह। 'औदुम्बरीं[†] मेथीमासाद्य[†] उद्गाता उद्गायति[‖] सा औदुम्बरीत्युच्यते, तामौदुम्बरीं[9] समन्वारभ्य सर्वे ऋत्विजः समवेता अन्वारभ्य दक्षिणपाणिनाऽऽलभ्य वाचं यच्छन्ति[10] न भाषन्ते[11]। कियन्तं कालम्। आ नक्षत्रदर्शनाद् यावन्नक्षत्राणि दृश्यन्ते, तावद् वाग्यता आसीरन्। उदरैः संस्पृशन्त इत्येषामुक्तम्[12]। आ नक्षत्रदर्शनाद् अनस्तमिते वाचं यच्छति। "उदितेषु नक्षत्रेषु[13] वाग्विसर्गः, न **नक्तं वाचं विसृजेरन्** (ऐत्रा ५,२४) इति श्रुतिः। श्रुत्यन्तर आचार्येण कल्पितम्। तत्रानधरान् पाणींश्चिकीर्षेरन्। तत्र तस्मिन्नन्वारम्भे "सर्वे ऋत्विजः[14] आत्मनः पाणीन् अनधरान् सर्वपाणिभ्य उपर्यात्मनः पाणयो यथा भवन्ति, तथा चिकीर्षेरन्। कर्तृबहुत्वात् पाणीनिति बहुवचनम्। एकाङ्गवचनमेव। अनेकाङ्गवचनं वा सहकारिवशात्। सहकारिण उभाभ्यामन्वारभन्ते, उदरैः संस्पृशन्तस्तथाप्यविरोधः सहचोदितत्वात्। यथा सर्वे कुर्वन्ति, तथाकर्तव्यं चिकीर्षेरन्निति वचनात्। यद्यप्युपरि पाणिकर्तनं (?) संपादयति। न[15] वा कर्तृस्थेच्छायामपि हि सन्प्रत्ययो भवति ॥२३॥

[नक्षत्रदर्शनेऽध्वर्युमुखानां सजपं सर्पणम्]

**दृश्यमानेष्वध्वर्युमुखाः समन्वारब्धाः सर्पन्त्या तीर्थदेशाद् 'युवं तमिन्द्रापर्वता पुरोधा' इति जपन्तः ॥२४॥**

दृश्यमानेषु नक्षत्रेषु। अध्वर्युर्मुखं येषां तेऽध्वर्युमुखाः येन[16] मार्गेणाध्वर्युर्गच्छति तेन गच्छेयुरित्यर्थः। समन्वारभ्य यथासर्पणेन[17] सर्पन्ति

---

**१. समीक्ष° ब'। २. °सविज्ञानां (°नं मै) मूको। ३. मनसा पात्रमप्य (°प्या मै) ज्य मूको। ४. स (म मै) त्राप्यायेत मूको। ५-५. °दये (°य ब') भिसृष्टे मूको। ६. सोपह्वा (°ह्वान मै) भ° मूको। ७-७. आत्मन आप्याय (माप्याय ब') प्रति मूको। ८. चोदितं सह मूको। ९-९. उदुंम्बरो मेषो मासाद्या उद्दाता उद्गात प्रति सा औदुम्बरोस्युच्यते तमौदुंबसे ब'। †-†. °रीमेषीमा° मै। ‖. उद्गातयति मै। १०. द्र. ऐत्रा ५,२४। ११. भा (मा ब') वंति मूको। १२. इत्येतेषा° मै; द्र० आपश्री २१,१२,७......उदरैरुपस्पृशन्तो वाग्यतास्तिष्ठन्ति इति। १३-१३. उदिते अनमिते मूको। १४-१४. सर्वं (सर्व मै) कृत्वस्य मूको। १५. नास्ति मै। १६. तेन मूको। १७. यथासर्पण मूको।**

गच्छन्ति। आ तीर्थदेशाद् यावत्तीर्थदेशं प्राप्नुवन्ति । चात्वालोत्करयोरन्तरं तीर्थदेशो भवति। युवं तमिन्द्रा (ऋ १, १३२, ६) इत्येतामृचं जपन्तः सर्पन्ति। दृश्यमानेष्विति पुनरुच्यते सर्पणस्य कालव्यपदेशार्थम् । अध्वर्युमुखा इति वचनाद् येन मार्गेणाध्वर्युर्गच्छतीत्यर्थः। सर्वत्र सर्पणेष्वन्वारम्भो न विद्यते। यथा पूर्वया द्वारा सदः प्रसर्पन्ति (आश्रौ ५, ३, २१), ते ततः सर्पन्ति (ऐब्रा ५, २३) इत्येवमादिषु। तस्मात् समन्वारब्धा इत्युच्यते । जपन्त इति वचनात् कर्मकरणा न भवन्ति। जपन्त एव सर्पन्ति। यथा उरुन्नो लोकमनुनेषि विद्वान् (ऋ ६, ४७, ८) इति, जपन्तः (आश्रौ ५, ३, २१) इति। येन मार्गेण सर्पन्ति, स मार्गो वक्ष्यते ॥२४॥

[सर्पणपथनियमः]

अध्वर्युपथेनेत्येके ॥२५॥

हविर्धानमुत्तरेणाध्वर्युपथः । तेन हि पथाध्वर्युराहवनीयस्य होमार्थं संचरति। तेनाध्वर्युपथेन सर्पेयुरित्येकेऽध्वर्यवो मन्यन्ते ॥२५॥

[दक्षिणहविर्द्धानस्याधोऽक्षेण सर्पणविधानम्]

दक्षिणस्य हविर्धानस्याधोऽक्षेणेत्येके ॥२६॥

दक्षिणस्य हविर्धानस्याधस्तादक्षस्य यो देशस्तेनाधोऽक्षेण देशेन सर्पेयुरित्येकेऽध्वर्यवो मन्यन्ते। दक्षिणग्रहणादुत्तरस्य प्रतिषेधः। अधोऽक्षेणेति चक्रयोरन्तरेण । अध्वर्युमुखाः (आश्रौ ८, १३, २४) इत्यनेनैव वाक्येन सिद्धं इदं सूत्रद्वयमपि न वक्तव्यम्। '[1]एतयोरारम्भे प्रयोजनम्। कथम्। नियमार्थम्, अहविर्धानयोरन्तरेण यो मार्गस्तस्य प्रतिषेधार्थम्। एवं चेदध्वर्युमुखा इति'[1] वक्तव्यम् । अध्वर्युमुखा इति '[2]वचनाद्धविर्द्धानयोरन्तरेणापि मार्गः'[2] सिद्धो भवति ॥२६॥

[वराणां वरणं वाग्विसर्गश्च]

प्राप्य वरान् वृत्वा वाचं विसृजन्ते 'यदिहोनमकर्म यदत्यरीरिचाम प्रजापतिं तत् पितरमप्येतु' इति ॥२७॥

प्राप्य तीर्थदेशं प्राप्य वरान् वृत्वा '[3]वराः कामाः'[3], पुत्राः[4] सपशवो यज्ञा इति[5], तान् वरान् वृणीरन्[6]। यो[7] यस्य कामः स तं वृणोते—पुत्रा मे भवन्तु, पशवो मे भवन्तु, यज्ञो मे उपनमत्विति । अभयमिति धानंजय्य इति छन्दोगानाम्। एवमिष्टान् वरान् वृत्वा[8] वाचं विसृजन्ते। यदिहोनमकर्मेत्येतं यथासमाम्नातं जपित्वा वाचं विसृजन्ते। प्राप्येति वरणकालव्यपदेशार्थम्[9]। वाचं

१-१. नास्ति ब[1]। २-२. °रेणाध्वमार्गः ब[1] । ३-३. वरा को मा मूको । ४ नास्ति मै। ५. इति वराः मूको। ६. वृणीयुः मै। ७. अनु यो मै। ८. श्रुत्वा मूको। ९. रणकालव्यपदेशार्थे ब[1]।

विसृजन्त इत्युक्ते प्राकृतो वाग्विसर्गः प्राप्तः भूर्भुवः स्वरिति (आश्रौ २, ५, १३)। अस्मिन् प्राप्ते यदिहोनमकर्म (ऐब्रा ५,२४) इत्ययं मन्त्रश्चोदितः ॥२७॥

[पुनर्वाचंयमनियमः]

**अथ वाचं निह्नवन्ते 'वागैतु वागुपैतु वागुप मैतु वाग्' इति ॥२८॥**

अथ वाग्विसर्गादनन्तरम् अनभिभाष्यैव[1] वाचं विसृष्टां[2] पुनर्निह्नवन्ते[3] निश्चयेनाह्वयन्ते, विसृष्टां[4] वाचं पुनराह्वयन्ते वागैत्वित्येतेन[5] मन्त्रेण यथाम्नातेन पुनर्वाचं यच्छन्तीत्यर्थः[6]। अथ शब्द आनन्तर्यार्थे। वाग्विसर्गादनन्तरमेव [7]यावत् क्वचिन्न भाषन्ते[7] तावत् पुनर्वाचमाह्वयन्ते ॥२८॥

[सुब्रह्मण्याह्वानं वाग्विसर्गश्च]

**उत्करदेशे सुब्रह्मण्यां त्रिराहूय वाचं विसृजन्ते ॥२९॥**

उत्करदेश उत्करस्य देश उत्करदेशस्तस्मिन्नुत्करदेशे गत्वा प्राङ्मुखाः[8] सहैवोच्चैः सुब्रह्मण्योमित्येवं[9] सुब्रह्मण्यां त्रिराहूय [10]वाचं विसृजन्ते[10] त्रिराह्वानैषा[11]। वचनमस्ति तत्प्रमाणमिति विशेषाद् विशेषस्य बलीयस्त्वाद् आहूयेति वचनात् सुब्रह्मण्यायाः प्रकृतिस्वरेणाह्वानं भवति। सर्व आह्वयन्ते सह चोदितत्वात् ॥२९॥

[एतस्य वाग्विसर्गस्य नित्यत्वम्]

**नित्यस्त्विह वाग्विसर्गः ॥३०॥**

प्रकृतो[12] वाग्विसर्गो मन्त्रः प्राप्तः **यदिहोनमकर्म** (ऐब्रा ५, २४; आश्रौ ८, १३,२७) इति। एतस्मिन् प्राप्ते नित्य इत्याह। तु-शब्दः प्राप्तव्यावृत्त्यर्थः। इहवचनं नियमार्थम्। इहैव नित्यो[13] वाग्विसर्गमन्त्रः। पूर्वस्मिन् कर्मणि स एव मन्त्रः। अन्यथा तत्रापि नित्य एव स्यात् ॥३०॥

[महाव्रतादन्यत्रोक्तं होतृकर्मेति विधानम्]

**एतावत्सात्रं होतृकर्मान्यत्र महाव्रतात् ॥३१॥**

**सत्राणाम्** (आश्रौ ७, १,१) इत्यधिकृत्य प्राक्[14] एतस्मात् कर्मणो यावदनुक्रान्तं कर्मैतावदेव सात्रं होतृकर्म[15], नास्मादन्यदधिकमस्ति[16]। सत्रेषु भवं कर्म

---

१. अनभिभाष्यै ब'। २. सृष्टां मूको। ३. पुनर्विह्रियन्ते मूको। ४. विसृप्तां मूको। ५. वाग्वित्युक्ते तेन ब'; वाग्वित्येतेन मै। ६. यच्छती° मूको। ७-७. यादृत्व (°क्व ब') चित्तभाषात् मूको। ८. °मुखः मूको। ९. सुब्रह्मण्यो सुब्र° ब', सुब्रह्मण्यो सुब्रह्मण्यो सुब्र° मै। १०-१०. नास्ति मूको। ११. °नोषा मूको। १२. प्रकृतो मूको। १३. नास्ति मूको। १४. आत ब'; आ मै। १५. होत्रं कर्म मूको। १६. तस्माद° मूको।

सात्रं होतुः कर्म। अन्यत्र महाव्रतात् । महाव्रतादन्येष्वहःसूक्तं विधानम् । महाव्रतं तूत्तरत्र वक्ष्यते। सह तेन[1] एतावत् सात्रं होतृकर्म। यज्ञगाथाविवक्षार्थः[2] सूत्रारम्भः। एतावत्सात्रमित्यविशेषवचनाद् रात्रिसत्रेषु सवत्सरसत्त्वेषु[3] 'असमाम्नातेष्वपि एतान्येव[3] पञ्चविंशतिरहानि। अन्यथा संवत्सरसत्रेष्वेव स्युस्तथा यज्ञगाथया[4] गीयते। तस्मात्संवत्सरानुक्रमेण[5] च प्राप्तानि[6]। होतृकर्मेति न वक्तव्य 'होतारं सृजत'[7] इति शस्त्रादावधिकारात्। इदं प्रयोजनम्। 'होतृवशं यत्कर्म तदेतावदेव। अध्वर्युवशं च यत्तत्कृत्स्नं नोक्तम्। तत्सर्वं तत्प्रत्ययमेवेति वक्ष्यति[8]। होतृवशं यत् कर्म, तत् कृत्स्नमुक्तम् एतस्मात् तद् ये केचन **छान्दोग्ये वाऽऽध्वर्यवे वा हौत्रामर्शाः समाम्नाता न तान् कुर्यात्** (आश्रौ ८,१३,३३) इति। 'एतावत् सात्रं' होतृकर्म इत्युक्ते महाव्रतमस्मात् सात्रात् कर्मणो बहिः प्राप्तम्, तस्मादाह—अन्यत्र महाव्रतादिति। अस्माद् वचनान्महाव्रतेन सह "एतावत् सात्रं" होतृ कर्म भवति ॥३१॥

[यज्ञगाथा-कथनम्]

**तदेषाऽभि यज्ञगाथा गीयते—**

**अतिरात्रश्चतुर्विंशं षळहावभिजित्स्वराः।**
**विषुवान् विश्वजिच्चैवच्छन्दोमा दशमव्रतम् ॥**
**प्रायणीयश्चतुर्विंशं पृष्ठ्योऽभिप्लव एव च।**
**अभिजित्स्वरसामानो विषुवान् विश्वजित्तथा ॥**
**छन्दोमा दशमं चाह उत्तमं तु महाव्रतम्।**
**अहीनैकाहसत्राणां प्रकृतिः समुदाहृयते ॥**

**यद्यन्यधीयते पूर्वधीयते तं प्रतिग्रामन्त्यहानि पञ्चविंशतिर्यैवं सवत्सरो मितः। एतेषामेव प्रभवस्त्रीणि षष्टिशतानि यदिति ॥३२॥**

तदेषाऽभि यज्ञगाथा गीयते। **एतावत् सात्रं होतृकर्म** (आश्रौ ८,१३,३१) इति यदुक्तं तदभिवादिनी एषा[11] वक्ष्यमाणा यज्ञगाथा यज्ञं गायति[12]। यज्ञकर्मवदिति[13] यज्ञगाथा। गीयते श्रुतौ अहानि[14] पञ्चविंशतिरिति। यथाम्नाता यज्ञगाथा। ऋग्गाथा[15] कुम्ब्येति[16]। छन्दो नामेति [17]श्रूयते। गाथाश्रुतं चात्मना अतिप्रदर्शममिह?गीयते[17]। **एतावत्सात्रं[18] होतृकर्म[19]** (आश्रौ ८, १३, ३१) इति यदुक्तम्

---

१. नास्ति मूको। २. °विवक्तार्थः मूको। ३-३. °त्तेषु ग्व (त्व मै) एताभिरेव (°व ब') मूको। ४. यज्ञा गा° ब'। ५. तत्वात्सं° मूको। ६. आप्तानि मै। ७-७. होता न सृता मै। ८-८. नास्ति मै; द्र. आश्रौ ८,१३,३४। ९-९. एतावच्छास्त्रं मूको। १०-१०. एतावशास्त्रे ब'; एतावच्छास्त्रं मै। ११. येषा व'; देषा मै। १२. यजति मूको। १३. °कर्मवदित मूको। १४. महानि मै। १५. ऋगाथा ब'। १६. द्र. ऐआ २,३,६। १७-१७. शूप। गाथाःश्नुः। न चात्मयति प्रदर्शयमिह गोपति मै। १८. एतत्सूत्रं ब'; °वत्सूत्रं मै। १९. °कर्मेति यदुर्मेति ब'।

एतस्य संप्रत्ययार्थं श्रुतिप्रदर्शनम् । अहानि पञ्चविंशतिः प्रायणीयोऽतिरात्रः । पञ्चविंशतिरहानि यैर्वै संवत्सरो मितः यैरहोभिः किल संवत्सरो 'गवामयनमेवं कल्पितम्'। वै इति निपातः किलार्थे भवति । एवं 'किल पूर्वं' कल्पितम् इति पादपूरणार्थो वा'। एतेषां पञ्चविंशतेरह्नामेव' त्रीणि च शतानि षष्टिश्च संवत्सरकर्म यत्तदेतेषां' पञ्चविंशतेरह्नां' प्रभवः । 'एतेषामह्नां पञ्चविंशतिरहानि निविदहान्यस्य समानानि' (?) च त्रीणि शतानि षष्टिश्च प्रत्यहं भवन्ति । अभिप्लवपृष्ठ्याहान्यस्यन्ते'। यज्ञगाथा संवत्सरमधिकृत्य गीता संवत्सरार्था' न भवति । अह्नामभ्यासप्रदर्शनार्था, तस्मात् सर्वस्तोत्रार्था' भवति। असमाम्नातार्थ आरम्भः' ॥३२॥

[छान्दोग्याऽऽध्वर्यवहौत्रावयवानां निषेधः]

**तद् ये केचन च्छान्दोग्ये वाऽऽध्वर्यवे वा हौत्रामर्शाः समाम्नाता न तान् कुर्यादकृत्स्नत्वाद्धौत्रस्य ॥३३॥**

सर्वाः श्रुतयः प्रमाणमिति प्राप्ते सूत्रारम्भः । तदित्यधिकृतं होतृकर्मोपदिशति । तस्मिन् कर्मणि "ये केचन शस्यविषयगताः" कर्मविषयगता वा" छन्दोगविषयेऽध्वर्युविषये वा हौत्रामर्शा हौत्रावयवा एकदेशा" आम्नाता "अधीता न तान्" कुर्यात् । यदि सर्वाः श्रुतयः प्रमाणम, कस्मात्तान्" न कुर्यादिति। तस्य हेतुः" अकृत्स्नत्वाद् धौत्रस्य तेषां विषये "श्रुतिविहितं हौत्रमामृष्टं" कृत्स्नं नाम्नातम् । तस्मान्न कुर्यात् । यथा गर्गत्रिरात्रस्य नवमेऽहनि" त्रैष्टुभमाद्यसंपातं होता शंसतीति । अध्वर आम्नातम् । आदिष्टानि सक्तान्यन्येष्वपि शस्त्रेषु योऽधिकारः, स चापि नाम्नातः, संपातान होता शंसतीत्यादिः नाम्नातः, कृत्स्नत्वात्तं न कुर्यात । तथा संज्ञानीयं' शस्यक्षतवैश्वदेवे कयाशुभीयं शस्यं विहितं" कृत्स्ने ससंप्रायश्चित्तमाम्नातं तस्मात्तं न कुर्यात । तथा प्रवर्ग्ये" आम्नातं यदि "दध्योहदंहो न वा दासत्य होताः" शंसतीति नादिष्टम् । न च तस्य स्थानमादिष्टम्, अकृत्स्नत्वात् तं न कुर्यात् । तथा सर्वान् चमसान् सकृद्धोत्रा तपयति स्वं स्वं चमसमित्याह सवनमुखेऽन्येषां चमसानां ग्रहणं वा भक्ष आम्नातः, कृत्स्नत्वात, तं न कुर्यात । ये पुनः "कृत्स्ना विधय" आम्नातास्तान न कुर्यात । यथा अभीवर्तस्य योनिशंसनं "कालेयस्येन्द्रक्रतोश्च कौकिल्या" हौत्रमिति ॥३३॥

---

१-१. °मेके तं लिप्तं ब', °मेतं कल्पितम् मै । २-२. विकल्पपूर्वं ब' । ३. नास्ति ब' । ४. °शतिरह्नो (°ह्ना मै) मेवः मूको । ५. पदेतेषां ब' । ६. °शतिरह्नां मूको । ७-७. हा निविदहान्यस्यास्य मै । ८. °हान्यस्य स्यन्ते ब' । ९. सांव° मूको । १०. सर्वत्रोर्था ब'; सर्वत्रार्था मै । ११. आरम्भाः ब'; आरसाः मै । १२-१२. एके (एते मै) च शतस्य विषयगता (त शस्य विषयगता मै ) मूको । १३. नास्ति मूको । १४. एकादशाः मै । १५-१५. अधीतानन्तां° मूको । १६. °त्तं न मूको । १७. होतुः मै । १८-१८. °हितमामृष्टं ब' । १९. निवमेहति मै । २०. सञ्जानीयं मै । २१. विहह मै । २२. प्रर्गो ब' । २३-२३. दधीदं हीनवाद्यस्यत्यहोत्राः मै । २४-२४. कृत्स्नो विधीय मूको । २५-२५. °तोश्चाकोविल्या मै ।

[स्तोमस्तोत्रियपृष्ठसंस्थानां छन्दोगप्रत्ययत्वम्]

**छन्दोगप्रत्ययं स्तोम स्तोत्रियः पृष्ठं संस्थेति ॥३४॥**

छन्दोगप्रत्ययं वक्ष्यते। छन्दोगेभ्यः प्रत्येतव्यं तेभ्य आगमयितव्यं यत्तद् वक्ष्यते प्रकृतौ विकृतौ। यथाक्लृप्ते शस्ये प्राप्त इदमुच्यते छन्दोगप्रत्ययम्। तद् वक्ष्यत इति स्तोम 'स्तोत्रियः पृष्ठं संस्थेति' तच्चतुष्टयं छन्दोगेभ्य आगमयितव्यम्। स्तोम 'एकादिः त्रिवृदादिश्च। स कश्चिदुपदिष्टः' । शस्यं च स्तोमकारितम्। तस्मादहन्यहनि छन्दोगेभ्यः स्तोम आगमयितव्यः। आगमयित्वा स्तोमवशादावापः कर्तव्यः । स्तोत्रियो यस्मिन्त्स्तुवीरन्' । स्तोत्रियाः[४] सत्र उपदिष्टाः 'अहीनैकाहेषु शस्यन्ते' अहन्यहनि। छन्दोगेभ्य आगमयितव्याः स्तोत्रियाश्च प्रमाणं च। 'पृष्ठं रथन्तरादीनि' पृष्ठानि 'सर्वत्र क्लृप्तानि'। अहीनैकाहेषु 'तत्क्लृप्तानि यत्र च तत्क्लृप्तानि' सर्वमहन्यहनि। छन्दोगेभ्यः पृष्ठमागमयितव्यम। निष्केवल्ये यत् साम तत् पृष्ठमित्युच्यते। तस्मिन् पृष्ठे ज्ञाने प्रयोजनमिन्द्रनिहवब्राह्मणस्पत्यानां पृष्ठवशाच्छस्यं सिद्धं भवति पृष्ठ्यादिष्वहःसु[९]। संस्था अग्निष्टोम उक्थ्यः षोडश्यतिरात्र इति। एताः संस्थाः सर्वत्र व्याख्याता अहीनैकाहेषु व्यपदिष्टाः, यत्रोपदिष्टा "यत्र नोपदिष्टाः" सर्वत्राहन्यहनि छन्दोगेभ्य आगमयितव्याः । संस्थाज्ञाने प्रयोजनम्। "अह्न उत्तमे शस्त्रे" अभ्यासः सिद्धो भवति। अभिप्लवस्य षष्ठेऽहनि प्रयोजनम्। स ह्यग्निष्टोमः छन्दोगवशादुक्थ्योऽपि[१२] वा भवति। चातुर्विशेषु[१३] स्वरसामसु[१४] छन्दोगवशाद् विकल्पः। तत्राप्यभ्यासार्थ आगमः कर्तव्यः, छन्दोगप्रत्ययत्वात् स्तोत्रियादयो न कल्पयितव्याः प्रकृतिर्हि[१५] प्रत्यक्षं कल्पयेत[१६], तस्मात्[१७] ॥३४॥

[अध्वर्युप्रत्ययानां कथनम्]

**अध्वर्युप्रत्ययं तु व्याख्यानं कामकालदेशदक्षिणानां दीक्षोपसत्प्रसवसंस्थोत्थानानामेतावत्त्वं हविषामुच्चैरुपांशुतायां हविषां चानुपूर्व्यम् ॥३५॥**

कामकालदेशदक्षिणानामध्वर्युप्रत्ययाद् यत् तद् वक्ष्यते । अध्वर्युतः प्रत्येतव्यम् अध्वर्युप्रत्ययम् अध्वर्युत आगमयितव्यम । तु-शब्दः छन्दोगाधिकारव्यावृत्त्यर्थः। कामादीनां विस्तरेण वचनं विस्तरेणाख्यानम्। को विस्तर

---

१-१. स्तोत्रियपष्ठं सं स्वेति ब'; स्तोत्रियपष्ठं स स्वन मै। २-२. एकादित्रिवृतादि वं तत्कश्चिदप्युपदिष्टः (°श्चिदुपदिष्टः ब') मूको। ३. द्र. आश्रौ ७, २, ५। ४. °यां मूको । ५-५. महोतैकाहेषु सवं ते ब'; गृहीतैकाहेषु सर्व ते मै । ६-६. पृष्ठ (पृपु मै) रथ° मूको। ७-७. सर्वक्लृ° ब'। ८-८. त क्लृ° ब'। ९. पृष्ठाद्वनिहःसु ब' : पृष्ठादीष्व° मै। १०-१०. नास्ति ब'। ११-११. अन्हतशस्त्रे ब'। १२. °दुक्थेऽपि ब'; °दुत्थोऽपि मै। १३. चतु° मूको। १४. सर्व सा° मै। १५. प्रकृति हि मूको १६. कल्पये ब'; कल्पते मै। १७. यस्मात् मै।

इति, के तु कामा: । यज्ञाङ्गकामाश्च[1] विस्तरेण वक्तव्या: । संक्षेपेण [2]न शक्यास्ते[2] वक्तुम् । सर्वक्रतूनां कामादीन्[3] विस्तरेण वक्ष्यति । तत आगम:[4] कर्तव्य इति । कामकालदेशदक्षिणानामिति द्वन्द्व: समास: । स्वर्गादय: कामा: [5]सर्वक्रतुषु विद्यन्ते[5] । क्वचिदादिष्टा: क्वचिन्नादिष्टा: [6]अध्वर्युप्रत्यया एव । अस्मादारम्भात् ते विस्तरेणागमयितव्या: । दर्शपौर्णमास्यादिषु सर्वत्र क्रतुष्वध्वर्युमुपदिशन्ति । स कामो भवति । अङ्गानां[7] सामिधेन्यादीनां काम [8]एकविंशति-प्रभृति-नमस्तत-मादाय इति वषट् अध्वर्युरुच्चकै:[8] इति वषट्कार्या [9]स्वर्गकामस्येति पत्नीसंयाजेषु काम एवमादिकां ज्ञात्वा कर्मादौ कामं मनसा ध्यात्वा कर्म कुर्वन् यजमानं कामफलेन[9]प्रयोजयति । तस्मात् कामा आगमयितव्या: ।

[10]"काल: कृतोऽत्र स्वकाल:[10] पौर्णमास्यां पौर्णमासं यजते" । अमावास्या-यामामावास्यम्,[12] वर्षासु[13] श्यामाकै:, शरदि[13] व्रीहिभि:, वसन्ते[13] यवै:, वसन्ते[14] ज्योतिष्टोमेन, शरदि वाजपेयेन[15], शिशिरे[16] द्वादशाहेन, माघ्या: पौर्णमास्या:[17] चतुरहेषु संवत्सरं यजन्ते[18] । **अमावास्यायां पौर्णमास्यां वा[19] यजेत** (आश्री २, १, २) इत्युक्तम् अध्वर्युवशात् । पूर्वपक्षे पुण्यनक्षत्रे सोमेज्याकालो[20] भवति । अङ्गानां काल: अस्तं यन्तमनुयाजैश्चरन्ति[21] । प्रातरनुवाकस्य काल:, **अनुदिते** (काश्रौ ४, १५, १), उपश्चि(?) उन्नेन्नकामा(?)[22] **अस्तमिते** (आश्री २, २, ६) स्तोत्रं यत्करोति ततो[23] वृक्षसूर्य: काल: ते प्रयोजनं तत्कर्मसाधनान्युपकल्पयन्ति । कर्तारो मन्त्राम्नातास्तत्कर्मोपदेश इति साधनानि, तस्मिन् काले[24] संनिहितश्च भवति होता वक्ष्यति[25]—**उपांश्वन्तर्यामौ हुत्वा पौर्णदर्वम्** (आश्री ६, २, १५) इति[26] । अध्वर्युवशादन्यस्मिन् काले भवति ।

[27]**"अन्तरेण घृतयाज्ये दक्षिणे मार्जालीये[27] पित्र्या** (आश्री६,२,१७) इति वक्ष्यति । अध्वर्युवशात् सन्नेषु नाराशंसेष्वपि भवति । **उत्तमेन वचनेन ध्रुवावनयनं काङ्क्षेत्** (आश्री ५, २०, ७) इत्युक्तम् अध्वर्युवशाद्[28] उपोत्त-

---

१. °कामश्च मूको । २-२. नानाशका (°क्य मै) त्व मूको । ३. कामादीनां मूको । ४. आगत: मूको । ५-५. सर्वे क्रतुविते ब'; सर्वक्रतुविद्यन्ते मै । ६. नास्ति ब' । ७. अङ्गादीनाम् मै । ८-८. एकविंशति प्रति नमस्ये ते मादाय: वषट्कारस्य मै । ९-९. स्वर्गकालफलेन ब' । १०-१०. कालकृतो त स्व° ब', कालकृतो कुर्वद्वता च काल: मै । ११. यजन्ते मै । १२. °स्यायामवास्यायाम् मूको । १३. द्र. बौश्री ३, १२ । १४. यावन्तो ब'; यावन्ति मै; द्र. आपश्रौ १०, २, ५ । १५. द्र. आपश्रौ १८, १, १ । १६. द्र. आपश्री २१, २, ८ । १७. °मास्या मूको । १८. द्र. बौश्री १३, १६ । १९. नास्ति मूको । २०. सोमे ब' । २१. द्र. आपश्री ११, २०, २ । २२-२२ उपांश्व उतेन्न । काम: मै । २३. ते मै । २४. कालं मूको । २५. वक्ष्याते ब' । २६. नास्ति मूको । २७-२७. नान्तरेण घृतयाज्यभक्षेणे (घृतयाज्यभक्षणै: मै) मार्ज्यालीपे (मार्जालियै मै) मूको । २८. °वशा: मूको ।

मायामपि भवति[1]। दिशः[2] समादेशे प्राक्प्रवण उदक्प्रवणे प्रागुदकप्रवणे [3]'पैतृकं पुरोहविर्भिरेव'[3] यजते याजयेत, यत्र होता प्रातरनुवाकमनुब्रुवन्नग्निमप[4] आदित्यं[5] च पश्यति, देवाज्ञाते[6] प्रयोजनम्। अग्निहोत्रादीनि[7] नित्यानि कर्माणि[8] व्याख्यातानि। सामिधेनीस्थाने देशो ज्ञायेत[9]। अग्निप्रणयनीयो होतुरासन्नदेश[10] उक्तः, **पश्चाद्**[11] [12]**दार्शपूर्णमासिकाया वेदेः**[12] [13]उपविश्य (आश्वौ २, १७, २) इति[13]। अध्वर्युवशाद् गार्हपत्यस्यापि पश्चाद् भवति। वैश्वदेवेन त्राहि (?) गार्हपत्यादग्निं प्रणयन्ति। व्याख्यानप्रवस्यमादेशः (?), देश आग्नीध्रीयेऽपि भवति। **दक्षिणे मार्जालीये पित्र्या** (आश्वौ ६, २, १७) इति वक्ष्यति। अध्वर्युवशादाहवनीयेऽपि[14] वा [15]इत्यत्र सदस्यासीनो होता यजति।

दक्षिणाः दर्शपूर्णमासयोरन्वाहार्य[16] एव श्रपणे[17] प्रथमवत्। सरसमुपहूतायां[18] वपायां वरं ददाति। ज्योतिष्टोमे सप्त, एकविंशतिः, द्वाविंशतिः, द्वात्रिंशत्, षष्टिः द्वादश-शतं, सहस्रमपरिमितं सर्ववेदसं [19]वा प्रथममग्निहोत्रे[20] यदि दोग्धि[21] साग्निहोत्रस्य दक्षिणा प्रथमा च। कर्मसु प्रत्यग्ने[22](?) प्रजामग्निधेनुषु (?) होत्रे रथन्तरे वरं ददाति, निष्केवल्ये वरं ददाति, [23]वामदेव्ये वरं ददाति[23]। षोळशिनि आश्वः, एता आगमयितव्याः, वतादि आ (? व्रतादिना) क्रतुषु दक्षिणा आदिष्टाः। अग्निहोत्रादिषु यत्र नादिष्टाः, तत्रापि दक्षिणापदेशार्थः सूत्रारम्भः। **द्वादशशतदक्षिणस्तेन शस्यमेकाहानाम्** (आश्वौ ६, १, ३) इति वक्ष्यति। [24]अध्वर्युवशादन्यथापि भवन्ति[24]।

दीक्षोपसत्प्रसवसंस्थोत्थानानां समासः। [25]दीक्षा तावद् विस्तरेण व्याख्याता[25]। अध्वर्युप्रत्ययं दीक्षा अपरिमिताः, **एकाहप्रभृति** (आश्वौ ४, २, १४)

---

१. भवन्ति मूको। २. देशः मै। ३-३. वैकृतं पुरो हविषि देव मै। ४. °वन्नसिमय ब'। ५. आदिश्यं मूको। ६. देवाज्ञप्ले ब'। ७. °त्रादो ब'। ८. कार्याणि ब'। ९. जायेत ब'। १०. °रासनदेश मूको। ११. तस्माद् मूको। १२-१२. °पौर्ण (°पूर्ण ब') मासिकाया पदे (पदेः मै) मूको। १३-१३. उपदिश्यति (°श्येते मै) मूको। १४. °नीये मै। १५. इज्यस° मै; °दस्यानो ब'। १६. °पौर्ण° मै। १७. श्रयणे ब'। १८. °वत्स समुप° ब'। १९-१९. संधाय्यां मै। २०. °होत्रं मै। २१. वीधि ब'। २२. प्रत्यग्न ब'। २३-२३. नास्ति ब'। २४-२४. °थापि वशान्दवन्ति ब'; °थाविवशाद् भवन्ति मै। २५-२५. दीक्षानां विस्तारेण व्याखयातः ब'; दीक्षानां विस्तरेण व्याखयातः दीक्षादीनां विस्तरेण व्याखयातः मै।

इत्युक्तम्। अध्वर्युप्रत्ययात् परिमिता अपि 'एका, तिस्रः', षट्[2] 'द्वादश, चतुर्विंशतिः' एवमादिष्टाः[4]। **राजक्रयाद्यहःसंख्यानेनैकाहानां तिस्रः** (आश्रौ ४, ८,१३) इत्येवमाद्युपसदो व्याख्याताः, अध्वर्युप्रत्ययादन्यथापि भवन्ति। [5]प्रायशः† सुत्यं भवति[5]। सुत्याकालोऽध्वर्युतः प्रत्येतव्यः। 'पक्षे प्रसव' इत्यध्वर्यूणां[6] वचनं पौर्णमास्यां दीक्षायां सत्यामेकाहस्य अपरपक्षे[8] संपद्यते। अध्वर्युप्रत्ययत्वात् पूर्वपक्षे यथा अन्यथा[9] भवति तथा दीक्षाः कर्तव्याः, दीक्षा वर्द्धन्ते। एवमहर्गणेष्वप्यहर्गणेषु च यथा व्याख्यानवशादपरपक्षेऽपि प्रसवो न भवति। उत्थानं तु पूर्वपक्षे एवेत्यध्वर्यूणां[7]वचनम्। संस्था अग्निष्टोमः उक्थः[10], षोडशी अतिरात्र इति। एताः संस्था अहन्यहन्यध्वर्युतः प्रत्येतव्याः। पूर्वसूत्रे छन्दोगप्रत्यया इत्युक्तम्[11]। इह पुनरध्वर्युप्रत्यया इत्याह। तस्मात् क्वचिच्छन्दोगप्रत्यया[12] संस्था ॥३५॥

[अहीनैकाहानामेतेभ्य एवाहोभ्यः सम्पाद्यत्वम्]

**एतेभ्य एवाहोभ्योऽहीनैकाहान् पश्चात्तरान् व्याख्यास्यामः*** ॥३६॥

॥ इति अष्टमे त्रयोदशः खण्डः ॥

---

१. द्र. आश्रौ ४,२,१७। २. द्र. आश्रौ ४, ८, १४। ३. द्र. आश्रौ ४,८, १५। ४. त्यंवमा° ब'। ५-५. नास्ति ब'। †. प्रचशः मै। ६-६. प्रक्षेपप्रसव मै। ७. °र्युणा मूको। ८. अस्त्यपर° मै। ९. अन्य मै। १०. उक्थ्यः मै। ११. द्र. आश्रौ ८,१३,३४। १२. कवि छ° ब'। *भाष्यं नास्ति।

Digitized by Madhuban Trust

# अथाष्टमेऽध्याये चतुर्दशः खण्डः

[ब्रह्मचारिणे उत्तरस्याह्नः प्रवचनम्]

**एतद्विदं ब्रह्मचारिणमनिराकृतिनं संवत्सरावमं चारयित्वा व्रतमनुयुज्यानुक्रोशिने प्रब्रूयादुत्तरमहः* ॥१॥**

[महानाम्न्युपक्रमः]

**महानाम्नीरग्रे* ॥२॥**

[ब्रह्मचारिकर्तृकस्थालीपाकस्य देशकालव्यवस्था]

**उदगयने पूर्वपक्षे श्रोष्यन् बहिर्ग्रामात् स्थालीपाकं तिलमिश्रं श्रपयित्वाऽऽचार्याय वेदयीत ॥३॥**

अनिन्दितायां[1] दिशि लौकिकेऽग्नौ पचति। यस्मिन्नग्नौ प्रातः[2] समिधमादधाति तस्मिन्नेवाग्नौ[3] उपसमाधानादि पाकयज्ञविहितं कृत्स्नं तन्त्रं क्रियते, 'पाकसंस्थानामेतत् तन्त्रमिति[4] वचनात्[5]। निरुप्येति वचनाभावात्[6] निर्वपणप्रोक्षणावहननादयो धर्मा न विद्यन्ते। प्रक्षाल्य पचत्येव तिलमिश्रमिति[7] वचना प्रक्षाल्य तण्डुलान् तिलचूर्णेन मिश्रं कृत्वा पचति। एवं चेत् कृसरमिति वक्तव्यम्। एवमुच्यमाने 'स्थालीपाकधर्मा न[8] प्राप्नुवन्ति निर्वपणादीन् वर्जयित्वा। आचार्याय वेदयीतेति वचनाद्धोमार्थः स्थालीपाको भवति। उत्तरत्र **सर्वमशान**[9] (आश्रौ ८, १४, ५) इति सर्वग्रहणादशनार्थ[10] एव स्यात्, होमार्थो न स्यात् ॥३॥

[आचार्यकर्तृकहोमव्यवस्था]

**विदिते व्रतसंशयान् पृष्ट्वा लघुमात्राच्चेदापत्कारिताः स्युरन्वारब्धे जुहुयाद् 'अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः। तस्मै जुहोमि हविषा घृतेन मा देवानां मोमुहद् भागधेयं मो अस्माकं मोमुहद् भागधेयं स्वाहा या तिरश्ची निपद्यतेऽहं विधरणी इति। तां त्वा घृतस्य धारया**

---

*भाष्यं त्रुटितम्। १. अनिन्दितस्यां मूको; द्र. आगृ १,२२,११। २. साप्रतः? मि मै। ३-३. तस्मिन्न चादौ मूको। ४-४. °स्थानामेत (°न मै) तन्त्र (°त्र मै) मि मै। ५. द्र. आगृ १,१०,२५ पाकयज्ञानामेतत्तन्त्रम्। ६. वनाभा° ब'; यज्ञमिति मूको। ७. तिलैर्मिश्रणोति (°र्मिश्राणीति मै) मूको। ८-८. °धर्मान्न मूको। वचनात् मै। ९. सर्वत्रमासा (°शा ब') न मूको। १०. सर्वत्रप्र° मूको।

**यजे संराधनीमहं स्वाहा । यस्मै त्वा कामकामाय वयं सम्राड् यजामहे । तमस्मभ्यं कामं दत्त्वाऽथेदं त्वं घृतं पिब स्वाहा । अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयं शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ स्वाहा । असूयन्त्यै चानुमत्यै च स्वाहा । प्रदात्रे स्वाहा' । व्याहृतिभिश्च पृथक् ॥४॥**

विदिते स्थालीपाके 'शृतः स्थालीपाक' इति ज्ञाते[1] आचार्य इह[1] ब्रह्मचारिणं[1] व्रतसंशयान् पृच्छति अस्मिन् सांवत्सरिके[1] व्रते[1] व्रतसंशयाः सन्ति न सन्तीति । व्रतसंशयाः व्रतविभ्रान्ताः[7] व्रतविनाशाः, तान् पृष्ट्वा 'ते मात्रया[8] लघुमात्राश्चेत्[9] यदि भवन्ति । सकृद् द्विर्वा यदि भिक्षा समिदाधानं वा न कृतं लघुमात्रा लघुप्रमाणा वहुकालप्रकरणे गुणमात्राः । ते लघुमात्रा अपि सन्तः यद्यापत्कारिताः स्युः आपदि असंभवात् कृता भवन्ति । तथा सति आचार्यं ब्रह्मचारी पाणिना अन्वारभते आलभते । तस्मिन्नन्वारब्धे आचार्ये चरोर्जुहुयात् अग्नावग्निः इत्येतैर्मन्त्रैः । विदित इति वचनाद् आचार्योऽधिक्रियते— आचार्यः पृच्छति, जुहोति । व्रतमिति[10] कर्मनामधेयम् । ब्रह्मचारिकर्माणि भिक्षादीनि व्रतानि । "तेषामकरणाद् व्रतसंशयान्" पृष्ट्वा ते यदि लघुमात्रा भवन्ति, आपत्कारिताश्च । प्रवासगतो व्याधितो वा असम्भवान्न करोति आपत्कारिताः । "सकृद् द्विर्वा" न कृता लघुमात्राः[13], तेषु लघमात्रेषु[14] आपत्कारितेषु च कृतान् दोषान् अनादृत्यैव अन्वारब्धे चरोर्जुहुयात् । यदि ते गुरुमात्राः व्रतसंशयाः वहुकालान् कृताः, अनापदि[15] "स्वस्थकृता वचनकृता[16] तेषु तथा-सत्सु आज्येन प्रायश्चित्तं हुत्वा अनन्तरं चरोर्जुहुयात् । किं प्रायश्चित्तम् । अविज्ञातप्रायश्चित्तम् । व्याहृतिभिर्जुहुयात् । **सैषा सर्वप्रायश्चित्तिर्यदेता व्याहृतयस्तस्मादेषैव यज्ञे प्रायश्चित्तिः कर्त्तव्या** (ऐब्रा ५, ३२) इति श्रुतिः । जुहुयादिति चोदिते प्रधानाहुतयः साङ्गाश्चोदिता भवन्ति । तस्मादिध्मोपसमाधानादि[17] सर्वतन्त्रं क्रियते । अग्न्युपसमाधानादि हविरासादनान्तं ब्रह्मचारी करोति । ततः इध्मोपसमाधानादि आचार्योऽशेषं समापयति । दक्षिणत आसीनो ब्रह्मचारी अन्वारभते प्रधानत्वाद् उत्तरः आचार्यः आर्त्विज्येन युक्तत्वाद् । इध्ममन्त्रेण उपसमाधान आघारावाज्यभागौ च हुत्वा चरोः अवदानधर्मेण अग्नावग्निः इति दशाहुतीर्हुत्वा घृतं जुहुयात् । अग्नावग्निः इत्येतैर्यथासमा-

---

१-१. नास्ति ब' । २. ज्ञात्वा मूको । ३. इति मूको । ४. °णां मूको । ५. द्र. गोगृ ३,२,३ । ६. व्रतो ब'; व्रती मै । ७. व्रतविप्रान्ताः मूको । ८-८. ते यदि मात्रा ब'; ते यद्दि मै । ९. °मात्रे (°त्रा ब') चेत् मूको । १०. वनुतम् मूको । ११-११. ते नामकरणव्रत° मूको । १२-१२. सकृद्धि सर्वाः मूको । १३. लघुद्विमात्रा मूको । १४. मात्रेषु मूको । १५. अनापादो मूको । १६-१६. स्वस्थवृता वे चन कृता ब'; स्वस्थव्रतावेव न कृता मै । १७. °नात् मूको ।

म्नातैः षड्भिर्मन्त्रैः[1] 'चरोरवदानसंपदो गृहीत्वा'[2] षडाहुतीर्जुहुयात्। ततो व्याहृतिभिश्चतुर्भिश्चतस्र आहुतीर्जुहुयात्। एवं तादश संपद्यन्ते। व्याहृतिभिश्च व्याहृतयो व्याख्याताः[3], सर्वप्रायश्चित्तेषु समाम्नाताश्चतस्रस्ताभिर्व्याहृतिभिश्चतसृभिश्चतस्र आहुतीर्जुहुयात्। च-शब्दः समुच्चयार्थः। आम्नातैर्मन्त्रैः व्याहृतिभिश्चेति। पृथगिति न वक्तव्यम्। व्याहृतिभिरित्युक्ते यथाम्नाता व्याहृतयो भविष्यन्ति, पृथगिति न वक्तव्यम्। इदं प्रयोजनम्। होमे [4]व्याहृतयः व्यस्ताः समस्ताश्च भवन्ति। होमादन्यत्र[4] समस्ता एव प्रयुज्यन्ते, न व्यस्ताः। यथा **व्याहृतिभिर्वा** (आश्रौ २,१४, २८), **देवतामादिश्य प्रणुयाद् यजेच्च**(आश्रौ २, १४, २९) इति। तथा [5]**पूर्वा व्याहृतयः**[5] (आगृ (३,२, ३) इत्यत्र बहुत्वात् ॥४॥

[ब्रह्मचारिणे स्थालीपाकभक्षणायाऽऽचार्यकर्तृक आदेशः]

**हुत्वाऽऽहैतं स्थालीपाकं सर्वमशानेति ॥५॥**

हुत्वा होमं परिसमाप्य आह आचार्यः एतं स्थालीपाकं सर्वमशान इति उच्चैराह यथा शृणोति ब्रह्मचारी, उच्चैः संप्रेषितो भवति। हुत्वेति चोदिते साङ्गश्चोदितो होमो भवति यथा **अस्तमिते होमः** (आश्रौ २, २, ६) इति। तस्मात् स्विष्टकृतं हुत्वा **यदस्य कर्मणः** (आगृ १, १०, २२) इत्येतेन मन्त्रेण हुत्वा आह अशनकाले एतं स्थालीपाकं सर्वमशानेति। सर्वग्रहणादाचार्यब्रह्मणोः प्राशनप्रतिषेधः। यथा अस्यादाय[6] सर्वग्रहणादितरेषां प्राशनप्रतिषेधस्तस्माद् ब्रह्मचारी यावत्तृप्तिस्तावदेव प्राश्नाति। न सर्वं सर्वशब्दस्य[7] अन्यार्थत्वात् [8]'प्राशनमात्रं तु[8] तत् प्रयुज्यते। भोजनार्थत्वादशानेति हि चोदितं भुक्तमिति च। एवं चेद् भोजनधर्माः प्राणाहुतिप्रभृतयः प्राप्नुवन्ति, हविरुच्छिष्टत्वात् प्राप्नुवन्ति। तस्माद्धविरुच्छिष्टमेव भोजनार्थं भवति। यथा दीक्षितानां भोजनार्थत्वाद् भोजनमेव क्रियते, यथा श्राद्धे। तस्मादस्मिन्नहनि प्रातर्भिक्षा न विद्यते ॥५॥

[भुक्तवता ब्रह्मचारिणाऽऽदित्योपस्थानव्यवस्था]

**भुक्तवन्तमपामञ्जलिपूर्णमादित्यमुपस्थापयेत् 'त्वं व्रतानां व्रतपतिरसि व्रतं चरिष्यामि तच्छकेयं तेन शकेयं तेन राध्यासम्' इति ॥६॥**

---

१. अद्भिर्मन्त्रैः ब[1]; अद्भिर्मन्त्रैः मै। २-२. °दीत्वा ब[1]। ३. द्र. आश्रौ १,११, १३। ४-४. °तयः यत्र (यत्त मै) हृदन्यत्र मृको: द्र. आश्रौ १,११,१३; २,१४,२८ देवत्रातव्याख्या। ५. व्याहृतीः आन.। ६. °दायं मै। ७. °शब्दा मै। ८-८. °नमत्रस्तु मै।

भुक्तवन्तं ब्रह्मचारिणं भोजनादनन्तरमेव 'अपामञ्जलिः पूर्णो' यस्य सः 'तम् अपाम्' अञ्जलिपूर्णं ब्रह्मचारिणम् आदित्यमुपस्थापयेत् प्रयोजयेत् । त्वं व्रतानाम् इत्येतं यथासमाम्नातं मन्त्रं वाचयति । अपूर्वं हि इदं[2] 'तस्य कर्म' । आदित्यमभिमुखमभितिष्ठते । भक्तवन्तमिति वचनाद् मार्जनप्रतिषेधः । अपामञ्जलिना उपतिष्ठते, तदेव मार्जनं भवति ॥६॥

[उपस्थानानन्तरमाचार्येण सह ब्रह्मचारिणो नेत्रसंमीलनं वाग्यमश्च]

**समाप्य संमील्य वाचं यच्छेत् कालमभिसमीक्षमाणो यदा समयिष्यादाचार्येण ॥७॥**

उपस्थानं समाप्य अक्षिणी संमील्य वाचं यच्छेद् नाभिभाषेत कालमभिसमीक्षमाणः कालमभिचिन्तयमानः[4] । वक्ष्यति[5] कालम्—यदा समयिष्यादाचार्येणेति कालः । यावदयं कालस्तावत्संमील्य वाग्यत आस्ते । समाप्येति वचनाद् उपस्थानं समाप्य तदानीमेव संमील्य वाचं यच्छति, नान्यं पश्यति । संमील्य वाचं यच्छेदिति तावत्कालमेव प्राप्तं प्रादेशवत्[6], तस्मात् कालम् अभिसमीक्षमाण इत्युक्तम् । इदानीं कालो वक्ष्यते—यदा समयिष्यादाचार्येण यदा यस्मिन् काले समवायं गमयिष्यादाचार्येण सह तावत्कालं संमील्य वाग्यत आस्ते । कस्मिन्[7] काल आचार्येण सह समयिष्यादिति[8], तदुच्यते ॥७॥

[अग्रेऽनध्यायापाते आचार्येण सह ब्रह्मचारिण एकरात्रमुपोषणम्]

**एकरात्रमध्यायोपपादनात्[9] ॥८॥**

एकरात्रमुपोष्य समयिष्यादाचार्येण सह[10] अध्यायोपपादनाद् हेतोरेकरात्रमुपोष्य प्रभाते यद्यध्याय[11] उपपद्यते अनध्यायो[12] यदि न भवति । तत आचार्येण सह समयिष्यात् । अकालवर्षाद्यनध्याया धर्मशास्त्रे[13] आम्नाताः ॥८॥

[बहुकालिकानध्यायपाते त्रिरात्रमुपोषणमिति विकल्पः]

**त्रिरात्रं वाऽनित्याध्यायेन[14] ॥९॥**

त्रिरात्रं वा एवंभूत आस्ते अनित्याध्यायेन[15] हेतुना अध्यायोपपादनाद् वा आस्ते इति विकल्पः अनित्यः अध्यायः अनित्याध्यायः । यदि अहरहः

---

१-१. आपमञ्जलेः (अपाम° मै) पूर्णा मूको । २-२. नास्ति मूको । ३-३. क्रव्य कर्म ब' । ४. कालमभिवितय° ब' । ५. क (त मै) क्ष्यति मूको । ६. द्र. आश्वौ १,५,३६ । ७. तस्मिन् मूको । ८. मुदयिष्यतीति मूको । ९. °योपादानात् मूको; °योपवादनात् आन. B.I. । १०. स मूको । ११-११. प्रपातेद्यध्याय मूको । १२. अनाध्यायो मूको । १३. कर्म० मै । १४. वानित्या° आन. B.I. । १५. चानि° मै; नित्या° नारा° (आन. B.I.) ।

अनध्याय:, एवं[1] बहून्यहानि भवन्ति, अकालवर्षादिका[2] अनध्याया:[3]। [4]स एव कालो[4] ब्रह्मचारिण उक्त:[5] **एकरात्रं, त्रिरात्रं वा** (आश्वौ ८, १४, ८-९) इति ॥९॥

[शयनविधितत्प्रैषयोर्निरूपणम्]

**तमेव कालमभिसमीक्षमाण आचार्योऽहतेन वाससा त्रिः प्रदक्षिणं शिरः समुखं वेष्टयित्वाऽऽहैतं कालमेवंभूतोऽस्वपन् भव इति ॥१०॥**

तमेव कालम् अभिसमीक्षमाण: अभिचिन्तयमान: आचार्य: अहतेन वाससा नवेन वस्त्रेण [6]त्रि: प्रदक्षिणं त्रि: शिर:[6] समुखं[7] वेष्टयित्वा पर्यसित्वा आह उच्चै:—एतं कालमेवंभूतोऽस्वपन् भव इति संप्रैष उच्चैर्भवति, यथा शृणोति। यथा संप्रैषं ब्रह्मचारिणं करोति। एवंभूत: वेष्टितशिरा एव अस्वपन्[8] इति एकरात्रं, एकरात्रं त्रिरात्रं वा आऽध्यायोपपादनाद् वा एवंभूत आस्ते, तमेव कालमिति। एवशब्दोऽवधारणार्थ:। ब्रह्मचारिणो य उक्त:, तमेवावधारयति। अभिसमीक्षमाण इति वचनात् तस्मिन् काले आचार्य: शिष्येण सह समयिष्यात्। शिष्याधिकारादाचार्यग्रहणम्। अप्रक्षालितं[9] वस्त्रम् अहतमित्युच्यते। अहतेनेति वचनात् संप्रैषो भवति ब्रह्मचारिण:। **संमील्य वाचं यच्छेत्** (आश्वौ ८, १४, ७) इत्यपर्वम्। आचार्यवचनादिदमधिकम्, एवंभूतोऽस्वपन् भवेति। एतावत्कृत्वा तत्र शेषं समापयति ॥१०॥

[सङ्कल्पितं कालं ब्रह्मचारिणोऽस्वपत आसनम्]

**तं कालमस्वपन्नासीत ॥११॥**

[10]य उक्त:[10] काल: **एकरात्रम्** (आश्वौ ८, १४, ८), **त्रिरात्रम्** (आश्वौ ८, १४, ९) इति, तं कालं ब्रह्मचारी अस्वपन्नेवास्ते [11]आसीन: न स[11] स्वप्यात्। आसीतेत्यनेन[12] आसनं न विधीयते, [13]अस्वप्न एव[13] विधीयते। इदं न वक्तव्यम्। यथासंप्रैषमेव[14] करिष्यति। यथा **स्थालीपाकं सर्वमशान** (आश्वौ ८, १४, ५) इत्यत्र। इदानीमारम्भे प्रयोजनम्। तं कालमस्वपन्नेव आसीत। स्वपनमेव[15] यत्नेन[16] प्रतिषिध्यते[17]। तस्माद् यदि स्वपिति[18], प्रायश्चित्तं होतव्यम्। येऽन्ये धर्मा: संमील्य वाग्यमनशिरोवेष्टनादय:, तेषां विपर्यासेऽपि स प्रायश्चित्ताभावं दर्शयति ॥११॥

---

१. एव मूको। २. °वर्षादिति मूको। ३. °या मूको। ४-४. तमेव कालम् मूको। ५. उक्त: काल: मूको। ६-६. °ण शिर: संमुखेन मै; °शिर: संमुखेन ब'। ७. संमुखं मूको। ८. अश्वयज्ञ मूको। ९. अनक्षालितं मूको। १०-१०. यदुक्त: मूको। ११-११. आसन (आस्ते न मै) स मूको। १२. आसीतेन मूको। १३-१३. अस्वपन्नेव ब'; अस्वप्नमेव मै। १४. यशा ब'; पशा मै। १५. स्वपन्नमेव मूको। १६. पंलेन ब'। १७. °ध्यति ब'। १८. स्वपति मूको।

[ग्रामाद्बहिरग्निस्थापनादिवत्सतरीबन्धनान्तं कर्म]

**अनुवक्ष्यमाणेऽपराजितायां[1] दिश्यग्निं प्रतिष्ठाप्यासिमुदकमण्डलुमश्मानमित्युत्तरतोऽग्नेः कृत्वा वत्सतरीं प्रत्यगुदगसंश्रवणे बद्ध्वा ॥१२॥**

चतुर्भिरह्नां[2] मन्त्रब्राह्मणमुक्तम् । उत्तरत्र[3] महानाम्नीर्महाव्रतं च वक्ष्यति । तस्मिन्ननुवक्ष्यमाणे यद्विधानं तदुच्यते अपराजितायां दिशि[4] प्रागुदीची दिग् अपराजिता । **सैषा दिगपराजिता** (ऐब्रा १, १४) इति ब्राह्मणम् । ग्रामान्निष्क्रम्य[5] अपराजितायां दिशि लौकिकमग्निं प्रागुदक्प्रवणे 'शुभे देशे'[6] प्रतिष्ठाप्य अनन्तरं कर्म कुर्यात् । अत्र खलु **यत्र क्व च होष्यन् स्यात्** (आगृ १, ३, १) इति वचनाद् इह होमाभावाद् उपसमाधानादि कर्म न विद्यते । असिमुदकमण्डलुमश्मानमित्येतानि उत्तरतः अग्नेः कृत्वा । असिश्छेदनार्थो भवति । उदकपूर्णं कमण्डलुम् । अश्मा पाषाणः । एतानि अग्नेः उत्तरस्यां दिशि स्थापयित्वा वत्सतरीं वत्सत्वं[7] तीर्णा वत्सतरी द्विवर्षा भवति । तां वत्सतरीमग्नेः प्रत्यगुदीच्यां दिशि असंश्रवणे देशे यस्मिन् 'देशे बद्धा सती'[8] स्वाध्यायं न शृणोति, तस्मिन् असंश्रवणे[9] देशे दाम्ना[10] बद्ध्वा अनन्तरम् ॥१२॥

[ पश्चादग्नेराचार्योपवेशनम् ]

**पश्चादग्नेराचार्यस्तृणेषूपविशेदपराजितां दिशमभिसमीक्षमाणः ॥१३॥**

अग्नेः पश्चादपरस्यां दिशि आचार्यस्तृणेषु प्रागुदगग्रेण उपविशेत् । अपराजितां दिशम्[11] अभि अभिसमीक्षमाणः[12] अपराजितां दिशमभिमुखो[13] भवति । वत्सतर्या अधिकारात् पश्चादग्नेरित्याह । **तं कालमस्वपन्नासीत**[14] (आश्रौ ८, १४, ११) इति ब्रह्मचार्यधिकारेण[15] च तृणेषूपवेशनं चोदितम् । तस्मादिह स्वाध्याये तृणेषूपवेशनं विधीयते । वैतानिके कर्मणि निरसनोपवेशने दृष्टे प्रकरणान्तरत्वादिह स्वाध्याये न भवतः, प्राच्याद्यन्वीक्षणे[16] प्राप्तेऽपराजितां दिशमभिसमीक्षमाण इत्याह ॥१३॥

[ब्रह्मचारिकर्तृकं प्रदक्षिणमुपवेशनं च]

**ब्रह्मचारी लेपान् परिमृज्य प्रदक्षिणमग्निमाचार्यं च कृत्वोपसंगृह्य पश्चादाचार्यस्योपविशेत् तृणेष्वेव प्रत्यग्दक्षिणामभिसमीक्षमाणः ॥१४॥**

ब्रह्मचारी लेपान् परिमृज्य मूत्रपुरीषलेपाः, मुखे च ये लेपाः, तान् लेपान् परिमृज्य प्रक्षाल्य ततः पादौ प्रक्षाल्याचम्य च प्रदक्षिणमग्निमाचार्यं च कृत्वा पादावुपसंगृह्य दक्षिणेन पाणिना दक्षिणं पादं गृह्णाति, सव्येन सव्यम्[17] उपसंगृह्य

---

१. अनवेक्ष्य (°क्ष ब¹) माणे° मूको । २. °भिरह्ना मूको । ३. उ (अ मै) तमत्र मूको । ४. नास्ति मूको । ५. अभिनि° ब¹ । ६-६. शुभदेशे ब¹ । ७. वतरोर्णा ब¹; वत्सतरीर्णा मै, द्र० आश्रौ ९, ४, ६; देवत्रातव्याख्या । ८-८. देशेवधा (ऽवधा मै) सती मूको । ९. श्रवणे मूको । १०-१०. दाम्नास्ये सोमो ब¹; दाम्ना सामौ मै । ११. दिशि मूको । १२. °संप्रोक्ष्यमाणः ब¹; °समीक्ष्यमाणाः मै । १३. दिशानभिमुखः मूको । १४. काल स्वयं नासी° ब¹ । १५. °चर्याधिकारणे ब¹; °चर्याधिकारीरणे मै । १६. प्राप्ते वन्वे ब¹; प्राप्तवन्वे मै । १७. नास्ति मूको ।

पश्चादाचार्यस्योपविशेत् तृणेष्वेव। तृणेष्वाचार्य उपविष्टः। प्रत्यगदक्षिणां दिशमभिसमीक्षमाणः प्रतीच्याश्च दक्षिणस्याश्च यदन्तरालं सा दिक् प्रत्यग्-दक्षिणा, तां दिशमभिमुखः। आचार्याऽधिकाराद् ब्रह्मचारीत्याह। इह लेपान्। परिमृज्येति वचनादस्मात् कर्मणः प्राक् 'लेपान्न प्रक्षालयति। नाधीते' एतं कालमेवंभूतोऽस्वपन् भव (आश्वौ ८, १४, १०) इत्याचार्येण प्रेषितः। अस्मात् सर्वाणि कर्माणि नित्यानि, एतेन व्रतेन व्याप्तानि[२]। अर्थान् मूत्रपुरीषे कुर्यात्, शौचार्थं च आचमनम् तृणेष्वेवेति। आचार्यसमीपे शिष्यस्यासनं[३] न प्राप्नोति, तस्मात् तृणेष्वेवेत्याह[४]। एवशब्दोऽवधारणार्थः। येषु तृणेष्वाचार्य उपविष्टः, तेष्वेवोपविशति ॥१४॥

[आचार्यपृष्ठेन स्वपृष्ठं संधाय महानाम्न्यनुवचनार्थं प्रार्थना]

**पृष्ठेन पृष्ठं संधाय ब्रूयान्मनसा महानाम्नीर्भो३अनुब्रूहि इति ॥१५॥**

पृष्ठेन पृष्ठं संधाय आचार्यस्य पृष्ठेन आत्मनः पृष्ठं संदध्यात्[५] संश्लिष्टं कुर्यात्। संधाय अनन्तरं मनसा ब्रूयात् महानाम्नीर्भो३ अनुब्रूहीति 'वचना-न्मनसा ब्रूयात्[६]'। स्वाध्यायमपि शृणोत्येव[७]। यस्माद् वैतानिके कर्मणि अनुब्रूहीति[८] प्रवर्तते न तु स्वाध्यायविषये प्रकरणान्तरत्वात् ॥१५॥

[महानाम्न्यनुवचनविधिः]

**पुनः पृष्ट्वाऽनुक्रोशिने संमील्यैवानुब्रूयात् सपुरीषपदास्त्रिः ॥१६॥**

पूर्वं व्रतादेशात् पूर्वमेव अनुयुज्यानुक्रोशिने (आश्वौ ८, १४, १) व्रतमा-दिष्टम्। इदानीं महानाम्न्यनुवचनकाले प्रागेव पूर्वेद्युः क्रियायाः पुनः पृष्ट्वा इदमिदं 'ब्रूहि इदं' ब्रूहीति पत्यष्व[९]तदस्तलन्ते[१०] (?प्रैषस्ततस्तदन्ते) यदि ब्रूहीति "अनुक्रोशी भवति। तस्मै अनुक्रोशिने ब्रह्मचारिणे अक्षिणी संमील्य च महानाम्नीरनुब्रूयादुच्चैः, यथा स शृणोति। संवत्सरेण पदश्रध्वं[१२] (?) ब्रह्म भवतीति परीक्ष्य ब्रूयादित्यर्थः। अनुब्रूयादित्युक्ते[१३]साङ्गा क्रिया चोक्ता भवति, तस्मिन् पूर्वेद्युः क्रियायाः प्रागेव पुनः पृष्ट्वाऽनुक्रोशिने पूर्वेद्युः क्रिया आरभते[१४]। यदि पृष्टो न प्रतिपद्यते[१५]। पुनरपि व्रतं वरोपदेव[१६] (?) यदा पृष्टः प्रतिपद्यते, तदा पूर्वेद्युः "क्रिया आरभते[१७]। अनुब्रूयादित्युक्तौ[१८] सा च[१९] क्रिया चोदना[२०] न भवति। यथाऽस्तमिते होमः (आश्वौ २, २, ६) इति। सम्मील्यैवेति

---

१-१. प्रक्षालमपि नाधीयते मै। २. प्राप्नोति ब'; द्व्याप्तानि मै। ३. °स्याचमनं मूको। ४. तृणेष्वित्याह ब'। ५. संधाय मूको। ६-६. वचना (°नाद् मै) ब्रूयात् मूको। ७. °त्येवं मै। ८. ब्रूहीति ब'; ब्रूहीति मै। ९-९. नास्ति ब'। १०-१०. यत् पृष्ठं तदस्तृलन्ते मै। ११. अनुक्रोशो ब'; अनुक्रोशे मै। १२. यदश्रध्वं मै। १३. °क्ते ब'। १४. आरम्भते मूको। १५. °पद्येते मै। १६. चरो° मै। १७-१७. क्रियाया रभते ब'; क्रियायाः प्रारम्भते मै। १८. °त्युक्तो मै। १९. न मूको। २०. चोदना मूको।

एवशब्दोऽवधारणार्थः । शिष्यः सम्मील्य शृणोति । आचार्योऽपि संमील्यैवानुब्रूयादिति चोदितत्वात् । अनुवचनधर्माः अभिहिङ्कारादयः प्राप्ताः । वैतानिके कर्मणि ये धर्माः, ते स्वाध्याये न[1] प्राप्नुवन्ति प्रकरणान्तरत्वात् । प्रणवेषु[2] वक्तव्यः स्वाध्यायधर्मत्वात् । शिष्योऽपि मनसा प्रणम्य महानाम्नीः [3]शृणोति । अनुब्रवीति[3] **उदगयने पूर्वपक्षे श्रोष्यन्** (आश्रौ ८, १४, ३) इत्यनुयुक्तः[4] । तस्माच्छृणोत्येव शिष्येण[5] उक्त **महानाम्नीर्भो३ अनुब्रूहीति** (आश्रौ ८, १४, १५) । तस्मान्महानाम्नीरनुब्रूयात् । महानाम्न्योऽपि ऋचां संज्ञा ब्राह्मणे श्रूयते – **महानाम्नीष्वत्र स्तुवते** (ऐब्रा ५, ७) इति । ता ऋचः सपुरीषपदाः वेदान्ते आम्नाताः । तस्मात् कृत्स्नं वेदमधीत्याधीयन्ते सपुरीषपदास्त्रिः ॥१६॥

[अनुवचनानन्तरमादित्यस्येक्षणम्]

**अनूच्योन्मुच्योष्णीषमादित्यमीक्षयेन् 'मित्रस्य त्वा चक्षुषा प्रतीक्षे, मित्रस्य त्वा चक्षुषा समीक्षे' ॥१७॥**

सह[6] पुरीषपदैर्महानाम्नीः सपुरीषपदास्त्रिरनूच्य अनन्तरम्[7] उन्मुच्य उष्णीषम् अपनीय उष्णीषम्, आदित्यमीक्षयेत् ईक्षस्वेति[8] शिष्यं प्रयोजयेत् । **मित्रस्य त्वा** (तैसं १, १, ४, १) इति यथासमाम्नातेन मन्त्रेण आचार्यो मन्त्रं वाचयति शिष्येण महानाम्नीर्भो ३अनुब्रूहीत्युक्ते[9] । किमर्थं सपुरीषपदा अनूच्यन्त इति, महानाम्नीषु चोदितासु पुरीषपदान्यपि चोदितानि भवन्ति तदङ्गत्वात् । श्रुतौ महानाम्नीष्वत्र [10]स्तुवते छन्दोगा इति चोदितम्[10] । सपुरीषपदा एव होता शंसति । तस्मादिह स्वाध्यायेऽपि सपुरीषपदा एवानूच्यन्ते । स्वाध्यायसंज्ञार्थत्वात्[11] त्रिरनूच्यन्ते । यथा सावित्री समानार्थत्वात्[11] समानविधाना भवति गृह्यत्वात् शृणोत्येव न ब्रवीतीति[12] । यथा सावित्रीं यथाशक्ति वाचयति, एवमिहापि यथाशक्ति श्रावयति । त्रिरनूच्येति वचनात् त्रिरेव ब्रूयात्, न चतुर्थं पुनः । फाल्गुनादिषु[13] स्वाध्यायकाले आचार्यः श्रावयति, शिष्यः शृणोत्येव यावद्[14] गृहीतमिति येनोपक्रमस्तेन[15] समाप्तिः इति न्यायाद् यदा गृहीताः, तदा वाचाऽधीयन्ते । प्रकाशमेवमुपदिशन्ति । [16]अत्र **स्वाध्यायधर्मः** (आश्रौ ८, १४, १६) इत्यादि संमृशति, संमील्य एव इति प्राप्तं[16] न क्रियते ॥१७॥

---

१. नास्ति ब'। २. प्रवणेषु ब'। ३-३. शृणोत्येव ब्रूहीति मूको। ४. अति युक्तः मूको। ५. शिष्येण ब'; शिष्यो मै। ६. स ब'। ७. त्रिरनूच्य त्रिरनुवा (°त्वा मै) अन° मूको। ८. इष्येति मूको। ९. °त्युक्तं मूको। १०-१०. स्तुवते इति चोदितं छन्दोगाः मूको; द्र. ऐब्रा ५, ७। ११-११. °र्थत्वामान विना ति एह्यत्वात् ब', °र्थत्वा मानविधाना भवन्ति गृह्य° मै। १२. प्रवतीति ब'; प्रभवतीति मै। १३. द्र. आश्रौ ८,१४,२१। १४. याद् ब', या मै। २५. येन क्रमास्तेन मूको। १६-१६. °धर्मत्यादौ (°त्पादौ मै) समृशति (सम्मृ° मै) शम इति प्राप्ते मूको; द्र. आश्रौ ८, १४, १६।

[संभारेक्षणानन्तरमादित्येक्षणं भूमिस्पर्शश्च]

'मित्रस्य वश्चक्षुषाऽनुवीक्षे' इति दिशः ससंभाराः । पुनरादित्यं 'मित्रस्य त्वा चक्षुषा प्रतिपश्यामि योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तं चक्षुषोर्हेतुर्ऋच्छतु' इति । भूमिमुपस्पृशेदग्न' इळा नम इळा नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमो वो अस्तु देवेभ्यः 'शिवा नः शंतमा भव सुमृळीका सरस्वति । मा 'ते व्योम संदृशि' । 'भद्रं कर्णेभिः शृणुयाम देवाः' 'शं न इन्द्राग्नी भवतामवोभिः' 'स्तुषे जनं सुव्रतं नव्यसीभिः' 'कया नश्चित्र आ भुवद्' इति तिस्रः 'स्योना पृथिवि भव' इति समाप्य समानं संभारवर्जम् ॥१८॥

अनन्तरेण कर्मणा हि व्याप्ता[2] दिशः 'ससंभाराः, ताः' ईक्षयेत् (आश्रौ ८, १४, १७) इति वर्तते । आदित्यमीक्षयित्वा दिशः ससंभारा ईक्षयेत् 'मित्रस्य त्वा चक्षुषाऽनुवीक्ष इति' । असिः, कमण्डलुः, अश्मा, वत्सतरी इत्येते संभाराः[3], सह संभारैर्दिशः ससभाराः । शिष्यमाचार्यो दिशः[4] ईक्षयेत्—प्राचीं दिशं पश्य, दक्षिणां पश्य, प्रतीचीं पश्य, 'उदीचीं पश्येति[4]' । असिं[5] पश्य, कमण्डलुं पश्य, अश्मानं पश्य, वत्सतरीं पश्येति संभारानवेक्षयति[8] । पुनरादित्यं संभारेक्षणादनन्तरं पुनरादित्यमीक्षयेत् । मित्रस्य इति यथासमाम्नातं मन्त्रं[9] वाचयति । पुनरिति वचनादादित्येक्षणार्थ एवायं मन्त्रो भवति, न दिशादीनाम्[10] । अन्यथा दिशादीनामादित्यस्य च ईक्षणे[11] अयं मन्त्रः[12] प्राप्नोति, दिशः ससंभाराः[13] मित्रस्य त्वा चक्षुषेत्येवमुच्यमाने[14] । तस्मात्पुनरिति "वचनादादित्येक्षणार्थ एवायं[15] मन्त्रो भवति । मन्त्रमुपस्पर्शयेद्[16] इति पाठः । एवपाठे सति आचार्यः शिष्यमुपस्पर्शयति प्रयोजयति वाचयति मन्त्रम् । उपस्पृशेदित्युच्यमान आचार्य उपस्पृशेदिति प्राप्नोत्यधिकारात् । तस्मादुपस्पर्शयेदिति ।

यदि भूमिमुपस्पर्शयेदिति वाक्यम्, अग्न इळा इति यथासमाम्नातेन मन्त्रोपमन्त्रेण वाचयत्याचार्यः शिष्यम् । मन्त्राणां बहुत्वाद् मन्त्रान्तेन स्पर्शनं न क्रियते । उपस्पृश्य भूमिं मन्त्रान्त[17] जपेत् । एवं हि क्रियमाणे "सर्वे मन्त्राः[18] स्पर्शनार्था भवन्ति । अन्यथा अन्त्य[19] एव मन्त्रः स्पर्शनार्थः स्यात् । अग्न इळा इति यथासमाम्नातो मन्त्रः । [20]शिवा नः[20] **शंतमा भव** (द्र. अथर्व ७,६८, ३) इति यथासमाम्नातो मन्त्रः । पादग्रहणादेव "सिद्धे पुनराम्नायः[21] इति यथासमाम्नाता सारस्वती पुरोरुक् । पादग्रहणादेव "सिद्धे पुनराम्नायः"

१. °मुपस्पर्शयेदग्न ब[1] देवत्रातपाठः । २. व्याप्तां ब[1], व्याप्तं मै । ३-३. स संभारात ब[1], संसभारात् मै । ४-४. नास्ति मूको । ५. द्र. आश्रौ १८, १४, १२ । ६-६. दीक्षयेत् प्राचो दिशि ब[1], ईक्षयेत् प्राचीं दिशि मै । ७. अग्नि मूको । ८. °रानेवेक्षयति मूको । ९. त्र ब[1] । १०. दिशानाम् मूको । ११. नास्ति मूको । १२. मन्त्रो मूको । १३. संभाराः मूको । १४. चक्षुष्यमाने ब[1] । १५-१५. वचनादित्यर्थः मूको । १६. भूमिरुपस्पृशेत् ब[1]; भूमिमुपस्पृशेत् भूमिमुपस्पृशेत् मै । १७. °न्ते मूको । १८-१८. सर्वमन्त्राः मै । १९. अन्य मूको । २०-२०. नास्ति मूको । २१. सिद्धेषु (सिद्धेयुः मै) नराम्नायः मूको ।

शाखान्तरार्थः। शाखान्तरे च पडेव पुरोरुच आम्नाताः। सर्वशाखान्तं[1] च इदं शास्त्रम्। तस्माद् येषां पडाम्नातास्तेषामर्थे [2]उभयसिद्धा इह[2] आम्नाताः। **भद्रं कर्णेभिः** (ऋ १,८९,८) इत्येवा। **शं न इन्द्राग्नी** (ऋ ७,३५,१) इत्येका। **स्तुषे जनम्** (ऋ ६,४९,१) इत्येका। **कया नश्चित्र आ भुवत्** (ऋ ४,३१,१-३) इत्येतास्तिस्रः। **स्योना पृथिवि भव** (ऋ १,२२,१५) इति एका, एताः सर्वा ऋचः, भूमिमुपस्पर्शयित्वा वाचयति। इतिकरणं[3] जपान्तप्रदर्शनार्थम्। समाप्य जपं समाप्य ब्रह्मौदनम् अनुप्रवचनीयं **श्रपयित्वाऽऽचार्याय वेदयीत** (आश्रौ ८,१४,३) इत्यध्याहर्त्तव्यं सूत्रस्य सार्थकत्वात्। अन्यथा हि समाप्येत्यनर्थकं स्यात्। यद्यद्वा न[4], कथम् अनूक्तं[5] स्यादिति वचनात् प्राप्तत्वान्न वक्तव्यम्। इदं प्रयोजनम्। [6]यद् यत् किंचात[6] ऊर्ध्वमनूक्तं स्यादिति [7]वचनाद्यदधीतं, तस्य[7] ब्रह्मौदनहोमे प्राप्ते समाप्येति वचनाद् महानाम्न्युपनिषन्महाव्रतान्यधीत्य जपं समाप्य ब्रह्मौदनं श्रपयेदिति। अत्र ब्रह्मौदनः प्रदर्शितः, तस्मात् संहिताः ब्राह्मणं[8] चाधीत्य ब्रह्मौदनं क्रियते। **समानं संभारवर्जम्**। **महानाम्नीरग्रे** (आश्रौ ८, १४, २) इत्यधिकृत्य महानाम्नीनां स्वाध्यायविधानमुक्तम्। तन्महाव्रतस्य न प्राप्नोति, तस्मादिदमुच्यते महानाम्नीनां महाव्रतस्य च स्वाध्यायविधानं समानं तुल्यम्। **अनुवक्ष्यमाणे** (आश्रौ ८, १४, १२) इत्येवमादि यदुक्तं तत्[9] समानं संभारवर्जम्। अग्निः असिः कमण्डलुः अश्मा[10] वत्सतरो इत्येते संभाराः। एतान् वर्जयित्वा अन्यत् समानम्। संभारवर्जमिति[11] वचनात् [12]संभारप्रकरणे यद् विधानं तदेव न समानम्[12], यत् पूर्वद्युः स्थालीपाकादि तत्समानं भवति। **अनुवक्ष्यमाणे** (आश्रौ ८, १४,१२) [13]इत्यत आरभ्य जपान्तं सर्वं[13] समानम्। **उत्तरमहर्** (आश्रौ ८,१४,१) इत्यधिकारान्महाव्रतस्य समानं भवति।

[14]कथं नु[14] प्रयोग इति। अनुवक्ष्यमाणे महाव्रते[15] ग्रामान्निष्क्रम्य अपराजितायां दिशि शुचौ देशे आचम्य तृणेषूपविशत्याचार्यः। अपराजितां दिशमभिसमीक्षमाणो[16] ब्रह्मचारी आचम्य [17]प्रदक्षिणमग्निमाचार्यं च कृत्वोपसंगृह्य[17] पश्चादाचार्यस्य [18]तृणेष्वेवोपविशति। प्रत्यग्दक्षिणामभिसमीक्षमाणः[18] पृष्ठेन

---

१. °खान्तरं मै। २-२. उभयसिहह ब[1]; द्वयमिह मै। ३-३. भूमि उपस्पर्शयित्वा चयनेति करण ब[1], भूमिषु पश्य स्पर्शयित्वा वाच° मै। ४. यद्वा ब[1]। ५. अनुक्त (°क्तः मै) मूको। ६-६. यद्यच्चात मै। ७-७. वचनाद् यद्येव धीतं तस्य तस्य मै। ८. ब्रह्मणं ब[1], ब्रह्माणं मै। ९. तस्मात् ब[1]। १०. अश्मानं (°न मै) मूको। ११. संभारमिति मूको। १२-१२. °रणोपद्विधान्न तदेव समा° ब[1]; °रणो यद्विधानं तदेव समा° मै। १३-१३. इत्यत आरभत यां तं ब[1]। †जपास्तं मै। १४-१४. नुकथं ब[1]; कथं मै। १५. महाजपे मै। १६. द्र. आश्रौ ८,१४, १३; °माण मूको। १७-१७. °क्षिणमाचार्यं कृत्वो° मूको। १८-१८. द्र. आश्रौ ८, १४, १४।

पृष्ठं संधाय ब्रूयात् व्रतं भो अनुब्रूहीति[1]। पुनः [2]पृष्ठानुक्रोशिने प्रणवं कृत्वा उच्चैर्यथा शृणोति तथा महाव्रतस्य ब्राह्मणं ब्रूयाद् अथ महाव्रतमिति। तस्य[2] च कल्पं **महाव्रतस्य पञ्चविंशतिं सामिधेन्यः** (ऐआ ५, ६, १) इति [3]स-पुरीषपदाः त्रिरेवं[3] ब्रूयात्[4]। तत्र न भूयः, सकृद्गदनात्[5]। विगादनाद्वेति[6] (?) वचनात् [7]शिष्यस्त्विह शृणोत्येव[7] महानाम्नीवत। समानमिति वचनात् महाव्रते संमीलनं त्रिविधीयते। पूर्वैर्नुविहितत्वाद् उष्णीषवत्त्वे प्राप्ते महाव्रते आदित्यमीक्षयेत्, दिशः ईक्षयेत्, पुनरादित्यमीक्षयेत्[8]। ततः भूमिमुपस्पर्शयेत्। मन्त्रं वाचयति। जपं समाप्य तदानीमेव ब्रह्मौदनं श्रपयित्वा आचार्याय वेदयीत[9]। आचार्यः समन्वारब्धे जुहुयात्। आज्यभागौ हुत्वा चरोरवदानसंपदा जुहुयात् **सदसस्पतिम्** (ऋ १, १८, ६) इत्येतया[9]। **महाव्रताय स्वाहा** इति द्वितीयम्। **यद्यत् किं चात ऊर्ध्वमनूक्तं स्याद्** (आगृ १, २२, १३) इति वचनात् यदि प्रत्यृचं हूयते तृतीयम्, **सौविष्टकृतं चतुर्थम्** (आगृ १, २२, १५) इति संख्याविघातः[10] स्यात्। **सर्वाभिर्ऋग्भिरेकामाहुतिं जुहुयाद्** इति। तत्तथा प्रयोगे[11] दृश्यते **अमुष्मै स्वाहेति**। जुहुयुरिति वचनान्महानाम्नीभ्यः स्वाहा इति [12]नाम्ना चोदिताः[12] **महानाम्नीर्भो३अनुब्रूहीति** (आश्रौ ८,१४,१५)। **अनुक्रोशिने प्रब्रूयादुत्तरमहर्** (आश्रौ ८, १४, १) इत्युक्तम्। उत्तरमहः महाव्रतं भवति। **अथ महाव्रतम्** (ऐआ १,१,१) इति रहस्यब्राह्मणे[13]। [14]तस्मान्महाव्रताय स्वाहा इति जुहुयात्। रहस्यं गुप्तं[15] यत्तदुपनिषदित्युच्यते[16]। **उपनिषदि गर्भलम्भनम्** (आगृ १, १३, १) इत्याह। तस्माद् उपनिषदे[17] स्वाहा इति जुहुयात्। ऋषिभ्यस्तृतीयम्, **सौविष्टकृतं[18] चतुर्थम्** (आगृ १, २२, १५)। ततः शेषं समाप्य ब्राह्मणान् भोजयेत्[19]। **अनुक्रोशिने प्रब्रूयाद् उत्तरमहर्** (आश्रौ ८, १४, १) इत्युक्तम्। उत्तरमहर्महाव्रतं व्रतम्[20]। तस्य ब्राह्मणं द्विप्रकारं कर्मब्राह्मणं ज्ञानब्राह्मणं च। महाव्रतमिति कर्मणः संज्ञा, उपनिषदिति ज्ञान-ब्राह्मणस्य। समयभेदात् शब्दभेदाच्च पृथगेते ब्रूयात्। संवत्सरावमञ्च[21] व्रतं चारयित्वा[22] महाव्रतं [23]स ब्रूयात्[24]। पुनः संवत्सरं चारयित्वा उपनिषदं ब्रूयात्। सावित्रमहानाम्निकमहाव्रतम् [25]उपनिषद् गोदानमिति पञ्च[25] व्रतानि ॥१८॥

---

१. द्र. आश्रौ ८,१४,१५। २-२. नास्ति ब'। ३-३. स त्रिरेवं मूको। ४. द्र. आश्रौ ८, १४, १६। ५. सकृदहनाद् ब'। ६. विग्रदना° मै। ७-७. शिष्य शृ° ब'; शिष्यस्त्वि स्तृणो° मै। ८. द्र. आश्रौ ८,१४,१७। ९. द्र. आगृ १, २२, १२, १३। १०. संख्याव (°वि मै) घातः मूको। ११. प्रये ब'। १२-१२. नाम्नादिचो (°त्ञो मै) दिताः मूको। १३. ब्राह्मणे मूको। १४. कस्मा° मूको। १५. गुह्यं मै। १६. यद्युपदिशत्युच्यते ब'; यद्यतुदिशदित्युच्यते मै। १७. °निषदाय मूको। १८. तृचं मूको। १९. द्र. आगृ १,२२,१६। २०. सन्तु मूको। २१. त्यसमर्या (समर्यां ब') भेदात् मूको। २२. संवत्सरा च तं मूको। २३. चरित्वा मूको। २४-२४. सद्ब्रूयात् ब'; ब्रूयात् मै। २५-२५. °निषदानमिति ब'; °निषदं गोदानमिति मै।

[आचार्यब्रह्मचारिणोः स्वाध्यायोपसंहारः]

**एष[1] द्वयोः स्वाध्यायधर्मः ॥१६॥**

स्वाध्यायेऽपि एष धर्मः । द्वयोः स्वाध्याये यथा आचार्यस्तथा एक उपविशति, यथा शिष्यः तथा द्वितीयः अवसंमीलनछुनं (?) विद्यते । पूर्वमाम्नातम्[2] उष्णीपवत् सभारवर्जम् (आश्रौ ८ १४, १८) इति वर्तते । द्वयोरिति वचनाद् बहूनां स्वाध्यायप्रतिषेधः । द्वावेव[3] एक[4] एकस्मै प्रब्रूयाद् इति वचनात् । स्वाध्याय इति वचनात् "शिष्यः बहूपदिष्टोऽप्यधीते एव[5] न शृणोति । महानाम्नीमहाव्रतोपनिषद्विधिः । कथं प्रयोगः । स्वाध्यायकाले ग्रामान्निष्क्रम्य अपराजितायां[6] दिशि शुचौ देशे आचम्य तृणेषूपविशत्येकः आचार्यवत्[7], शिष्यश्च[8] द्वितीयः । उच्चैः प्रणवं कृत्वा एकः अधीते, एवं द्वितीयोऽपि । समाप्ते आदित्यमीक्षते दिशः पुनरादित्यम् । भूमिमुपस्पृश्य मन्त्रं जपति । एवमेव द्वितीयोऽपि । एतावानेव विधिः ॥१६॥

[एकलस्य स्वाध्याय उपवेशननियमः]

**आचार्यवदेकः ॥२०॥**

एको यदा स्वाध्यायमधीते, तदा आचार्यवदुपविश्य अधीते । उपस्थानादि समानमन्यत् ॥२०॥

[अनधीतपूर्वाणाम् अध्यायकालनिरूपणम्]

**फाल्गुनाद्या श्रवणाया अनधीतपूर्वाणामध्यायः ॥२१॥**

फाल्गुनादि फाल्गुनमासादिं कृत्वा फाल्गुनादि । आ श्रावणायाः यावच्छ्रावणीं[9] पौर्णमासी प्राप्नोति, तस्मिन् काले अनधीतपूर्वाण मध्यायकालः । महानाम्नीमहाव्रतोपनिषदानि[10] एतानि पूर्वकालं श्रुतान्येव नाधीतानि यैः ते अनधीतपूर्वाः । स्वाध्यायाधिकारो वर्तते । तस्मात् स्वाध्यायकालम् उपदिशति । **उदगयने पूर्वपक्षे श्रोष्यन्** (आश्रौ ८,१४,३) इत्युक्तम् । माघमासादि उदगयनम्, तस्मान्माघमासाद्युदगयने श्रावणः श्रावणकालः । फाल्गुनादि स्वाध्यायकालः, आ श्रावणायाः । फाल्गुनादीति[11] वचनाद् अनुदगयनेऽपि भवति स्वाध्यायः । इह अनधीतपूर्वाणाम् इति वचनात् पूर्वं शृणोत्येव, नाधीत इति सिद्धम् ॥२१॥

[अधीतपूर्वाणामध्यायकालनिरूपणम्]

**तैष्याद्यधीतपूर्वाणामधीतपूर्वाणाम् ॥२२॥**

---

१. षडह मूको । २. पूर्वे आम्नात मूको । ३. द्वे एव मूको । ४. एक एक (°व मै) मूको । ५-५. शिष्य बहुपदिष्टो (°पो व') प्यधीतो (°ती मै) एव मूको । ६. अपरायां व', अपराह्णिकायां मै । ७. द्र. आश्रौ ८,१४,१३;२० । ८. शिष्यं च मूको । ९. °वण्या व'; °वण्यां मै । १०. °नाम्नि महा° मूको । ११. फाल्गुनानि व° व'; फाल्गुनादीनि व° मै ।

तैर्षीं पौर्णमासीमादिं कृत्वा तैष्यादि 'महानाम्न्यादीनामध्ययनम् आ[1] उत्सर्जनाद्, अधीतपूर्वाणामेषोऽध्ययनकालः। महानाम्न्यादीनि[2] अधीतानि [3]पूर्वकालं यैः[3], तेऽधीतपूर्वाः, तैष्यादीति वचनाद् आ उत्सर्जनादध्यायमुपदिशन्ति। अध्यायोपाकरणादि **षण् मासानधीयीत** (आगृ ३,५,१४) इति वक्ष्यति। तस्माद् द्विधा उपाकरणादि आ तैष्याः पूर्णमास्याः, ग्रामान्तरे[4] ब्राह्मणमधीयते[5]। ततस्तैष्यादि आ उत्सर्जनाद् आरण्यमन्त्रं[6] वा ब्राह्मणमधीयते। **अनधीतपूर्वाणाम्** (आश्रौ ८,१४,२१) इत्याह। अधीतपूर्वाणाम् अध्यायान्तलक्षणोऽभ्यासो यथा ब्राह्मणे। अभ्यासस्तु समाप्त्यर्थः। यथाऽहर्गणेषु अह्न उत्तमे शस्त्रे[7] एवं स्वाध्यायेऽपीष्यत इति॥ २२॥

**॥ इति अष्टमे चतुर्दशः खण्डः॥**

॥ [8]इति वाराहे देवत्रातकृतौ[8] सूत्रव्याख्यायाम् अष्टमोऽध्यायः समाप्तः॥

१-१. °नाम्ना (म्न्या मै) दितमध्ययनं मूको। नाम्न्यादिति मूको। ३-३. °व्यात्तं ल° मै। ४. °न्तर मूको। ५. °यत मै। ६. °ण्यं मन्त्रं मै। ७. आश्रौ ७,१,१२। ८-८. इति वाराहदेवत्रातस्य मै।

आश्व—२७

# अथ नवमोऽध्यायः

(तत्र प्रथमः खण्डः)

## [ एकाहाहीनसत्राणां वर्णनम् ]

[ एकाहाहीनानां सत्रप्रकृतित्वम् ]

**उक्तप्रकृतयोऽहीनैकाहाः ॥१॥**

व्याख्यातश्चतु:संस्थो ज्योतिष्टोमः सप्रायश्चित्तः । इदानीं तद्विकारा एकाहाहीन-सत्रसंज्ञाः सौमा वक्ष्यन्ते । तेषां सात्रिकाण्यहानि पञ्चविंशतिः प्रकृतिः । वक्ष्यति— **सिद्धैरहोभिरह्नामतिदेशः** (आश्रौ ९, १, २) इति ।तस्मात् सात्रिकाण्येवाहानि पूर्वं वक्ष्यन्ते, अहर्गणनियमाश्च[१] । तदधिकारार्थमिदमुच्यते—**सत्राणाम्**[२] (आश्रौ ७,१,१), उक्तप्रकृतयोऽहीनैकाहाः इति[३] । **एतेभ्य एवाहोभ्योऽहीनैकाहान् पश्चात्तरान् व्याख्यास्यामः** (आश्रौ ८, १३, ३५) इत्युक्तम् । त इदानीमहीनैकाहा वक्ष्यन्ते महानाम्न्यादीनां स्वाध्यायविधानादनन्तरम्[३]। उक्तप्रकृतयोऽहीनाश्चैकाहाश्चोत्तरत्र वक्ष्यन्ते—**इत्येकाहाः** (आश्रौ १०, १, १०), **अथाहीनाः** (आश्रौ १०, १,११) इति। [४]**दीक्षोपसदः** (आश्रौ ७, १, २) इति[४] दीक्षोपसद्भिः प्रक्रियन्ते प्रारभ्यन्ते तस्मात् प्रकृतिः । **उक्ता दीक्षोपसदः** (आश्रौ ७, १, २) ।**दीक्षणादिरात्रिसंख्यानेन दीक्षा अपरिमिताः** (आश्रौ ४, २, १३), **कर्माचारस्त्वेकाहानाम्** (आश्रौ ४, २, १६) ।**एका तिस्रो वा दीक्षास्तिस्र उपसदः सुत्यमहरुत्तमम्** (आश्रौ ४, २, १७) । **राजक्रयाद्यहः-संख्यानेनैकाहानां तिस्रः** (आश्रौ ४, ८, १३) , **षड् वा** (आश्रौ ४, ८, १४), **अहीनानां द्वादश** (आश्रौ ४, ८, १५) इति । सिद्धैरहोभिरह्नामतिदेशवचनात् प्राकृतैरहोभिरतिदेशे क्रियमाणे **वैश्वदेव्या स्थाने प्रथमं पृष्ठ्याहः** (आश्रौ ९, २, ५) इत्युक्ते सात्रिक्य एव दीक्षोपसदः प्राप्तास्तदङ्गत्वात्[५] तस्मात् पुनराह उक्तप्रकृतय इति । अहीनैकाहा इत्यधिकारार्थः । इति उत्तरम् अहीनैकाहा वक्ष्यन्ते । एकाहा इति संज्ञा, अहीना इति च ।

---

१. °**र्गणयमाश्च** मूको । २. **सत्राणामिति सत्राणामिति** मूको । ३. °**यविधायनिधा**° मूको । ४-४. °**पसदादा इति** मूको । ५. **प्राप्तास्तभंगात्** मूको ।

**कर्माचारस्त्वेकाहानाम्** (आश्रौ ४, २, १६) । **अहीनानां द्वादश** (आश्रौ ४, ८, १५) इत्युक्त एते प्रत्येतव्याः । समासवशादहीनानां पूर्वनिपातः, यथा **याज्यानुवाक्ये** (आश्रौ १, ५, ३६; १०, ७) इति ।

पूर्वं तु 'एकाहा वक्ष्यन्ते, अथाहीनाः'[1] ॥ १ ॥

[ सात्रिकाणामेकाहाहीनानां प्रकृतिनिरूपणम् ]

**सिद्धैरहोभिरह्नामतिदेशः ॥ २ ॥**

चतुर्विंशादीनि चतुर्विंशातिरिक्तादीनि सिद्धानि सिद्धैरहोभिरहीनैकाहानामह्ना-मतिदेशो वेदितव्यः । **वैश्वदेव्या स्थाने प्रथमं पृष्ठ्याहः** (आश्रौ ९, २, ५), **पृष्ठ्याहान्यादितः पृथक्कामैः** (आश्रौ १०, १, ७) इत्येवमादिष्वतिदेशेषु यथा, षडहे सिद्धान्यहानि, तथैव प्रत्येतव्यानि । उक्तं षडहे **रथन्तरपृष्ठान्ययुजानि, बृहत्पृष्ठा-नीतराणि** (आश्रौ ७, ५, २-३), **आज्यप्रउगे प्रतिपदनुचराश्चोभयोर्युग्मेषु** (आश्रौ ७, ६, ७) ।**एवं स्थितान् प्रगाथान् पृष्ठ्याभिप्लवयोरन्वहं पुनः पुनरावर्तयेयुः** (आश्रौ ७, ३, ४) इति । **संपाताः**, **एकैकस्य त्रयस्त्रयः**, **उक्ता मरुत्वतीयैः** (आश्रौ ७, ५, २०-२२) इत्येवमादि । षडह उक्ता विधयस्ते षडहाद्भिन्नस्याह्नः प्राप्नुवन्ति । सद्योजानीति चोदनाया असंभवात् **प्रगाथान्**........ [2]**आवर्तयेयुः** (आश्रौ ७, ३, ४) इति षडहे[2] संभवति चैकस्मिन्नहनि, तस्मादाह । यथा सिद्धैरहोभिरह्नाम् [3]इत्येतावता सिद्धे[3] अतिदेश इति न वक्तव्यम्, यथा **एतेनाह्ना सुत्यानि** (आश्रौ ७, १, ३) इति । अतिदेश[4] इत्युत्तरसूत्रार्थं भवति ॥२ ॥

[ अनतिदेश एकाहस्य विशिष्टं ज्योतिष्टोमप्रकृतित्वम् ]

**अनतिदेशे त्वेकाहो ज्योतिष्टोमो द्वादशशतदक्षिणस्तेन शस्यमेकाहानाम् ॥३ ॥**

**यस्य** क्रतोरस्माकमतिदेशो न विद्यते तस्मिन्नतिदेशे तु । येषामतिदेशो विद्यते, अध्वर्यूणां छन्दोगानां वा तेषाम्[5] अतिदेशोऽनतिदेशेऽपि[6] द्रष्टव्यः। यथा सवनप्रगाथाः[7]। तेषु छन्दोगानामतिदेशः। [8]पृष्ठ्यस्य प्रथमात्[8] प्रातःसवनं, द्वितीयान्मध्यंदिनं, तृतीयात् [9]तृतीयसवनमित्ययम्[9] एकाहः । चतुर्थात् प्रातःसवनं, पञ्चमाच्च माध्यंदिनं, षष्ठात् तृतीयसवनमिति । यः पुनरिह (?)। **अथ द्वादशाहाः** (आश्रौ १०, ५, १) । अथवा पुनरिह द्वादशाहस्य [10]प्रथमाद् बहिष्पवमानम्[10], द्वितीयाद् होतुराज्यम् । तृतीयान्मैत्रावरुणस्य । एवमन्वहमेकैकस्मादह्नः एकैकं स्तोत्रम् । तथा छन्दोगानां

---

१-१. द्र. आश्रौ १०, २, १० ; ११। २-२. °येयु विषरहे मूको । ३-३. इत्येताना सिद्धे मूको । ४. दनितेन मूको । ५. नास्ति मूको । ६. °तिदेशेति मूको । ७. सवनप्रथाःगो मूको । ८-८. पृष्ठ्यस्य प्रातः प्रथ° मूको । ९-९. सवनमनित्यव्यम् मूको । १०-१०. प्रथमबहिष्पवमानात् मूको ।

कुसुरुबिन्दुना व्याख्याता वृत्तयः । **दृतिवातवतोरयनम्** (आश्रौ १२, ३, १)। **प्रजापतेर्द्वादशसंवत्सरम्** (आश्रौ १२, ५, १५), **षट्त्रिंशद्वर्षिकम्** (आश्रौ १२, ५, १६), **शतसंवत्सरम्** (आश्रौ १५, ५, १८), **सहस्रसंवत्सरम्** (आश्रौ १२, ५, १९) इत्येतानि च कुसुरुबिन्दुना व्याख्यातानि । अस्माकमतिदेशाभावात् छन्दोगानामतिदेशः प्रमाणम्, **अतिदेशोऽनतिदेशे** (आश्रौ ९, १, २-३) इति वचनात्। छन्दोगानां कुसुरुबिन्दुना व्याख्यातानि। अस्माकमपि 'कुसुरुबिन्दुना तथैव[1] शस्यम्। पृष्ठ्याहानि भवन्ति । तु-शब्दोऽतिदेशाधिकारव्यावृत्त्यर्थः । एकाहो ज्योतिष्टोमः । प्राकृत एकाहश्चतुःसंस्थो ज्योतिष्टोमसंज्ञो भवति। तस्य ज्योतिष्टोमस्य गवां द्वादशशतं दक्षिणा । तेनैकाहेन शस्यं व्याख्यातमेकाहानाम्[2] । अनतिदेश इति वर्तते । यत्राद्येनाह्ना[3] अतिदेशो न च विद्यते । यथा न (? व) सन्त वनस्पतिस्त्रका। (?स्तवाः) अविशेषेणैकाह इत्युक्ते प्राकृताहो[4] भवति [5]नान्यः, **परिमितशस्य**[5] **एकाहः** (आश्रौ ५, १५, १५) इति वचनात् । एकाहस्तंक्ता (? स्तोत्रे) वक्ता भवति । **एकाहेन शस्यं राथन्तराणाम्** (आश्रौ १०, ५, २०) । **अयमेकाहोऽतिरात्रः** (आश्रौ ११, १, २) । **ऐकाहिकं तावदुद्धरेत्** (आश्रौ ७, १, २२) । **ऐकाहिकमितरत्** (आश्रौ १०, ५, २२) इत्येवमादिषु प्राकृत एकाहश्चोदितो[6] भवति । ज्योतिष्टोम इति प्रकृतौ नोक्ता संज्ञा । इहागत्य विधीयते ज्योतिष्टोम इति । **ज्योतिर्द्वादशस्तोमो विषुवत्स्थाने** (आश्रौ १२, ५, ४) इत्युक्ते प्राकृतस्य ज्योतिष्टोमस्य ग्रहणम् । प्रकृतौ दक्षिणा नोक्ता, इहागत्य द्वादशशतं विधीयते । तस्मात् प्रकृतौ ज्योतिष्टोमे द्वादशशतं दक्षिणा भवति । तस्मादना-दिष्टदक्षिणेषु क्रतुषु प्रकृतिदक्षिणा भवति उशनस[7] स्तोमादिषु । शस्यग्रहणेऽक्रियमाणे तेनैकाहानामित्युक्ते तेन [8]ज्योतिष्टोमस्य या दक्षिणास्ता[8] एकाहानामिति निर्दिष्टा भवन्ति, [9]न तु शस्यम्[9] । तस्मात्तेन शस्यमित्याह । एकाहग्रहणम् अहीनैकाहव्यावृत्त्यर्थम् ॥३ ॥

### [ द्व्यहेषु गोआयुषोर्वैपरीत्यम् ]

### गोआयुषी विपरीते द्व्यहानाम् ॥४ ॥

गोआयुषी गौश्च आयुश्च गोआयुषी। व्याख्याने विपरीते कृत्वा आयुर्गौरिति । ताभ्यामतिदिष्टं [10]शस्यं द्व्यहानाम्[10] । **वरुणप्रघासस्थाने** [11]**द्व्यहः** (आश्रौ ९, २, ८) । **व्युष्टिद्व्यहः**[11] (आश्रौ ९, ३, २५)। द्वितीयाहस्य पूर्वमहः आयुषा व्याख्यातम्, उत्तरमहर्गवा । इह विपरीते इति वचनादुत्तरे [12]पक्षसि गवामयने[12] एव गोआयुषी भवतः । द्व्यहानामिति[13] बहुवचनमसमाम्नातार्थम् ॥४॥

---

१-१. **बिन्दुना येव** मूको । २. **व्याख्यातानाकानात्** मूको । ३. **एद्येनाह्ना** मूको । ४. **प्रकृता°** मूको । ५-५. **नाम प°** मूको । ६. **°श्चोदिनादिता** मूको । ७. द्र. आश्रौ ९, ५, १ । ८-८. **°ष्टोमसंज्ञादक्षिणास्त ए°** मूको । ९-९. **उ शस्य** मूको । १०-१०. **शस्य द्वितीयानां** मूको । ११-११. **द्वितीयव्युष्टिद्वितीयमहः** मूको । १२-१२. **पयसि अ इत्याने** मूको. ; द्र. आश्रौ ११, ७, ११; १४-१७ । १३. **द्वितीयमहान°** मूको ।

[पृष्ठ्यस्याभिप्लवस्य वा पूर्वत्र्यहवत् त्र्यहाणां व्यवस्था]

**त्र्यहाणां पृष्ठ्यत्र्यहः पूर्वोऽभिप्लवत्र्यहो वा ॥ ५ ॥**

एकाहग्रहणं तु वर्तते। त्र्यहाणाम् एकाहेषु ये त्र्यहास्तेषां त्र्यहाणां पृष्ठ्यत्र्यहोऽभिप्लवत्र्यहो वा पूर्वः। तेन त्र्यहेण शस्यं त्र्यहाणां व्याख्यातम्। यथा **साकमेधस्थाने त्र्यहः** (आश्रौ ९, ९, १३)। **अहीनैकाहाः** (आश्रौ ९, १, १) इत्यधिकाराद् अहीनत्र्यहेष्वपि प्राप्ते **षडहान्ता अभिप्लवात्** (आश्रौ १०, १, १६) इति वचनादेकाहानामेवायमतिदेशः। त्र्यहाणामिति बहुवचनमसमाम्नातार्थम्। सहकारिवशात् पृष्ठ्यत्र्यहोऽभिप्लवत्र्यहो वा भवति, न विकल्पः॥ ५॥

[अतिरात्रात् पूर्वम् अहीनेषु दक्षिणाव्यवस्था]

**एवंप्रायाश्च दक्षिणा अर्वागतिरात्रेभ्यः ॥ ६ ॥**

ज्योतिष्टोमे दक्षिणानां प्रमाणम् एवंप्रायम्। एवंप्रमाणाश्च शस्यप्रमाणाश्च दक्षिणा भवन्ति।

[1]अर्वागतिरात्रेभ्यो याः[1] संस्था अग्निष्टोमा उक्थ्याः षोळशिनश्च ये एकाहाः, तेषु द्वादशशतं दक्षिणाः। च-शब्दः समुच्चयार्थः। एवंप्रमाणाश्च दक्षिणाः श्रुत्यन्तरे[2] यानि [2]प्रमाणान्याहुः। **तस्मादाहुर्दातव्येव[3] यज्ञे दक्षिणा भवत्यप्यल्पिकापि** (ऐब्रा ६, ३५) इति श्रुतिः। तस्मात् सहस्रादयः[3] सर्वे कल्पाः शक्तितः [4]कार्याः। अर्वागतिरात्रेभ्य[4] इति वचनात् तासु[5] संस्थासु एवंप्राया भवन्ति। अतिरात्राणां वक्ष्यति॥६॥

[अतिरात्रेषु सहस्रदक्षिणानियमः]

**साहस्रास्त्वतिरात्राः ॥ ७ ॥**

गोसहस्रं दक्षिणा येषां ते साहस्रास्त्वतिरात्रा भवन्ति ज्योतिःप्रभृतयः। तुशब्दः प्राप्तव्यावृत्त्यर्थः। अदक्षिणानि सत्राणि। तस्मात् सात्रिकैरहोभिरतिनिर्दिष्टानां[6] [7]दक्षिणा न[7] प्राप्ताः, **सिद्धैरहोभिरह्नामतिदेशः** (आश्रौ ९, १, २) इति वचनात्। तस्माद् दक्षिणा आरभ्यन्ते, प्रकृतौ च अनुक्ता[8] विधीयन्ते॥७॥

[द्व्यहत्र्यहेषु सहस्रदक्षिणानियमः]

**द्व्यहास्त्र्यहाश्च ॥ ८ ॥**

द्व्यहत्र्यहाः[9] साहस्राः। द्व्यहत्र्यहेषु[10] सहस्रं दक्षिणा। व्युष्टिद्व्यहादिष्वहीनेषु एवंप्रायाश्च दक्षिणाः। **साहस्रास्त्वतिरात्राः** (आश्रौ ९, १, ७) इति च प्राप्त आरम्भः। च-शब्दः समुच्चयार्थः। त्र्यहाद् भूयांसो येऽहीनाश्चतुरहादयस्तेषामहीनानां प्रथमे त्र्यहे सहस्रं दक्षिणाः। ततस्त्र्यहादुत्तराण्यहानि प्रसंख्यायान्वहं यावन्त्यहानि तावन्ति सहस्राणि

---

१-१. **गर्गत्रिरात्रेभ्यो याः** मूको। २-२. **°णान्यास्त°** मूको। ३. **ससादयः** मूको। ४-४. **भार्यासर्वांगतमति°** मूको। ५. **तेषु** मूको। ६. **°होभिरिति नि°** मूको। ७-७. **दक्षिणेन** मूको। ८. **अवक्ता** मूको। ९. **द्वितीयहाः** मूको। १०. **द्वितीयदेव** मूको।

दक्षिणाः । 'त्रिरात्रादूर्ध्वं चतुरहे द्वे[1] सहस्रे, पञ्चरात्रे त्रीणि सहस्राणि । एवं सर्वेषु द्व्यहेषु त्र्यहेषु[2] च उक्ता दक्षिणाः ॥ ८ ॥

[त्रिरात्रादूर्ध्वमेकाधिकसहस्रमिता क्रमेण दक्षिणा]

**ये भूयांसस्त्र्यहादहीनाः सहस्रं तेषां त्र्यहे प्रसंख्यायान्वहं ततः सहस्राणि ॥ ९ ॥**

त्र्यहाद् ये भूयांसस्तेषां वक्ष्यन्ते । **एवंप्रायाश्च दक्षिणाः** (आश्रौ ९, १, ६), **साहस्रास्त्वतिरात्राः** (आश्रौ ९, १, ७) इति च प्राप्त आरम्भः । अहीनग्रहणम् उभयेषामहीनैकाहानामधिकारार्थम् । अन्वहं सहस्राणीति प्राप्ते सहस्रं त्र्यह इत्याह[3] ॥९ ॥

[अहर्गणदक्षिणायाः समं विभज्य देयत्वम्]

**समावत्त्वेव दक्षिणा नयेयुः ॥ १० ॥**

समं विभज्य समावत् । अन्वहमिति वर्तते । तस्मिन्नहर्गणे या दक्षिणा आदिष्टास्ता समं समं विभज्यैव अह्नां दक्षिणा देयोपदिश्यते[4] ॥ १० ॥

[अतिरिक्तदक्षिणाभागस्योत्तमे दिवसे देयत्वम्]

**अतिरिक्तास्तूत्तमेऽधिकाः[5]* ॥ ११ ॥**

[अतिदिष्टानामह्नां स्तोमपृष्ठसंस्थाभ्यः स्तोमादीनामनन्यभावः]

**अतिदिष्टानां स्तोमपृष्ठसंस्थान्यत्वादनन्यभावः[6]* ॥१२ ॥**

[नैमित्तिकविकाराणां नित्यत्वम्]

**नित्या नैमित्तिका विकाराः*[7] ॥१३ ॥**

[माध्यन्दिने सवने होतुर्निष्केवल्ये शस्यनियमः]

**माध्यंदिने तु होतुर्निष्केवल्ये स्तोमकारितं शस्यम् *[8] ॥१४॥**

[उक्तशस्त्रे तार्क्ष्यवर्जमुपजनव्यवस्था]

**तत्रोपजनस्तार्क्ष्यवर्जमग्रे सूक्तानाम्[9] ॥ १५ ॥**

---

१-१. त्रिरात्राद्वे स° मूको । २. नास्ति मूको । ३. ९, १, ९ सूत्रस्य शिष्टो व्याख्यांशः, ९, २, १३ सूत्रस्य व्याख्यया सह लिखित इति प्रतीयते । ४. तयोपदि° मूको । अस्य सूत्रस्य त्रुटितो व्याख्यांशः ९, २, १३ सूत्रे , 'तुशब्दः .... विभागः इति' द्र. । ५-८. ९, २, १३ सूत्रस्य व्याख्या द्र. । ९. व्याख्यांशः ९, २, १३ सूत्रे द्र. । * व्याख्या नोपलभ्यते ।

न होत्रकाणामुपजन आवाप इत्यर्थः । अग्रे सूक्तानामित्युक्ते तार्क्ष्यस्य पुरस्तादावापः प्राप्तः। तस्य अनिविद्धानीयत्वात्[1] प्रतिषेधस्तार्क्ष्यवर्जमिति। श्रुत्या[2] लोपो वृद्धिर्वेति [3]प्राप्ते अग्र इत्याह[3] । होत्रकाणामावापस्थानं व्याख्यातं प्रातःसवने मध्यंदिने च । तस्माद्धोतुरेव विधीयते । होतुस्तु प्रातःसवने तृतीयसवने चावापो न विद्यते, नार्यापरा (?) ॥१५॥

[स्तोमहानौ आवापस्थानादुद्धारः]

**हानौ तत एवोद्धारः ॥१६॥**

सिद्धैरहोभिरतिदेशे[4] **नित्या नैमित्तिका विकाराः** (आश्रौ ९,१,१३) इति वचनात् स्तोमकारणाद् आवाप उद्धारो वा[5] न भवति । आवापस्थानमुक्तम्[6] । इदानीं हानौ स्तोमहानौ तत एव यस्मिन् स्थान आवाप उक्तस्तस्मादेवोद्धारः कर्त्तव्यः, तार्क्ष्यं वर्जयित्वा यानि सूक्तानि, तेषामग्र उद्धारो भवति । त्रिवृति व्यूळ्हे दशरात्रे चतुर्थादिष्वहःस्वाद्यन्तमेकं[7] निविद्धानीयं परिशिष्य शेषाणि सर्वाण्युद्ध्रियन्ते[8] । एव-शब्दोऽवधारणार्थः । अन्ताल्लोपो[9] वृद्धिर्वेति प्राप्ते तत एवेत्युच्यते । वे थीकं (?) नन्वीकं (?) न वहुशा (?)त्रिवृत्स्तोमो भवति ॥१६॥

[त्रिवृतः प्राक् स्तोमेषु सूक्तस्थानेषु तृचप्रयोगः]

**ये ऽर्वाक् त्रिवृतः स्तोमाः स्युस्तृचा एव तत्र सूक्तस्थानेषु ॥१७॥**

त्रिवृत्स्तोमाद् ये अर्वाक् स्तोमा भवन्ति, [10]एकी द्विकस्त्रिकश्चतुष्कः पञ्ची षट्कः सप्त्यष्टी[10] इत्येते स्तोमा यस्मिन्नहनि भवन्ति, तत्र तस्मिन्नहनि तृचा एव सूक्तस्थानेषु प्रयोक्तव्या होतुर्होत्रकाणां च, तृचा एव तत्र सूक्तस्थानेष्विति बहुवचनात् । माध्यंदिने[11] होतुर्निष्केवल्याधिकाराद् निवृत्तिः । तस्मात् सर्वेषु सूक्तस्थानेषु तृचा भवन्त्याज्यादिषु समाम्नातेषु क्रतुषु । अर्वाक् त्रिवृत इति वचनात् [12]त्रिवृदादिस्तोमेषु विद्यमानेषु तु तृचक्लृप्तिर्न क्रियते[12], यथा उद्भिद्बलभिदोः[13] सप्तिसप्तदशौ व्यत्यासं भवतः । एवशब्दोऽवधारणार्थः । यद्यपि प्रत्यक्षमाम्नातानि तस्मान्मध्यंदिने सूक्त उपदिशति । एवशब्दोऽवधारणार्थः । यद्यपि प्रत्यक्षमाम्नातानि सूक्तानि, तथापि[14] तृचा एव कर्तव्याः । तत्र तस्मिन्नहनि सूक्तस्थानेष्विति वचनाद् माध्यंदिनादन्यत्रापि होतुर्होत्रकाणां च भवन्ति तृचाः । यथा बृहस्पतिसवे[15] ॥१७॥

[निविदां स्थानपरिवर्तननिषेधः]

**यथा नित्या निविदोऽभ्युदियात् ॥ १८ ॥**

---

१. **अविधिवानीयत्वा** मूको । २. **श्रुत्वा** मूको । ३-३. **स सग्रे इत्याहु** मूको । ४. द्र. आश्रौ ९, १, २ । ५. नास्ति मूको । ६. द्र. आश्रौ ९, १, १५ । ७. °**दिष्वहः सज्यं तमेकं** मूको । ८. **सर्वाण्यदृश्यं** मूको । ९. **अन्वालोपो वृ.** मूको । १०-१०. **एका तृचः चतुष्कपंचषष्ठः सप्ताष्टा इ°** मूको । द्र. निसू १, ८,९ । ११. **माध्यंदिनं** मूको । १२-१२. **त्रिवृदादि विद्यमानेपुन्नत् च क्लृप्तिन् क्रि°** मूको । १३. °**भिदौ** मूको । १४. नास्ति मूको । १५. **बृहस्पतिसावे** मूको ।

यथैव सूक्तानामादित उद्धारः, एवं सूक्तस्याप्यादित उद्धारः प्राप्तः । अन्त्ये तृचे निविदं दध्यादिति प्राप्त इदमाचक्षते— यथा नित्या निविदोऽभ्युदियात् । यथा नित्या निविदः स्वस्मात् [1]स्थानान्न च्यवन्ते[1], तथाऽभ्युद्दिश्य तृचान् इयाद्[2] गृह्णीयात् । निवित्स्थानात्[3] पूर्वैका ऋक् निविद उत्तरे द्वे परिधानीया । एवं माध्यंदिने सवने तु निवित्स्थानात् पूर्वे द्वे ऋचौ निविद उत्तरैका । **होत्रका ऊर्ध्वं स्तोत्रियानुरूपेभ्यः प्रथमोत्तमांस्तृचाञ्शंसेयुः** (आश्रौ ९, ५, ५) । **प्रगाथेभ्यस्तु माध्यंदिने** (आश्रौ ९, ५,५-६) ॥१८॥

॥ इति नवमे प्रथमः खण्डः ॥

१-१. थानाच्य° मूको । २. °नीयात् मूको । ३. °वित्स्था पूर्वा मूको ।

# अथ नवमेऽध्याये द्वितीयः खण्डः

[चातुर्मास्यानां पुनरुपक्रमः]

**उक्तानि चातुर्मास्यानि ॥ १ ॥**

व्याख्यातानि चातुर्मास्यानीष्टिप्रकरणे[1]। इदानीं सोमान् वक्ष्यामः ॥ १ ॥

[चातुर्मास्यसोमोपक्रमः]

**सोमान् वक्ष्यामः पर्वणां स्थाने ॥ २ ॥**

चातुर्मास्यान् सोमान् वक्ष्यामः। पर्वणां स्थाने वैश्वदेव्यादीनि चत्वारि पर्वाणि, तेषां पर्वणां स्थाने सोमा भवन्ति। ते वक्ष्यन्ते। उक्तानि चातुर्मास्यानीति पुनरुच्यते। नित्यानां चातुर्मास्यानामित्यधिकारार्थम्। अधिकारात् स एव [2]कालः, तान्येव अन्तरालपर्वाणि[2], ता एव संस्था भवन्ति। **वैश्वदेव्याः स्थाने प्रथमं पृष्ठ्याहः** (आश्रौ ९, २, ५) इत्युक्तेऽहरेव प्राप्तम्, न दीक्षोपसदः। सोमान् वक्ष्याम इति वचनाद् दीक्षोपसद्भिः [3]सह शस्त्राण्युपदिष्टानि[3] भवन्ति। [4]ते सोमा[4] उदयगन एव प्राप्ताः, तस्मादाह—पर्वणां स्थान इति ॥ २ ॥

[चातुर्मास्यसोमेषु यूपराहित्यमतान्तरम्]

**अयूपकानेके ॥ ३ ॥**

एके शाखिनश्चातुर्मास्यान् सोमान् अयूपकान् यूपवर्जितान् मन्यन्ते। सयूपकान् परे ॥ ३ ॥

[अयूपकत्वे परिधौ पशुनियोजनम्]

**परिधौ पशुं नियुञ्जन्ति ॥ ४ ॥**

यदाऽयूपका भवन्ति, [5]तदा परिधौ पशुं[5] नियुञ्जन्ति। पशोस्तत्र[6] नियोग एव

---

१. द्र. आश्रौ २, १५, १-२, २०, ६। २-२. **कात्यतान्येव अन्तरात्य युतानि** मूको। ३-३. **सहस्त्राण्यु**° मूको। ४-४. **तत्सोमा** मूको। ५-५. नास्ति मूको। ६. **पचतान्** मूको।

भवति, न [१]यूपसंस्कारा अञ्जनादयः[१]। परिधौ यूपधर्मानेके कुर्वन्त्यञ्जनं परिव्ययणं च। तथा सति अञ्जनीयापरिव्ययणीययोरभिहिङ्काराभ्यासौ[२] न[३] भवत इति व्याख्यातं[४] तृतीये[४] च॥ ४॥

[प्रथमसांपातिकेष्वहःसु मध्यंदिनशस्त्राणां नियमः]

**वैश्वदेव्या स्थाने प्रथमं पृष्ठ्याहः। 'जनिष्ठा उग्रः', 'उग्रो जज्ञे' इति मध्यंदिनः। ऐकाहिका होत्राः सर्वत्र प्रथमसांपातिकेष्वहःस्वेकाहीभवत्सु॥ ५॥**

वैश्वदेव्याः स्थाने वैश्वदेवीष्टिः, तस्याः स्थाने प्रथमं पृष्ठ्याहर्भवति। **जनिष्ठा उग्रः** (ऋ. १०, ७३), **उग्रो जज्ञे** (ऋ. ७, २०) इत्येते द्वे सूक्ते माध्यंदिनो भवति। **जनिष्ठा उग्रः** इति मरुत्वतीये सूक्तं भवति, **उग्रो जज्ञे** इति निष्केवल्ये। पार्ष्ठिकयोः सूक्तयोः स्थाने एते भवतः। सग्न्ययु (?अग्निश्) सचीयत (?ते) इति इन्द्रस्य लुत (? प्त) वृत्रहे ब्र (? ब्रा) ह्मणस्तोत्रियानुपपत्तौ मध्यंदिने विश्वलीगौ (?लिङ्गौ) समीतृषौ (?) च। ऐकाहिका होत्राः, मध्यंदिनमित्यधिकारो वर्तते। [५]एकाहे भवाः[५] ऐकाहिका होत्राः। मध्यंदिने चैकाहिकानि[६] होत्राणां शस्त्राणि भवन्ति। सर्वत्र वैश्वदेवेऽन्येषु चाऽहःसु[७]। प्रथमाः संपाता येष्वहःसु[८] तानि प्रथमसांपातिकान्यहानि, तेष्वहःस्वैकाहिकानि शस्त्राणि भवन्ति। होत्रकाणां मध्यंदिने एकाहीभवत्सु येष्वहःसु[८] तायमानरूपाणि न विद्यन्ते तान्येकाहीभूतान्यहानि। उक्तं **नह्येकाहीभवत्स्वहरहःशस्यानि** (आश्रौ ८, ४, १५) इति। यथा वैश्वदेवे साकमेधानां प्रथमेऽहनि, व्रात्यस्तोमानां प्रथमेऽहनि, एकाहानां प्रथमे चतुर्थे च। सर्वत्राहीनेषु प्रथमेऽहनि, चतुरहानां च चतुर्थेऽहनि प्रथमसांपातिकान्यहानि। एतेषु मध्यंदिने होत्रकाणाम् [९]ऐकाहिकानि शस्त्राणि[९] भवन्ति। मध्यंदिनाधिकाराद् मध्यंदिन एव [१०]ऐकाहिकानाम् अयमैकाहिको विधिः, मैत्रावरुणस्य[१०] अच्छावाकस्य च **तद्दैवतमन्यं पूर्वस्य स्थाने** (आश्रौ ७, २, १४) इति प्राप्ते चैकाहिकानि शस्त्राणीत्याह। एवंविधं कारणं प्रातःसवने न विद्यते। तस्मात् प्रातःसवन ऐकाहिकानि शस्त्राणि भवन्ति। एकाहाधिकारादहीनेष्वपि भवन्ति। प्रथमं सांपातिकेष्विति वचनाद् द्वितीयसांपातिकेषु चैकाहिका न भवन्ति, यथा साकमेधे द्वितीये तृतीये च। एकाहीभवत्स्विति वचनाद् एकाहीभूतेष्वन्येष्वहःसु ऐकाहिकादेशा[११] न भवन्ति। यथाऽहर्गणानां मध्येष्वहःसु प्रथमात् पृष्ठ्याह्नो वैश्वदेवाग्निमारुते उद्धरन्ति, जातवेदस्याम्, अग्निष्टोमोक्तवैश्वानरप्राजापत्यानि हवींषि, वैश्वानरीयं च हविः॥ ५॥

---

१-१. **यूपसंस्था यजमादयः** मूको। २. **अंजनीययोः°** मूको। ३. नास्ति मूको। ४. द्र. आश्रौ १, २, २४; ३, १, ११। ५-५. **एको हि वज्रः** मूको। ६. **वैकानि** मूको। ७. **वाहः स** मूको। ८. **एकाहीविष्णुर्येष्व°** मूको। ९-९. **°कानि णि** मूको। १०-१०. **ऐकाहिकां यमैकाहि क मै°** मूको। ११. **एकाहकिशा** मूको।

[पुरोडाशानां स्थानेषु हविषामन्वायातनं पशुदेवतानिरूपणं च]

**वैश्वानरपार्जन्ये हविषी अग्नीषोमीयस्य पशोः पशुपुरोळाशेऽन्वायातयेयुः। प्रातःसवनिकेषु पुरोळाशेषु वैश्वदेव्या हवींष्यन्वायातयेयुः। वैश्वदेवः पशुः॥ ६॥**

वैश्वानरीयपार्जन्ये द्वे हविषी। अग्नीषोमीयस्य पशोः पशुपुरोळाशेऽन्वायातयेयुरध्वर्यवः। पशुपुरोळाश इति पुनः पशुग्रहणात् पशुपुरोळाश एवान्वायात्ये च भवतः। तद्देवसूनाम्। यदि देवसूपरि भवन्ति, तानि ताभ्यामनन्तराणि भवन्ति[१]। प्रातःसवने भवाः प्रातःसवनिकाः पुरोळाशास्तेषु प्रातःसवनिकेषु पुरोळाशेषु। वैश्वदेवीष्टिः, तस्या वैश्वदेव्या आग्नेयादीन्यष्टौ हवींषि अन्वायातयेयु[२]ः पुनरध्वर्यवः। तेषां याज्यानुवाक्या व्याख्याताः[३]। वैश्वदेवः पशुः। सवनीयः पशुः विश्वेदेवा[४]देवताः यस्य, तस्य[४] याज्यानुवाक्या व्याख्याता एकादशिनेषु[५]। आग्नेयस्य पशोः याज्यानुवाक्या भवन्ति। आग्नेयस्य वा उपालम्भ्यो भवति॥ ६॥

[अनूबन्ध्यापशोर्बृहस्पतिदेवताकत्वम्]

**बार्हस्पत्याऽनूबन्ध्या॥ ७॥**

बृहस्पतिर्देवता यस्या वशायाः सा बार्हस्पत्या ..........॥ ७॥

[वरुणप्रघासपर्वस्थाने गोआयुषोर्वैपरीत्येन द्व्यहनिरूपणम्]

**वरुणप्रघासस्थाने द्व्यहः*॥ ८॥**[६]

[उत्तरस्याह्नः प्रातःसवनिकेषु पुरोळाशेषु वरुणप्रघासहविषामन्वायातनम्]

**उत्तरस्याह्नः प्रातःसवनिकेषु पुरोळाशेषु वरुणप्रघासहवींष्यन्वायातयेयुः*॥ ९॥**[७]

[पशुदेवतयोर्निरूपणम्]

**मारुतवारुणौ पशू*॥ १०॥**[७]

[मैत्रावरुणदेवत्याया अनूबन्ध्याया निरूपणम्]

**मैत्रावरुण्यनूबन्ध्या*॥ ११॥**[७]

..... ..... ..... दूर्ध्वं वो (?) न्यधिकाराच्च बार्हस्पत्या[८] प्राप्ता, तस्मान्मैत्रावरुणी विधीयते॥ ११॥

---

१. द्र. काश्रौ १५, ४, ४; आश्रौ ४, ११, ५। २. जाद्यापीतये मूको। ३. द्र. आश्रौ १, ६, १-२ देवत्रातव्याख्या। ४-४. °तास्तुस्य मूको। ५. द्र. आश्रौ ३, ७, १०। ६. नास्ति मूको। ७, नास्ति मूको। *भाष्यं नोपलभ्यते। ८. द्र. आश्रौ ९, २, ७।

[वरुणप्रघासस्यैन्द्राग्नपशुस्थानेऽग्निष्टोमनिरूपणम्]

## अग्निष्टोम ऐन्द्राग्नस्थाने ॥ १२ ॥

अग्निष्टोम ऐन्द्राग्नस्थाने **द्वयोर्मासयोरैन्द्राग्नः पशुः** (आश्रौ २, १७, १८) इति। नेह[1] **तथा ततः साकमेधाः** (आश्रौ २, १८, १) [2]इति च[2] ॥ १२ ॥

[साकमेधपर्वणः स्थाने त्र्यहनिरूपणम्]

## साकमेधस्थाने त्र्यहोऽतिरात्रान्तः ॥ १३ ॥

साकमेधानां स्थाने साकमेधस्थाने त्र्यहो भवत्यतिरात्रान्तः। अन्त्यमहरतिरात्रो भवति। **सोमान् वक्ष्यामः पर्वणां स्थाने** (आश्रौ ९, २, २) इत्युक्ते कस्य पर्वणः स्थाने कः सोम इति संशयः। अस्मादसंशयार्थमुच्यते **वैश्वदेव्याः स्थाने प्रथमं पृष्ठ्याहः** (आश्रौ ९, २, ५)। **वरुणप्रघासस्थाने द्व्यहः** (आश्रौ ९, २, ८)। **साकमेधस्थाने त्र्यहः** (आश्रौ ९, २, १३)। [3]अप्राप्तो ह्यग्निष्टोम[3] ऐन्द्राग्नस्थाने विधीयते[4]। पृष्ठ्यत्र्यहः पूर्वः[5], अभिप्लवत्र्यहो वा भवति[5]। छन्दोगवशात् पृष्ठ्यत्र्यहः पूर्वो भवति। **सिद्धैरहोभिरह्नामतिदेशः** (आश्रौ ९, १, २) इति वचनाद् उक्थ्ये प्राप्तेऽतिरात्रान्त[7] इत्याह। तत्र विशेषो वक्ष्यते। एकविंशस्तोमस्य द्वे सूक्ते भवतः। तत्रावापिकं सूक्तम् ऐकाहिकं प्राप्तम् अन्यद्वा तल्लिङ्गं प्राप्तं कयाशुभीयं यथाप्राप्तम् अध्वर्युवचनात् पाष्ठिकानि यथोक्तान्योप्यन्तो श्रुत्यन्तरानुग्रहार्थम् अध्वर्यूणां हि श्रुतिवित्तमः (? मैः)। **पृष्ठानि** (आश्रौ ८, ४, १८) इति। तेषां रात्रिवचनात् सर्वे चातुर्मास्यसोमाः पाष्ठिकान्यहानि भवन्ति। अस्माकं तु वैश्वदेवपाष्ठिकवरुणप्रघासा आभिप्लविकेऽहनि साकमेधा आभिप्लविकाः[6]। पाष्ठिको वा पूर्वस्त्र्यहः। छन्दोगानामपि यथाऽस्माकं तथाऽध्वर्युवचनात् साकमेधाः। पृष्ठ्यस्योत्तरस्त्र्यहो भवति। द्व्यन्तो द्व्यङ्गानि। प्रथमे एकविंशः स्तोमः, द्वितीये त्रिणवः, तृतीये त्रयस्त्रिंशः। तस्मात् स्ववचनात् छन्दोगवचनाच्च व्यूहेयुः। द्व्यहे (? त्र्यहे) चतुरहादिषु चाहीनग्रहणं तावत् सा (?हा) तुमेव भवति। तान् (?तन्त्र) वर्तते। तस्मादिदं विधानम् अहीनैकाहानां भवति [? विधि=] विषयेऽन्वहं त्रीणि शतानि। त्रयस्त्रिंशानि तु त्रीणि शतान्युत्तमे, चतूरात्रे ऽन्वहं पञ्च शतानि। एवं समासो (यशो ?) विभूत्याश्चहम् (? भक्त्याऽन्व) उत्सयुः[9] (? न्वये)। तुशब्दः[10] प्राप्तव्यावृत्त्यर्थः। यथावृष्टं तु प्राप्तं, त्र्यहं (? हे) हेमसहस्रं ददाति, तत उत्तिष्ठन्ते सहस्राणि। एवशब्दोऽवधारणार्थः। समावत् त्वेव दक्षिणा नयेयुः न तु यथाविष्टा इति। पुनर्दक्षिणाग्रहणात् अन्वहं दक्षिणाः

---

१. ने मूको। २=२. नास्ति मूको। ३=३. [6]प्तो ह्यग्नि[9] मूको। ४. द्र. आश्रौ ९, २, १३। ५. नास्ति मूको। ६. द्र. आश्रौ ९, १, ५। ७. द्र. आश्रौ ८, ४, २४। ८. अभिप्लविकाः मूको। ९. 'तत्र विशेषः' इत्यारभ्य 'उत्सयुः' इत्यन्तः पाठः ९, १, ९ सूत्रस्य व्याख्या प्रतीयते। १०. 'तुशब्द' इत्यारभ्य 'ऋत्विजां विधाग इति' इति पर्यन्तः पाठः ९, १, १० सूत्रस्य व्याख्या प्रतीयते।

काले नयेयुरिति दक्षिणानयनार्थोऽर्थविभागः, नायम् ऋत्विजां विभाग इति। अतिरिक्तानां[1] समशो विभागे क्रियमाणे या अतिरिक्ताः, यासां विभागो न शक्यते कर्तुं तासु[2] अतिरिक्ता या गावः। उत्तमेऽहनि यद्यधिका नयेयुः यथा त्र्यहे समविभागे, अतिरिक्ताऽभिदत्ति (?) तां तृतीयेऽहन्यधिकारान्नयेयुः। तुशब्दः समविभाग-व्यावृत्त्यर्थः। अधिकग्रहणेऽक्रियमाण उत्तमेऽहन्यतिरिक्ता एव स्युः, ता निर्दिष्टानाम्। उक्तम्-सिद्धैरहोभिः (आश्रौ ९, १, २) इत्यतिदिष्टान्येव भवन्ति। यथा व्युष्टि-द्विरात्रस्य 'द्वितीयमहर्गतानां व्याख्यातम्'। सर्वस्तोमातिरात्रश्च भवति पृष्ठान्यत्वात्[3] स्तोमान्यत्वात् संस्थान्यत्वाद् अन्यदर्हन भवति। गव्यमेव शस्यं भवति। सर्वस्तोम-स्यातिरात्रस्य पञ्चः शस्यं तत् प्राप्यम्। तथा साकमेधाः त्र्यहग्रहणेन[4] व्याख्याताः। तृतीयमहः छन्दोगवशात् सर्वस्तोमातिरात्रश्च भवति। समानं पृष्ठं स्तोमान्यत्वाच्च अन्यदहर्न[5] भवति। पाञ्चिकमेवाभिप्लविकं[6] वा यथानिर्दिष्टमेव शस्यं भवति। सर्वस्तोमातिरात्रस्य यत् 'शस्यं तद् आप्तव्यम्। अतिदिष्टानाम्[8] (आश्रौ ९, १, १२) इति वचनादतिदिष्टानामसमाम्नातानां स्तोमपृष्ठसंस्थाभिरेव[9] व्यवस्थानमिति। अतिदिष्टानामपि संदेहो[10] भवति। यथा[11] व्रात्यस्तोमेष्वविशेषातिदेशात् स्तोमपृष्ठ-संस्थाभिर्व्यवस्थानं, तथा दृतिवातवतोरयनादिषु स्तोमेष्वस्याकत्यतिदेशो न विद्यते, न च सहकारिणाम्। तस्मादेकविंशादिष्वपि स्तोमपृष्ठसंस्थावशात्। पाञ्चिकान्येवाहानि भवन्ति। नित्यानां[12] नैमित्तिकविकाराणां प्रवृत्तिः। ते नैमित्तिकविकाराः सावापादयः (?)। ते विकारा नित्याः, स्तोमवशादेवावापः कर्तव्यः। अतिदिष्टानां स्तोमपृष्ठ-संस्थान्यत्वादन्यभावः (आश्रौ ९, १, १२) इति प्राप्ते सूत्रारम्भः, यथाशिक्षमेव त्र्यहे पाञ्चिकान्याचार्यप्राप्तानि आभिप्लविकत्वानन्यभावात् (?) इति वचनात् साकमेधत्र्यहे छन्दोगवशात् ये स्तोमास्तन्निमित्ताः। ये त्वावापाः (?) ते एव हि कर्तव्याः। नित्या नैमित्तिका विकाराः (आश्रौ ९, १, १३) इति वचनात्। मध्यन्दिने[13] तु निष्केवल्ये छन्दोगवशाद्यः स्तोमो भवति, तत्कारितं शस्यं माध्यंदिने होतुर्भवति। मरुत्वतीये[1] निष्केवल्ये च नित्या नैमित्तिका विकाराः (आश्रौ ९, १, १३) इति वचनाद् मरुत्वतीये यः स्तोमः तत्कारित एवावापो मरुत्वतीये प्राप्तः, निष्केवल्ये यः स्तोमस्तत्कारित एव निष्केवल्ये प्राप्तः। तत्कारितम् एव शस्यं मरुत्वतीयेऽपि यथा स्यादिति। यथा चतुर्थेऽष्टमे चातुर्विंशो माध्यंदिनः। पवमानश्चत्वारिंशः पृष्ठः।

---

१: 'अतिरिक्तानां समशो' इत्यारभ्य 'सर्वस्तोमातिरात्रश्च भवति' इति पर्यन्तं ९, १, ११ सूत्रस्य व्याख्या प्रतीयते। २: तास्व मूको। ३=३: [8]महर्गता व्याख्या मूको। ४: पृष्ठं समानं मूको। इत आरभ्य 'पाञ्चिकान्येवाहानि भवन्ति' इति पर्यन्तं ९, १, १२ सूत्रस्य व्याख्या प्रतीयते। ५: त्र्यहग्रहेण मूको। ६: अन्यमहर्ता मूको। ७: पाञ्चिकमेवा[8] मूको। ५=५: सत्यं तु आप्यं अतिनिर्दिष्टाना[8] मूको। ९: [8]भिरेव मूको। १०: संदेहे मूको। ११: यथा यथा मूको। १२: 'नित्यानां नैमित्तिक[8]' इत्यारभ्य 'नित्या नैमित्तिका विकारा इति वचनात्' इति पर्यन्तः पाठः ९, १, १३ सूत्रस्य व्याख्या प्रतीयते। १३: 'मध्यंदिने तु' इत्यारभ्य 'यथानिर्दिष्टं न भवति' इत्यन्तः पाठः ९, १, १४ सूत्रस्य व्याख्या प्रतीयते।

निष्केवल्ये चत्वारि सूक्तानि शस्यन्ते। निष्केवल्यवशान्मरुत्वतीयेऽपि चत्वार्येव, तथा सर्वस्तोमेऽतिरात्र एकमेव सूक्तं शस्यते। माध्यंदिनग्रहणाद् मरुत्वतीयेऽपि भवति। तु-शब्दोऽन्यवचनव्यावृत्त्यर्थः। होतृग्रहणं होत्रकनिवृत्त्यर्थम्। निष्केवल्यग्रहणाद् निष्केवल्ये यः स्तोमस्तत्कारितं माध्यंदिने भवति **स्तोमकारितम्** (आश्रौ ९, १, १४) इति वचनात्। यथानिर्दिष्टं न भवति। **तत्रोपजनः** * (आश्रौ ९, १, १५), तत्र **माध्यंदिने स्तोमकारितम्** (आश्रौ ९, १, १४) इति उपजनः, तस्य स्थानं वक्ष्यते-तार्क्ष्यं वर्जयित्वा यानि सूक्तानि तेषां सूक्तानाम् अग्रे पुरस्ताद् उपजनस्य[1] स्थानम्। यथादित्यानामयने सप्तको दशरात्रस्याष्टचत्वारिंशः प्रथममहः। तस्मिंश्चत्वारि सूक्तान्यावापः। द्वितीयः चतुश्चत्वारिंशः, तस्मिंस्त्रीणि त्रीणि सूक्तानि। एवं सर्वेष्वहस्सु। स्तोमवशादावापः। कुशानां नवतो दशतो वा निष्केवल्ये प्रसंख्याय तावतिसूक्ता मध्यंदिनाः स्युरित्युक्त आवापन्यायः। तथाऽऽवापः कर्तव्यः। तत्रेत्यधिकृतनिर्देशः[2]। माध्यंदिने होतुरित्यधिकारः। तस्मान्माध्यंदिने होतुः ज्ञायस्थानमु (?) त्र्यहः क्रियते। उत्तरत्र त्र्यहाद् आवापसूक्तानि प्रयोक्तव्यानि। श्रुत्यन्तरानुग्रहार्थम्। प्रथमेऽहनि **मरुत्वाँ इन्द्र** (ऋ ३, ४७, १) इति मरुत्वतीय आवापः, **युध्मस्य ते** (ऋ ३, ४६, १) इति निष्केवल्ये। निविद्धानीया अन्ये ओप्यन्ते[3] प्रधानत्वात्। प्रधानानीतराणि[4] आवापिकत्वात्। **इन्द्रमिद्देवतातये** (ऋ, ८, ३, ५), **यत इन्द्र भयामहे** (ऋ ८, ६१, १३) इति स्तोत्रियानुरूपौ ब्राह्मणाच्छंसिनः। अत्र **हवामहे** (ऋ ८, ६१, १४) इति [5]लिङ्गात् समाने[5] द्वितीयेऽहनि त्रिणवस्तोमः। **इन्द्रो रथाय** (ऋ, ५, ३१, १), **इन्द्र पिब तुभ्यम्** (ऋ, ६, ४०, १) इति मरुत्वतीय आवापः। **वृषा मदः** (ऋ, ६, २४, १), **सत्रा मदासः** (ऋ ६, ३६, १) इति निष्केवल्ये। तृतीयेऽहनि पुरूणां विव्यवस्थानोर्गसु प्रादसी (?) **तमिन्द्रं वाजयामसि** (ऋ, ८, ९३, ७), **महाँ इन्द्रो य ओजसा** (ऋ, ८, ६, १), **इयं वामस्य मन्मनः** (ऋ, ७, ९४, १), **इन्द्राग्नी अपसस्परि** (ऋ, ३, १२, ७) इति स्तोत्रियानुरूपा आम्नाताः। स्तोत्रिया आम्नाता एवानुरूपा या अनाम्नातास्तासां लक्षणं भवति। त्रयस्त्रिंशस्तोमो निष्केवल्ये **स यो वृषा**[6] (ऋ, १, १००, १) इति। मरुत्वतीय आवापः, अद्या (? धा-) न्वस्या (? स्य अ) वेक (?) इति निष्केवल्ये। अच्छावाकस्य **शासद् वह्निः** (ऋ, ३, ३१, १) इत्यहीनसूक्तम्। संहतश्रु (?) **तद्दैवतमन्यं पूर्वस्य स्थाने कुर्वीत** (आश्रौ ७, २, १४) इति वचनाद् अहीनसूक्तस्य स्थान इच्छन्तीति भवति॥ १३॥

[त्र्यहे द्वितीयेऽहन्यनुसवनं पूर्वोक्ता इष्टयः]

**द्वितीयस्याह्नोऽनुसवनं पुरोळाशेषु पूर्वेद्युर्हवींषि॥ १४॥**

---

*'**तत्रोपजनः**' इत्यारभ्य '**इच्छन्तीति भवति**' इत्यन्तः पाठः ९, १, १५ सूत्रस्य व्याख्या प्रतीयते।

१. **उपसर्जनस्य** मूको। २. **अवेत्ततनिर्देशः** मूको। ३. **उप्यंते** मूको। ४. **प्रयानीतराणि** मूको। ५-५. **लिंगा समाना** मूको। ६. **दृशेति** मूको।

त्र्यहे द्वितीयस्याह्नोऽनुसवनं सवनीयेषु पुरोळाशेषु पूर्वोक्तास्तिस्र[1] इष्टयोऽनुसवनमिति या इष्टय आम्नातास्तासां हवींष्यन्वायातयेयुरध्वर्यवः। अनीकवतः प्रातःसवने सांतपनं मध्यन्दिने गृहमेधीयं तृतीयसवने द्वितीयेऽहनि विकृता [?] स्वकाले एवंभूतानि भवन्ति। प्रातःसवनीयेषु पुरोळाशेष्वित्यर्थः..... ॥ १४ ॥

[त्र्यहे तृतीयेऽहनि प्रातःसवनिकेषु कर्तव्येष्टिनिरूपणम्]

**तृतीयेऽहन्युपांश्वन्तर्यामौ हुत्वा पौर्णदर्वं प्रातःसवनिकेषु क्रैळिनम्* ॥ १५ ॥**

[तत्रैव माध्यन्दिनेषु माहेन्द्रेष्टिविधानम्]

**माध्यंदिनेषु माहेन्द्राणि ॥ १६ ॥**

माध्यंदिनेषु पुरोळाशेषु माहेन्द्र्यामिष्टौ यान्यष्टौ[2] [दैवतानि] आम्नातानि, तान्यन्वायातयेयुरध्वर्यवः। तेषामुक्ता[3] याज्यानुवाक्याः ॥ १६ ॥

[घृतयाज्ययोर्मध्ये दक्षिणे मार्जालीये पित्र्येष्टिविधानम्]

**अन्तरेण घृतयाज्ये दक्षिणे मार्जालीये पित्र्या ॥ १७ ॥**

अन्तरेण [4]घृतयाज्ये अष्टौ यानि आम्नातानि[4], तान्यन्वायातयेयुरध्वर्यवः। तेषामुक्ता याज्यानुवाक्या[5] घृतयाज्या च। घृतयाज्ये अन्तरेण सौम्यस्य पुरस्तादुपरिष्टाद् वैतस्मिन् काले दक्षिणे मार्जालीये परिवृते पित्र्या विह्रियते। विहरणप्रभृतिर्मार्जालीयो भवति। वक्ष्यति। महाव्रतेऽप्यादावन्ते च भवति। यवासवताया (?) पशुपुरोळाशाश्च, तथा यदि सवनीये ↑ पशावाज्यकामोत्तमो हविराहुतिप्रभृति हं गता भूयते। यदि नष्ट तौ आज्यभागादि भूयतो ↑ कथं प्रयोगः। विसंस्थितसंचरेण निष्क्रम्योत्तरपश्चिमदेशे मार्जालीयस्य निरसनोपवेशने कृत्वोपविश्याज्यभागप्रभृति[6] प्रतिपद्यते। अविराहुतमतावासतत्रा (?) उपांशु भवति। सवनस्वरो [7]बाधको भवति[7]। यथा सवनीयानां मन्द्रमध्यमोत्तमान् त्रीनेव स्वरान् सवनस्वरो बाधते, तथोपांशुस्वरं[8] सर्वस्वराणाम् अपवादत्वात्। सर्वेषु हि स्वरेषु प्राप्तेषूपांशुस्वरो विधीयते। तस्मात्प्रकृतौ [9]उपांशुः प्रयोज्यः[9] त्रिष्वपि स्वरविषयेषूपांशुश्चेद् भवति। तस्मात् सवनीयाः पशवः, प्राजापत्यादय उपांश्वेव[10] भवन्ति ॥ १७ ॥

[पित्र्यायामुपस्थानविधिकथनम्]

**तत्रोपस्थानं यथाऽनतिप्रणीय चरताम् ॥ १८ ॥**

---

१. द्र. आश्रौ २, १८, २-४। २. इष्टौ मूको। द्र. आश्रौ २, १८, १८। ३. द्र. आश्रौ चातुर्मास्यप्रकरणम्। ४-४. घृतयाष्टौ आम्ना° मूको। ५. याज्ये मूको। ↑- ↑ सन्देहात्मकः पाठः। ६. त्वयोपवेश्वाज्यभा° मूको। ७-७. वाचका भवंति मूको। ८. दोपांशुस्वर मूको। ९-९. उपांशुयाज्यः मूको। १०. उपांश्वेवंति मूको। *भाष्यं नोपलभ्यते।

तत्र पित्र्यायाम् उपस्थानं यथाऽनतिप्रणीय चरताम्, यथाऽतिप्रणयनमकृत्वा कर्म कुर्वत ऋत्विज[1] उपस्थानं दृष्टं, तथा भवति। **अनावृत्याऽनतिप्रणीतचर्यायाम्** (आश्रौ २, १९, ३१) इति अनावृत्यैव[2] मार्जालीयस्य उपस्थानं[3] कर्तव्यम् **अया विष्ठाः** (आश्रौ २, १९, ३२) इत्येतेन मन्त्रेण। अप्राप्तमारभ्यते। दक्षिणांसे 'कुण्डे यत्' स्थानं मार्जालीयस्य न प्राप्नोति।

अनावृत्य मार्जालीयस्योपस्थानं कृत्वा **आवृत्य त्वेवेतरौ** (ऋ. २, १९, ३३) उपतिष्ठन्ते[5] अव्यावृत्तः। आहवनीयम् उपतिष्ठन्ते **सुसंदृशं त्वा** (ऋ. १, ८२, ३) इति पङ्क्त्या। तथैवाव्यावृत एव गार्हपत्यमुपतिष्ठन्ते **अग्निं तं मन्ये** (ऋ. ५, ६, १) इत्येकयर्चा। **अथैनमभिसमायन्ति 'मा प्रमा (?), माऽग्ने त्वं नः' इति जपन्तः** (आश्रौ २, १९, ३६) पूर्वेण गार्हपत्यसूक्ते समाप्य दक्षिणावृतो यथेतं[6] प्रत्यावृत्य यथास्थानेषूपविश्यानन्तरं कर्म कुर्वन्ति। अनूबन्ध्यायाः अवभृथान्ते त्रैयम्यकैश्चरित्वा प्रणम्योदनीयं च वा॥ १८॥

[अनूबन्ध्यायाः पशुपुरोळाश आदित्यान्वायातनम्]

**अनूबन्ध्यायाः पशुपुरोळाश आदित्यमन्वायातयेयुः॥ १९॥**

अनूबन्ध्यायाः[7] पशुपुरोळाशेष्वादित्यं हविरन्वायातयेयुरध्वर्यवः। समाप्ताः साकमेधाः॥ १९॥

[त्र्यहे पशूनां निरूपणम्]

**आग्नेयैन्द्राग्नैकादशिनाः पशवः॥ २०॥**

आग्नेयश्चैन्द्राग्नश्चैकादशिनाश्च[8] आग्नेयैन्द्राग्नैकादशिना अन्वहं पशवो भवन्ति त्र्यहस्य। प्रथमेऽहन्याग्नेयः पशुः सवनीयः, द्वितीयेऽहन्यैन्द्राग्नः, तृतीयेऽहन्यैकादशिना इति। द्वितीयेऽहन्यानीकवतश्च पशुरधिको भवति। केषांचित् तृतीयेऽहनि क्रैडिनश्च[9] पशुरधिको भवति। तयोर्याज्याऽनुवाक्या वक्ष्यन्ते॥ २०॥

**सौर्याऽनूबन्ध्या॥ २१॥**

सूर्यो देवता यस्याः सा सौर्या। अनूबन्ध्या भवति मैत्रावरुण्याः[10] स्थाने। अथ मैत्रावरुण्या उपालम्भ्या सौर्या भवति॥ २१॥

[शुनासीरीयचतुर्थपर्वणः स्थानेऽग्निष्टोमविधानं प्रातःसवनिकपुरोळाशानां च स्थाने हविषामन्वायातनम्]

**अग्निष्टोमः शुनासीरीयायाः स्थाने प्रातःसवनिकेषु पुरोळाशेषु शुनासीरीयाया हवींष्यन्वायातयेयुः॥ २२॥**

---

१. ऋत्विजा मूको। २. अन्योव्यत्ये मूको। ३. स्थानं मूको। ४-४. कुण्डं य मूको। ५. उपतिष्ठंति मूको। द्र. आश्रौ २, १९, ३३। ६. यथैतं मूको। ७. अभूवं याज्याः मूको। ८. द्र आश्रौ १२, ७, ६; ८। ९. क्रीड्वि° मूको; द्र. आश्रौ ९, २, १५। १०. °वरुण्यो मूको।

पञ्चम्यां पौर्णमास्यां[1] या शुनासीरीया तस्याः शुनासीरीयाया इष्ट्याः स्थानेऽग्निष्टोमो भवति प्रातः[2], अग्निष्टोमोऽग्निष्टोमसंस्थानो भवति। अग्निष्टोम इति संस्था चोदिता क्रतुर्न चोदितः, तस्माद् **अनतिदेशे त्वेकाहः** (ऋ ९, १, ३) इति वचनाज्ज्योतिष्टोमप्रकृतिर्भवति। स चतुःसंस्थः प्राप्तः। तस्मादाह—अग्निष्टोम इति। शुनासीरीयायाः स्थान इति वचनाद् इष्ट्याः स्थाने तस्मिन् स्थाने तस्मिन् काले भवति।

प्रातःसवनिकेषु प्रातःसवने भवाः प्रातःसवनिकाः पुरोळाशाः, तेषु प्रातःसवनिकेषु पुरोळाशेषु शुनासीरीयाया इष्ट्या हवींष्यष्टावन्वायातयेयुरध्वर्यवः। तेषां याज्यानुवाक्या व्याख्याताः॥ २२॥

[तत्र वायुदेवताकसवनीयपशुनिरूपणम्]

**वायव्यः पशुः॥ २३॥**

वायुदेवत्यः सवनीयः पशुर्भवत्याग्नेयस्य स्थाने। आग्नेयस्य वा [3]स्थाने वायव्यः पशुः[3] उपालम्भ्यो भवति॥ २३॥

[मैत्रावरुण्याः स्थान आश्विनदेवताकानूबन्ध्याया निरूपणम्]

**आश्विन्यनूबन्ध्या॥ २४॥**

अश्विनौ देवता यस्याः साऽऽश्विन्यूबन्ध्या भवति मैत्रावरुण्याः स्थाने। मैत्रावरुण्या वा [? स्थाने आश्विन्यनूबन्ध्या] उपालम्भ्या भवति॥ २४॥

[चातुर्मास्यसोमेष्वन्वहं दक्षिणानिरूपणम्]

**अन्वहं पञ्चाशच्छो दक्षिणाः॥ २५॥**

अन्वहम् अहरहरन्वन्वहम्। चातुर्मास्यसोमेषु वैश्वदेवादीन्यहानि[4] सप्त। तेष्वहस्स्वन्वहं पञ्चकृत्वः पञ्चाशच्छो[5] दक्षिणा भवन्ति। न्यायक्लृप्ताः[A] प्राप्ता वा [6]'एकाहे द्व्यहे त्र्यहे'[6]। तत्रैन्द्राग्नस्थाने योऽग्निष्टोमः, तस्य पञ्चाशद् दक्षिणा भवन्ति। [7]'द्वादशशतदक्षिणो हि'[7] चातुर्मास्यसोमोऽत्र[8] भवति इत्येके[9]। नित्यस्य षाण्मासिकस्त्वैन्द्राग्नः, तस्य स्थाने सोम आदिष्टः, क्रतोः[10] संवत्सरस्य सौमिकत्वात्॥ २५॥

॥ इति नवमे द्वितीयः खण्डः॥

---

१. द्र. आश्रौ २, २०, १। २. **प्रांततः** मूको। ३-३. नास्ति मूको। ४. °**देवादित्य**° मूको। ५. **पञ्चाशच्च** मूको। ६-६. **एका वा द्विग्रहे त्रिग्रहम्** मूको। ७-७. **द्वादशमेव सहं स हि** मूको। ८. °**मोह** मूको। ९. नास्ति मूको। १०. **क्रतौ** मूको। A. द्र. आश्रौ ९, ४, २।

## अथ नवमेऽध्याये तृतीयः खण्डः

[राजसूयोपक्रमः]

**अथ राजसूयाः॥ १॥**

[1]चातुर्मास्यसोमानन्तरं राजसूयाः कर्मान्तयोगाद् वक्ष्यन्ते—अथ राजसूयाः[1]। **इति राजसूयाः** (आश्रौ ९, ४, १)। न राज्ञः यज्ञा भवन्ति। संज्ञा चेयम्। **तेनेष्ट्वा राजा राजसूयेन यजेत** (आश्रौ ९, ९, १९) इत्युक्त एते प्रत्येतव्याः पवित्रादयः॥ १॥

[फाल्गुन्याः पौर्णमास्याः पूर्वमग्निष्टोमप्रकृतिकपवित्रेष्टिविधानम्]

**पुरस्तात् फाल्गुन्याः पौर्णमास्याः पवित्रेणाग्निष्टोमेनाभ्यारोहणीयेन यजेत॥ २॥**

सप्तम्याः (?फाल्गुन्याः) पुरस्तात् फाल्गुनी पौर्णमासी, तस्याः पुरस्तात् फाल्गुन्याः पौर्णमास्याः [?पवित्रादीष्टयः] उत्तरत्र वक्ष्यन्ते। ताभिश्चरित्वा स दशपेयेन यजेत। संसर्पन्ति यजमानावधि याभिस्तस्मात् संसृपेष्टयः। इष्टयः उत्तरत्र वक्ष्यन्ते। ताभिश्चरित्वा दशपेयेन यजेत। अत्याया (?अन्त्यायाः) इष्टेर्य आहवनीयस्तस्य स्थाने गार्हपत्यो भवति। दशपेये दश दश एकैकस्मिंश्चमसे ब्राह्मणाः सोमं पिबन्तीति दशपेयः। अभिषेचनीयादनन्तरम् [?सप्त दिनानि] अन्वहं संसृपेष्टिभिर्यजन्ते। ततो दशपेयेन यजेत॥ २॥

[पौर्णमास्यां चातुर्मास्यप्रयोगः]

**पौर्णमास्यां चातुर्मास्यानि प्रयुङ्क्ते*॥ ३॥**

[चातुर्मास्यानां चतुर्णां पर्वणां नित्यानुष्ठानम्]

**नित्यानि पर्वाणि*॥ ४॥**

---

१-१. °स्यसोमेनेतराज्यानन्तरं राजूसयाः काम ते योगा वक्ष्यन्ते राज° मूको।

*भाष्यं नोपलभ्यते।

[पर्वणामन्तरालेषु दर्शपूर्णमासयोरनुष्ठानम्]

**चक्राभ्यां तु पर्वान्तरेषु चरन्ति*॥ ५॥**

[तत्र दर्शपूर्णमासयोरहर्विपर्ययेण शुक्लकृष्णपक्षव्यत्यासेन वानुष्ठानम्]

**अहर्विपर्ययं पक्षविपर्ययं वा*॥ ६॥**

[शुनासीरीयपर्वणोऽनन्तरं संवत्सरान्ते शुक्लपक्षेऽभिषेचनीयदशपेययोरनुष्ठानम्]

**संवत्सरान्ते समानपक्षेऽभिषेचनीयदशपेयौ*॥ ७॥**

[तत्राभिषेचनीयस्योक्थ्यबृहत्पृष्ठत्वादिवैशिष्ट्यम्]

**उक्थ्यो बृहत्पृष्ठ उभयसामाऽभिषेचनीयः*॥ ८॥**

[मरुत्वतीयस्तोत्रानन्तरं राज्ञे शौनःशेपोपाख्यानश्रावणम्]

**संस्थिते मरुत्वतीये दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे शौनःशेपमाचक्षीत*॥ ९॥**

[अध्वर्योरासनविधानम्]

**हिरण्यकशिपावासीन आचष्टे हिरण्यकशिपावासीनः प्रतिगृणाति यशो वै हिरण्यं यशसैवैनं समर्धयति*॥ १०॥**

[ऋचो गाथायाश्च प्रतिगरकथनम्]

**ओमित्यृचः प्रतिगर एवं तथेति गाथायाः*॥ ११॥**

[ओमिति दैवस्य तथेति मानुषस्य प्रतिगरस्य फलश्रुतिः]

**ओमिति वै दैवं तथेति मानुषं दैवेन चैवेनं तन्मानुषेण च पापादेनसः प्रमुञ्चति*॥ १२॥**

[शुनःशेपाख्यानफलश्रुतिः]

**तस्माद् यो राजा विजिती स्यादप्ययजमान आख्यापयेतैवैतच्छौनःशेपमाख्यानं न हास्मिन्नल्पं च नैनः परिशिष्यते*॥ १३॥**

---

*भाष्यं नोपलभ्यते।

[आख्यानस्याख्यात्रे दक्षिणानिरूपणम्]

**सहस्त्रमाख्यात्रे दद्यात्*॥ १४॥**

[प्रतिगरवक्त्रे दक्षिणानिरूपणम्]

**शतं प्रतिगरित्रे*॥ १५॥**

[पुनः स्वासनग्रहणम्]

**यथास्वमासने*॥ १६॥**

[संसृपेष्टेरनन्तरं दशपेययजनम्]

**संसृपेष्टिभिश्चरित्वा दशपेयेन यजेत*॥ १७॥**

[तत्र दशदश ब्राह्मणा एकैकं चमसं भक्षयेयुः]

**तत्र दशदशैकैकं चमसं भक्षयेयुः॥ १८॥**

तत्र तस्मिन् दशपेये दशदश ब्राह्मणा एकैकं चमसं भक्षयेयुः॥ १८॥

के ते ब्राह्मणा इति तदुच्यते—

[नित्यानां चमसानां प्रसंख्यनानन्तरमितरेषामनुप्रसर्पणम्]

**नित्यान् प्रसंख्यायेतराननुप्रसर्पयेयुः॥ १९॥**

नित्यान् प्रसंख्याय चमसे येषां हि[1] [?भागस्ते-] भ्यो दश [2]इत्येतान् नित्यान् प्रसंख्यायेतरान् अनुप्रसर्पयेयुः[3] ब्राह्मणाः। मन्वं (? अन्वहं च प्रसर्पकाननुप्रसर्पयेयुः। तत्र होतृचमसे होताऽध्वर्युः, प्रतिप्रस्थाता, उन्नेता, ग्रावस्तुदित्येतान् प्रसंख्याय इतराननुप्रसर्पयेयुः। यथा छन्दोगाः सुब्रह्मण्यं प्रसंख्याय इतराननुप्रसर्पन्ति। सर्वेषु चमसेषु **शतं ब्राह्मणाः सोमं पिबन्ति** (तैब्रा १, ८, २, २) इति श्रुतिः। तस्माद् यजमानचमसं दश न भक्षयन्ति। **सोमं भक्षयन्ति** (द्र. ऐब्रा ३, ५) इति श्रुतिः। सोमाप्यायनं न भवति। फलचमसोऽयं ब्राह्मणस्य यजमानस्य[4] भवति। **ब्राह्मणाः पिबन्ति** इति श्रुतिः। तस्माद् दशपेद (? दशपेय-) शास्या (? शस्यो) नित्यः। तेन सह दश चमसा भवन्ति। **शतं ब्राह्मणाः सोमं पिबन्ति** (तैब्रा १, ८, २, २) इति श्रुतिः॥ १९॥

के ते ब्राह्मणाः किंलक्षणा इति तदुच्यते—

---

*भाष्यं नोपलभ्यते।

१. **हिभ्यो** मूको। २. इत्येता मूको। ३. **प्रशंसयेयु** मूको। ४. **यजमानो** मूको।

[चमसानुप्रसर्पणेऽधिकारिलक्षणम्]

**ये मातृतः पितृतश्च दशपुरुषं समनुष्ठिता विद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो नाब्राह्मण्यं निनयेयुः ॥ २० ॥**

ये मातृतः पितृतश्च ये ब्राह्मणाः [1]मातृवंशतः पितृवंशतश्च[1] दशपुरुषम् आ दशमात् पुरुषात् समनुष्ठिताः सम्यगनुष्ठिताः। विद्या वेदो भवति। [2]तपो वैतानिकानि[2] कर्माण्यग्निहोत्रादीन्यौपासनहोमादीनि कर्माणि समाम्नातानि[3], गृह्यकर्माणि पञ्चमहायज्ञादीनि च पुण्यानि[4] कर्माणि। धर्मशास्त्रे यानि प्रतिषिद्धानि चौर्यादीनि तेषामिहाग्रहणम्[5]। येषामुभयतो [6]मातृवंशे पितृवंशे च न अब्राह्मणत्वम्[6] अब्राह्मण्यं निनयेयुः। येषां नोभयतो[7] वंशेऽब्राह्मण्यं प्राप्नोति ॥ २० ॥

[चमसानुप्रसर्पणेऽधिकारिविषये मतान्तरम्]

**[8]पितृत इत्येके[8] ॥ २१ ॥**

**तद्यदा स्त्रियां सिञ्चति। अथैनज्जनयति तदस्य प्रथमं जन्म** (ऐआ २, ५, १) इति रहस्यब्राह्मणे। **तज्जाया जाया भवति यदस्यां जायते पुनः** (ऐब्रा ७, १३) इति श्रुतौ। **आत्मा वै पुत्रनामासि** (आगृ १, १५, ९) इति मन्त्रे, तस्मान्मन्त्रारम्भाद् वर्णानुपूर्व्येण[9] तिस्रो ब्राह्मणस्य भार्या भवन्तीत्येतस्य पक्षस्यानुग्रहार्थम् ॥ २१ ॥

[दशपेयस्य मरुत्वतीयनिष्केवल्ययोर्निविद्धानयोः प्रारम्भे प्रक्षेप्यर्चोः कथनम्]

**'नवग्वासः सुतसोमास इन्द्रं', 'सखा ह यत्र सखिभिर्नवग्वै' इति निविद्धानयोराद्ये ॥ २२ ॥**

**नवग्वासः सुतसोमास इन्द्रम्** (ऋ ५, २९, १२), **सखा ह यत्र सखिभिर्नवग्वैः** (ऋ ३, ३९, ५) इत्येते द्वे ऋचौ दशपेयस्य निविद्धानयोराद्ये भवतः। **जनिष्ठा उग्रः** (ऋ १०, ७३, १), **इन्द्रस्य नु वीर्याणि** (ऋ १, ३२, १) इति निविद्धानयोः सूक्तयोरेते[10] ऋचावाद्ये भवतः। आनन्तर्येण **नवग्वासः** इति मरुत्वतीये। **सखा ह यत्र** इति निष्केवल्ये। एकामृचं[11] शस्त्वा [12]अन्याः शंसेत्, आद्ये[12] इति वचनात्। आद्ययोर्ऋचोः स्थाने प्राप्ते समीपे तु भवतः तुकाराभावात्[13]। यथा **आगूर्याज्यादिः**[14] (आश्रौ १, ५, ४) इति। तुकारे तु क्रियमाणे स्थाने भवतः[15]। यथा **'इमं महे विदथ्याय शूषम्'** (ऋ ३, ५४, १), **'अयमिह प्रथमो धायि धातृभिः'** (ऋ ४, ७, १) **इति तु राजन्यवैश्ययोराद्ये** (आश्रौ २, १७, ७) इति। देवतान्यत्वाच्च छन्दोऽन्यत्वाच्च स्तज्ञाव्ययोः (? संज्ञा द्वयोः) स्थाने न प्रयुज्यते।

---

१. **मातृवंशयः पितृवंशयश्च** मूको। २-२. **तयोर्वैता°** मूको। ३. **समाम्नादीनि** मूको। ४. **आरण्यानि** मूको। ५. **येषामह ग्रहः** मूको। ६-६. **मातृवंशे च म ब्राह्म°** मूको। ७. **मरुतो** मूको। ८-८. नास्ति मूको। ९. **°पूर्वेण** मूको। १०. द्र. आश्रौ ५, १४, १९; १५, २२। ११. **एतामृचं** मूको। १२-१२. **अं अं शंसेद वाद्ये** मूको। १३. **भवतस्तुतरोहावात्** मूको। १४. **अर्ब्जया°** मूको। १५. **भवंति** मूको, द्र. आश्रौ २, १७, ७ देवत्रातव्याख्या।

बृहस्पतिसवे गोस्तोम-भूमिस्तोम-वनस्पतिसवेषु च देवतान्यत्वात् स्थाने न प्रयुज्यते। गोतमस्तोमेऽपि छन्दोऽन्यत्वान्न प्रयुज्यते। तस्मात् समीप एव भवतः। सूक्तमुखीयाः सूक्तसंस्कारार्था भवन्ति। सूक्तस्य लिङ्गत्वाद् यत्कृतो (? तत्कृतं) यत्र (?प्रथ-) मे लिङ्गसूक्तं कथं स्यादित्यर्थः। सूक्तमुखीया शस्यते। तस्मात् सूक्तमुखीया अपि निविद्धानीया भवति। **निविद्धानीयानां[1] सूक्तानामनेकं चेत् प्रथमेष्वाहावः** (आश्रौ ५, १०, १६) इति वचनात् सूक्तमुखीयाया आहावो भवति, न सूक्तादौ। अथ यदि सूक्तमुखीया निविद्धानीया भवति, बृहस्पतिसवे[2] अहर्गणमध्यगते गोतमस्तोमे च तार्क्ष्येण व्यवायात् सूक्तमुखीयायाम् आहावो न प्राप्नोति। तस्मान्निविद्धानीया भवन्ति॥ २२॥

[पूर्वोक्तयोर्ऋचोः सूक्तमुखीयेतिसंज्ञाकरणम्]

**सूक्तमुखीये इत्युक्त एते प्रतीयात्॥ २३॥**

[3]सूक्तमुखीये इत्युक्त[3] एते ऋचौ प्रतीयात्। यथा [4]**देवेभ्यो वनस्पते हवींषि**[4] (ऋखि ५, ७, २, ७), **वनस्पतेरशनया नियूय** (ऋखि ५, ७, २, ९) **इति सूक्तमुखीयाः** (आश्रौ ९, ५, २)। **यस्तस्तम्भ** (ऋ, ४, ५०, १), **धुनेतयः** (ऋ ४, ५०, २) **इति सूक्तमुखीये** (आश्रौ ९, ५, ५) इत्येते ऋचौ एतयोः[5] सूक्तमुखीययोः स्थिते भवतः॥ २३॥

[वैशाखशुक्लपक्षे केशवपनीयो नामैकाहो बृहत्पृष्ठोऽतिरात्रसंस्थः]

**उत्तर आपूर्यमाणपक्षे केशवपनीयो बृहत्पृष्ठोऽतिरात्रः॥ २४॥**

चैत्र्यां दशपेयः समाप्तः। तत उत्तर आपूर्यमाणपक्षे वैशाखस्य शुक्लपक्षे केशवपनीयो नाम एकाहः। सवंत्सरं केशान् धारयति[6]। अस्मिन् यज्ञे केशान् वापयति, तस्मात् केशवपनीय इत्युच्यते। अतिदेशाभावाज्ज्योतिष्टोमो भवति। स्तोमे च **बृहद् रथन्तरं वा** (आश्रौ ७, ३, ९-१०) इति विकल्पः। तस्माद् बृहत्पृष्ठ इति नियमः क्रियते। अनादेशेऽग्निष्टोमः प्राप्तस्तस्मादतिरात्र इत्युच्यते। तस्य सर्वमैकाहिकं शस्यम्। प्रातःसवने होत्रकाणां षळहे स्तोत्रियाणां द्वितीया नृं या उ (?तृचास्तु) ऐकाहिका अनुरूपा बृहतः स्तोत्रियानुरूपौ धाय्या **उभयं** (ऋ ८, ६१) इति सूक्तं सामप्रगाथम्। **त्वमिन्द्र प्र तूर्तिषु** (ऋ ८, ९९, ५), **त्वमिन्द्र यशा असि** (ऋ ८, ९०, ५) इति ब्राह्मणाच्छंसिन स्तोत्रियानुरूपौ। उक्थेषु **प्र मंहिष्ठाय गायत** (ऋ ८, १०३, ८), **तं ते मदं गृणीमसि** (ऋ ८, १५, ४), **गायन्ति त्वा गायत्रिणः** (ऋ १, १०, १) इति स्तोत्रियानुरूपाः, शेषमैकाहिकम्॥ २४॥

---

१. न **विविद्धा॰** मूको। २. **॰स्पतिसर्व** मूको। ३-३. **॰मुखीया इत्यु॰** मूको। ४-४. नास्ति मूको। ५. **एतयः** मूको। ६. **दरयति** मूको।

[मासद्वयानन्तरं व्युष्टिद्विरात्रः]

**द्वयोर्मासयोर्व्युष्टिद्व्यहः॥ २५॥**

वैशाखादूर्ध्वं[1] द्वयोर्मासयोर्व्युष्टिद्व्यहो नाम द्विरात्रो भवति। आषाढशुक्ले भवति॥ २५॥

[पूर्वोक्तद्विरात्रेऽह्नोः स्वरूपम्]

**अग्निष्टोमः पूर्वमहः सर्वस्तोमोऽतिरात्र उत्तरम्॥ २६॥**

व्युष्टिद्व्यहो गोआयुषीभ्यां व्याख्यातः। तस्य पूर्वमहरग्निष्टोमसंस्थो (?संस्थं) भवति। आयुषोऽतिदेशादुक्थ्यः प्राप्तस्तस्मादग्निष्टोम इत्याह। सर्वस्तोमोऽतिरात्र उत्तरम्। द्व्यहस्योत्तरमहः सर्वस्तोमो भवत्यतिरात्रसंस्थश्च। गवा व्याख्याततत्वादुक्थ्यः प्राप्तः, तस्मादतिरात्र इत्याह॥ २६॥

[श्रावणशुक्लपक्षे क्षत्रस्य धृतिरित्यग्निष्टोमसंस्थो ज्योतिष्टोमः]

**उत्तर आपूर्यमाणपक्षे क्षत्रस्य धृतिरग्निष्टोमः॥ २७॥**

उत्तर आपूर्यमाणपक्ष आषाढ्याः [2]उत्तर आपूर्यमाणपक्षः[2] शुक्लपक्षः। श्रावणस्य शुक्लपक्षे क्षत्रस्य धृतिर्नाम ज्योतिष्टोम एवाग्निष्टोमसंस्थो भवति। व्याख्यातः॥ २७॥

॥ इति नवमे तृतीयः खण्डः॥

---

१. वैसस्याद्° मूको। २-२. उत्तरयोरापू° मूको।

## अथ नवमेऽध्याये चतुर्थः खण्डः

[राजसूयोपसंहारः]

**इति राजसूयाः ॥ १ ॥**

इत्येते राजसूया नाम एकाहा व्याख्याताः। **अथ राजसूयाः** (आश्रौ ९, ३, १) इत्यधिकृत्य यावन्त एकाहा वक्ष्यन्ते, सर्वेषां राजसूयसंज्ञा प्राप्ता, तस्मात् परिच्छेदः क्रियते **इति**[1] **राजसूया** इति। यदि **अथ राजसूयाः** इत्यनुक्ते **इति राजसूयाः** इत्याह, चातुर्मास्यानामपि[2] [3]राजसूयसंज्ञा स्यात्[3]। तस्मादुभयमुच्यते। **तेनेष्ट्वा राजा राजसूयेन यजेत** (आश्रौ ९, ९, १९) इत्युक्त एते सोमाः प्रत्येतव्याः॥ १ ॥

[राजसूयेष्वभिषेचनीयदशपेयाभ्यामन्यत्र दक्षिणाविधानम्]

**न्यायक्लृप्ताश्च दक्षिणा अन्यत्राभिषेचनीयदशपेयाभ्याम् ॥ २ ॥**

**इति राजसूया** (आश्रौ ९, ४, १) इत्युक्त्वाऽभिषेचनीयादिषु[4] दक्षिणा आम्नातास्तस्मादन्येषु राजसूयक्रतुषु दक्षिणाप्रतिषेधः प्राप्तस्तस्मादिदमुच्यते—न्यायक्लृप्ताश्च[5] दक्षिणा इति। न्यायः शास्त्रपरिभाषा। परिभाषाक्लृप्ताश्च दक्षिणा भवन्ति। **एवंप्रायाश्च दक्षिणा अर्वागतिरात्रेभ्यः। साहस्रास्त्वतिरात्राः। द्व्यहास्त्र्यहाश्च** (आश्रौ ९, १, ६-८) इति न्यायक्लृप्ताः। चशब्दः समुच्चयार्थः। राजसूयेष्वाम्नाता दक्षिणा भविष्यन्तीति न्यायक्लृप्ताश्चेति। यत्राऽऽम्नाता दक्षिणा, तत्रापि समुच्चये प्राप्ते प्रतिषेधः क्रियते—अन्यत्राभिषेचनीयदशपेयाभ्याम् इति। अभिषेचनीये च प्रत्यक्षक्लृप्ता दक्षिणा। ताभ्यामन्यत्र न्यायक्लृप्ता भवन्ति। अभ्यारोहणीये द्वादशशतम्। अभिषेचनीये दशपेये च यथाक्लृप्ताः[6]। केशवपनीये सहस्रं, व्युष्टिद्विरात्रे च। क्षत्रस्य धृतावग्निष्टोमे[7] द्वादशशतम् ॥ २ ॥

---

१. नास्ति मूको। २. द्र. आश्रौ ९, २, १-२५। ३-३. **राजसूय स्यात्** मूको। ४. **इत्युक्तामभि°** मूको। ५. **यावत्यो वक्लृप्ता°** मूको। ६. द्र. आश्रौ ९, ४, ३; ७। ७. **धृतिरग्नि°** मूको।

[अभिषेचनीये मुख्येषु प्रतिपुरुषं द्वात्रिंशत् सहस्राणि गावो दक्षिणा]

**अभिषेचनीये तु द्वात्रिंशतं द्वात्रिंशतं सहस्राणि पृथङ्मुख्येभ्यः ॥ ३ ॥**

अभिषेचनीये तु दक्षिणा वक्ष्यन्ते—द्वात्रिंशतं द्वात्रिंशतं गवां सहस्राणि पृथक् प्रतिपुरुषं मुख्येभ्यो ददाति। होताऽध्वर्युर्ब्रह्मोद्गातेत्येते मुख्याः। दक्षिणाकाले दक्षिणापथेनानीता दक्षिणा विभज्य प्रतिपुरुषं यजमानो दक्षिणां ददाति। पृथगिति वचनाद् मुख्येभ्यो या दक्षिणाश्चोदितास्ताः समवेता न[१] ददाति, विभज्य पृथक् प्रतिपुरुषं ददाति। एवं द्वितीयिभ्यस्तृतीयिभ्यः, एवं पादिभ्यः ॥ ३ ॥

[मैत्रावरुण-प्रतिप्रस्थातृ-ब्राह्मणाच्छंसि-प्रस्तोतृभ्यः षोडश षोडश सहस्राणि दक्षिणाः]

**षोळश षोळश द्वितीयिभ्यः ॥ ४ ॥**

षोळश षोळश सहस्राणि मुख्यानुक्रमेण द्वितीयिभ्यो दद्यात्—मैत्रावरुण-प्रतिप्रस्थातृ-ब्राह्मणाच्छंसि-प्रस्तोतृभ्यः ॥ ४ ॥

[अच्छावाक-नेष्ट्राग्नीध्र-प्रतिहर्तृभ्योऽष्टावष्टौ सहस्राणि, ग्रावस्तुदुन्नेतृ-पोतृ-सुब्रह्मण्येभ्यश्च चत्वारि चत्वारि सहस्राणि दक्षिणाः]

**अष्टावष्टौ तृतीयिभ्यश्चत्वारि चत्वारि पादिभ्यः ॥ ५ ॥**

अष्टावष्टौ सहस्राणि तृतीयिभ्यः, अच्छावाकनेष्ट्राग्नीध्रप्रतिहर्तृभ्यः। चत्वारि चत्वारि सहस्राणि, पादिनश्चतुर्थिनः[२], तेभ्यः पादिभ्यो दद्याद् ग्रावस्तुदुन्नेतृपोतृ-सुब्रह्मण्येभ्यः। इह प्रवर्तितो[३] दक्षिणाविभागः। एवं सर्वक्रतुषु ज्योतिष्टोमादिषु दक्षिणाविभागो ज्ञेयः ॥ ५ ॥

[संसृपेष्टिषु दक्षिणाविधानम्]

**संसृपेष्टीनां हिरण्यमाग्नेय्यां वत्सतरी सारस्वत्याम-वध्वस्तः सावित्र्यां श्यामः पौष्ण्यां शितिपृष्ठो बार्हस्पत्यायामृषभ ऐन्द्र्यां महानिरष्टो वारुण्याम् ॥ ६ ॥**

संसृपेष्टीनां, **संसृपेष्टिभिश्चरित्वा दशपेयेन यजेत** (आश्रौ ९, ३, १७) [४]इत्युक्तम्, तासां[४] संसृपेष्टीनां देवता दक्षिणाश्च वक्ष्यन्ते। हिरण्यमाग्नेय्याम्। अग्निर्देवता यस्याः सा आग्नेयी, तस्या नित्ये याज्यानुवाक्ये। हिरण्यदक्षिणाः प्रमाणाभावाद् यथोत्साहं दद्यात्। वत्सतरी सारस्वत्याम्। सरस्वती देवता यस्याः सा सारस्वती, तस्या अन्वारम्भणीयाया[५] याज्यानुवाक्ये शंस्ये। वत्सतरी दक्षिणा। वत्सत्वं

---

१. नास्ति मूको। २. °**श्चतुर्थास्तेभ्यः** मूको। ३. **प्रवर्हितो** मूको। ४-४. **सूक्तं वासां** मूको। ५. °**रम्भणीयां** मूको।

तीर्णा वत्सतरी द्विवर्षा भवति। अवध्वस्तः सावित्र्याम्। सविता देवता यस्याः सा सावित्री। वैश्वदेव्यामुक्ते[1] याज्यानुवाक्ये। गौरवध्वस्तो दक्षिणा। अनेन (?न्येन) वर्णेन अन्यो वर्णश्चोदि (?रि) तो भवति सोऽवध्वस्तः। श्यामः पौष्ण्याम्। पूषा देवता यस्याः [?सा पौष्णी], वैश्वदेव्याम्[1] उक्ते याज्यानुवाक्ये। गौः श्यामवर्णो दक्षिणा। शितिपृष्ठो बार्हस्पत्यायाम्। बृहस्पतिर्देवता यस्याः सा बार्हस्पत्या। तस्या याज्यानुवाक्ये वाजपेये वक्ष्यति। शितिपृष्ठो गौर्दक्षिणा चित्रपृष्ठः। ऋषभमैन्द्र्याम्। इन्द्रो देवता यस्या [?सा ऐन्द्री]। नित्ये याज्यानुवाक्ये। त्रिवर्षो गौर्ऋषभो भवति। महानिरष्टो वारुण्याम्। वरुणो देवता यस्याः सा वारुणी। वरुणप्रघासे याज्यानुवाक्ये। महान् वृद्धो भवति, [2]निरष्टश्छिन्नवृषणः[2]। [? [3]संसृपेष्टीनां दक्षिणाः[3]] समाप्ताः। इदानीं दशपेयस्य दक्षिणा वक्ष्यन्ते॥ ६॥

[दशपेये दक्षिणाविधानम्]

**साहस्रो दशपेयः॥ ७॥**

गोसहस्रं दक्षिणा यस्य सोऽयं साहस्रो दशपेयः॥ ७॥

[तत्रान्यासां च वक्ष्यमाणदक्षिणानां विधानम्]

**इमाश्चादिष्टदक्षिणाः॥ ८॥**

दशपेये सहस्रं दक्षिणाः। इमाश्चोत्तरत्र या आदिष्टाः **सौवर्णी स्रगुद्गातुः** (आश्रौ ९, ४, ९) इत्येवमाद्याः। ताश्च दशपेये भवन्ति दक्षिणाः॥ ८॥

[दशपेय उद्गातुर्दक्षिणाविशेषः]

**सौवर्णी स्रगुद्गातुः॥ ९॥**

सौवर्णी पुष्पमालोद्गातुर्भवति। गोसहस्रं सर्वर्त्विजां साधारणम्। प्रतिपुरुषं विशेषदक्षिणा इमाः॥ ९॥

[प्रस्तोतृ-प्रतिहर्त्रोर्दक्षिणाविशेषः]

**अश्वः प्रस्तोतुर्धेनुः प्रतिहर्तुः॥ १०॥**

अश्वः प्रस्तोतुर्दक्षिणाऽधिका भवति। आशुगतिः अश्वः। धेनुः प्रतिहर्तुः। दोग्ध्री धेनुर्भवति। [?सा] प्रतिहर्तुरधिका भवति॥ १०॥

[सुब्रह्मण्यायै दक्षिणाविशेषः]

**अजः सुब्रह्मण्यायै॥ ११॥**

अजः सुब्रह्मण्यायै दक्षिणा अधिका भवति॥ ११॥

---

१. द्र. आश्रौ २, १६, १-१५। २-२. **निरष्टधृषणां** मूको। ३-३. नास्ति मूको।

[अध्वर्योर्दक्षिणाविशेषः]

**हिरण्यप्राकाशावध्वर्योः ॥ १२ ॥**

हिरण्येन कृतौ प्राकाशौ प्रदीप्तौ (?प्रदीपौ) द्वावध्वर्योर्दक्षिणा ॥ १२ ॥

[प्रतिप्रस्थातुर्दक्षिणाविशेषः]

**राजतौ प्रतिप्रस्थातुः ॥ १३ ॥**

प्रतिप्रस्थातुः। राजतं रूप्यम्। रजतेन कृतौ प्राकाशौ प्रदीप्तौ (?प्रदीपौ) राजतौ द्वौ प्रतिप्रस्थातुर्दक्षिणा ॥ १३ ॥

[ब्रह्मणो दक्षिणाविशेषः]

**द्वादश पष्ठौह्यो गर्भिण्यो ब्रह्मणः ॥ १४ ॥**

त्रिवर्षा गावः पष्ठौह्यो भवन्ति।[1]ता द्वादश[1] गर्भिण्यो ब्रह्मणो दक्षिणा ॥ १४ ॥

[मैत्रावरुणस्य दक्षिणाविशेषः]

**वशा मैत्रावरुणस्य ॥ १५ ॥**

वन्ध्या वशा भवति। गोवशा मैत्रावरुणस्य दक्षिणा ॥ १५ ॥

[होतुर्दक्षिणाविशेषः]

**रुक्मो होतुः ॥ १६ ॥**

सौवर्णं चान्द्रम्[2] अलङ्कारो रुक्म इत्युच्यते। रुक्मो होतुर्दक्षिणा ॥ १६ ॥

[ब्राह्मणाच्छंसि-पोतृ-नेष्टृभ्यो दक्षिणाविशेषः]

**ऋषभो ब्राह्मणाच्छंसिनः। कार्पासं वासः पोतुः। क्षौमी बरासी नेष्टुः ॥ १७ ॥**

त्रिवर्षः सेचनसमर्थः ऋषभो भवति। स ब्राह्मणाच्छंसिनो दक्षिणा। कार्पासं वासः पोतुः। कार्पाससूत्रेण व्यूतं वस्त्रं कार्पासं वासः पोतुर्दक्षिणा। उत्तरत्र[3] क्षौमग्रहणम्, तस्मात् कार्पासग्रहणम्। क्षौममतसीविकारः। क्षौमेण व्यूता क्षौमी। बरासी, स्थूलसूत्रेण व्यूता बरासी भवति। सा नेष्टुर्दक्षिणा। कार्पासाधिकारात् क्षौमी इत्याह ॥ १७ ॥

[अच्छावाकस्य दक्षिणाविशेषः]

**एकयुक्तं यवाचितमच्छावाकस्य ॥ १८ ॥**

---

१-१. नास्ति मूको। २. चंद्रं मूको। ३. तनुर मूको।

एको गौः युक्तो[१] यत्र[२] एकयुक्तं[३] यवाचितं यवपूर्णं शकटम् अच्छावाकस्य दक्षिणा ॥ १८ ॥

[आग्नीध्रस्य दक्षिणाविशेषः]

**अनड्वानाग्नीध्रस्य ॥ १९ ॥**

अनण्डोऽनड्वान् भवति। अनड्वान् आग्नीध्रस्य दक्षिणा ॥ १९ ॥

[उन्नेतृ-ग्रावस्तुतोर्दक्षिणाविशेषः]

**वत्सतर्युन्नेतुस्त्रिवर्षः साण्डो ग्रावस्तुतः ॥ २० ॥**

वत्सतरी व्याख्याता[४]। सोन्नेतुर्दक्षिणा। त्रिवर्षः साण्डो ग्रावस्तुतः। त्रीणि वर्षाणि यस्य सः त्रिवर्षो गौः। साण्डः, सवृषणः साण्डो भवति। [? वर्षाः] तिस्रोऽनुभवतीति त्रिवर्षः। महदधिकारात् त्रिवर्षो इत्याह। निरष्ट इत्यधिकारात् साण्ड इत्याह। एवंगुणसम्पन्नो [? गौः] ग्रावस्तुतो दक्षिणा। दशपेयस्य दक्षिणा उक्ताः। समाप्ता राजसूयदक्षिणाः ॥ २० ॥

[इति नवमे चतुर्थः खण्डः]

---

१. प्रयुक्तः मूको। २. नास्ति मूको। ३. एकप्रयुक्तं मूको। ४. वत्सत्वं तीर्णा वत्सतरी द्विवर्षा (आश्रौ दे. भा. ९, ४, ६)।

## अथ नवमेऽध्याये पञ्चमः खण्डः

[उशनसस्तोमैकाहनिरूपणम्]

**उशनसस्तोमेन गरगीर्णमिवाऽऽत्मानं मन्यामानो यजेत॥ १ ॥**

उशनसस्तोमो नाम एकाहः। पुनस्स्तोम[1] इत्युच्यते छन्दोगानाम्। उशनस-स्तोमेन गरगीर्णमिवात्मानं मन्यमानो यजेतेति[2]। गरो नाम विषम्। गीर्णं भक्षितम्। विषं भक्षितमिति गरगीर्णमिवात्मानं मन्यमानो यजमान उशनस-स्तोमेन यजेत। **यो बहु प्रतिगृह्य गरगीर्णमिव मन्येत** (तांब्रा १९, ४, २) इत्युक्तं छन्दोगानाम्। ऐकाहिकं शस्यम्॥ १॥

[उशनसस्तोम-गोस्तोम-भूमिस्तोम-वनस्पतिसवानामेकाहानां सूक्तमुखीयाना-मृचां कथनम्]

**'उशना यत् सहस्यैरयातं', 'त्वमपो यदवे तुर्वशाय' इति सूक्तमुखीये। गोस्तोम-भूमिस्तोम-वनस्पतिसवानां 'न ता अर्वा रेणुककाटो अश्नुते', 'न ता नशन्ति न दभाति तस्करः', 'बळित्था पर्वतानां', 'दृळ्हा चिद् या वनस्पतीन्', 'देवभ्यो वनस्पते हवींषि', 'वनस्पते रशनया नियूया' इति सूक्तमुखीयाः॥ २॥**

**उशना यत् सहस्यैरयातम्** (ऋ ५, २९, ९), **त्वमपो यदेव तुर्वशाय** (ऋ ५, ३१, ८) इत्येते द्वे ऋचौ सूक्तमुखीये भवतः। मरुत्वतीयसूक्तस्य पुरस्तादेका निष्केवल्ये द्वितीया। उक्थ्यो भवति। **एतो न्विन्द्रं स्तवाम शुद्धम्** (ऋ ८, ९५, ७), **आ त्वा गिरो रथीरिव** (ऋ ८, ९५, १) इति स्तोत्रियानुरूपौ[4]। लिङ्गाभावात् समानोऽनुरूपः[5]। गोस्तोमं नाम एकाहः, भूमिस्तोमो नाम एकाहः, वनस्पतिसवो नाम एकाहः। एतेषामतिदेशाभावादैकाहिकं[6] शस्यम्। सूक्तमुखीया एव विशेषः। **न ता अर्वा रेणुककाटो अश्नुते** (ऋ ६, २८, ४), **न ता नशन्ति न दभाति तस्करः** (ऋ ६, २८, ३) इत्येते गोस्तोमस्य सूक्तमुखीये। **बळित्था पर्वतानाम्** (ऋ५, ८४, १), **दृळ्हा चिद् या वनस्पतीन्** (ऋ ५, ८४, ३) इति भूमिस्तोमस्य सूक्तमुखीये। **देवभ्यो**

---

१. **स्तोमः** मूको। २. **यजेत** मूको। ३. **गरगीरिव** तांब्रा १९, ४, २। ४. °**यानुरूपा** मूको। ५. **सनायोनु** मूको। ६. **एतेषा प्रतिदे**° मूको।

**वनस्पते हवींषि** (ऋखि ५, ७, २, ७), **वनस्पते रशनया नियूया** (ऋखि ५, ७, २, ९) इति सूक्तमुखीये वनस्पतिसवस्य। आनन्तर्येणैकैकस्य द्वे द्वे सूक्तमुखीये भवतः। तत्र **वनस्पते रशनया नियूया** (ऋ १०, ७०, १०; ऋखि ५, ७, २, ९) इति समानम्। **एतस्य समाम्नायस्य** (आश्रौ १, १, १) इति आप्रीसूक्ते[1] आम्नाता प्राप्ता वळश (वाध्र्यश्व) नाम्ना हि अन्ते अहि (? अह्नि) अन्ते भवति। खैलिकी एव कर्तव्या। आम्नायानुक्रमात् **देवेभ्यो वनस्पते हवींषि** (ऋखि ५, ७, २, ७) इत्येतस्या अनन्तरमाम्नाता। अनन्तरा च प्रयुज्यते॥ २॥

[बृहस्पतिसवस्य कामनाभेदनिरूपणम्]

**आधिपत्यकामो ब्रह्मवर्चसकामो वा बृहस्पतिसवेन यजेत॥ ३॥**

आधिपत्यमिच्छतीत्याधिपत्यकामः। पुरोधाकामो भवति। ब्रह्मवर्चसमिच्छति ब्रह्मवर्चसकामः। ब्रह्मतेजो ब्रह्मवर्चसम्। आधिपत्यकामो वा बृहस्पतिसवेन यजेत, ब्रह्मवर्चसकामो वा यजेत। तस्यैकाहिकं शस्यम्[2]॥ ३॥

[बृहस्पतिसवस्याऽऽज्यादिसूक्तस्थानेषु तृचनिरूपणम्]

**तस्य तृचाः सूक्तस्थानेषु॥ ४॥**

तस्य बृहस्पतिसवस्याऽऽज्यादिषु शस्त्रेषु यानि सूक्तानि, तेषां स्थानेषु यान्यादिश्यन्ते, ते तृचा भवन्तीति वेदितव्यम्। लाघवार्थः सूत्रारम्भः। तत्र तत्र तृचग्रहणे[3] क्रियमाणेऽधिकपादग्रहणे वा गुरूक्तं स्याद् इति। न चैत्र वक्तव्यम् अक्षरलाभाभावात्[4]। तत्र तत्र तृचग्रहणे[3] क्रियमाणेऽधिकपादग्रहणे तावन्त्येवाक्षराणि होत्रकाणां प्रत्यक्षं कल्प्यन्ते। तस्मात् परिभाषारम्भे प्रयोजनं तृचाः सूक्तस्थानेष्वित्युक्तम्। यथेह तृचाः कल्प्यन्ते होतुर्होत्रकाणां च, तथाऽन्यत्रापि तृचक्लृप्तिर्भवति। **येऽर्वाक् त्रिवृतः स्तोमाः स्युस्तृचा एव तत्र सूक्तस्थानेषु** (आश्रौ ९, १, १७) इति। तत्रापि [5]तृचाः। एवं[5] होतुश्च होत्रकाणां च तृचक्लृप्तिः सिद्धा भवति। अन्यथा होत्रकाणां न प्राप्नोति, सूक्तस्थानाभावात्॥ ४॥

[प्रातःसवने सूक्तमुखीयाऽऽज्यानामृचां मध्यन्दिनसवने
मरुत्वतीयवैश्वदेववैश्वानराऽऽग्निमारुततृचानां कथनम्]

**'अग्निर्देवेषु राजति' इत्याज्यं; 'यस्तस्तम्भ, धुनेतयः' इति सूक्तमुखीये; 'इन्द्र मरुत्व इह, नृणामु त्वा' इति मध्यंदिने; 'उदु ष्य देवः सविता हिरण्यया'; 'धृतवती भवनानामभिश्रिया', 'इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितं', 'स्वस्ति नो मिमीतामश्विना भगः' इति वैश्वदेवं; 'वैश्वानरं मनसाग्निं निचाय्य', 'प्रयन्तु वाजास्तविषीभिरग्नयः', 'समिद्धमग्निं समिधा गिरा गृणे' इत्याग्निमारुतं होत्रका ऊर्ध्वं स्तोत्रियानुरूपेभ्यः प्रथमोत्तमांस्तृचाञ्शंसेयु॥ ५॥**

---

१. अमीसूक्ते मूको। २. नास्ति मूको। ३. त्रिवर्गग्र॰ मूको। ४. अकुशलाभावात् मूको। ५-५. य एवं मूको।

प्रातःसवने च **अग्निर्देवेषु राजति** (ऋ ५, २५, ४) इत्याज्यं तृचो भवत्यैकाह्निकस्याज्यस्य सूक्तस्य स्थाने। ऐकाहिकं प्रउगम्। **यस्तस्तम्भ, धुनेतयः** (ऋ ४, ५०, १-२) इत्येते ऋचौ सूक्तमुखीये भवतः। आनन्तर्येण[1] आद्या मरुत्वतीये, द्वितीया निष्केवल्ये तृचस्य पुरस्तात् शस्येते[2]। **इन्द्र मरुत्व इह** (ऋ ३, ५१, ७-९) इति तृचः, **नृणामु त्वा** (ऋ ३, ५१, ४-६) इति तृचः, इत्येतौ तृचौ मध्यंदिनो भवति। **मध्यंदिन इत्युक्त एते शस्त्रे प्रतीयात्** (आश्रौ ७, ५, १९) इति वचनात्। **इन्द्र मरुत्व इह** (ऋ ३, ५१, ७-९) इति मरुत्वतीये तृचः, **नृणामु त्वा** (ऋ ३, ५१, ४-६) इति निष्केवल्ये। **उदु ष्य देवः सविता हिरण्यया** (ऋ ६, ७१, १-३) इति सावित्रस्य स्थाने तृचः। **घृतवती भुवनानामभिश्रिया** (ऋ ६, ७०, १-३) इति द्यावापृथिवीयस्य स्थाने तृचः। **इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितम्** (ऋ ३, ६०, ५-७) इत्यार्भवस्य स्थाने तृचः। **स्वस्ति नो मिमीतामश्विना भगः** (ऋ ५, ५१, ११-१३) इति वैश्वदेवस्य स्थाने तृचः। इति वैश्वदेवं शस्त्रम्। **ध्रुवाः शस्त्राणामातानाः** (आश्रौ ७, १, ७), **सूक्तान्येव सूक्तस्थानेषु** (आश्रौ ७, १, ८)। **वैश्वानरं मनसाऽग्निं निचाय्य** (ऋ ३, २६, १-३) इति तृचो वैश्वानरीयस्य स्थाने। **प्रयन्तु वाजास्तविषीभिरग्नयः** (ऋ ३, २६, ४-६) इति तृचः आग्निमारुतस्य[3] स्थाने। **समिद्धमग्निं समिधा गिरा गृणे** (ऋ ६, १५, ७-९) इति तृचो जातवेदस्यस्य स्थाने। इत्येतच्चाग्निमारुतं शस्त्रम्। **ध्रुवाः शस्त्राणामातानाः** (आश्रौ ७, १, ७)। अग्निष्टोमोऽयम्।

होत्रकाः प्रातःसवन ऊर्ध्वं स्तोत्रियानुरूपेभ्य ऐकाहिकानां शस्त्राणां प्रथमांश्च उत्तमांश्च तृचाञ्छंसेयुः। **आ नो मित्रावरुणा** (ऋ ३, ६२, १६-१८), **आ नो गतं रिशादसा** (ऋ ५, ७१, १-३), **प्र वो मित्राय** (ऋ ५, ६८, १-३) इति तृचाः। **प्रति वां सूर उदिते** (ऋ ७, ६६, ७-९) इति तृचाः।[4]इति मैत्रावरुणस्य[4]। **आ याहि सु षुमा हि ते** (ऋ ८, १७, १-९) इति नव ऋचः। **उद्घेदभि** (ऋ ८, ९३, १-३) इति तिस्रः। इति ब्राह्मणाच्छंसिनः। **इन्द्राग्नी आ गतं सुतम्** (ऋ ३, १२, १) **इन्द्राग्नी अपसस्परि** (ऋ ३, १२, ७), **तोशा वृत्रहणा हुवे** (ऋ ३, १२, ४) इति तिस्रः, **इन्द्राग्नी अवसा गतम्** (ऋ ७, ९४, ७-९) इति तृचः। इत्यच्छावाकस्य[5] ॥ ५ ॥

[माध्यन्दिने सवने प्रगाथेभ्य ऊर्ध्वं प्रथमोत्तमानां तृचानां शंसनम्]

**प्रगाथेभ्यस्तु माध्यंदिने ॥ ६ ॥**

माध्यंदिने प्रगाथेभ्यस्तु ऊर्ध्वमैकाहिकानां[6] तु शस्त्राणां प्रथमोत्तमांस्तृचाञ् छंसेयुः। तुशब्दोऽनुरूपाधिकारव्यावृत्त्यर्थः। **होत्रकाः** (आश्रौ ९, ५, ५) इति वर्तते। **कया नश्चित्र आ भुवत्** (ऋ ४, ३१, १), **कया त्वं न ऊत्या** (ऋ ८, ९३, १९), **कस्तमिन्द्र त्वा वसुम्** (ऋ ७, ३२, १४), **सद्यो ह जातः** (ऋ ३, ४८, १-३) इति तृचः। **वम्रीभिः पुत्रमग्रुवो अदानम्** (ऋ ४, १९, ९-११) इति तृचः। इति मैत्रावरुणस्य। **तं वो दस्ममृतीषहम्** (ऋ ८, ८८, १), **तत्त्वा यामि सुवीर्यम्** (ऋ ८, ३, ९), **उदु त्ये मधुमत्तमाः** (ऋ ८, ३, १५), **इन्द्रः पूर्भित्** (ऋ ३, ३४, १-

१. **आनन्तर्यया** मूको। २. **शस्यते** मूको। ३. **मारुतस्य** मूको। ४-४. नास्ति मूको द्र. आश्रौ ५, १०, २८। ५. द्र. आश्रौ ५, १०, २९। ६. **कथमैका°** मूको।

३) इति तृचः। **आपश्चित् पिप्युः स्तर्यः** (ऋ ७, २३, ४-६) इति तृचः। इति ब्राह्मणाच्छंसिनः। **तरोभिर्वो विदद्वसुम्** (ऋ ८, ६६, १), **तरणिरित् सिषासति** (ऋ ७, ३२, २०), **उदिन्न्वस्य रियते** (ऋ ७, ३२, १२-१४) इति तृचः, **हृदा इव कुक्षयः** (ऋ ३, ३६, ८-१०) इति तृचः। इत्यच्छावाकस्य[1] ॥ ६ ॥

[अनुसवनं दक्षिणाविधानम्]

**अनुसवनमेकादशैकादश दक्षिणा ॥ ७ ॥**

अनुसवनं, सवनं[2] सवनमनुसवनम्। सन्नेषु नाराशंसेषु दक्षिणा नीयन्ते[3]। एकादशैकादश गावो दक्षिणाः। प्रातःसवन एकादश, माध्यंदिन एकादश, तृतीयसवन एकादश। अनुसवनं दक्षिणाहोमः प्रतिग्रहश्च ॥ ७ ॥

[एकादश वा सहस्राणि गावो दक्षिणा]

**एकादशैकादश वा सहस्राणि ॥ ८ ॥**

अथवैकादशैकादश सहस्राणि गवामनुसवनं दीयन्ते ॥ ८ ॥

[एकादश वा शतानि गावो दक्षिणा]

**शतानि वा ॥ ९ ॥**

अथवाऽनुसवनम् एकादशैकादश शतानि दक्षिणा इति। अत्र त्रयो विकल्पाः त्रिनिविशमेके (? अभिनिविशन्त इत्येके) वर्णयन्ति। ब्राह्मणक्षत्रियविशाम् आनुपूर्व्येण त्रयाणां हि कल्पानामेकैकः कल्पः। ब्राह्मणो यजमान एकादश दक्षिणा ददाति। क्षत्रिय एकादश सहस्राणि ददाति। वैश्य एकादश शतानि ददाति। आनुपूर्व्यवचने एतदेव प्रयोजनम्। [4]विकल्पे सति[4] सहस्राणि वा इति वक्तव्यम् ॥ ९ ॥

[माध्यन्दिने सवनेऽश्वोऽधिकः दक्षिणा]

**अश्वो माध्यंदिनेऽधिकः ॥ १० ॥**

माध्यंदिने सवने अश्वः[5] अधिको दक्षिणा। अधिक इत्यनुच्यमाने[6] माध्यंदिने या दक्षिणा आदिष्टास्तासां वैकल्पिको विधिः अश्वः स्यात् ॥ १० ॥

[भ्रातृव्यवता भुवैकाहेन यजनम्]

**भुवा भ्रातृव्यवानधिबुभूषुर्यजेत ॥ ११ ॥**

भूर्नाम एकाहः तेन भुवा एकाहेन। भ्रातृव्यो द्वेष्यः। भ्रातृव्यो यस्य विद्यते स भ्रातृव्यवान्। भ्रातृव्यमधिभवितुमिच्छत्यधिबुभूषुः। भ्रातृव्यादधिकां विभूतिमिच्छति। एवंकामो भुवैकाहेन यजेत। तया तरस्तुति स्रुचे त [? तं] स* (?) वक्ष्यति।

---

१. द्र. आश्रौ ५, १६, ३। २. नास्ति मूको। ३. द्र. आपश्रौ १३, ५, १। ४-४. **क्रमेति** मूको। ५. पशुः मूको। ६. इत्युच्यमा॰ मूको। *-*. अस्पष्टः पाठः।

सूक्तमुखीये च वक्ष्यति। उक्थ्यसंस्थ एवेति छन्दोगवशात्॥ ११॥

[स्वर्गकामस्य सद्यस्क्रिया, अनुक्रिया, परिक्रिया वा यजमन्]

**सद्यस्क्रियाऽनुक्रिया परिक्रिया वा स्वर्गकामः॥ १२॥**

सद्यस्क्रीर्नाम[१] एकाहस्तेन सद्यस्क्रिया, अनुक्रीर्नाम[२] एकाहस्तेनानुक्रिया, परिक्रीर्नाम[३] एकाहस्तेन परिक्रिया च एतैस्त्रिभिरेकाहैः स्वर्गकामो यजेत। वा-शब्दः समुच्चयार्थः। उदिते दीक्षा, अनस्तमिते चावभृथः[४]। इदानीमेव सोमक्रयः[५]। इति छरमदयोः (?) संमील्य क्षियन्ते (?) अग्नीषोमीयस्य पशोः स्थानेऽग्नीषोमीयः पुरोळाशः। शतं प्रातरनूबन्धया सह पशूनालभन्ते। अनूबन्ध्यास्थाने मैत्रावरुण्यामीक्षा क्रियते[६]। आ [? मिक्षा स-] द्योमथितमाद्य (? ज्यं) भवति। वीक्ष्यथे (?) ब्रह्मेति। **साद्यस्क्रेषूर्वरा वेदिः** (आश्रौ ९, ७, १३)। **खल उत्तरवेदिः** (आश्रौ ९, ७, १४)। **खलेवाली यूपः** (आश्रौ ९, ७, १५)। **लाङ्गलेषा वा** (आपश्रौ २२, ३, ७)। **कलापी चषालः** (आश्रौ ९, ७, १८) इत्येवमादयः साद्यस्क्रेषु विकाराः[७]॥ १२॥

[अन्नाद्यकामस्यैकत्रिकेण त्र्येकेण वैकाहेन यजनम्]

**एकत्रिकेण त्र्येकेण वाऽन्नाद्यकामः॥ १३॥**

एकत्रिको नाम एकाहः। तेनैकत्रिकेण 'अन्नाद्यकामो यजेत'[८]। एकी[९] इति व्यत्यासेन[१०] स्तोमौ भवतः। त्र्येको नाम एकाहः। तेन त्र्येकेण चान्नाद्यकामो यजेत। वाशब्दः [११]समुच्चयार्थो न वैकल्पिकः[११]। एकी[१२] इति स्तोमे व्यत्यासः॥ १३॥

[दानशीलप्रजाकामस्य गोतमस्तोमेनैकाहेन यजनम्]

**गोतमस्तोमेन य इच्छेद्दानकामा मे प्रजा स्यादिति॥ १४॥**

गोतमस्तोमो[१३] नाम एकाहः। तेन गोतमस्तोमेन यो यजमानो [१४]यदीच्छेत् दानकामा[१४] प्रजा स्यादिति। इह लोके यावतीयं प्रजा सा [१५]ममैव गवादीनामर्थानां दानकामा[१५] कथं स्यादिति॥ १४॥

[पूर्वोक्तानां सप्तानामेकाहानां शस्त्राणां बृहस्पतिसवेनोक्तत्वम्]

**एतेषां सप्तानां शस्यमुक्तं बृहस्पतिसवेन॥ १५॥**

---

१. सद्यस्क्रिया नाम मूको। २. अनुक्रिया नाम मूको। ३. परिक्रिया नाम मूको। ४. वामथः मूको। द्र. अत्रत्या नारायणवृत्तिः। ५. स्तोमतमः मूको। ६. द्र. आपश्रौ २२, ३, ११। ७. द्र. आश्रौ ९, ७, १९। ८-८. नास्ति मूको। ९. एक मूको। १०. व्यत्यासं मूको। ११-११. °याथेतिकः मूको। १२. एकी मूको। १३. मानसः स्तोमो ना° मूको। १४-१४. यदासीत् तदा न कामी मूको। १५-१५. ममेव गवादीनर्थादा° मूको।

भूरादयः सप्तैकाहा व्याख्याताः। एतेषां सप्तानां शस्यमुक्तं व्याख्यातं बृहस्पतिसवेन। सूक्तमुखीया एव सुत्या वक्ष्यन्ते[१]। एतेषामित्युक्ते[२] साद्यस्क्राणाम् एव स्यादधिकारात्, तस्मात् सप्तग्रहणं भूप्रभृतीनामपि प्राप्त्यर्थम्॥ १५॥

[भूरादीनां सप्तानामेकाहानां सूक्तमुखीयानामृचां कथनम्]

**'त्वं भुवः प्रतिमानं पृथिव्याः', 'भुवस्त्वमिन्द्र ब्रह्मणा महान्', 'सद्यो ह जातो वृषभः कनीनः', 'त्वं सद्यो अपि वो जात इन्द्र', 'अनु त्वाऽहिघ्ने अथ देव देवाः', 'अनु ते दायि मह इन्द्रियाय', 'कथो नु ते परिचराणि विद्वान्' इति द्वे; 'एकस्य चिन्मे विभ्वस्त्वोजः', 'एकं नु त्वा सत्पतिं पाञ्चजन्यं', 'त्र्यर्यमा मनुषो देवताता', 'प्र घा न्वस्य महतो महान्', 'इत्था हि सोम इन्मद', 'इन्द्रो मदाय वावृधे' इति सूक्तमुखीयाः॥ १६॥**

**त्वं भुवः** (ऋ १, ५२, १३), **भुवस्त्वमिन्द्र** (ऋ १०, ५०, ४) इति भुव एकाहस्यैते सूक्तमुखीये भवतः। **सद्यो ह जातः** (ऋ ३, ४८, १), **त्वं सद्यः** (ऋ ३, ३२, १०) इत्येते सूक्तमुखीये साद्यस्क्रस्य। **शेषो बृहस्पतिसवेन** (आश्रौ ९, ७, ३)। **मित्रं हुवे** (ऋ १, २, ७) * स ग अदसि हि ष्टि च याती* **यस्त इन्द्र महीरपः** (ऋ ८, ६, १६) इति विधो (?धे) रूपि समान (?त) यान्वारभ (?म्भ) इति। इयं चाशस्य (?स्या) **इन्द्राग्नी युवाम्** (ऋ ६, ६०, ७) इति स्तोत्रियानुरूपाः प्रातःसवने। **श्रायन्त इव सूर्यम्** (ऋ ८, ९९, ३), **बन्महाँ असि** (ऋ ८, १०१, ११) इति माध्यंदिने ब्राह्मणाच्छंसिनः। एतेनैवंक्लृप्तेन साद्यस्क्रेणाऽनुक्रीर्व्याख्यातः, द्व्य (?द्व्य)-हीने भवति, अनुक्ताधारस्य भवति।

**अनु त्वाऽहिघ्ने अथ देव देवाः** (ऋ ६, १८, १४), **अनु ते दायि** (६, २५, ८) इति सूक्तमुखीये। एवंक्लृप्तेन साद्यस्क्रेण परिक्रीर्व्याख्यातः। **कथो नु ते परिचराणि विद्वान्** (ऋ ५, २९, १३-१४) इति द्वे सूक्तमुखीये। एकत्रिक एवंक्लृप्तेन साद्यस्क्रेण व्याख्यातः। निगदेनैव व्याख्यातं स्तोत्रियानुरूपाणां प्रमाणम्। [३]बृहतीकारं प्रगाथाः पृष्ठे-ष्वेवमेव[३] स्तुतत्वात्। प्रगाथेषु सर्वा बृहत्य एव कर्तव्याः। **एकस्य चिन्मे** (ऋ १, १६५, १०), **एकं नु त्वा** (ऋ ५, ३२, ११) इत्येते सूक्तमुखीये एकत्रिकस्य[४]। ककुबुत्त-राकारं[५] प्रगाथाः *ककुबुउत्तरा अही ति सु षु पृष्टे स्तुत्त में*। **त्र्यर्यमा** (ऋ ५, २९, १), **प्र धान्वस्य** (ऋ २, १५, १) इति सूक्तमुखीये। सर्वेषु साद्यस्क्रेष्व-

---

१. रक्ष्यंते मूको। २. एवमित्यु° मूको। ३-३. बृहतीकारः प्रगाथा पृष्टे हि भव मूको। द्र. आश्रौ ५, १५, १०-११ देवत्रातः। ४. इत्यतः परम्-एवं न साद्यस्क्रेण शंस्यंस्य निगदोक्ता स्तोत्रियानुरूपाणां प्रमाणं बृहतीकारः प्रगाथाः पृष्ठे हिंमेवस्तुत्वात् प्रगाथेषु सर्वा बृहत्यः एव कर्तव्याः। एकस्य चिन्मेकं तु त्वेत्येते सूक्तमुखी त्रिकस्य एव न साद्यस्क्रेण शस्यं निगदोक्ता स्तोत्रियानुरूपाणां प्रमाणं इति पुनरुक्तं मूको। ५. °बुत्तराकारो मूको। *-* अस्पष्टः पाठः।

ग्नीषोमीयसवनीयाऽनूबन्ध्यया[1] सह पशूनालभन्ते। यदि तेषां पशूनां भिन्नकाला इज्या भवन्ति। तथा [2]सति त्वावाहने[2] देवताया अनन्तरं वनस्पतिमावाहयेत्। इज्याक्रमेण हि देवता-नामावाहनम्। स्विष्टकृद्देवता तु संततमेव[3] यथास्थाने आवाह्या। कथं[4]। तन्त्राणां व्यापित्वात्।

गोतमस्तोमस्य बृहस्पतिसवेन शस्यम्। **इत्था हि** (ऋ १, ८०, १), **इन्द्रो मदाय वावृधे** (ऋ ३, ८१, १) इति सूक्तमुखीये। **श्रायन्त इव** (ऋ ८, ९९, ३) इति [5]ब्राह्मणाच्छंसिनः स्तोत्रियोऽनुरूपो[5] ब्राह्मणाच्छंसिपृष्ठेषु[6] षोळश[7] स्तोमाः। होत्रकाणाम् अष्टादश ऋचः शस्त्राणां भवन्ति। **अपरिमिताभिरुत्तरयोः** (आश्रौ ७, १२, ५) इति वचनम्। तस्मादूर्ध्वं प्रगाथेभ्योऽष्टर्चावापः[8] प्राप्तः। न तु कर्तव्य आवापः। **एकां द्वे न द्वयोः सवनयोः स्तोममतिशंसेद्, दीर्घारण्यानि ह वै भवन्ति यत्र बह्वीभिः स्तोमोऽतिशस्यते। अपरिमिताभिस्तृतीयसवने** (ऐब्रा ६, २३) इति ब्राह्मणम्॥ १६॥

[इति नवमे पञ्चमः खण्डः]

---

१. **नूबंध्या सह** मूको। २-२. **तसिश्चावा** मूको। ३. **संततदेव** मूको। ४. **का** मूको। ५-५. **ब्राह्मणः स्तोत्रियानुरूपः** मूको। ६. **ब्राह्मणपृष्ठेषु** मूको। ७. **स्तोमः** मूको। ८. द्र. आश्रौ ७, १२, १।

## अथ नवमेऽध्याये षष्ठः खण्डः

[गोतमस्तोमस्यान्तरुक्थ्यकरणम्]

**गोतमस्तोममन्तरुक्थ्यं कुर्वन्ति॥ १॥**

गोतमस्तोममेकाहमन्तरुक्थ्यं कुर्वन्ति सहकारिणः। अग्निष्टोममन्तरुक्थ्यं कुर्वन्ति। गोतमस्तोममेकाहमन्तरुक्थ्यम् इत्यनुभूतानि कुर्वन्ति। कथम्। आग्निमारुते। यज्ञायज्ञीयादनन्तरं त्रिषु उक्थ्यस्तोत्रियेषु[1] त्रिरुक्थ्यसामभिः स्तुवते। अध्वर्यवश्च त्रीनुक्थ्यग्रहान्[2] आग्निमारुतस्योक्थ्यपात्रेण सह गृह्णन्ति, आग्निमारुतान्ते सर्वान्तर्ग्रहान्[3] जुह्वति। तथा क्रियमाणे ग्रहान्तरुक्थ्यो भवति। तदपि विधानं भवति। अधिकारव्यवायात् पुनर्गोतमस्तोमग्रहणम्॥ १॥

[ग्रहान्तरुक्थ्यो भवति चेत्परिधानीयाया ऋचः पुरस्तादाग्निमारुतशस्त्र-स्याऽऽवापः]

**ग्रहान्तरुक्थ्यश्चेद् 'अग्ने मरुद्भिर्ऋक्वभिः पा इन्द्रावरुणाभ्यां मत्स्वेन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यां सजूः' इत्याग्निमारुते पुरस्तात् परिधानीयाया आवपेत॥ २॥**

यदि ग्रहान्तरुक्थ्यो भवति, तस्या विधानं वक्ष्यते। **अग्ने मरुद्भिः** इति यथासमाम्नातामृचम् आग्निमारुते शस्त्रे पुरस्तात् परिधानीयाया आवपेत। एतया ग्रहाः स्तुताः सन्तो वषट्कारे हूयन्ते चेदित्यनित्यभावे। अनित्याः। केचिदध्वर्यव[4] आग्निमारुत उक्थ्यग्रहान् गृह्णन्ति। केचिन्न गृह्णन्ति। ये न गृह्णन्ति, तैः सह प्रयोगे ग्रहान्तरुक्थ्यो न भवति। तथा सति **अग्ने मरुद्भिः** इत्येतस्या ऋच आवापो न क्रियते। यद्यध्वर्यवो ग्रहान्तरुक्थ्यं न कुर्वन्ति, छन्दोगास्त्वन्तरुक्थ्यं कुर्वन्त्येव॥ २॥

---

१. उक्थस्तो° मूको। २. °ग्रहणात् मूको। ३. सर्वांतहान् मूको। ४. किंचिद° मूको।

[परिधानीयाऽऽवापिकयोर्ऋचोराह्वानम्]

**उभयोराह्वानम्॥ ३॥**

उभयोर्ऋचोराह्वानं कर्तव्यम्। **प्रतिप्रतीकमाह्वानम्** (आश्रौ ५, २०, ६) इति प्राप्तत्वादिदं न[1] वक्तव्यम्। इदं[1] प्रयोजनम्। यथैव स्तोत्रियः। संनिपातेऽपि सकृदाह्वाने प्राप्ते पृथगाह्वानं विधीयते। ग्रहाणां किलेयं परिधानीया। तस्मादेव परिधानीयासमीप आवापः॥ ३॥

[आवापिकायामाह्वानमतान्तरं स्तोत्रियानुरूपान्तरुक्थ्ये चऽऽह्वानविधानम्]

**अन्यतरस्यामेक उक्थ्यस्तोत्रियेषु चेद् यज्ञायज्ञीयेन॥ ४॥**

एक आचार्या अन्यतरस्याम् आहावं मन्यन्ते। [2]आवापिकायाम्[2] अवाह्वानं कुर्यादित्येके। स्तोत्रियन्यायेन [3]अन्यायाम् एव कार्यम्[3] इत्यपरे प्रधानत्वात्। आवापिकाऽप्रधाना भवति, [4]अन्वायात्या च भवति[4]। ग्रहान्तरुक्थ्ये विधिरुक्तः।

इदानीमन्तरुक्थ्ये यो विधिः, स वक्ष्यते। उक्थ्यस्तोत्रियेषु चेद् यज्ञायज्ञीयेन। उक्थ्यस्य स्तोत्रियास्तेषूक्थ्यस्तोत्रियेषु चेत्, त्रिषु यज्ञायज्ञीयेन साम्ना स्तुवीरन्। कथं प्रयोगः। **यज्ञायज्ञा वः** (ऋ ६, ४८, १), **एह्यू षु** (ऋ ६, १६, १६), **तं ते मदम्** (ऋ ८, १५, ४), **श्रुधी हवम्** (ऋ ७, २२, ४) इत्येतेषु चतुर्षु स्तोत्रियेषु यज्ञायज्ञीयेन साम्ना स्तुवीरन्। चेदित्यनित्यभावे अन्त्य उक्थ्यो भवति न वा, उक्थ्य [5]एव वा[5] भवति। नाम्ना (? म्ना) उक्थ्य इति॥ ४॥

[यज्ञायज्ञीयविकल्पे स्वैर्वा सामभिः स्तुतिविधानम्]

**स्वैर्वा॥ ५॥**

उक्थ्यस्तोत्रियेषु स्वैः सामभिः स्तुवते। अयं वा कल्पो भवति। कथं प्रयोगः। आग्निमारुत एव **यज्ञायज्ञा वः** (ऋ ६, ४८, १) इत्येतासु यज्ञायज्ञीयेन साम्ना स्तुवते। **एह्य षु** (ऋ, ६, १६, १६) इत्येतासु साकमश्वेन[6], **तं ते मदम्** (ऋ ८, १५, ४) इत्येतासु हारिवर्णेन, **श्रुधी हवम्** (ऋ ७, २२, ४) इत्येतासु तैरश्च्येन[7]। एवं चतुर्षु स्तोत्रियेषु च गर्भः। स्वैः सामभिः स्तुवतेऽयं वा कल्पः॥ ५॥

[सकृदाह्वानं कृत्वा स्तोत्रियाणां ततः पुनः सकृदाहूयानुरूपाणां शंसनम्]

**सकृदाहूय स्तोत्रियान् तथाऽनुरूपान्॥ ६॥**

सकृदाहूय स्तोत्रियान् सकृदाहावं कृत्वा सर्वान् स्तोत्रियान् शंसेत्। **स्तोत्रियानुरूपेभ्य** (आश्रौ ५, १०, १३) इति पृथगाहावे प्राप्ते सकृदाहावो विधीयते। तथाऽनुरूपान्[8]। यथा सकृदाहूय स्तोत्रियान् तथाऽनुरूपानपि सकृदाहूय शंसेत्।

---

१-१. नास्ति मूको। २-२. °पिकाया एव मूको। ३-३. **अन्त्या एव कार्य ई°** मूको। ४-४. **अन्वायाता च त** मूको। ५-५. **एवा** मूको। ६. **साममेते** मूको। ७. **तैरश्चेन** मूको। ८. **कथा ते कयात्** मूको।

 

पृथगाह्वाने प्राप्ते आरम्भः। कथं प्रयोगः। आहूय **यज्ञायज्ञा वः** (ऋ ६, ४८, १), **एह्यू षु** (ऋ ६, १६, १६), **तं ते मदम्** (ऋ ८, १५, ४), **श्रुधी हवम्** (ऋ ७, २२, ४) इति स्तोत्रियाञ्छंसेत्। ततः पुनराहूय **देवो वो द्रविणोदाः** (ऋ ७, १६, ११), **आग्निरगामि** (ऋ ६, १६, १९), **तम्वभि प्र गायत** (ऋ ८, १५, १), **आश्रुत्कर्ण श्रुधी** (ऋ १, १०, ९) इत्यनुरूपान् शंसेत्।

[अन्यत्रापि स्तोत्रियेभ्योऽनुरूपेभ्यश्च पूर्वं सकृदाह्वानम्]

**अन्यत्राप्येवं स्तोत्रियानुरूपसंनिपाते॥ ७॥**

अन्यत्राप्यन्येष्वपि क्रतुष्वेवं सकृदाहूय शंसेत्। स्तोत्रियाणामनुरूपाणां च सन्निपाते सति सकृदाहूय स्तोत्रियान् शंसेत्, तथाऽनुरूपान्। अप्तोर्यामादिषु गर्भकारे सति स्तोत्रियाः संनिपतन्त्यनु। गोतमस्तोमोक्तो[1] विधिरन्यत्र न प्राप्नोति, तस्मात् सर्वप्राप्त्यर्थः सूत्रारम्भः॥ ७॥

[यदि यज्ञायज्ञीयस्य योनौ सर्वैरेवोक्थ्यसामभिः स्तुवीरन् तदाऽऽह्वानानन्तरं स्तोत्रियस्ततः पुनराह्वानानन्तरमनुरूपः शंस्तव्यः]

**यद्यु वै यज्ञायज्ञीययोनौ सर्वैरेवोक्थ्यसामभिः प्रकृत्या स्यात् तथा सति॥ ८॥**

यद्यु वै यज्ञायज्ञीयस्य योनौ **यज्ञायज्ञा वः** (ऋ ६, ४८, १) इत्येतास्वृक्षु सर्वैरेवोक्थ्यसामभिः स्तुवीरञ्छन्दोगाः। **यज्ञायज्ञा वः** इत्येतास्वृक्षु यज्ञायज्ञीयेन, साकमश्वेन, हारिवर्णेन, तैरश्च्येनेति चतुर्भिः सामभिः स्तुवीरन्, तथा सति क्रियमाणे प्रकृत्या भवति। आहूय **यज्ञायज्ञा वः** स्तोत्रियं शस्त्वा आहूय **देवो वः** (ऋ ७, १६, ११) इत्यनुरूपं शंसेत्। एतदेव भवति। एवं क्रियमाणेऽपि सर्वस्तोत्रियानुरूपं शंस्तव्यमिति प्राप्ते प्रकृत्या स्यादित्याह। यदीत्यनित्यभावे। उ वै इत्येतौ निपातौ वाक्यपूरणार्थौ[2] ब्राह्मणे। इदं च ब्राह्मणवाक्यमेव सूत्रकारेण कल्पितं, यथा[3] **यद्यु वै बृहत्** (आश्रौ ५, १५, ३) इति। तथा क्रियमाणे प्रकृत्या भवति, न पूर्वयोः कल्पयोः। अन्यथाऽधिकारात् सर्वेषु प्रकल्पेषु प्रकृत्या स्यात्। एवम् अयम् अनुभक्ष्यो (? उक्थ्यो) विधिरुक्तः। व्याख्यातः प्रथमो गोतमस्तोम[4] एवंक्लृप्तः। एवं द्वितीयोऽपि गोतमस्तोमः। आग्निमारुते **यज्ञायज्ञा वः** (ऋ ६, ४८, १) इत्येवानूक्थ्यस्थान एव स्तोत्रियानुरूपाः। [5]ऐकाहिकान्युक्थ्यानि। उक्थ्येभ्यः[5] ऊर्ध्वम् **इन्द्र जुषस्व** (आश्रौ ६, ३, १) इति विहतः षोडशी। षोडशिसंस्थोऽयम्॥ ८॥

॥ इति नवमे षष्ठः खण्डः॥

---

१. **स्तोमो उक्तो** मूको। २. **पूरणार्थः** मूको। ३. **तथा** मूको। ४. **गोतमः** मूको। ५-५. °**न्युक्थानि उक्थेभ्यः** मूको।

## अथ नवमेऽध्याये सप्तमः खण्डः

[अभिचारकामस्य श्येनाजिराभ्यामेकाहाभ्यां यजनम्]

**श्येनाजिराभ्यामभिचरन् यजेत॥ १॥**

श्येनो नामैकाहः। अजिरो नामैकाहः। ताभ्यां श्येनाजिराभ्याम् अभिचरन् यजेत। अभिचरितुकामो यजेत। [1]अभिचारो नाम प्रमित्सा[1]। द्वेष्यमभिचरति। श्येनाजिरयोः शस्यं वक्ष्यते॥ १॥

[द्वयोरेकाहयोः पृथग् द्वयोर्मध्यन्दिनशस्त्रयोः कथनम्]

**'अहं मनुर्', 'गर्भे नु सन्', 'त्वया मन्यो','यस्ते मन्यो' इति मध्यंदिनौ॥२॥**

**अहं मनुः** (ऋ ४,२६), **गर्भे नु सन्** (ऋ ४,२७), **त्वया मन्यो** (ऋ१०,८४), **यस्ते मन्यो** (ऋ १०,८३) इत्येतानि चत्वारि सूक्तानि। द्वयोरेकाहयोर्द्वौ मध्यंदिनौ भवतः। आनन्तर्येण **अहं मनुः, गर्भे नु** [2]इति श्येनस्य[2] मध्यंदिनः। **त्वया मन्यो, यस्ते मन्यो** इत्यजिरस्य मध्यंदिनः॥ २॥

[शेषे कर्मणि बृहस्पतिसववत् कर्तव्यत्वम्]

**शेषे बृहस्पतिसवेन॥ ३॥**

द्वयोरप्येकाहयोर्मध्यंदिनौ उक्तौ[3]। मध्यंदिनादन्यत् शेषः। स[4] बृहस्पतिसवेन व्याख्यातः। शेष इति वचनाद् मध्यंदिनयोस्तृचक्लृप्तिर्भवति। कृत्स्नान्येव सूक्तानि भवन्ति। शेषग्रहणादेव सूक्तमुखीये अपि न प्राप्नुतः। मध्यंदिनादन्यत्र[5] बृहस्पतिसवेन विशेषा वक्ष्यन्ते। **मित्रं हुवे पूतदक्षम्** (ऋ १,२,७), **आ नो गन्तम्** (ऋ ५, ७१, १), **उत्त्वा मन्दन्तु** (ऋ ८, ६४, १), **तमिन्द्रं**[6] **वाजयामसि** (ऋ ८, ९३, ७), **ता हुवे ययोरिदम्** (ऋ ६, ६०,४), **इन्द्राग्नी अपसस्परि** (ऋ ३, १२, ७) इति प्रातःसवने स्तोत्रियानुरूपाः। बृहतीकारं प्रगाथाः पृष्ठस्य काकुबुत्तये[7] सति। प्रगाथानां काकुबुत्तयें[7]ऽन्यत्र बृहतीकारमेव दृष्टं यस्माद्रथंतरं पृष्ठं द्विपदोत्तराकारं

१-१. °**चारोमभित्सा** मूको। २-२. इत्येतस्य मूको। ३. उक्तः मूको। ४. नास्ति मूको। ५. °**नादन्यत्** मूको। ६. ते° मूको। ७. ककुबु° मूको। द्र. आश्रौ ९, ५, १६ सूत्रस्य व्याख्या।

शस्यते, तथा हि स्तुतत्वात्। प्रथमा ऋगर्धर्चशस्या। द्वितीयाद्या (?द्वे) द्वोवर्धर्चौ (? द्वे अर्धर्चे) द्वे द्विपदे पञ्च द्विपदाः शंसेत्।

**त्वामिद्धि हवामहे** (ऋ ६, ४६, १-२), **त्वं ह्येहि चेरवे** (ऋ ८,६१,७-८) इति ब्राह्मणाच्छंसिनः स्तोत्रियानुरूपौ। द्विपदोत्तराकारं स्तुवते। बृहतीकारमेव शस्यते। **होत्रकाश्च येषां प्रगाथाः** (आश्रौ ५, १५, १३) इति वचनाद् अयथास्तुतमेव ब्राह्मणाच्छंसिनः अनुरूपादनन्तरम् **उभयं शृणवच्च नः** (ऋ ८, ६१, १-२) इति सामप्रगाथं शंसेत्। **पृष्ठ्य एवैकैकमन्वहम्** (आश्रौ ७, ३, २०) इति वचनात् पृष्ठ्यादन्यत्र सामप्रगाथाः सामान्वयना भवन्ति। होतृविषये पृष्ठानां दृष्टो न्यायो होत्रकाणामपि स्यादिति होत्रकाणां प्राप्त्यर्थं सर्वपृष्ठेष्वारम्भः। बृहस्पतिसवेनेति[1] तु स्थानविवक्षार्थमारम्भः। अजिरस्य माध्यंदिनादन्यद् बृहस्पतिसवेन शंस्यम्॥३॥

[लोहितोष्णीषाणामृत्विजां निस्त्रिंशिनां शस्त्राणां याजनम्]

**सन्नद्धा लोहितोष्णीषा निस्त्रिंशिनो याजयेयुः॥ ४॥**

श्येनाजिरयोः सन्नद्धास्त्वृत्विजो यजमानश्च। कवचानि पर्यस्तानि भवन्ति। [2]लोहिता उष्णीषाः शिरोवस्त्राणि[2] येषां ते लोहितोष्णीषाः। निर्स्त्रिशिनो निस्त्रिंशानि शस्त्राणि भवन्ति। एवंगुणयुक्ता यागं याजयेयुः[3]। याजयेयुरित्युक्ते सवनेष्वेव याजयन्ति। गोसवसंज्ञा[4], यथा वाजपेये **हिरण्यस्रज ऋत्विजो याजयेयुः** (आश्रौ ९, ९, ४) इति॥४॥

[अत्र बर्हिषां शरमयत्वकल्पनम्]

**शरमयं बर्हिः॥५॥**

शरमयं बर्हिर्भवति। शरैः कृतं बर्हिर्भवति॥५॥

[मुसलानां परिधिकरण]

**[5]मौसलाः परिधयः[5]॥६॥**

मुसलानि परिधयो भवन्ति॥६॥

[बिभीतकस्येध्मत्वकल्पनम्]

**बैभीतक इध्मः॥७॥**

बिभीतकस्यावयवो बैभीतक इध्मो भवति। भिनत्त्येवैनम्॥७॥

---

१. विश्वानिति मूको। २-२. लोहितार वस्त्रा° मूको। ३. नास्ति मूको। ४. गोसंज्ञा मूको। ५-५. मौशलाय ऋत्विज मूको।

[वाघातकवृक्षविशेषस्य वेध्मत्वम्]

**वाघातको वा॥ ८॥**

वाघातको वृक्षो वा। घातयत्येवैनम्। **स्फ्यग्रो यूपः** (आश्रौ ९, ७, १६)। स्फ्यो वज्रः। स्फ्यग्रमिव यूपाग्रं भवति। खलेवाल्या एवंविधमग्रं भवति। स्वरुरचषालश्चषालवर्जितो भवति। यवास्त्रयेजा (?)। **कलापी चषालः** (आश्रौ ९, ७, १८)। तदिह न क्रियते॥ ८॥

[अपगूरणानन्तरमाश्रावणम्]

**अपगूर्याश्रावयेत्॥ ९॥**

यदाऽऽश्रावयेदध्वर्युः शस्त्रमपगूर्योद्गीर्य त्वाश्रावयेत्॥ ९॥

[प्रत्याश्रावणम्]

**प्रत्याश्रावयेच्च॥ १०॥**

[वषट्कारस्वरूपकथनम्]

**छिन्दन्निव वषट्कुर्यात्॥ ११॥**

आयुधेन छिन्दन् अत्यर्थम् आयुधं पीडयति, एवं वषट्कारं कुर्यात्। वषट्कारम्[1] अत्यर्थं पीडयन् ब्रूयात्। स यमेवोच्चैर्बलेन वषट्करोति स वज्र इति। नित्यो वषट्कारः, स च अन्त्यो भवति। उच्चतरश्च भवति। अन्ततमृचां वषट्कृतमिति वचनात्॥ ११॥

[जुह्वाग्निपीडनं कुर्वन्निव जुहुयात्]

**दृषन्निव[2] जुहुयात्॥ १२॥**

दृषदि यथा द्रव्याणि पीडयति, एवं दृषन्निव जुहुयादध्वर्युर्जुह्वाऽग्नीनतिपीडयति॥ १२॥

[साद्यस्क्रेषु वेद्या उर्वरत्वम्]

**साद्यस्क्रेषूर्वरा वेदिः॥ १३॥**

साद्यस्क्रेषु क्रतुषूर्वरा वेदिः। ससस्यस्य क्षेत्रस्योर्वरेत्येषा संज्ञा। व्रीह्युर्वरा यवोर्वरा वा वेदिर्भवति। श्येनाजिरयोरधिकारात् सर्वसाद्यस्क्रेषु प्राप्त्यर्थं साद्यस्क्रेष्वित्याह। उक्ताः साद्यस्क्रियाऽनुक्रिया परिक्रिया वैकत्रिकेण त्र्येकेण वा[3] एते पञ्च। श्येनाजिराभ्यां सह सप्त साद्यस्क्रा आम्नाताः। विश्वजिच्छिल्पोऽप्येकेषां साद्यस्क्रः॥ १३॥

---

१. **अकारं** मूको। २. **द्रुष**° आन सं। ३. आश्रौ ९, ५, १२,१३।

[खलस्योत्तरवेदित्वम्]

**खल उत्तरवेदिः ॥ १४ ॥**

व्रीहिखलो यवखलो वोत्तरवेदिर्भवति। आहवनीयस्य [1]आयतनस्य स्थण्डिल-मुत्तरवेदि[1]: इत्युच्यते ॥ १४ ॥

[मेथिनो यूपत्वम्]

**खलेवाली यूपः ॥ १५ ॥**

खलेवाली यूपो भवति। खलेमेथी खलेवाली भवति। लाङ्गलेषा वा यूपो भवत्यन्येषाम्[2]। तत्र खलेवाल्युच्छ्रित एव भवति। तस्मादुच्छ्रयणस्यात्र[3] लोपः। न ह्युच्छ्रितस्याञ्जनं क्रियते। तस्मादञ्जनीयाऽपि लुप्यते। परिव्ययणमेव केवलं भवति। तस्योक्तं विधानम् ॥ १५ ॥

[स्फ्यस्याग्रवद् यूपस्याग्रस्य विधानम्]

**स्फ्यग्रो यूपः ॥ १६ ॥**

स्फ्यो वज्रः। स्फ्यस्येव यूपस्याग्रं भवति। खलेवाल्या एवंविधमग्रं भवति ॥ १६ ॥

[यूपस्य चषालरहितत्वम्]

**अचषालः[4] ॥ १७ ॥**

चषालवर्जितो भवति। यवास्त्रयेजा (?) कलापी चषालः। तदिह न क्रियते ॥ १७ ॥

[मेथिनोऽग्रे बद्धस्य चषालस्य कलापित्वम्]

**कलापी चषालः ॥ १८ ॥**

कलापोऽस्य[5] कलापी चषालो यूपः। व्रीहिकलापी च चषालो भवति ॥ १८ ॥

[साद्यस्क्रेषु पूर्वोक्तवद् विकाराणामुपसंहारः]

**इत्यागन्तुका विकाराः ॥ १९ ॥**

इत्येते **साद्यस्क्रेषूर्वरा वेदिः** (आश्रौ ९, ७, १३) इत्येवमादिका आगन्तुका विकारा व्याख्याताः। येऽन्येषु न विद्यन्ते, ते[6] आगन्तुका विकाराः। आगन्तुका इति वचनाद् बृहस्पतिसवेनातिदेशप्राप्तानां विकाराणामप्रतिषेधः॥ १९ ॥

---

१-१. **यतमस्य स्थंडिलेषुत्तर°** मूको। द्र. आश्रौ २, १७, ८-९ देवत्रातव्याख्या। २. द्र. आपश्रौ २२, ३, ७। ३. **तस्मादुत्रयमाणानां** मूको। ४. **स्वरुचषालः** मूको। ५. **कलापोयं** मूको। ६. नास्ति मूको।

[अन्येषां विकाराणामध्वर्युकल्पिततत्वम्]

**अन्यांश्चाध्वर्यवो विदुः॥ २०॥**

अन्यानपि विकारानध्वर्यवो विदुः। ये वाऽध्वर्यूणां विषये विकारा आम्नातास्तेऽपि प्रमाणमित्यर्थः। तेऽपि कर्तव्याः। यथाऽभिचारेषु लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरेयुः (द्र. आश्रौ १९, १६, ६; २२, ४, २३) इति। लोहितः पशुः, सद्योमथितमाज्यं, आरोहणे हविर्धाने इत्येवमाद्यागन्तुका विकारा आध्वर्यवे[१]॥ २०॥

[एतच्छास्त्रविहितेऽनुवचनादिशस्ये होत्रैव सम्प्रैषसम्पादनम्]

**सिद्धे तु शस्ये होता संप्रैषान्वयः स्यात्॥ २१॥**

सिद्धमाम्नातं शस्यं तत् सिद्धे तु शस्ये विक्रियमाणे शस्ये होतां संप्रैषान्वयः[२] स्यात् संप्रैषक्रियो भवति। संप्रैषवद् देवतादेशादग्निष्टुदादिष्वेकाहेष्वनुवाक्यायां प्रैषयाज्यायां च प्रैषवद् देवतादेशान् ब्रूयात्। **वायव इन्द्रवायुभ्यामनुब्रूहि** (आपश्रौ १२, २०, १८) इत्यैन्द्रवायवस्य संप्रैषः। अग्निष्टुति तु विक्रियते। तत्र [३]प्रैषान्वयो होता[३] भवति। सर्वत्र देवतान्यत्वे[४] याज्यानुवाक्ये प्राप्ते इदमारभ्यते। सिद्ध एव शस्ये संप्रैषवशादूहो[५] भवतीति।

साद्यस्क्राधिकारात् साद्यस्क्रेष्वेव परिभाषा प्राप्ता संप्रैषेषु विकाराभावाद् उत्तरकृत्वार्थि (? उत्तरत्र कृतार्था) परिभाषा भवति। सर्वाग्नेयेऽग्निष्टुत्युपहव्ये च संप्रैषा अधिक्रियन्ते। [६]इन्द्रस्तुति सर्वमिन्द्रो[६] भवति। सिद्धवचनात् सिद्ध एवाम्नात एव शस्ये संप्रैषवशाद् देवतादेशोऽधिक्रियते। न देवतान्यत्वात् शस्यान्यत्वं कल्पत इति। तु-शब्दः प्राप्तव्यावृत्त्यर्थः। अन्यत्तु[७] शस्यं प्राप्तम्। होतृकर्म शस्यमित्युच्यते। तथा वक्ष्यते **इति शस्यम्** (आश्रौ १२, ६, ३) इति। तस्माच्छस्यग्रहणान्मैत्रावरुणस्य सम्प्रैषो भवति। होतृग्रहणान्मैत्रावरुणः, होतृग्रहणे[८] तु याज्यानुवाक्या अधिक्रियन्ते। **तस्मादृचं नोहेत्** (आश्रौ ५, ४, ८) इति प्रतिषेधाद् ऋक्षु विकारप्राप्तिर्न स्यात्। तस्माद् याज्यानुवाक्याः प्रैषाश्चाधिक्रियन्ते॥ २१॥

[पापकर्मणाऽपिहितस्याप्रजस्य चाग्निष्टुता यजनम्]

**पाप्या कीर्त्या महारोगेण वा यो वाऽलंप्रजननः प्रजां न विन्देत सोऽग्निष्टुता यजेत॥ २२॥**

पाप्या कीर्त्याऽपिहितः पापं कर्मानेन कृतमिति यस्य लोके कीर्तिः, ख्यातिः तया[९] पापकीर्त्याऽपिहित पुरुषोऽपिहितो व्याप्तः। महारोगेण वाऽपिहितः। महारोगः क्षयव्याधिः[१०], अन्यो वा योऽप्यचिकित्स्यो मरणान्तिकः, तेन महारोगेण वाऽपिहितः। यो वाऽलंप्रजननः प्रजां न विन्देत। यो वा [११]पुरुषोऽलंप्रजननः[११]

---

१. द्र. आपश्रौ २२, ३-४। २. **संप्रैषायूपो** मूको। ३-३. **प्रैषान्यो हेतो** मूको। ४. **एतान्य**° मूको। ५. °**वशादाहा** मूको। ६-६. **इन्द्रस्तु सर्वामन्द्रो** मूको। ७. **अंतु** मूको। ८. °**ग्रहणं** मूको। ९. **सा** मूको। १०. **क्षयः व्याधिः** मूको। ११-११. **एतपश्चलप्रज**° मूको।

पर्याप्तप्रजननकर्मसमर्थः[१] सन् प्रजां न विन्देत, प्रजां न लभेत। अपत्यं नोत्पद्यते यस्य, एवंलक्षणः पुरुषः। अग्निष्टुत्[२] नाम एकाहः, तेन यजेत। शुद्धः पूतो भवति। **तस्याग्निः सर्वां पापीमलक्ष्मीं निर्दहति** (शांश्रौ १४, ५१, १) इति श्रुतिः। अपहतपाप्मा नीरुजो[३] भवति, प्रजां च विन्दति। वाशब्दो विकल्पार्थः। कामविकल्पाः। अग्निष्टुत्यतिदेशादैकाहिकं[४] शस्यम्। मध्यंदिन एव विशेषः॥ २२॥

[तत्र माध्यन्दिनशस्त्रनिरूपणम्]

**'तिष्ठा हरी', 'यो जात एव' इति मध्यंदिनः सर्वाग्नेयश्चेत् स्तोत्रियानुरूपा आग्नेयाः स्युः॥ २३॥**

**तिष्ठा हरी** (ऋ ३, ३५), **यो जात एव** (ऋ २, १२) इत्येते द्वे सूक्ते मध्यंदिनो भवति। तिष्ठा हरी इति मरुत्वतीये सूक्तम्, **अग्नेः पिब जिह्वया सोममिन्द्र** (ऋ ३, ३५, ९) इत्यग्निलिङ्गत्वात्। **यो जात एव** इति निष्केवल्ये सूक्तम्। **यो अश्मनोरन्तरग्निं जजान** (ऋ २, १२, ३) इत्यग्नेर्लिङ्गम्। निविदतिपाते[५] त्वग्निलिङ्ग एव निविदं दध्यात्। मध्यंदिनादन्यत् सर्वमैकाहिकं शस्यम्। यदाऽऽग्नेयीभिश्च[६] छन्दोगा न स्तुवते, तदाऽयं कल्पो भवति। यथाकृतिमेवाध्वर्युः कुर्यात्। छन्दोगबह्वृचा एव प्रतिविकुर्वीरन्नित्येतस्मिन्नपि[७] पक्षेऽयमेवकल्पः। सर्वाग्नेयश्चेत्, सर्वमाग्नेयं क्रियते सर्वाग्नेयः।

सर्वाग्नेयश्चेदग्निष्टुद् भवति। तस्य विधानं वक्ष्यते। चेदित्यनित्यभावे। सहकारिवशात् सर्वमाग्नेयं वा भवति सर्वाग्नेयस्य। तत्र ये कल्पास्ते वक्ष्यन्ते। स्तोत्रियानुरूपा आग्नेयाः स्युः। स्तोत्रियाश्चानुरूपाश्चाग्नेया भवन्ति। यथा क्लृप्तो मध्यंदिनः। निष्केवल्ये रथन्तरयोनिर्यज्ञायज्ञीयस्य न सोऽनुरूपो योनिः। अन्यत् सर्वमैकाहिकम्। तस्य सर्वमवसानं पुरो भवति। एवमन्य (?) इत्यध्वर्यूणां वचनम्। अस्मिन् पक्षेऽयं कल्पो भवति। स्तोत्रियानुरूपेषु कथं सर्वमाग्नेयं कृतं भवतीति। तदुच्यते। शस्त्रेषु स्तोत्रियाः प्रगाथाः, स्तोत्रस्यानुशंसनार्थत्वात्। प्रधाने चाग्नेये सति सर्वमाग्नेयं कृतं भवति। यथाऽऽग्नेयीष्टिः, आग्नेयः पशुरिति, अनुरूपा आग्नेया भवन्ति स्तोत्रियार्थत्वात्। स्तोत्रियानुरूपा आग्नेयाः। स्युरिति न वक्तव्यम्। अनुच्यमानेऽप्याग्नेया एव भवन्ति छन्दोगवशगत्वात्[८]। ते यस्मिन् स्तुवीरन् स[९] स्तोत्रियो भविष्यति। न वक्तव्यम्। इदं प्रयोजनम्। स्तोत्रियानुरूपा एवाग्नेया भवन्ति। अनुरूपादूर्ध्वम् अन्यत् सर्वमैकाहिकमुपदिष्टं भवति। सर्वमाग्नेयमेव प्राप्तम्। सर्वाग्नेय इति वचनात् स्तोत्रियानुरूपा आग्नेया वक्ष्यन्ते। **कस्ते**[१०] **जामिर्जनानाम्** (ऋ १, ७५, ३), **नि नो होता**[१०] **वरेण्यः** (ऋ १, २६, २), **ईळेन्यो नमस्यः** (ऋ ३, २७, १३), **तस्मै नूनमभिद्यवे**[११] (ऋ ८, ७५, ६), **अग्निर्वृत्राणि जङ्घनत्** (ऋ ६, १६, ३४), **उत ब्रुवन्तु जन्तवः** (ऋ १, ७४, ३) इति प्रातःसवने। [१२]**एना वो**[१२] **अग्निं**

---

१. **पर्याप्तजननकर्मसम॰** मूको। २. नास्ति मूको। ३. **निरुज्यो** मूको। ४. **॰शाहैकान्तिकं** मूको। ५. **नविदनिपाते** मूको। ६. **॰ग्नेयीश्च** मूको। ७. **प्रतिविक्रध्वीर॰** मूको। ८. **छन्दोवशत्वात्** मूको। ९. नास्ति मूको। द्र. आश्रौ ७, २, ५। १०-१०. **॰नानाग्नि ते हो॰** मूको। ११. **त्र न महिन्यं ये** मूको। १२-१२. **एवा नो** मूको।

**नमसा** ( ऋ७, १६, १ ), **उदस्य शोचिरस्थात्** ( ऋ७, १६, ३ ), **कया ते अग्ने अङ्गिरः** ( ऋ ८, ८४, ४ ), **कस्य नूनं परीणसः** ( ऋ ८, ८४, ७ ), **अग्न आ याह्यग्निभिः** ( ऋ ८, ६०, १ ), **अग्ने कविर्वेधा असि** ( ऋ ८, ६०, ३ ), **अच्छा नः शीरशोचिषम्** ( ऋ८, ७१, १० ), **अद्या दूतं वृणीमहे** ( ऋ १, ४४, ३ ) इति मध्यंदिने। **उप त्वा जामयो गिरः** ( ऋ८, १०२, १३ ), **हरयो धूमकेतवः** ( ऋ८, ४३, ४ ) इत्याग्निमारुते। सर्वेऽग्निलिङ्गाः, सर्वे प्रकृतिदैवतलिङ्गाः[1]। उत्तमस्त्वग्निलिङ्गो वाऽलिङ्गश्च। वायव्यम् ( ? ) अग्निष्टोमसामेति छन्दोगानाम्। **रेवतीर्नः सधमादे** ( ऋ १, ३०, १३ ), [2]**रेवाँ इद् रेवतः स्तोता**[2] ( ऋ ८, २, १३ ) एतौ[3] अग्निष्टोमसाम्नः स्तोत्रियानुरूपौ। यथाक्लृप्त[4] एव मध्यंदिनः। रथन्तरस्य योनिर्निष्केवल्ये। यज्ञायज्ञीयस्य सानुरूपा योनिराग्निमारुते। अन्यत् सर्वमैकाहिकम्॥ २३॥

[ऊह्यद्रव्यस्याऽऽग्नेयत्वविकल्पः]

**विचारि वा॥ २४॥**

सर्वाग्नेयस्यायं वाऽपरः कल्पो वक्ष्यते। विचारि तद्[5] द्रव्यं सर्वक्रतुषु यद् विचरति, यदुत्पद्यते[6] तद् विचारीत्युच्यते। विचारि द्रव्यं वाऽऽग्नेयं भवति। यदि विचारि सर्वक्रतुषु च च्यवते तदुक्थ्यं सर्वाग्नेयम् इति वचनात्। यथा तूष्णींशंसः निविदः, पुरोरुचः, इन्द्रनिहवः, धाय्याः सर्वशस्त्रेषु[7]। आग्निमारुते आपोहिष्ठीयात्[8] परं शस्त्रयाज्या इत्येतदविचारि द्रव्यमूह्यते सर्वाग्नेयत्वाय। **सिद्धे तु शस्ये होता संप्रैषान्वयः स्यात्** ( आश्रौ ९, ७, २१ ) इति वचनात् प्रातरनुवाकादि। अग्निभ्यः प्रातर्यावभ्यो होतुरनुब्रूहीति[9] संप्रैषेषु क्रियमाणेषु। तु-वचनात् प्रैषाः याज्या[10] ऊह्यन्ते। हारियोजनान्ते कर्मणि एवं सर्वाग्नेया भवन्ति। तस्या क्लृप्तिः। **आपो रेवतीः** ( ऋ १०, ३०, १२ ) इत्यूह्य उपस्यः क्रतुराश्विनः क्रतुरपोनप्त्रीया अग्निमन्थनीया शुद्धे प्रथमे, उत्तमाऽत्र सवनीयेषु द्विदेवत्येषु उन्नीयमानसूक्तेषु प्रैषेषु प्रस्थितयाज्यासु वा जान [ ? ] अच्छावाकस्य निगद उन्नीयमानसूक्तेन तु ग्रहेषु तूष्णीं शंसति। निविद याज्यायां पुरोनुवाक्यायां[11] होत्रकाणां शस्त्रयाज्यासु ग्रावस्तोत्रे दधिघर्मे सवनीयेषु उन्नीयमानसूक्ते प्रैषयाज्यासु मरुत्वतीयग्रहे, इन्द्रनिहवे, याज्यासु च याज्यायां च घृतयाज्यायाः। सौम्येन आग्निमारुते, निवित्सु, धाय्यायां च होत्रकाणां शस्त्रयाज्यासु। आदित्यग्रहे सवनीयेषून्नीयमानसूक्ते प्रस्थितप्रैषे याज्यासु सावित्रग्रहे वैश्वदेवे निवित्सु धाय्यासु च याज्यायां च घृतयाज्याः ( ? ज्यायाः )। सोम्ये च आग्निमारुते निवित्सु धाय्यायाम् [12]आपोहिष्ठीयात् परम्[12]। तत्र अनूह्या[13] याज्या हारियोजने। इत्येतान्यूह्यस्थानानि[14]॥ २४॥

[सर्वदेवतानां स्थानेऽग्निशब्दप्रयोगविकल्पः]

**अपि वा सर्वेषु देवताशब्देष्वग्निमेवाभिसंनमेत्॥ २५॥**

---

१. °तिदेवतलिङ्गाः मूको। २-२. रेवोन्द्रदेवतः स्तोतेः मूको। ३. वीता मूको। ४. यथाक्ल ......... मूको। ५. यद् मूको। ६. यदुत्पवते मूको। ७. सर्वशास्त्रे मूको। ८. °हिष्ठीयादि मूको। ९. द्र. ऐब्रा २, १५। १०. ज्या मूको। ११. पुरोवाज्या व्यां मूको। १२-१२. °हिष्ठीयादित्यत्परं मूको। १३. अनुह्या मूको। १४. °तानुह्यस्था° मूको।

अपि वा सर्वेषु देवताशब्देषु। अथ सर्वेष्विति भवति। तथाऽध्वर्युणा योऽग्निष्टुतीन्द्रस्य शस्त्रमुत्सादयेन्नित्या अन्या देवता इति अध्वर्युवशात् तथापि भवति। इन्द्रशब्दस्यैव स्थाने अग्निशब्दं कुर्यान्नान्यासां स्थाने। सर्वग्रहाणां द्विराडिन्द्रं त्ये अविचारि प्रच्यव (?) सर्वग्रहणाद् विचारिणो ये चाविचारिणश्च सर्वत्र। '[1]प्रत्यक्षदेवताशब्देष्वग्निदेवताम् अभिसन्नमेत्प्रत्यक्षम्[1]'। इन्द्र इति प्रत्यक्षः। शक्रः पुरन्दरो वृत्रहा इति परोक्षः। अप्रधानस्यापि स्थाने न भवति। यथा मरुत्वतीये मरुतः। **बहुशस्तु वैश्वदेवेषु सन्त्यृचः पादार्धर्चा द्वैपदास्त्रैपदाश्च। द्विप्रधाना अपि चैकप्रधाना बहुप्रधाना अपि वैश्वदेवाः** (बृदे ४, ८)। एवमपेक्षया प्रधाना देवता। तस्याः स्थानेऽग्निशब्दं कुर्यात्, '[2]अप्रधाना यथाम्नाता[2]'। एवमग्निमेवापातयेदिति। एवशब्दोऽवधारणार्थः। अग्निशब्दम् एव कुर्यात्, अग्निपर्यायवाचकान् शब्दान् वा। वरुणः मरुतः इति त्र्यक्षरस्थाने[3] त्र्यक्षरमेव पावकशब्दं कुर्यात् छन्दसः पूरणार्थम्। द्व्यक्षरमपि सर्वमग्निशब्दमेव कुर्यात्। अभिसन्नमेदिति वचनाद् यया विभक्त्या देवताऽऽम्नाता, तयैव विभक्त्या द्विवचनबहुवचनानि। तथैवाग्निशब्दः अभिसन्नमेयः[4] ॥ २५ ॥

[सर्वाग्नेयकल्पस्वीकारे इन्द्रस्तुनामैकाहेन यजनम्]

**तथा सत्यन्वक्षमिन्द्रस्तुता यजेत॥ २६ ॥**

तथा सति सर्वाग्नेयकल्पेषु सर्वेषु कृतेषु, तथा सति क्रियमाणे वा[5] अन्वक्षमेव[6] तदानीमेव अग्निहोत्रं[7] हुत्वैव। इन्द्रस्तुन्नामैकाहः। तेन इन्द्रस्तुता यजेत। **आह वा एष सर्वाभ्यो देवताभ्यो वृश्च्यते योऽग्निष्टुता यजते** (शांश्रौ १४, ५७, २०) इति ब्राह्मणम्। तस्मादिन्द्रस्तुता यजेत ॥ २६ ॥

[तत्र मध्यंदिनसवनशस्त्रनिरूपणम्]

**'इन्द्र सोमम्', 'इद्रं स्तवा' इति मध्यंदिनः ॥ १७ ॥**

**इन्द्र सोमम्** (ऋ ३, ३२), **इन्द्रं स्तवा** (ऋ १०, ८९) इत्येते द्वे सूक्ते मध्यंदिनो भवति। **इन्द्र सोमम्** इति '[8]मरुत्वतीये सूक्तम्[8]', **इद्रं स्तवा** इति निष्केल्ये। अन्यत् सर्वमैकाहिकम् अतिदेशाभावात्। **इन्द्रस्तुता यजेत** इत्युक्तम्। **ज्योतिष्टोमेन यजेत** इति श्रुत्यन्तरे ॥ २७ ॥

[भूति-ग्राम-प्रजा-कामानामुपहव्येनैकाहेन यजनम्]

**भूतिकामो वा ग्रामकामो वा प्रजाकामो वोपहव्येन यजेत॥ २८ ॥**

---

१-१. प्रत्यक्षदेवशब्देग्निदेवता अभिशन्नमेवक्ष मूको। २-२. °धाना यथाम्ना° मूको। ३. त्र्यक्षरं° मूको। ४. अभिसशन्न मूको। ५. नास्ति मूको। ६. अन्वक्ष अं वे मूको। ७. अग्निहोत्रवुत्वैव मूको। ८-८. °तीयसू° मूको।

भूतिः[1] युद्धे भवति। भूतिमिच्छति भूतिकामो वा यजेत। वक्ष्यमाणैर्वा कामैः। ग्रामकामो वा यजेत, प्रजाकामो वा यजेत। प्रजा अपत्यं भवति। **पशुकामो वा अभिशस्य** (?) **कामो वा** (?) इति श्रुत्यन्तरे कामः। एवंकामः, उपहव्यो नाम एकाहः, तेनोपहव्येन यजेत। अनिरुक्तो भवति। देवतानामधेयानि परोक्षाणि छन्दोगानां प्रयुज्यन्ते। अध्वर्यूणां च [2]**वायव इन्द्रवायुभ्यामनुब्रूहीति** (आपश्रौ १२, २०, १८) युज्यते[2]। शकुनियुद्भ्याम् (?) अनुब्रूहि इत्येवं सर्वे संप्रैषा विक्रियन्ते। तदुक्तम्—**होता संप्रैषान्वयः स्यात्** (आश्रौ ९, ७, २१) इति। अनुवाक्याप्रैषयाज्यासु संप्रैषवद् देवतादेशाः कर्तव्याः।

सोऽनिरुक्तः। स्तोत्रियेषु छन्दोगाः स्तुवते। तस्मादनुरूपाः अप्यनिरुक्ता[3] एव कार्याः। स्तोत्रियेषु छन्दोगाः स्तुवते तस्मादनुरूपाः। स्तोत्रियेण समानरूपो ह्यनुरूपो[4] भवति॥ २८॥

[उपहव्यस्य मध्यंदिनसवनशस्त्रनिरूपणम् प्रजापतिकामस्य इन्द्राग्न्योः कुलायस्यैकाहस्य च यजनम्]

**'इमा उ त्वा', 'य एक इद्' इति मध्यंदिनः। इन्द्राग्न्योः कुलायेन प्रजातिकामः॥ २९॥**

**इमा उ त्वा** (ऋ ६, २१), **य एक इत्** (ऋ ६, २२) इत्येते सूक्ते मध्यंदिनो भवत्युपहव्यस्य। **इमा उ त्वा** इति मरुत्वतीये सूक्तम्, **य एक इत्** इति निष्केवल्ये। सर्वमन्यदैकाहिकं शस्यम् अतिदेशाभावात्। स्तोत्रियानुरूपा अनिरुक्ता वक्ष्यन्ते—**प्र वां महि द्यवी अभि** (ऋ ४, ५६, ५) इति मैत्रावरुणस्य स्तोत्रियः द्यावापृथिवीयः। अनिरुक्तं द्यावापृथिव्योः प्रत्यक्षं लिङ्गं विधीयते। मित्रलिङ्गत्वान्मैत्रावरुणः श्रुतौ कल्पितोऽनुरूपः, **ता नः शक्तं पार्थिवस्य** (ऋ ५, ६८, ३-५) इति। अनिरुक्तं मैत्रावरुणलिङ्गं न विद्यते। द्यावापृथिव्योस्तु लिङ्गमस्ति-**पार्थिवस्य महो रायो दिव्यस्य** (ऋ ५, ६८, ३) इति। अन्यत्राप्यनिरुक्तेषु क्रतुषु **ता नः शक्तम्** (ऋ ५, ६८, ३-५) इति स्तोत्रिय आम्नातः प्रजापतेरपूर्वे[5] वाजपेये च। तस्मादुपहव्ये अयमेवानुरूपो न्याय्यः।

अथ ब्राह्मणाच्छंसिनः **अयमु ते समतसि** (ऋ १, ३०, ४-६) इति स्तोत्रियः, [6]**तन्त्वा वयं**[6] **विश्ववारा** (ऋ १, ३०, १०-१२) इत्यनुरूपः असमानलिङ्गत्वात् समाहार्यः[7]। अथ अच्छावाकस्य **गाव उपावतावतम्** (ऋ ८, ७२, १२), [8]**अभ्यारमिदद्रय** (ऋ ८, ७२, ११), **सिञ्चन्ति नमसावतम्**[8] (ऋ ८, ७२, १०) इति समाहार्यः। स्तोत्रिय आग्नेयोऽनिरुक्तः श्रुतौ कल्पितः[9]। **मही यज्ञस्य रप्सुदा** (ऋ ४, ७२, १२) इति द्विवचनदर्शनादैन्द्राग्नो भवति। तस्यानुरूपः [10]**ताभिरागच्छतं नरा**[10]

१. **भूमिकामो वा भूतिः** मूको। २-२. **वायवः इन्द्र वायव्यामनुब्रूहीति युक्ष्वते** मूको। ३. **आन्यानि°** मूको। ४. ऋ (गर्) **णसमा°** मूको। ५. द्र. तांब्रा १७, १०, ४। ६-६. **अन्वारूपे य** मूको। ७. **समानाथः** मूको। ८-८. **अस्यारमिन्द्रादद सिद्धे पिब भवतम्** मूको। ९. **कल्पः** मूको। १०-१०. **ताभिश्चत्त करत** मूको।

(ऋ ६, ६०, ९), **उक्थेभिर्वृत्रहन्तमा** (ऋ ७, ९४, ११) इति द्वे [१]एका चेत्यनुरूपः[१]। ऐन्द्राग्नः। अनिरुक्तः सलिङ्गाभावादसमानलिङ्गः कल्पितः। समानार्षस्त्वनिरुक्तो [२]न विद्यते[२]। इति प्रातःसवने। माध्यंदिने **मा भेम मा श्रमिष्म** (ऋ ८, ४, ७) इति प्लवनस्तोत्रियो निष्केवल्ये। **आ नः सोमे स्वध्वरे** (ऋ ८, ५०, ५) इत्यनुरूपः। आ इति [३]समानं लिङ्गम्[३]। **इमा उ त्वा पुरूवसो** (ऋ ८, ३, ३), **एतावतस्ते वसो** (ऋ ८, ५०, ९) इति ब्राह्मणाच्छंसिनः। वसो इति समानं लिङ्गम्। **यस्यायं विश्व आर्यः** (ऋ ८, ५१, ९), **आ नो विश्वेषां रसम्** (ऋ ८, ५३, ३) इत्यच्छावाकस्य। [४]अनिरुक्तो विश्वलिङ्गोऽसमानार्थो[४] यज्ञायज्ञीयस्य नित्यस्तोत्रियः। **देवो वः** (ऋ ७, १६, ११) इति वा कुर्युः। स्तोत्रियानुरूप एवानुरूपः। योनिरेव शस्ता भवति। अग्निष्टोमसंस्थोऽयम्। इन्द्राग्न्योः कुलायेन प्रजातिकामः। इन्द्राग्न्योः कुलायो नामैकाहः। तेन प्रजातिकामो यजेत। प्रजा सन्ततिः। कथं प्रजायेरन्नित्येको यजते, द्वौ भ्रातरौ पितापुत्रौ वा[५] ॥ २९ ॥

[इन्द्राग्न्योः कुलायस्य मध्यंदिनसवनशस्त्रनिरूपणम्। विजिगीषमाणस्य ऋषभनामैकाहेन यजनम्]

**'तिष्ठा हरी', 'तमु ष्टुहि' इति मध्यंदिनः। ऋषभेण विजिगीषमाणः ॥ ३० ॥**

**तिष्ठा हरी** (ऋ ३, ३५), **तमु ष्टुहि** (ऋ ६, १८) इत्येते द्वे सूक्ते मध्यंदिनो भवति इन्द्रलिङ्गत्वात्[६]। **तिष्ठा हरी** इति मरुत्वतीये, **तमु ष्टुहि** इति निष्केवल्ये। अन्यत् सर्वमैकाहिकम् अतिदेशाभावात्। ऋषभेण विजिगीषमाण ऋषभो नामैकाहो राजयज्ञः[७]। तेन राजा विजिगीषमाणो यजते। **सर्वा विजितीर्विजिगीषमाणः ...... यजते** (आश्रौ १०, ६, १)। विजेतुमिच्छमानः[८A] विजिगीषमाणः ॥ ३० ॥

[ऋषभैकाहस्य मध्यंदिनसवनशस्त्रनिरूपणम्, अन्नाद्यकामेन च तीव्रसोमैकाहेन यजनम्]

**'मरुत्वाँ इन्द्र', 'युध्मस्य ते' इति मध्यंदिनः। तीव्रसोमेनान्नाद्यकामः ॥ ३१ ॥**

**मरुत्वाँ इन्द्र** (ऋ ३, ४७), **युध्मस्य ते** (ऋ ३, ४६) इत्येते द्वे सूक्ते मध्यंदिनः। **मरुत्वाँ इन्द्र** इति मरुत्वतीये, **युध्मस्य ते** इति निष्केवल्ये। वृषभलिङ्गे सूक्ते निविदतिपाते[९] एवंलिङ्गे एव ते प्रयोक्तव्ये। अन्यत् सर्वमैकाहिकम्। तीव्रसोमेनान्नाद्यकामः। तीव्रसोमो नामैकाहः। तेनान्नाद्यकामो यजते। **आमयावी वा[१०] ग्रामप्रजापशुकामो वा सोमातिपवितो वा** इति श्रुत्यन्तरे[११] ॥ ३१ ॥

---

१-१. एकवत्यनुरूपः मूको। २-२. निविद्यते मूको। ३-३. लिङ्गसमानः मूको। ४-४. अनिरुक्तौ विश्वालिंगौ समानर्षो य° मूको। ५. नास्ति मूको। ६. अग्निलि° मूको। ७. राजा यज्ञः मूको। ८. जेतुमि° मूको। A वैदिक-प्रयोग-संस्कारवशादयम्। (द्र. ऋ १, १२६, १)। ९. विविदि निपाते मूको। १०. °यावी श मूको। ११. द्र. बौश्रौ १३, २५ : ३[१]; १७, ३४ : ४; ३५ : ९-१०।

[तीव्रसोमस्य मध्यंदिनसवनशस्त्रनिरूपणमभिचारकामस्य च विघनेन यजनम्]

**'क्व स्य वीरः', 'तीव्रस्याभिवयसः' इति मध्यंदिनः। विघनेनाभिचरन्॥३२॥**

**क्व स्य वीरः** (ऋ ५, ३०), **तीव्रस्याभिवयसः** (ऋ १०, १६०) इत्येते सूक्ते मध्यंदिनो भवति। तीव्रलिङ्गे सूक्ते **क्व स्य वीरः** इति मरुत्वतीये, **तीव्रस्य** इति निष्केवल्ये[1]। अन्यत् सर्वमैकाहिकम् अतिदेशाभावात्। अवघ्राजाद्यु (घ्राणाद्यु° ?) त्र्ययनं [अनुसवनम्।] नैषु भक्षणम्। विघनेनाभिचरन्। विघनो नामैकाहः, तेनाभिचरितुकामो यजते, द्वेष्यं हन्तुकामो यजते॥ ३२॥

[विघनस्य शस्त्राणामजिरेण कथितत्वम्]

**तस्य शस्यमजिरेण॥ ३३॥**

तस्य विघनस्याजिरेण शस्यं व्याख्यातम्[2]। द्वावजिरौ छन्दोगैराम्नातौ[3]। तयोः प्रथमस्तेषां सहस्त्रंप्रथमेनातिदिष्टः। स एवातिदेशोऽस्माकमपि प्रमाणम्। **अतिदेशोऽनतिदेशे** इति वचनात्[4]। तस्यानिरुक्ते शस्ये **एवं पूर्वे सवने बृहत्पृष्ठेष्वसमाम्नातेषु** (आश्रौ ९, १०, ६) इति वचनात्। द्वितीयो योऽजिरः[5] तस्य छन्दोगानामतिदेशो न विद्यते। तस्य विघनेनातिदेशः। तस्येति पुनरुच्यते। यस्य छन्दोगानामतिदेशो न विद्यते, तस्य विघनेन। वचनात् शस्यमैवाजिरेण व्याख्यातं, न साद्यस्क्रधर्मा इति॥ ३३॥

[स्वर्गकामस्येन्द्राविष्णोरुत्क्रान्तिनैकाहेन यजनम्]

**इन्द्राविष्णोरुत्क्रान्तिना स्वर्गकामः॥ ३४॥**

इन्द्राविष्णोरुत्क्रान्तिर्नामैकाहः। तेन स्वर्गकामो यजते॥ ३४॥

[तस्य मध्यन्दिनशस्त्रकथनमृतपेयैकाहविधानं च]

**'इमा उ त्वा', 'द्यौर्न य इन्द्र' इति मध्यंदिनः। यः कामयेत नैष्णिह्यं पाप्मन इयामिति स ऋतपेयेन यजेत॥ ३५॥**

[तत्र सूक्तमुखीयर्चोः कथनं सत्येन च चमसभक्षणम्]

**'ऋतस्य हि शुरुधः सन्ति पूर्वाः'[6] इति सूक्तमुखीये सत्येन चमसान् भक्षयन्ति॥ ३६॥**

---

१. **मरुत्वतीये** मूको। २. द्र. आश्रौ ९, ७, १। ३. **छन्दोगेनाम्नातौ** मूको। ४. द्र. आश्रौ ९, १, २-३। ५. **यो विघनः** मूको। ६. ऋ ४, २३, ८-९।

[चमसभक्षणमन्त्रकथनम्]

**'सत्यमियं पृथिवी सत्यमयमग्निः सत्यमयं वायुः सत्यमसा-वादित्यः' इति॥ ३७॥**

**इमा उ त्वा** (ऋ ६, २१), **द्यौर्न य इन्द्र** (ऋ ६, २०) इत्येते सूक्ते मध्यंदिनो भवति। **इमा उ त्वा** इति मरुत्वतीये सूक्तम्, **द्यौर्न[1] यः** इति निष्केवल्ये। विष्णुलिङ्गत्वाद् निविदतिपाते एवंलिङ्गे एवान्ये सूक्ते भवतः। मध्यंदिनादन्यत् सर्वमैकाहिकं शस्यम् अतिदेशाभावात्। एकाहात् पृष्ठम् [पृष्ठ्यो-]- अभिप्लवः स्तोत्रियानुरूपौ, यन्नित्यमव्यभिचारि तदन्यदित्युच्यते। सत्येन [2]वाक्येन, सत्यमार्षमुक्त्वा[2] [3]चमसान् भक्षयन्ति[3] ब्राह्मणानां श्रेष्ठाः[4]। अग्निर्देवता सत्यमित्युक्त्वा भक्षयन्ति, व्याहृतिभिर्वा जनीत्री [भक्षयन्तीति ?]। **सत्यं वै व्याहृतयः** इति श्रुतिः। एवं वेदगायनीये प्रवचने **इयं[5] भूमिरसावादित्यः [6]उदेता प्रातरादित्यः[6]** (द्र. द्राश्रौ २४, १, १३) इत्युक्त्वा भक्षयेदिति छन्दोगानाम् चमसग्रहणं सोमभक्षोपलक्षणार्थम्[7]। सोमभक्षेष्वेव भवति, तत्पुरोळाशादिषु सोमोपलक्षणार्थत्वाद्, एकपात्रेष्वपि भवति। ऋतपेय इति संज्ञा, तस्मात् सर्वसोमभक्षेषु भवति। पूर्णं[8] वाक्यमुक्त्वा नित्यजपमुक्त्वा भक्षयेत्। **उक्तः सोमभक्षजपः सर्वत्र** (आश्रौ ५, ६, २२) इति सर्वत्रग्रहणाद् यथा षोळशिपात्रे हारियोजने च। ३५-३७॥

[सोमपूर्णचमसस्य दक्षिणात्वेन दानम्]

**सोमचमसो दक्षिणा॥ ३८॥**

सोमपूर्णश्चमसः सोमचमसो दक्षिणा। औदुम्बरश्चमसो भवति। तं चमसं सोमपूर्णं दक्षिणाकाले ददाति। नित्येन दक्षिणानां प्रत्त्याऽपापी भवति। **संस्थितेऽहन्यृत्विग्भ्यः किंचिद् दद्यात्** (लाश्रौ ८, ९, १८) इत्येवम्॥ ३८॥

॥ इति नवमे सप्तमः खण्डः॥

---

१. द्यो मूको। २-२. **बाधेत सव्य वाऽर्थम् उत व्य** मूको। ३-३. **चमसं भक्षयति** मूको। ४. **श्रेष्ठ** मूको। ५. **द्वयं** मूको। ६-६. **उदितरादित्य इ°** मूको। ७. **सोमभक्षाय लक्ष°** मूको। ८. **पूर्व्यं** मूको।

## अथ नवमेऽध्यायेऽष्टमः खण्डः

[अतिमूर्तेः पूर्वं मासं सौर्याचान्द्रमस्योरिष्ट्योर्यजनम्]

**अतिमूर्तिना यक्ष्यमाणो मासं सौर्याचान्द्रमसीभ्यामिष्टिभ्यां यजेत।। १।।**

अतिमूर्तिर्नामैकाहः। तेनातिमूर्तिना यक्ष्यमाणो यजमानः पूर्वकालमेव मासं सौर्याचान्द्रमसीभ्यामिष्टिभ्यां यजेत। सूर्यो देवता यस्या इष्टेः सा[१] सौर्या इष्टिः[२]। चन्द्रमा देवता यस्याः सा चान्द्रमसी इष्टिः। ताभ्यां सौर्याचान्द्रमसीभ्यां यजेत। अतिमूर्तिरिव दूणाशो दूळभो बहुसुवर्णकश्च, तेन यक्ष्यमाण इति वचनाद् दीक्षायाः प्रागेव। इष्टिभ्याम् **शुक्लं चान्द्रमस्या सौर्ययेतरम्** (आश्रौ ९, ८, २) इति वचनात्। मासे प्राप्ते मासग्रहणात् त्रिंशदहानीज्या भवति। इष्टिग्रहणम् आहुतिप्रति-षेधार्थम्[३]। सौर्याचान्द्रमसीभ्याम् ऋग्भ्यामाहुती प्राप्नुतः। इष्ट्यधिकाराद् यजेदितीदञ्च सर्वत्र वर्तते। [४]**यत्किञ्चाऽप्रेषितो यजेत्**[४] (आश्रौ १, ११, ११) इति मासमिष्टिभ्यामिति वचनादहन्यहनीष्टी[५] प्राप्नुतः[६]। तस्मादिदमुच्यते।। १।।

[सौर्याचान्द्रमस्योः कालनिरूपणम्]

**शुक्लं चान्द्रमस्या सौर्ययेतरम्।। २।।**

शुक्लं चान्द्रमस्या [७]शुक्लपक्षं चान्द्रमस्या[७] यजेत। अमावास्याया ऊर्ध्वं प्रतिपद्युपक्रम्य आ पौर्णमास्याः। सौर्याचान्द्रमसीभ्यामिति वचनात् सौर्या पूर्वा प्राप्ता, तस्माच्छुक्लं पूर्वं विधीयते। सौर्ययेतरम्। सौर्ययेष्ट्येतरपक्षं यजेत। शुक्लादितरोऽशुक्लः पक्षो भवति। ऊर्ध्वं पौर्णमास्याः प्रतिपद्युपक्रम्य आऽमावास्यायाः। ततोऽमावास्यायां प्रतिपदीज्यते[८]।। २।।

[तयोरनुवाक्यायाज्ययोर्निरूपणम्]

**'अत्राह गोरमन्वत', 'नवोनवो भवति जायमानः', 'तरणिर्विश्वदर्शतः', 'चित्रं देवानामुदगादनीकम्' इति याज्यानुवाक्याः।। ३।।**

---

१. नास्ति मूको। २. इति मूको। ३. अहुतिप्रति° मूको। ४-४. यत्त्विन्द्रो प्रेषित यजेदिति मूको। ५. °हन्यद्हेहनिष्टि मूको। ६. प्राहुतः मूको। ७-७. शून्वपचान्द्र चमसाभ्यां मूको। ८. प्रतिपदीक्षते मूको।

उक्ता देवतास्तासां याज्यानुवाक्याः— **अत्राह** ( ऋ १, ८४, १५), **नवो नवः** (ऋ १०, ८५, १९) इत्यनुक्रमेण चन्द्रमसो याज्यानुवाक्ये। पूर्वार्द्धे चान्द्रमसी चोदिता। **तरणिर्विश्वदर्शतः** (ऋ १, ५०, ४), **चित्रं देवानाम्** (ऋ १, ११५, १) इति सूर्यस्य याज्यानुवाक्ये। **अदृष्टादेशे नित्ये** (आश्रौ २, १, ८) इति प्राप्तयोरारम्भे प्रयोजनम्। **अत्राह गोरमन्वत, नवोनवो भवति जायमानः** इत्येते एव याज्यानुवाक्ये उभयोरपि देवतयोः प्राप्नुतः। सौर्याचान्द्रमसी याज्या। यथैव चन्द्रमस एते भवतः, तथैव सूर्यस्याप्येते एव प्राप्नुतः, तस्मात् पुनराम्नाते। उत्तरतः **सूक्तमुखीये** (आश्रौ ९, ८, ४) इति वचनात् सूक्तमुखीयसंज्ञीयाः स्युरिति[1] याज्यानुवाक्या इत्याह ।। ३ ।।

[तयोः सूक्तमुखीयर्चोः कथनम्]

**'स ईं महीं धुनिमेतोररम्णात्', 'स्वप्नेनाभ्युप्या चुमुरिं धुनिं च' इति सूक्तमुखीये ।। ४ ।।**

**स ईं महीं धुनिमेतोररम्णात्** (ऋ २, १५, ५), **स्वप्नेनाभ्युप्या चुमुरिं धुनिं च** (ऋ २, १५,९) इत्येते ऋचौ सूक्तमुखीये भवतो हिरण्यलिङ्गे[2]। अन्यत् सर्वमैकाहिकं शस्यम् अतिदेशाभावात् ।। ४ ।।

[यशस्कामस्य सूर्यस्तुन्नाम्नैकाहेन यजनम्]

**सूर्यस्तुता यशस्कामः ।। ५ ।।**

सूर्यस्तुत् नामैकाहः। तेन यशस्कामो यजते। ख्यातिर्यशः। तस्यैकाहिकं शस्यमतिदेशाभावात् ।। ५ ।।

[सूर्यस्तुतो मध्यन्दिनशस्त्रसूक्तयोः कथनमन्नाद्यकामस्य च व्योम्नैकाहेन यजनम्]

**'पिवा सोममभि', 'इन्द्रं स्तवा' इति मध्यंदिनः। व्योम्नाऽन्नाद्यकामः ।। ६ ।।**

**पिबा सोममभि** (ऋ ६, १७), **इन्द्रं स्तवा** (ऋ १०, ८९) इत्येते सूक्ते मध्यंदिनः। **पिबा सोमम्** इति मरुत्वतीये, **इन्द्रं स्तव** इति निष्केवल्ये। **अभि** इति शेषवचनात् **महत इन्द्रियाय** (ऋ १०, ११६) इति न भवति। सूर्यलिङ्गे भवतः। व्योम्नाऽन्नाद्यकामः। व्योमा नामैकाहः। तेन व्योम्नाऽन्नाद्यकामो यजते। अन्नाद्यो भवतीति। तस्यैकाहिकं शस्यमतिदेशाभावात् ।। ६ ।।

[यशस्कामस्य विश्वदेवस्तुतैकाहेन यजनम्]

**विश्वदेवस्तुता यशस्कामः ।। ७ ।।**

---

१. नास्ति मूको। २. हिरण्यक्तिगे मूको।

विश्वदेवस्तुत् नामैकाहः। तेन विश्वदेवस्तुता यशस्कामो यजते। तस्यैकाहिकं शस्यम्॥७॥

[पशुकामस्य पञ्चशारदीयेन यजनम्][1]

**पञ्चशारदीयेन पशुकामः।।८।।**

पञ्चशारदीयो नामैकाहः। तेन पशुकामो यजते। गवादयः पशवो गावः (? ग्राह्याः॥।८॥

[पूर्वोक्तैकाहत्रयस्य मध्यंदिनशस्त्रकथनं व्योमविश्वदेवस्तुतोश्च बृहद्रथन्तरसामवत्त्वम्]

**एतेषां त्रयाणां 'कया शुभा', 'तदिदास' इतिमध्यंदिनः उभयसामानौ पूर्वौ।।९।।**

एतेषां त्रयाणां व्योमादीनां त्रयाणामेकाहानाम् **कया शुभा** (ऋ१, १६५), **तदिदास** (ऋ१०, १२०) इत्येते सूक्ते मध्यंदिनो भवति। पञ्चशारदीयस्यैव प्राप्ते (? प्तौ) एतेषामिति व्योमादीनां प्राप्त्यर्थम्। व्योमादीनां मध्यंदिनो नोपदिष्टः। सर्वेषां प्राप्ते (? प्तौ) त्रयाणामित्याह। उभयसामानौ पूर्वौ। त्रयाणामेकाहानां यौ पूर्वौ द्वावेकाहौ व्योमा विश्वदेवस्तुच्च, एतावुभयसामानौ। बृहद्रथंतरं वा पृष्ठस्थाने भवति, इतरत् पवमाने[A]। [1]**यत् पवमाने[1] तस्य योनिर्निष्केवल्ये** (द्र. आश्रौ ५, १५, १६)।।९।।

[पञ्चशारदीयस्योक्थसंस्थत्वं तदाज्यसूक्तस्य च कथनम्]

**उक्थ्यः पञ्चशारदीयो 'विशो विशो वो अतिथिम्' इत्याज्यम्।। १०।।**

**उक्थ्यः** पञ्चशारदीय उक्थसंस्थो भवति पञ्चशारदीयः। अनादेशेऽग्निष्टोमसंस्थो भवति। वचनादत्रोक्थ्यादयो विधीयन्ते। [2]पञ्चशारदीय इति त्रयाणां[2] पूर्वयोरधिकारात्। **विशो विशो वो अतिथिम्** (ऋ ८, ७४) इत्येतत् सूक्तं पञ्चशारदीये[3] आज्यं भवति। मध्यंदिनाधिकारादाज्यमित्याह। आज्यसूक्तस्योत्तमस्तृचः **अहं हुवानः** (ऋ८, ७४, १३-१५) इति नरस्तुतिः। अन्यदेवत्वादुद्धारः प्राप्तः। नोद्ध्रियते तु वचनाभावात्। केचिदुद्धारं मन्यन्ते। **दैवतेन सूक्तान्तः** (आश्रौ ५, १८, १०) इति वचनाद् एतां परिभाषां[4] तदर्थामुपदिशन्ति। यथा **न तु पच्छोऽन्यास्त्रिष्टुब्जगतीभ्यः** (आश्रौ ६, ५, १६) इति, **तथा दृष्टत्वाद्** (आश्रौ ३, ६, ५) इति[5] च। एवं क्रियमाणे **क्व स्य वीरः** (ऋ५, ३०,१) इत्यत्राप्युद्धारः प्राप्तः। **दैवतेन सूक्तान्तः** इति वचनाद् **भद्रमिदं रुशमा अग्ने अक्रन्** (ऋ५, ३०, १२) इत्येतस्य सूक्तशेषस्य। अस्मिन्नुद्ध्रियमाणे तीव्रलिङ्गमुद्ध्रियते। सदो

---

१-१. नास्ति मूको। २-२. °रदीय त्रयां° मूको। ३. **व्योम विश्वदेवस्तुत्पञ्चशारदीयेषु** इति सायणः। ४. **भाषार्थामुप**° मूको। ५. यथाह मूको। A. तत्रत्या देवत्रातव्या° द्र.।

(? इन्द्रे) तीव्रसोमे च लिङ्गमिष्यते—**तीव्रा इन्द्रममन्दुः सुतासः** (ऋ ५, ३०, १३) इति। तस्माद्वचनादाज्ये। मरुत्वतीये य (? त) दा न (? तु) स्तवस्य [1]अनुद्धार एव। किं च[1] रथन्तरं नाम सामपृष्ठं भवति। **अभि त्वा शूर नोनुमः** (ऋ ७, ३२,२२) इति। एतास्वेव ऋक्षु बृहतीकारं प्रगाथा भवन्ति। एष एव शस्यस्तोमः।। १०।।

[तस्य सामपृष्ठस्य निरूपणम्]

**कण्वरथन्तरं पृष्ठम्*।। ११।।**

[पशुकामस्य गोसवविवधैकाहाभ्यां यजनम्]

**गोसवविवधौ पशुकामः।। १२।।**

अग्निष्टोमस्तु गोसवो नामैकाहः। गोसवश्च विवधश्च गोसवविवधौ। ताभ्यां पशुकामो यजते। तयोरैकाहिकं शस्यम् अतिदेशाभावात्।। १२।।

[तत्र मध्यन्दिनशस्त्रस्य निरूपणम्]

**'इन्द्र सोमम्', 'एतायाम' इति मध्यन्दिनः।। १३।।**

**इन्द्र सोमम्** (ऋ १०, २४) इति मंरुत्वतीये सूक्तम्, (**एतायाम** (ऋ १, ३३) इति निष्केवल्ये। गोसवे षट्त्रिंशः स्तोमः। तस्य प्रातःसवे (व) नेत्ये (नान्त्ये ?)-भ्यस्तृचेभ्यः [प्राक् ?] प्रगाथा यथास्थानम्। **ऊर्ध्वमावापात् पर्यासाः** (आश्रौ ७, २, १२) इति वचनात् **एकाहेषु अन्त्या ऐकाहिकास्तृचाः पर्यासस्थानेषु** (आश्रौ ७, ५, १३-१४) भवन्ति। तस्मादन्त्येभ्यस्तृचेभ्यः प्राचावा (चीनै ?)- रावापस्थान उद्धारो वा, यथा बृहस्पतिसवेन[2] (? वे, न) [3]माध्यंदिनम्। तीव्रलिङ्गानि[3] सूक्तान्यावापे प्रयोक्तव्यानि, यथा निविद्धानीययोः।। १३।।

[तत्र दश सहस्राणि गावः दक्षिणाः]

**दश सहस्राणि दक्षिणाः*।।१४।।[4]**

[अनन्तरं षोडशानामेकाहानाम् उपक्रमः]

**षोळशैकाहाः*।। १५।।**

[तेषां षोडशानामायुषा गवा च प्रकृतिभूतेन क्रमशो यजनम्]

**आयुर्गौरिति व्यत्यासम्।। १६।।**

---

१-१. **अनुचार एव कं च** मूको। २. द्र. आश्रौ ९, ५, ३-४)। ३-३. **माध्यन्दिने वोलि°** मूको। ४. नास्ति मूको। *भाष्यं नास्ति।

आयुर्गौरित्येवं व्यत्यासमतिदिष्टाः[१]। तेषां प्रथमस्योद्भिद आयुषा शस्यम्, बलभिदो गवा शस्यम्। विनुत्तेरायुषा शस्यम्, अभिभूतेर्गवा। एवं सर्वेषाम्। व्यत्यस्य व्यत्यासम्। षोळशेति वचनाद् गोसवविवधयोरैकाहिकं शस्यम्। दक्षिणाधिकारात् षोळश सहस्राणीति प्राप्त एकाहग्रहणम्। आयुर्गौरित्युक्तेऽष्टावेकाहाः। आयुर्गौरित्येवंप्राप्ते व्यत्यासमित्याह। द्वन्द्वा इमे एकाहाः। एवमेवेज्याप्यैकाहिकेन दृष्टा[२]।।१६।।

[स्वर्गकामस्योद्भिद्बलभिद्भ्यां यजनम्]

**उद्भिद्बलभिदौ स्वर्गकामः।।१७।।**

उद्भिद्वलभिदावुद्भिन्नामैकाहः, बलभिन्नामैकाहः। ताभ्यां स्वर्गकामो यजेत।।१७।।

[तत्र मध्यंदिनशस्त्रस्य निरूपणम्]

**'इन्द्र सोमम्', 'इन्द्रः पूर्भिद्' इति मध्यन्दिनः।।१८।।**

**इन्द्र सोमम्** (ऋ १०, २४), **इन्द्रः पूर्भित्** (ऋ ३, ३४) इत्येते द्वे सूक्ते मध्यंदिनो भवति, उभयोरप्येकाहयोः द्वितीयस्यापि[३] यजेत द्विरात्रवद्, विपरीताभ्यामतिदेशाद् एककामत्वाच्च। संज्ञाभेदादस्य पृथगिज्या[४]। पुनरष्टावेकाहाः। उद्भिदोऽनन्तरस्य[५] आयुषा शस्यम्। [६]आयुस्तृतीयेनाभिप्लविकेन[६] शस्यम्। सप्तदशस्तोमौ व्यत्यासं भवतः, तस्मान्मध्यंदिनसूक्ते आदिशति। ज्याययाति (आयुषातिदेशे ?) त्रिवृदादिस्तोमेषु कृत्स्नेऽहनि तृचक्लृप्तिर्न विद्यत इति। इह होत्रकाणामपि सप्तदशो[७] विद्यते। तस्माद् एषामपि तृचक्लृप्तिर्न[८] विद्यते। बलभिद् गवा व्याख्यातः। द्वितीयमाभिप्लविकं गौः। उद्भिदः[९] स्तोत्रियाः।।१८।।

[विनुत्त्यभिभूत्योरिषुवज्रयोश्च मध्यंदिनशस्त्रनिरूपणम्]

**विनुत्त्यभिभूत्योरिषुवज्रयोश्च मन्युसूक्ते।।१९।।**

विनुत्त्यभिभूत्योः[१०] विनुत्तिर्नामैकाहः, [११]अभिभूतिर्नामैकाहः, तयोः[११]। इषुवज्र-योश्च। इषुर्नामैकाहः। [११]वज्रो नामैकाहः[११]। तयोरिषुवज्रयोः। एतेषां चतुर्णां मन्युसूक्ते मध्यंदिनः। मन्युर्देवता ययोस्ते मन्युसूक्ते। **त्वया मन्यो** (ऋ १०, ८४), **यस्ते मन्यो** (ऋ १०, ८३) [११]इति। चकार[११] एकाहसमुच्चयार्थः।।१९।।

[अभिचारकामस्य विनुत्त्यादिभिश्चतुर्भिर्यजनम्]

**अभिचरन् यजेत।।२०।।**

---

१. °समिति दिष्टाः मूको। २. एकेन दृष्ट्या मूको। ३. द्वितीय एतावपि मूको। ४. पृथगाज्या मूको। ५. उद्भितनस्य मूको। ६-६. आयुष तृ° मूको। ७. सप्तदश वि° मूको। ८. तृचां क्लृ° मूको। ९. उद्भिदा मूको। १०. विनुत्यभि° मूको। ११-११. नास्ति मूको।

एभिश्चतुर्भिरभिचरितुकामो यजते। विनुत्तिरायुषा व्याख्याता। आयुस्तृतीयेनाभिप्लविकेन शस्यम्, मन्युसूक्ते[१] तु मध्यंदिनः। अभिभूतिर्गवा व्याख्याता। द्वितीयेनाभिप्लविकेन शस्यम्। [२]मन्युसूक्ते तु[२] मध्यंदिनः। आवापसूक्तानि हिंसालिङ्गानि प्रयोक्तव्यानि। इषुरायुषा व्याख्यातः। तृतीयेन आभिप्लविकेन शस्यम्। मन्युसूक्ते तु मध्यंदिनः। आवापसूक्तानि हिंसालिङ्गानि प्रयोक्तव्यानि। निष्केवल्ये एकः स्तोमः, तस्मान्मध्यंदिनौ [३]तृचौ प्रयोक्तव्यौ[३]। **येऽर्वाक् त्रिवृतः स्तोमाः स्युः** (आश्रौ ९, १, १७) इति वचनात्। **मन्युसूक्ते** (आश्रौ ९, ८, १९) इति सूक्तग्रहणात् सूक्ते एव भवतः। होत्रकाणां तु शस्त्रेषु [४]त्रिकस्तोमः। तस्मात् तृचक्लृप्तानि[४] शस्त्राणि भवन्ति। **येऽर्वाक् त्रिवृतः स्तोमाः स्युस्तृचा एव तत्र सूक्तस्थानेषु** (आश्रौ ९, १, १७) इति वचनाद् ऊर्ध्वं प्रगाथेभ्यः संपातानामाद्यास्तृचा अन्त्यानामैकाहिकानामुत्तमास्तृचाः। वैश्वदेवाग्निमारुतयोः कृत्स्नानि सूक्तानि कृत्स्नार्थत्वाद् यज्ञस्य। द्वितीयेनाभिप्लविकेन [५]शस्यम्। तथा मन्युसूक्ते[५] मध्यंदिनः। इषुन्यायेन होत्रकाणां शस्त्राणि। ऊर्ध्वमुक्थ्येभ्यः षोळशी। महानाम्न्यः स्तोत्रियः। तासामुक्तः[६] शस्योपायः। त्रयस्तृचा अनुरूपो व्याख्यातः[६]। विहृता[७] महानाम्न्योऽवसानाक्षरैः [८]पादैस्तस्माद्विहृतः[८] षोडशी शंस्तव्यः॥२०॥

## [त्विष्यपचितिसम्राट्स्वराड्राड्विराट्शदानां मध्यंदिनशस्त्राणां कथनम्]

## त्विष्यपचित्योःसम्राट्स्वराजो राड्विराजोः शदस्य चैकाहिके॥२१॥

त्विषिश्चापचितिश्च त्विष्यपचिती तयोस्त्विष्यपचित्योः, [९]सम्राट् च स्वराट् च सम्राट्स्वराजौ तयोः सम्राट्स्वराजोः, राट् च विराट् च तयोः राड्विराजोः[९], शदो नामैकाहः, शदस्य चैकाहिके सूक्ते मध्यंदिनो भवति। **जनिष्ठा उग्रः** (ऋ १०, ७३), **इन्द्रस्य** (ऋ १, ३२) इति त्विष्यादीनां सप्तानामैकाहिको मध्यंदिनः। च-शब्दस्त्विष्यादिसमुच्चयार्थः। छन्दोगानां तु द्वे अपचिती[१०] तयोः प्रथमस्त्विषिरित्युच्यते[११]। [१२]तस्य तृतीयेनाभिप्लविकेन[१२] शस्यं, निष्केवल्ये एकविंशतिस्तोमस्तस्मादावापः। **तिष्ठा हरी** (ऋ ३, ३५, १) इति मरुत्वतीय आवापः। **साकं प्रतिष्ठा** (ऋ १०, ७३, ६) इत्येतेन समानं लिङ्गं, **प्र घा न्वस्य** (ऋ २, १५, १) इति निष्केवल्य आवापः प्रतिसमानरूपो भवतीति द्वितीयेनाभिप्लविकेन शस्यम्। सम्राट्[१३] नामैकाह आयुषा व्याख्यातः[१४]। तृतीयेनाभिप्लविकेन शस्यम्। स्वराड् नामैकाहो गवा व्याख्यातः। तृतीयेनाभिप्लविकेन शस्यम्। विराड् नामैकाहो गवा व्याख्यातः। तस्य द्वितीयेनाभिप्लविकेन शस्यम्। शदो[१४] नाम एकाहः[१४] आयुषा व्याख्यातः[१४]। तृतीयेनाभिप्लविकेन शस्यम्। सम्राट्, स्वराट्, राड्, विराट्[१४], शद[१४] इत्येषां पञ्चानामेकाहानाम् ऐकाहिके सूक्ते मध्यंदिनः-जनिष्ठा उग्रः (ऋ १०, ७३), **इन्द्रस्य नु वीर्याणि**

---

१. °**सूक्तं** मूको। २-२. **सूक्तेन म°** मूको। ३-३. **प्र** मूको। ४-४. **तृकस्तोमस्तस्मान्नृक्क्युप्तानि** मूको। ५-५. **तस्य तथा सूक्ते** मूको। ६. द्र. आश्रौ ७, १२, १०; १५। ७. **विहिता** मूको। ८-८. **अवशाक्षरैः पादैस्तस्सा हि कृतः** मूको। ९-९. **संश्रद्वेरा सम्राट्स्वराज्यौ तयो संम्राट स्वराजौ तथो द्विराट् विराजोः** मूको। १०. द्र. **तांब्रा** १९, ८, १; ९, १। ११. **प्रथमत्त्विषि°** मूको। १२-१२. **तस्यस्तृती°** मूको। १३. **आमा** मूको। १४. नास्ति मूको।

(१, ३२) इति। मध्यंदिनादन्यत्र तु[१] गवा शस्यम्।। २१।।

[उपशदराशिमरायाणां मध्यंदिनशस्त्रकथनम्]

**उपशदस्य राशिमराययोश्च कयाशुभीयतदिदासीये ॥२२॥**

उपशदस्योपशदो नामैकाहस्तस्योपशदस्य। ये च वक्ष्यन्ते। [?राशिमराय]-योश्च[२] राशिश्च मरायश्च [३]राशिमरायौ। चकारादेशः[३] उपशदस्य समुच्चयार्थः। उपशदो [?गवा व्याख्यातः]। द्वितीयेनाभिप्लविकेन शस्यम्[४]। कयाशुभीय-तदिदासीये (ऋ १, १६५; १०, १२०) मध्यंदिनः। **पिबा सोमम्** (ऋ ७, २२,१) इति मरुत्वतीय आवापः, कयाशुभीयेन सह महाव्रत आम्नातत्वात्। **इन्द्र पिब** (ऋ १०, ११२, १) इति निष्केवल्य आवापः। **सद्यो जज्ञानो निरिणाति शत्रून्** (ऋ, १०, १२०, १), **हर्षस्व हन्तवे शूर शत्रून्** (ऋ १०, ११२, १) इति समानरूपम्। राशिर्नामैकाह आयुषा व्याख्यातः। तृतीयेनानिभप्लविकेन शस्यम्। कयाशुभीयतदिदासीये मध्यंदिनः॥ २२॥

[त्विष्यादीनामनुष्ठाने कामनाभेदप्रदर्शनम्]

**भूतिकामराज्यकामान्नाद्यकामेन्द्रियकामतेजस्कामानाम्।। २३।।**

भूतिकामश्च राज्यकामश्चान्नाद्यकामश्चेन्द्रियकामश्च तेजस्कामश्चैवंकामानां त्विष्यादय एकाहाः। एवंकामो यजमानो यजते। भूतिर्वृद्धिर्भवति। राज्यकामो यजमानो राजा भवति। अन्नाद्यकामः[५] अन्नादो भवतीति। इन्द्रियं वीर्यम्, तेजो वर्चश्च[६] भवति।।२३।।

[पूर्वोक्तकामनाभेदेषु द्वयोर्द्वयोरेकाहयोरेकैककामनानिश्चयः]

**एते कामा द्वयोर्द्वयोः।। २४।।**

एते पञ्च कामाः द्वयोर्द्वयोरेकाहयोरेकैकः कामो भवति त्विष्यादीनाम्। ये त्विष्यादयोऽनुक्तकामाः[७] पञ्चकामाः। तेषाम् आनन्तर्ययोगस्यासंभवात् सर्वे कामाः सर्वेषां प्राप्ताः, तस्मादिदमुच्यते—त्विष्यपचिती भूतिकामस्य, सम्राट्स्वराजौ राज्यकामस्य, राड्विराजौ अन्नाद्यकामस्य, शदोपशदौ इन्द्रियकामस्य, राशिमरायौ तेजस्कामस्य।।२४।।

[ऋषिस्तोमव्रात्यस्तोमयोः शस्त्रनिरूपणम्]

**ऋषिस्तोमा व्रात्यस्तोमाश्च पृष्ठ्याहानि।।२५।।**

ऋषिस्तोमा नामैकाहाः। व्रात्यस्तोमा नामैकाहाः। यथा व्रात्यस्तोमाः। व्रात्यस्तोमाश्च पृष्ठ्याहानीति पृष्ठ्याहैः (°होभिः ?) तेषां शस्यम्। [८]स्तोमः संस्था[८] च। प्रथमेन पृष्ठ्याह्ना शस्यम्। द्वितीयस्य रथन्तरपृष्ठ [९]उक्थसंस्था च[९]। तस्य तृतीयेन पृष्ठ्याह्ना शस्यम्। पुनः

---

१. यु मूको। २. **तयोश्च** मूको। ३-३. **राशिमरायु चकाहोदशः** मूको। ४. नास्ति मूको। ५. **अन्नाद्या°** मूको। ६. **वर्चसी** मूको। ७. **द्वेष्यामनू न प्रकामाः** मूको। ८-८. **स्तोम एमन्वा** मूको। ९-९. **संस्थाश्च** मूको।

प्रयुक्तं हि प्रथमतृतीयेन शस्यं प्राप्तं पृष्ठवशात् तदुपयुक्तम्। तस्मात् पञ्चमेन शस्यम्। पृष्ठ्याहानीति सर्वाण्यहान्युपदिष्टानि, तान्यनुक्रमेण स्तोमपृष्ठसंस्थावशात् प्रयोक्तव्यानि। चतुर्थस्य बृहत्पृष्ठं सर्वस्तोमोऽग्निष्टोमः संस्था। तस्य पृष्ठवशाद् द्वितीयेन पृष्ठ्याह्ना चतुर्थेन वा शस्यं प्राप्तं त्रयस्त्रिंशस्तोमो विद्यते स्तोमवशात् पृष्ठवशात् संस्थावशाच्च। सरत्वा-(?अधिकारा-) च्च पृष्ठ्येनाह्ना शस्यम्। अग्निष्टोमोऽपि इदमहर्भवति[1]। तस्मात् तस्य शस्यं न षष्ठम्।। २५।।

[नाकसदृतुस्तोमदिक्स्तोमानामाभिप्लविकशस्यत्वम्]

**नाकसद ऋतुस्तोमा दिक्स्तोमाश्चाभिप्लवाहानि।।२६।।**

नाकसदो नामैकाहाः, ऋतुस्तोमा नामैकाहाः, दिक्स्तोमा नामैकाहाः। एते सर्वेऽभिप्लवाहानि भवन्ति। अधिकारात् पृष्ठ्याहानि प्राप्तानि। च-शब्दः समुच्चयार्थः। नाकसदादिसमुच्चयार्थः। स्तोमपृष्ठसंस्थाभिरह्नां व्यवस्थानात्॥ २५॥

॥ इति नवमेऽष्टमः खण्डः॥

१. शब्दमहर्भ° मूको।

## अथ नवमेऽध्याये नवमः खण्डः

[आधिपत्यकामस्य वाजपेयेनैकाहेन यजनम्]

**वाजपेयेनाऽऽधिपत्यकामः ।।१ ।।**

वाजपेयेन वाजपेयो नामैकाहः। तेनाधिपत्यकामो यजेत। प्रजापतिरधिपतिर्भवति। आधिपत्यं प्राजापत्यं स्यात्[1] ।।१ ।।

[तत्र दीक्षादिवसानां सङ्ख्यानियमः]

**सप्तदश दीक्षाः ।।२ ।।**

वाजपेयस्य सप्तदश दीक्षा भवन्ति। अपरिमिताः प्राप्ताः। सप्तदश दीक्षाः, [2]तिस्र उपसदः, सुत्यमहरेकविंशं[2] भवति।।२।।

[वाजपेयैकाहस्य सप्तदशभिर्दिवसैरनुष्ठेयत्वविकल्पः]

**सप्तदशापवर्गो वा ।।३ ।।**

सप्तदशेऽ[3]हन्यपवर्गोऽपि ब्राह्मणे[3]। तथा सति त्रयोदश दीक्षाः, तिस्र उपसदः, सप्तदशमहः सुत्यम्। **सप्ताऽपवर्गोऽप्यन्येषाम्** (द्र. बौश्रौ ११, १:१६) तिस्रो दीक्षाः, तिस्र उपसदः, सुत्यमहः सप्तमम्। सप्तद-शादि (॰शेऽहनि ?) वाजपेयेन यजते, अजापि (अन्ययोरपि ?) वा।।३।।

[तत्र सुत्येऽहन्यृत्विजां हिरण्यवर्णपुष्पमालाधारणम्]

**हिरण्यस्रज ऋत्विजो याजयेयुः[4] ।। ४।।**

हिरण्यस्रजो हिरण्यपुष्पमालाः। हिरण्यस्रजः पद्मान्येव भवन्ति। उत्तरत्र विशेषवचनाच्छतपुष्करा इति। ऋत्विग्ग्रहणाद् यजमानस्य प्रतिषेधः। याजयेयुरिति

---

**१. स्था मूको। २-२. द्रि अनुपसद अन्यमह॰ मूको। ३-३. पिरथ ब्राह्मणम्। द्र. तैब्रा १, ३, २-९। ४. नास्ति मूको।**

'वचनात् सुत्येऽहन्येव' हिरण्यस्रजो भवन्ति। प्रधानेन हि चोदना भवति। अध्वर्यूणामप्युक्तम्-**हिरण्यमालिन ऋत्विजः सुत्येऽहनि प्रचरेयुः**[2] (आपश्रौ १८, २, ११) इति।४।।

[तत्र होतुः पद्मबीजपुष्पमालाधारणम्]

**वज्रकिञ्जल्का शतपुष्करा होतुः।।५।।**

वज्रकिञ्जल्का वज्राणि किञ्जल्काः पद्मनाभिः, [3]तस्या बीजस्थानेषु[3] वज्राणि भवन्ति। पुष्कराणि पद्मपुष्पाणि, शतं पुष्कराणि यस्यां सा[4] शतपुष्करा माला सवज्रकिञ्जल्का भवति। एवंगुणविशिष्टा माला होतुर्भवति। शतशब्दोऽपरिमितवाची, यथा [5]'शतवारान् भुक्तमिति बहुवारान्'[5]। पुष्करग्रहणात् सर्वर्त्विजां स्रजः पुष्कराण्येव भवन्ति। शतमिति वचनाद् अन्येषामपरिमितानि[6] भवन्ति। पुष्कराणि सप्तदश सप्तदश भवन्ति **सप्तदश सप्तदशानि संपादयेद्** (आश्रौ ९, ९, १७) इति वचनात्। पुष्पाण्यपि दक्षिणार्थान्येव। सर्वर्त्विजामधिकाराद्धोतुर्ग्रहणम् ॥ ५ ।।

[तत्राऽऽज्यसूक्तमध्यंदिनशस्त्रयोर्बार्हस्पत्येष्टेश्च विधानम्]

**विश्वजिदाज्यं 'कया शुभा', 'तदिदास' इति मध्यन्दिनः। संस्थिते मरुत्वतीये बार्हस्पत्येष्टिः।। ६ ।।**

विश्वजिताऽऽज्यं व्याख्यातम्[7]। **अग्निं नरः** (ऋ ७, १, १) इत्यैकाहिकं तु प्राप्तम्। **कया शुभा** (ऋ १, १६५), **तदिदास** (ऋ १०, १२०) इत्येते द्वे सूक्ते मध्यंदिनो भवति। **कया शुभा** इति मरुत्वतीये सूक्तम्, **तदिदास** इति निष्केवल्ये सूक्तम्। संस्थिते मरुत्वतीये, मरुत्वतीये समाप्ते शस्त्रे च बार्हस्पत्येष्टिः क्रियते। बृहस्पतिर्देवता यस्याः सा बार्हस्पत्येष्टिः। [8]'तस्यां नैवारपयसः'[8] सप्तदश शरावा भवन्ति। प्राजापत्यानां पशुपुरोळाशस्थानीया भवन्ति। सा इष्टिर्वक्ष्यते।। ६ ।।

[बार्हस्पत्येष्टेराज्यभागयाज्यानुवाक्यासंयाज्यानां निरूपणम्]

**आज्यभागप्रभृतीळान्ता 'बृहस्पतिः प्रथमं जायमानः', 'बृहस्पतिः समजयद् वसूनि', 'त्वामीळते अजिरं दूत्याय', 'अग्निं सुदीतिं सुदृशं गृणन्तः' इति संयाज्ये।। ७ ।।**

आज्यभागप्रभृतीळान्ता [ ? बार्हस्पत्येष्टिः] संतिष्ठते। शेषं तन्त्रं पाशुकमेवोपजीवति पशुपुरोळाशात्। पशावाज्यभागौ कृताकृतौ। अक्रियापक्ष आज्यभागप्रभृत्याह।

---

१-१. **वचनादन्येहन्येव** मूको। २. **प्रचरन्ति** मुद्रितः पाठः। ३-३. **तस्य बीजं स्था°** मूको। ४. नास्ति मूको। ५-५. **शतवारामुहमिति बहु** मूको। ६. **अन्येषामन्येषामप°** मूको। ७. द्र. आश्रौ ८, ७, १। ८-८. **बार्हस्पत्यस्यात्वे वारपायसः** मूको।

क्रियापक्षे तु न कर्तव्यावस्माद्दर्शनात्। अक्रियापक्षे सवनीयेष्वप्याज्यभागौ कर्तव्यौ। **बृहस्पतिः प्रथमं जायमानः** (ऋ ४, ५०, ४), **बृहस्पतिः समजयद् वसूनि** (ऋ ६, ७३, ३) इत्येते ऋचौ बार्हस्पत्यस्य याज्यानुवाक्ये भवतः। **त्वामीळते** (ऋ ७, ११, २), **अग्निं सुदीतिम्** (ऋ ३, १७, ४) इत्येते ऋचौ संयाज्ये भवतः। तत्राज्यभागयोर्बार्हस्पत्यचरौ स्विष्टकृति च देवतादेशा न विद्यन्ते **सौमिकीभ्यश्च या अन्तरेण वैश्वानरीयं पत्नीसंयाजांश्च** (आश्रौ १, ५, ३१) इति वचनात्।।७।।

[यद्यध्वर्यव आजिं जापयेयुस्तदा तत्रेतिकर्तव्यता वाजिसामगानं च]

**यदि त्वध्वर्यव आजिं जापयेयुरथ ब्रह्मा तीर्थदेशे मयूखे चक्रं प्रतिमुक्तं तदारुह्य प्रदक्षिणमावर्त्यमाने वाजिनां साम गायाद् आविर्मर्या आ वाजं वाजिनो अग्मन् देवस्य सवितुः सवे स्वर्गां अर्वन्तो जयतः स्वर्गां अर्वन्तो * जयति इति वा।।८।।**

यदि त्वध्वर्यवः। संस्थितायामिष्ट्याम् अध्वर्यवस्तु यद्याजिं जापयेयुः[1]। अध्वर्यवो जापयन्ति[2]। तेऽन्योन्यम् अभिजापयन्तः काष्ठां प्राप्नुवन्ति, साऽऽजिरित्युच्यते। तामाजिं यदि जापयेयुः। यदीति वचनाद् विकल्पः। यदा जापयेयुस्तदा वक्ष्यमाणो विधिर्भवति। यदा न जापयेयुस्तदा वक्ष्यमाणो विधिर्न विद्यते। तु-शब्दो होत्रधिकारव्यावृत्त्यर्थः[3]। यदि जापयन्तु। अथ तेषु जापयत्सु। अथ-शब्दोऽधिकारार्थः। यदाऽऽजिं जापयन्ति[4]। अस्मिन्नधिकारे[5] ब्रह्मा। तीर्थसमीपे मयूखश्चक्रधारणार्थोऽक्षसदृश उपनिहतो भवति, तस्मिन् मयूख औदुम्बरं चक्रं सप्तदशारं प्रतिमुक्तं भवति। तदारोहति ब्रह्मा। चक्रपरिकर्मिणः प्रदक्षिणमावर्तयन्ति। प्रदक्षिणमावर्त्यमाने ब्रह्मा वाजिनां साम गायात्। वाजिनोऽश्वाः। अव्यापी[6] ब्रह्मा भवति तस्माद् यदीत्याह।।८।।

[वाजिसामगानविकल्पेन जाप्यानामृचां निर्देशः]

**यदि साम नाधीयात् त्रिरेतामृचं जपेत्। तृतीयेनाह्नाऽऽभिप्लविकेनोक्तं तृतीयसवनम्। चित्रवतीषु चेत् स्तुवीरन् 'त्वं नश्चित्र ऊत्या', 'अग्ने विवस्वदुषसः' इत्यग्निष्टोमसाम्नः स्तोत्रियानुरूपौ षोळशी त्विह।।९।।**

साम उच्चैर्भवति। ऋचं तु उपांशु ब्रूयाज् जपेदिति वचनात्। तृतीयेनाह्नाऽऽभि-प्लविकेन। अभिप्लवे भवमाभिप्लविकं तृतीयमहः। तेन तृतीयेनाभिप्लविकेनाह्ना उक्तं[7] व्याख्यातम्[8]। तृतीयसवनं वैश्वदेवमाग्निमारुतं च **तद् देवस्य** (ऋ ४, ५३, १) इति

---

१. **जपेयुः** मूको। २. **वाचयन्ति** मूको। ३. **होतृतदधिका°** मूको। ४. **ज्ञापयन्ति** मूको। ५. **तस्मिन्न°** मूको। ६. **व्यापि** मूको। ७. नास्ति मूको। ८. द्र. आश्रौ ७, ७, २।

***अर्वतो** इति आनं पाठः।

यथासमाम्नातम्। चित्रवतीषु चेत्। चित्रशब्दो यासु विद्यते ताश्चित्रवत्यः। तासु चित्रवतीष्वृक्षु चेत् छन्दोगाः स्तुवीरन्, **त्वं नश्चित्रः** (ऋ ६, ४८, ९), **अग्ने विवस्वत्** (ऋ १, ४४, १) इत्येतौ। अग्निष्टोमसाम्नो यज्ञायज्ञीयस्य स्थाने वारवन्तीयं भवति। तस्य साम्न एतौ स्तोत्रियानुरूपौ भवतः। प्रगाथौ बृहतीकारं ककुबुत्तराकारं वा यथास्तुतं शंसेत्। चेदित्यनित्यभावे। यज्ञायज्ञीयं भवति, वारवन्तीयं वा भवति। अग्निष्टोमसाम्न इति स्थानविवक्षार्थम्। षोळशी त्विह। इह तु वाजपेय उक्थ्येभ्य ऊर्ध्वं षोळशि शस्त्रम्। तु-शब्दस्तृतीयेनोक्थसंस्थाप्राप्तिं व्यावर्तयति। इह वचनाद्, इहैव षोळशी भवति, न तृतीये। इहेत्यवधारणे। षोळशी इहैव[1] भवति। **अनवधारणे[2] अन्यार्थो हि संभवति** (?) इति ब्राह्मणवचनात् षोळशी न स्यात् तस्मादवधारणे।।९।।

[षोळश्यनन्तरमुक्थानुष्ठानम्]

**तस्मादूर्ध्वमतिरिक्तोक्थम्।।१०।।**

तस्मादूर्ध्वं तस्मात् षोळशिन ऊर्ध्वमतिरिक्तोक्थं भवति। आम्नाता या संस्था तस्या अतिरिक्तं वक्ष्यते संस्था[3]। तस्मादूर्ध्वमित्यनुक्रमार्थम्।।१०।।

[तत्र स्तोत्रियानुरूपयोर्निर्देशः]

**'प्र तत्ते अद्य शिपिविष्ट नाम', 'प्र तद्विष्णुः स्तवते वीर्येण' इति स्तोत्रियानुरूपौ।।११।।**

**प्र तत्ते अद्य** (ऋ ७, १००, ५-७), **प्र तद् विष्णुः** (ऋ १, १५४, २-४) इत्येतौ स्तोत्रियानुरूपौ भवतः।।११।।

[अनन्तरं त्रिप्रतीकात्मिकाया ऋचः शंसनम्]

**'ब्रह्म जज्ञानं प्रथमं पुरस्ताद्'[4], 'यत्ते दित्सु प्रराध्यं'[5], 'त्वामिच्छवसस्पते'।।१२।।**

**त्वामिच्छवसस्पते** (ऋ ८, ६, २१) इति समानं प्रतीकं गायत्र्याः, द्विपदायाश्च षोळशिनि[6]। **एतस्य समाम्नायस्य** (आश्रौ १, १, १) इति पूर्ववत्त्वाद् गायत्र्येवेति, न द्विपदा।। १२।।

[अनन्तरं द्वादशानामृचां शंसनं कृत्वाऽऽह्वानान्तरं दूरोहणस्य विधानम्]

---

१. इह मूको। २. धारणे मूको। ३. सं मूको। ४. आश्रौ ४, ६, ३। ५. ऋ ५, ३९, ३। ६. षोडशीति मूको।

**'तं प्रत्नथा' इति त्रयोदशानामेकां शिष्ट्वाऽऽहूय दूरोहणं रोहेत्।। १३ ।।**

**तं प्रत्नथा**[1] (ऋ ५, ४४, १-१३) इति। एतास्त्रयोदश ऋचः, तासां त्रयोदशानाम् एकामृचं शिष्ट्वा आहूय[2] आहावं कृत्वा दूरोहणं रोहेत्। तद् व्याख्यातम्[3]। आहावो विधीयते प्रतीकाभावान्[4] प्राप्तः [5]**शोंसावोम्** (आश्रौ ५, ९, १) इत्याहावः **शोंसामो दैवेत्याहावे** (आश्रौ ५, ९, ५) प्रतीकावचनात्[5]। चतुराहावशस्त्रं भवति होतुः शस्त्रम्॥ १३॥

[तस्य परिधानीयायाज्ययोः सप्तदशानां च दक्षिणानां निरूपणम्]

**'बृहस्पते युवमिन्द्रश्च वस्वः' इति परिधानीया। 'विभ्राड् बृहत् पिबतु सोम्यं मधु' इति याज्या। तस्य गवां शतानामश्वरथानामश्वानां साद्यानां वह्यानां महानसानां दासीनां निष्ककण्ठीनां हस्तिनां हिरण्यकक्ष्याणां सप्तदश सप्तदशानि दक्षिणाः ॥१४॥**

**बृहस्पते युवम्** (ऋ ७, ९७, १०; ९८, ७) इति परिधानीया भवति। परिधानीयावचनं याज्याविवक्षार्थम्। **विभ्राड् बृहत्** (ऋ १० १७०, १) इति याज्या।

तस्य गवां शतानां तस्य वाजपेयस्य दक्षिणा वक्ष्यन्ते—गवां शतानाम्। वाजपेयसंज्ञायाः शस्येन व्यवधानात्। पुनरधिकारात् तस्येति दक्षिणाविवक्षार्थं गवादीनां षष्ठीवचनम्। सप्तदश [6]सप्तदशानीति[6] संख्याविवक्षार्थम्। गवादयः सप्तदश गणशः[7] प्राप्नुवन्ति यथा रथादयः। [8]तस्माद् गवादयः सप्तदश दक्षिणार्था[8] वक्ष्यन्ते, तेषां सप्तदशानि संपादयेद् (द्र. आश्रौ ९, ९, १७) इति। गवां शतानामित्यनुच्यमाने सप्तदश गावः प्राप्नुवन्ति यथा रथादयः। तस्माद् गवां सप्तदश शतानि। अश्वरथानाम् आशुगमना अश्वाः। अश्वयुक्ता रथाः सप्तदश भवन्ति। अश्वानां साद्यानाम्। सप्तदश अश्वा भवन्ति। येषु मनुष्या आसीदन्त्यारोहन्ति ते साद्याः। सुदान्ता[9] इत्यर्थः। वह्यानां शीघ्रं वहन्ति ये ते वह्यास्तेषाम्। महानसानां महान्ति च तान्यनांसि महानसानि तेषाम्। सप्तदशानीति वचनाद् वह्याः शकटाद्याः सप्तदश भवन्ति। दासीनां निष्ककण्ठीनां निस्काः कण्ठेषु यासां ता निष्ककण्ठ्यः। निष्को नामालङ्कारश्चतुस्सुवर्णो भवति। दक्षिणादाने तु स[10] एव प्रमाणम्। अलंकारेषु प्रमाणं न विद्यते। कश्चित् सुवर्णेन[11] निष्कितोऽलंकारो निष्क इत्युच्यते। हस्तिनां हिरण्यकक्ष्याणां सप्तदश हस्तिनो भवन्ति। ते हस्तिनो हिरण्यकक्ष्या भवन्ति। कक्ष्या बन्धनरज्जवः सौवर्णा भवन्ति।

सप्तदश सप्तदश भवन्ति। गवादयः सप्त दक्षिणार्था उक्ताः, दशान्ये[12] वक्ष्यन्ते।

---

१. **पलया च** मूको। २. नास्ति मूको। ३. द्र. आश्रौ ८, २, १३। ४. **प्रतिभाषान्न** मूको। द्र. आश्रौ ५, १०, १३ नारायणवृत्तिः। ५-५. **शों शाखा नित्याभावः प्रतीवचनात्** मूको। ६-६. **सप्तमदशनीति** मूको। ७. **प्रणवः** मूको। ८-८. **तस्मा हुवां सप्त दक्षिणार्थो** मूको। ९. **अदन्ता** मूको। १०. नास्ति मूको। ११. **सुवर्णे** मूको। १२. द्र. आश्रौ ९, ९, १५। १३-१३. **गवादीनां शता दक्षिणनि** मूको।

वक्ष्यमाणैः सह गवादीनि सप्तदश भवन्ति। तानि सप्तदश सप्तदश भवन्ति। सप्तदश [१]गवां शतानि दक्षिणाः[१]। सप्तदशाश्वरथाः, सप्तदशाश्वाः, सप्तदश वह्याः, सप्तदश महानसानि, सप्तदश दास्यः, सप्तदश हस्तिनः। सप्तदशाजगणाः, सप्तदशाविगणाः, सप्तदश गर्दभगणाः, सप्तदश महिषीगणाः, सप्तदशाश्वतरीगणाः। एत एवाभ्यस्यमाना दश[५] भवन्ति। गवादीनां सप्तदशानां सप्तदशानीति दक्षिणाः। दक्षिणा इत्यनुच्यमाने गवादयोऽर्थाः किमर्थं चोदिता इति संशयः स्यात्, तस्मात्[१] सप्तदश सप्तदशानि दक्षिणा इत्युक्तम्। गवादयोऽर्थाः सप्तैवोक्ताः। इदानीं दशान्येऽर्था वक्ष्यन्ते।। १४।।

[तत्रान्येषां दशानां दक्षिणागणानां प्रमाणस्य निरूपणम्]

**दशान्ये दक्षिणागणा धनानां शतावमापराद्ध्यानाम्।। १५।।**

गवादयः सप्त दक्षिणा उक्ताः। ताभ्योऽन्ये दश दक्षिणार्था गणा अजादीनां धनानाम्। तेषां गणानामपि प्रमाणं वक्ष्यते। शतम् अवमं भवति येषां गणानां ते शतावमाः। [२]अपरा शतात्परा ऋद्धिर्वृद्धिर्येषां ते शता- (अपरा ?)- द्ध्याः। तेषां शतावमापराद्ध्यानाम् अजानाम्, अविकानाम्, उष्ट्राणां, गर्दभानां, महिषीणाम्, अश्वतरीणां धनानां गणाः। [२]एत एवाभ्यस्यैते[२] दश गणा भवन्तीति सूत्रार्थः।

तत्र दशान्य इति वचनाद् गवादीनां प्रयुक्तानाम् अप्रयोगोऽन्य इति वचनात्। दक्षिणाधिकारो निवृत्तो दक्षिणाभ्योऽन्य इति। तस्मात् पुनर्दक्षिणाधिकारः क्रियते। गणाः समूहा भवन्ति। धनानामिति सर्वधनानां सामान्यचोदना, हिरण्यादीनामपि प्राप्ते गणा इति वचनाद् अजादीनां गणा भवन्ति। गणानां प्रमाणं सप्तदशानि भवन्ति। अजानां सप्तदश गणाः। अविकानां सप्तदश गणाः। एवमुष्ट्राणां, गर्दभानां, महिषीणाम्, अश्वतरीणाम्। एतेऽभ्यस्यमाना दश गणा भवन्ति।।१५।।

[गवादीनां वा गणशो दक्षिणारूपेण दानम्]

**पूर्वान् वा गणशोऽभ्यस्येत्।।१६।।**

पूर्वे गवादयः सप्त दक्षिणार्था उक्ताः। तानेव वा गणशो गणं गणम् अभ्यस्येद्[३], अजादीन् वाऽभ्यस्येदिति कल्पः। अभ्यस्यमाना दश संपद्यन्ते। पूर्वान् वाऽभ्यस्येत्। इत्येतावता सिद्धे 'गणशः' इति वचनाद् गणा एव भवन्ति। गणानेव कृत्वाऽभ्यस्येत्। गवादयोऽर्थाः सप्त, सप्तैव गणाः प्राप्ताः। अभ्यस्येदिति वचनाद् दश गणा भवन्ति। अस्मिन् कल्पे गवादयः सप्त दक्षिणार्था यथोक्ताः, [४]तथा त एव गणभूताः[४] अभ्यस्यमाना दश भवन्ति। पूर्वे च सप्त, इमे च दश गणाः, सप्तदश संपद्यन्ते।।१६।।

---

१. नास्ति मूको। २-२. ऐतान्येवाहस्येते मूको। ३. अभ्यस्य मूको। ४-४. अथात एव गणा भूताः मूको। ५. 'दशा' इति पाठं नारायणो मनुते ?

[सप्तदशानां सप्तदश गणाः दक्षिणाः]

**सप्तदश सप्तदशानि[1] संपादयेत्।।१७।।**

सप्त दक्षिणा इति प्राप्त इदं पुनरुच्यते सप्तदश सप्तदशानि संपादयेदिति। अस्मादारम्भाद् गवादयः सप्त, अजादिगणाश्च[1] दश, एते सप्तदश। सप्तदशेति वचनात् सप्तदशैव प्राप्ताः, तस्मात् पुनः सप्तदशानीत्याह।संपादयेदिति न वक्तव्यम्।इदं प्रयोजनम्। यथाकथंचन दश सप्तदशानि संपादयेदित्युक्तं भवति। यानि द्रव्याण्युपलभ्यन्ते, तान्येवाभ्यस्येत्। अध्वर्यूणां तु **वयसो वयसः सप्तदश सप्तदशानि ददाति**( आपश्रौ १८, ३, ८) [2]इत्येकः कल्पः[2]।सहस्रं वा ददातीत्यपरः कल्पः।छन्दोगानां तु **सप्तदश वैव गावस्तं कुरुवाजपेय इत्याचक्षते**[3] (लाश्रौ ८, ११, १८) इति।।१७।।

[वाजपेयविधिवर्णनोपसंहारः]

**इति वाजपेयः।।१८।।**

इत्ययं वाजपेयो व्याख्यातः। पुनरधिक्रियत उत्तरसूत्रविवक्षार्थम्।।१८।।

[वाजपेयानन्तरं राज्ञो राजसूयेन ब्राह्मणस्य च बृहस्पतिसवेन यजनम्]

**तेनेष्ट्वा राजसूयेन यजेत। ब्राह्मणो बृहस्पतिसवेन।।१९।।**

तेन वाजपेयेनेष्ट्वा राजा[4] राजसूयेन यजेत।अविशेषतः[5] सर्ववर्णानामधिकाराद् राज्ञो विशेष उच्यते।राजसूयेनेत्येकवचनेन चोदितेऽपि सप्त राजसूया यथोक्तेन विधानेन प्रयुज्यन्ते। **राजसूयाः** (द्र. आश्रौ ९, ३, १;४, १) इति समुदायचोदना द्रष्टव्या।ब्राह्मणो बृहस्पतिसवेन यजेत। स व्याख्यातः[6]। ज्योतिष्टोम एवान्येषाम्। पुनः परिष्वाक (?) राजसूयेन[7] यजेतेत्युक्तम्। येषां (अन्येषां ?) ज्योतिष्टोमाश्च।।१९।।

॥ इति नवमे नवमः खण्डः॥

---

१. **अथाग॰** मूको। २-२. **इत्येव विकल्पः** मूको। ३. **॰त्याचक्षते ददातीति** मूको। ४. नास्ति मूको। ५. **॰शेषसर्व॰** मूको। ६. द्र आश्रौ ९, ५, ३-१०। ७. **राजपेयेन** मूको।

# अथ नवमेऽध्याये दशमः खण्डः

[अनिरुक्तनाम्न एकाहस्य प्रातस्तृतीयसवनयोः शस्त्राणां निरूपणम्]

**अनिरुक्तस्य चतुर्विंशेन प्रातःसवनं च तृतीयसवनं च ।। १ ।।**

अनिरुक्तस्यानिरुक्तो नामैकाहः। तस्यानिरुक्तस्य चतुर्विंशेनाह्ना प्रातःसवनं व्याख्यातम्। ऐकाहिके प्राप्त आरम्भः। **त्रिवृदनिरुक्तः** (आश्रौ ११, ३, ९), **त्रयस्त्रिंशोऽनिरुक्तः** (आश्रौ ११, ३, ८) इत्युक्त एतस्य ग्रहणम्। च-शब्दः समुच्चयार्थः ।।१ ।।

[तत्र वैश्वदेवशस्त्रस्य निरूपणम्]

**'तं प्रत्नथा' इति च त्रयोदश वैश्वदेवम् ।। २ ।।**

**तं प्रत्नथा** (ऋ ५, ४४, १-१३) इति तु त्रयोदश ऋचो वैश्वदेवसूक्तम्। **यज्ञस्य वो रथ्यम्** (ऋ १०, ९२) [इति वैश्वदेवस्यायमपवादः ?] ।। २ ।।

[तत्र मध्यंदिनशस्त्रस्य निरूपणम्]

**'कया शुभा', 'तदिदास' इति मध्यंदिनः ।।३ ।।**

**'कया शुभा, तदिदास'**[1] इत्येते द्वे सूक्ते मध्यन्दिनः। **कया शुभा** (ऋ १, १६५) इति मरुत्वतीये सूक्तम्, **तदिदास** (ऋ १०, १२०) इति निष्केवल्ये सूक्तम्। अन्यत् सर्वमैकाहिकम्। मध्यंदिनं [2]सवनमित्यतिदेशतो व्यवधानात्[2]। शंस्तव्याः[3] सर्वस्तोत्रियानुरूपाः। अनिरुक्तत्वाद् युक्तं तु संसदामयने[4]। ऽपहव्ये छन्दोगानाम्[5] अस्माकमपि निरुक्तचोदिताः ।। ३ ।।

[प्रगाथेभ्य ऊर्ध्वं होत्रककर्तृकं संपातसूक्तानां शंसनम्]

**होत्रका ऊर्ध्वं प्रगाथेभ्यः प्रथमान् संपाताञ्शंसेयुः ।।४ ।।**

---

१-१. नास्ति मूको। २-२. **सवनमतिदेशतो बाधात्** मूको। ३. **य तु व्या** मूको। ४. द्र. आश्रौ ११, ३, २१। ५. द्र. लाश्रौ ८, ९, १।

होत्रका ऊर्ध्वं स्तोत्रियानुरूपेभ्यः[1] प्रगाथेभ्यः प्रथमान् संपातान् शंसेयुः। **एवा त्वामिन्द्र** (ऋ ४, १९), **इन्द्रः पूर्भित्** (ऋ ३, ३४), **इमामू षु** (ऋ ३, ३६) इति। ऐकाहिकानि सूक्तानि प्राप्तानि। होतुरधिकाराद् होत्रका इत्याह। **अहीनसूक्तान्यादितस्तृतीयानि सामसूक्तानि**[2] (आश्रौ ८, ४, १७-१८)। तस्मादूर्ध्वं प्रगाथेभ्यः संपाता विधीयन्ते।।४।।

[अनन्तरमहीनसूक्तानां शंसनम्]

**अहीनसूक्तानि वा।।५।।**

संपातेभ्योऽनन्तराण्यहीनसूक्तानि भवन्ति। **आ सत्यो यातु** (ऋ ४, १६), **अस्मा इदु** (ऋ १, ६१), **शासद् वह्निः** (ऋ ६, ३१) इति। वा-शब्दः समुच्चयार्थे भवति। विकल्पो न संभवति। **अहीनसूक्तानि षळहस्तोत्रियानावपत्सु** (आश्रौ ७, ४, ११) इति वचनात्। **ततोऽन्त्यान्यैकाहिकानि** (आश्रौ ८, ४, १६) इति वचनाद् अहीनसूक्तेभ्योऽनन्तराण्यन्त्यान्यैकाहिकानि सूक्तानि भवन्ति। ससंपातानि[3] अहीनसूक्तान्यैकाहिकानि चैकाहिकेष्वैकाहिकीभिः परिधानार्थमन्त्यान्यैकाहिकानि विधीयन्ते। इह यद्यैकाहिकानि विधीयन्ते, तदा[4] ऐकाहिकाः परिधानीया भवन्ति। [5]संसदामयनेऽहरहःशस्यानाम् अहीनसूक्तस्योद्धारः प्राप्नोति। ब्राह्मणाच्छंसिनोऽच्छावाकस्य चैकाहिकं न[6] शस्यते, ऐकाहिकस्य स्थानेऽहरहः-शस्यं भवति। सर्वत्र अहीनसूक्तान्यादितस्तृतीयानि (द्र. आश्रौ ८, ४, १७) शस्यन्ते। इह कस्माद् द्वितीयानि शस्यन्त इति। यद्यादितो ऽहीनसूक्तानि शस्यन्ते मैत्रावरुणस्याहरहः-शस्यानामहीनसूक्तस्योद्धारः प्राप्नोति, तस्मादादितः संपाताः।।५।।

[बृहत्पृष्ठसंज्ञकेष्वेकाहेषु प्रातर्मध्यंदिनसवनयोर्निरूपणम्]

**एवं पूर्वे सवने बृहत्पृष्ठेष्वसमाम्नातेषु।।६।।**

एवं पूर्वे सवने[7] प्रातःसवनं माध्यंदिनं च बृहत्पृष्ठेष्वसमाम्नातेष्वेकाहेषु भवतो यथा साहस्रेषु[8]। ऐकाहिके शस्ये प्राप्ते एवंक्लृप्ते[9] द्वे सवने भवतः। ऐकाहिकं तृतीयसवनमतिदेशाभावात्। बृहत्पृष्ठेष्वितिवचनाद् रथंतरपृष्ठेष्वैकाहिकं शस्यम्, यथा प्रजापतेरपूर्वः सर्वस्वारपक्षी[10] मरुत्स्तोम इति। समाम्नातेष्विति [11]वचनाद् असमाम्नातेषु[11] एवंक्लृप्ते सवने न भवतः। साहस्रा नामैकाहाः चत्वारस्तेषु[12] सहस्रादधिकः प्रातरनुवाक इति छन्दोगानां श्रुतिः[13]। उभयसामानः सर्वे बृहत्पृष्ठा बार्हताः स्तोत्रियानुरूपाः। एवंक्लृप्ते द्वे सवने, ऐकाहिकं तृतीयसवनम्। तयोः **स्वादोरित्था** (ऋ १, ८४, १०-१५) इति स्तोत्रियानुरूपौ माध्यंदिने ब्राह्मणाच्छंसिनः। **श्रायन्तीयम्**[14] (ऋ ८, ९९, ३-४) तु

---

१. **स्तोत्रियानुरुपेभ्यः** आनं सं। २. सामानि मूको। ३. संसंहताः मूको। ४. ते मूको। ५. द्र. आश्रौ ११, ३, ११। ६. तु मूको। ७. सवने एवं मूको। ८. सहस्रेषु मूको। ९. एव° मूको। १०. पूर्वस्वारपक्षी मूको। ११-११. वचनात् समाम्नातेषु मूको। १२. द्र. काश्रौ २२, २, ६। १३. द्र. तांब्रा १६, ८, ३। १४. श्रावंतिति मूको।

तृतीयचतुर्थयोः। चतुर्थे तु वारुणम् (द्र. आश्रौ ७, ५, ९) इति स्तोत्रियो मैत्रावरुणस्य। तृतीये **आ नो मित्रावरुणा** (ऋ ३, ६२, १६), **इन्द्राग्नी आगतम्** (ऋ ३, १२, १-३) इति स्तोत्रियाः। **उक्थेषु** (ऋ २, ११, ३-५), **एह्यू षु** (ऋ ६, १६, १६), **वयं घ त्वा** (ऋ ८, ३३, १-३), **य एक इद् विदयते** (ऋ, १, ८४, ७-९) इति वा, **गायन्ति त्वा** (ऋ १, १०, १-३) इति स्तोत्रियानुरूपाः।। ६।।

[विश्वजिच्छिल्पसंज्ञकस्यैकाहस्य निरूपणम्]

**प्रतिकामं विश्वजिच्छिल्पः ।।७।।**

कामं कामं प्रति प्रतिकामं विश्वजिच्छिल्पो नामैकाहः। तेन स्वर्गादयः कामाः। तेषां यं यं कामं कामयते, तं तं काममाप्नोत्येतेन यज्ञक्रतुना।। ७।।

[विश्वजिच्छिल्पस्य प्रगाथपर्यन्तं शस्यं विश्वजिता समानम्]

**तस्य समानं विश्वजिताऽऽ प्रगाथेभ्यः।। ८।।**

तस्य विश्वजिच्छिल्पस्य विश्वजिता[1] अह्ना समानं शस्यम्, आ प्रगाथेभ्यो होत्रकाणां माध्यंदिने ये प्रगाथा आ तेभ्यः समानं शस्यम्। ऊर्ध्वं प्रगाथेभ्यो यथाम्नातं शस्यम्। विश्वजिच्छिल्प इति विश्वजिता शिल्पान्येव, नान्यदिति प्राप्ते सर्वस्य शस्यस्य प्राप्त्यर्थमतिदेशः।।८।।

[तस्याऽऽज्यसूक्तस्य निष्केवल्यमरुत्वतीयशस्त्रयोश्च निरूपणम्]

**बृहस्पतिसवेनाऽऽज्यं निष्केवल्यमरुत्वतीयौ च तृचौ।। ९।।**

अस्मिन्नहनि बृहस्पतिसवेन[2] आज्यादिशस्यं कल्प्यते होत्रकाणां[3] च प्रथमोत्तमास्तृचाः कल्प्यन्ते[4]। तस्माद् यथा बृहस्पतिसवे शस्त्राणामातानाः, तथा प्राप्ताः। योन्यः सामप्रगाथाश्च न स्युः, तस्मात् **आ प्रगाथेभ्यः** (आश्रौ ९, १०, ८) इति वचनाद् योनिः सामप्रगाथाश्च शस्यन्ते। बृहस्पतिसवेनाज्यम् **अग्निर्देवेषु राजति** (ऋ ५, २५, ४) इति। विश्वजिति त्वतिदेशात् प्राप्तम्। विश्वजिच्छिल्पः साद्यस्क्र आम्नातः, छन्दोगानां[5] द्व्यहीनस्त्र्य[6]हीनोऽपि [6]भवति। तस्माद् बृहस्पतिसवेन व्याख्यातौ।।९।।

[मरुत्वतीयनिष्केवल्यतृचाभ्यां पूर्वमैकाहिकसूक्तयोः शंसनम्]

**ताभ्यां तु पूर्वे ऐकाहिके।।१०।।**

[7]**इन्द्र मरुत्व इह**[7] (ऋ ३, ५१, ७-९) इति मरुत्वतीये तृचः। **नृणामु त्वा** (ऋ ३, ५१, ४-६) इति निष्केवल्ये तृचः। विश्वजिदतिदेशाद्[8] ऐकाहिके निविद्धानीये प्राप्ते, तयोः स्थाने भवतः **जनिष्ठा उग्रः** (ऋ १०, ७३), [9]**इन्द्रस्य नु वीर्याणि**[9] (ऋ १, ३२) इति।

---

१. द्र. आश्रौ ८, ७, १। २. द्र. आश्रौ ९, ५, ३। ३. **होत्राणां** मूको। ४. **कल्पन्ते** मूको। ५. द्र. तांब्रा १६, १५, १। ६-६. °**हीना पिबति** मूको। ७-७. नास्ति मूको। ८. द्र. आश्रौ ९, १०, ८। ९-९. नास्ति मूको।

विश्वजिदतिदेशात् कयाशुभीयतदिदासीये प्राप्ते, तयोः स्थाने 'ऐकाहिके सूक्ते'[1] भवतः। एकविंशतिस्तोमो निष्केवल्ये, तस्माद् द्वे सूक्ते भवतः। तुशब्दः प्राप्तयो र्व्यावृत्त्यर्थः ।।१०।।

[प्रगाथेभ्य ऊर्ध्वं होत्रक-कर्तृकमविकृतानां सूक्तानां शंसनम्]

**होत्रका ऊर्ध्वं प्रगाथेभ्यः शिल्पान्यविकृतानि शंसेयुः ।।११।।**

षड् बालखिल्यानां सूक्तान्यविकृतानि[2] मैत्रावरुणः शंसति[3]। **सुकीर्तिं ब्राह्मणाच्छंसी वृषाकपिं च पङ्क्तिशंसम्** (द्र. आश्रौ ८, ४, ९), **'द्यौर्न य इन्द्र'** (ऋ ६, २०) **इत्यच्छावाकः** (द्र. आश्रौ ८, ४, १०)। होतुरधिकाराद्धोत्रका इत्याह। सूक्ताधिकारादूर्ध्वं प्रगाथेभ्य इत्याह। विश्वजिति माध्यंदिनशिल्पानि कृतान्यग्निष्टोमे तु द्वैपदोक्थ्ये माध्यंदिने शस्यन्ते। द्वैपदोक्थ्ये तु उक्थ्येष्वेव शस्यन्ते तस्मादतिदेशादप्राप्तानि विधीयन्ते। प्रकृतौ विकृतौ च शस्यन्ते। तस्मादविकृतानीत्याह ।। ११ ।।

[ततः परं सामसूक्तानां शंसनम्]

**सामसूक्तानि च।।१२।।**

प्रगाथेभ्य ऊर्ध्वं शिल्पानि[4] सामसूक्तानि च शस्यन्ते **सत्रा मदासः** (ऋ ६, ३६), **यो जात एव** (ऋ २, १२), **अभूरेकः** (ऋ ६, ३१) इति। च-शब्दः समुच्चयार्थः। सर्वपृष्ठे क्रतौ प्राप्तान्यपि पुनरुच्यन्ते। कृत्स्नानि शस्त्राणीह कल्प्यन्ते। तस्माद् यथाम्नातान्येव स्युः, [5]सामसूक्तानां प्राप्तिः न स्यात्[5] ।। १२ ।।

[ततः परमहीनसूक्तानामाद्यानां तृचानां शंसनम्]

**आद्यांस्तृचानहीनसूक्तानाम्।।१३।।**

ऊर्ध्वं सामसूक्तेभ्योऽहीनसूक्तानाम् [6]आद्यान् तृचान्[6] शंसेयुः। **आ सत्यो यात** (ऋ ४, १६, १-३), [7]**अस्मा इदु**[7] (ऋ १, ६१, १-३), **शासद् वह्निः** (ऋ ३, ३१, १-३) इत्यहीनसूक्तानि **षळहस्तोत्रियानावपत्सु** (आश्रौ ७, ४, ११) इति वचनात् कृत्स्नान्यहीनसूक्तानि प्राप्तानि। साद्यस्क्रस्य बृहस्पतिसवप्रकृतित्वाद्[8] आद्यास्तृचाः।।१३।।

[ततः परमन्त्यानामैकाहिकानां सूक्तानामुत्तमानां तृचानां शंसनम्]

**अन्त्यानामैकाहिकानामुत्तमान्।।१४।।**

---

१-१. °**हिकसूक्ते** मूको। २. °**न्यविहितानि** मूको। ३. द्र. आश्रौ ८, ४, ७-८। ४. द्र. आश्रौ ८, ७, ११। ५-५. °**सूक्तानि प्राप्तिः स्यात् इति** मूको। ६-६. **आद्येन तृचेन** मूको। ७-७. **अस्माक इन्द्र** मूको। ८. °**तिसवंनप्रकृ**° मूको।

अन्त्यानामैकाहिकानां सूक्तानाम् उत्तमान् तृचान् शंसेयुः **वम्रीभिः पुत्रम्** ( ऋ ४, १९, ९-११), **आपश्चित् पिप्युः** (ऋ ७, २३, ४-६), **ह्रदा इव कुक्षयः** (ऋ ३, ३६, ८-९; ११) इति[1]। तत्र [2]**नित्यान्यैकाहिकानि**[2] ( आश्रौ ८, ४, ३) इति वचनात् कृत्स्नेषु प्राप्तेषु बृहस्पतिसवप्रकृतित्वाद्[3] अन्त्यास्तृचाः कल्प्यन्ते ।।१४।।

[ तृतीयसवने बृहस्पतिसववच्छस्त्राणां प्रयोगः। नाभानेदिष्ठमन्त्राणां वैश्वदेवात् पूर्वं शस्यत्वम्]

**समानं तृतीयसवनं बृहस्पतिसवेन। नाभानेदिष्ठस्त्विह पूर्वो वैश्वदेवात् तृचात् ।।१५।।**

[ आग्निमारुते सूक्ते मारुतात् तृचात् पूर्वमेवयामरुतः शंसनम् ]

**एवयामरुत्त्वाग्निमारुते मारुतात् ।।१६।।**

[उक्तयोः शंसनविधेरुक्तत्वम्]

**तयोरुक्तः शस्योपायः ।।१७।।**

बृहस्पतिसवेन तुल्यं तृतीयसवनं वैश्वदेवमाग्निमारुतं[4] च। ऐकाहिकं तु प्राप्तम्। **उदु ष्य देवः सविता हिरण्यया** (ऋ ६, ७१, १) इति यत् समाम्नातं **यत्रा चक्रुः** (ऋ ७, ६३, ५) वैश्वदेवमाग्निमारुतं च। साद्यस्क्रत्वाद् बृहस्पतिसवेनातिदेशः। नाभानेदिष्ठस्त्वृषिः। इह [5]विश्वजिच्छिल्पे वैश्वदेवात् तृचात् पूर्वः[5] शस्यते। **स्वस्ति नो मिमीताम्** ( ऋ ५, ५१, ११-१३) इत्येतस्मात् तृचात् पूर्वः शस्यते। **इदमित्था रौद्रम्** (ऋ १०, ६१), **ये यज्ञेन** (ऋ १०, ६२) इति सूक्ते। विश्वजिति नित्यानि शिल्पानि सहचराणि। **तानि सह वा शंसेत् सह वा न शंसेत्** (ऐब्रा ६, ३०) इति ब्राह्मणम्। तस्मादिह च नाभानेदिष्ठो विधीयते एवयामरुच्च[6]। नाभानेदिष्ठ इत्यृषिग्रहणात् कृत्स्नमपि शस्यते। बृहस्पतिसवन्यायेन तृचक्लृप्तिर्न भवति। तुशब्दो विशेषविवक्षार्थः। इह वचनादिहैव शिल्पेषु कृतेषु नाभानेदिष्ठः शस्यते। अन्यत्र कृतेष्वपि शस्येषु न शस्यते पृष्ठ्यस्य प्रथमेऽहनि द्वितीये च। एवयामरुतश्च व्याख्यातस्तस्य विधिः शस्योपायः। **प्रागुपोत्तमाया ये यज्ञेनेत्यावपते। तस्यार्धर्चशः प्रागुपोत्तमाया ऊर्ध्वं चतुर्थ्याः। शिष्टे शस्त्वा** (आश्रौ ८, १, २१-२३) इति। नाभानेदिष्ठे शस्योपायम् उक्त्वा **पच्छः समासमुत्तमे पदे** (आश्रौ ८, ४, १२) इत्येवयामरुति शस्योपाय उक्तः। नाभानेदिष्ठग्रहणाद् यथाम्नातस्य ऋषेः समाम्नायानुक्रमेण [7]द्वयोः सूक्तयोः संधानं प्राप्तम्[7], सूक्तयोः शंसनं प्राप्तम्। तस्मादुक्तः शस्योपाय इति पुनरुच्यते। एवयामरुतस्तु पङ्क्तिं शंसमच्छावाकस्योक्थे पच्छःशस्यमाग्निमारुते दृष्टम्, यथादृष्टं शस्यविकल्पनं[1] प्राप्तम्।

१. द्र. ऋ अ; षड्गुरुशिष्यश्च। २-२. ततो त्यान्यै° मूको। ३. बृहस्पतिसवनप्रकृतत्वात् मूको। ४. °देवाग्निमा° मूको। ५-५. °छिल्पे शस्येते वैश्वदेवे तृचानुपूर्व्यः मूको। ६. °मरुद्ध मूको। ७-७. युतोः सूक्तयोः संधां प्राप्तं मूको।

तस्मादाग्निमारुतग्रहणादाग्निमारुते य उक्तः शस्योपायः स भवति, [2]य इच्छति[2]। विश्वजिति तु नाभानेदिष्ठमिति निविद्धानीये त्रीणि वचनात्। [3]तस्मान्निविद्धानीयानामादावेव आहावः[3]। इह त्वावापिकत्वात्[4] नाभानेदिष्ठः। तस्मादिह नाभानेदिष्ठादितरः क्रियते। यथा एवयामरुत आवापिकत्वात् पृथगाहावः॥ १५-१७॥

॥ इति नवमे दशमः खण्डः॥

१. शस्यं° मूको। २-२. य इच्छंति मूको। ३-३. तस्मान्न विकारीयानामादाये च मूको। द्र. आश्रौ ५. १०. १६। ४. आवापि कात्वात् मूको।

## अथ नवमेऽध्याय एकादशः खण्डः

[कामनावशेनाप्तोर्यामसंज्ञकैकाहस्योपक्रमः]

**यस्य पशवो नोपधरेरन्नन्यान् वाऽभिजनान् निनीत्सेत सोऽप्तोर्यामेण यजेत॥ १॥**

यस्य पुरुषस्य गवादयः पशवो [१]गृहेषु नोपधरेरन् उपरिताः (उपधृताः ?) अपसन्तान्धरेरन्[१] (? उपस्थिता अपि सन्तो नावतिष्ठेरन्), नश्येरन् च, सोऽप्तोर्यामसंज्ञेन एकाहेन यजेत। ततस्तस्य गृहेषु पशवो न [२]ध्वंसन्ते न च नश्यन्ति[२]। अन्यान्वाऽभिजनान् अथवा अन्यान् अत्र अभितो[३] जनपदः अभिजनः[४]। आत्मबन्धुभ्यो योऽन्यो जनपदः.सः अभिजनः (?)। अभिजातभवाः पशवः अभिजनाः पशवः। तानभिजनान् पशून् निनीत्सेत प्राप्तुमिच्छेत्। सः पशुकामोऽप्तोर्यामेण वारवन्तीयसंस्थेन[५] एकाहेन यजेत, पशूनाप्नोति। आत्मबन्धुजनोऽप्यभिजन इत्युच्यते। तस्मादन्यानिति वचनाद् आत्मबन्धुभ्यो योऽन्यो जनपदः, स अभिजनो भवति। अभिजातो जनपदः अभिजनः, पूर्वादिदिक्षु यो जनपद इत्यर्थः। वेति विकल्पार्थे पूर्वोक्तेन वा क्रमेण। स इति वचनाद् एवंकामो यः स अप्तोर्यामेण यजते॥ १॥

[अप्तोर्यामस्य माध्यंदिने सवने सर्वं कर्म शिल्पयोनिवर्जितेन विश्वजिता समानम्]

**माध्यंदिने शिल्पयोनिवर्जमुक्तो विश्वजिता॥ २॥**

यस्तु पशुकाम एव, स विश्वजिता यजते। पशुकामस्य विश्वजिति माध्यंदिने सवने शिल्पानि वर्जयित्वा शिल्पयोनिवर्जितेन विश्वजिता, अप्तोर्याम उक्तो व्याख्यातः[६]। विश्वजिति अद्वैपदोक्थ्ये[७] माध्यंदिने शिल्पानि भवन्ति। तेनातिदेशादिहापि द्वैपदोक्थ्ये[७] सति माध्यंदिने न भवन्ति। तृतीयसवने तु भवन्ति। द्वैपदोक्थ्ये सति

---

१-१. °हेषु उपरिताः अपसंतान्ववरेत् मूको। २-२. ध्वयंत न च शस्यंत मूको। ३. अमितो °वो मूको। ४. अभिजतः मूको। ५. संस्थेन मूको, द्र, तांब्रा २०,३,२। ६. द्र. आश्रौ ८, ४, ६-७; ७, १-११। ७. °पदोक्थे मूको।

योन्यश्चातिदेशात् प्राप्ता होत्रकाणां ताः प्रतिषिध्यन्ते। असंक्लृप्तं सर्वमेव विश्वजिता समानं शस्यम्। योन्यस्तु न विधीयन्ते[1]। रथंतरस्य तु योनिः शस्यते पवमानगतत्वात्। **यत्पवमाने तस्य योनिरनुरूपः, योनिस्थान एवैनामन्यत्र शंसेत्** (आश्रौ ५, १५, १६-१७) इति वचनाद् योनिवर्जमिति[2]। विश्वजित्प्राप्तानां प्रतिषकेना (? प्रतिषेधेन) ज्योतिष्टोमप्राप्तयोः[3] गर्भकारे सति द्वौ द्वौ प्रगाथावित्याह। तस्मान्निष्केवल्ये विश्वजित्प्राप्तानां सर्वेषां सामप्रगाथानां प्रतिषेधः। द्वावेव प्रगाथौ भवतः। तस्मादेव वचनाद् गर्भकारे सति निष्केवल्ये एक एव सामप्रगाथो भवति। **त्वमिन्द्र प्रतूर्तिषु** (ऋ ८, ९९, ५) इति होत्रकाणां विश्वजित्प्राप्ता एव प्रगाथाः[4]॥ २॥

[एकाहेनाप्तोर्यामस्य व्याख्यातत्वम्]

**एकाहेन॥ ३॥**

एकाहेन चाप्तोर्यामो व्याख्यातः। प्राकृते वा एकाहे षोडशिनमति अतिरिक्त-स्तोत्राण्यप्याह। **त एव गर्भाः पृष्ठेषु यज्ञायज्ञीयं च बृहद्गर्भम्** (द्राश्रौ २६, ३, १०-११) इति छन्दोगानां वचनम्। एतस्मिन् काले[5] अप्तोर्यामे ऐकाहिकं शस्यं भवति॥ ३॥

[गर्भकारं स्तोत्रे कर्तव्ये स्तोत्रियानुरूपाणां नियमः]

**गर्भकारं चेत् स्तुवीरंस्तथैव स्तोत्रियानुरूपान्॥ ४॥**

तद् गर्भकारं चेत् स्तुवीरन्। गर्भं कृत्वा गर्भकारं यदि चेत् छन्दोगा[6] स्तुवीरन्, तथैव गर्भकारमेव स्तोत्रियानुरूपांश्च शंसेयुः। गर्भकारं वक्ष्यते **रथंतरेणाग्रे ततो वैराजेन ततो रथंतरेण** (आश्रौ ९, ११, ५) इति। चेदिति वचनाद् अगर्भकारमपि भवति। अगर्भकारे सति व्याख्यातं शस्यम्। गर्भकारे सति यच्छस्यं तदिदानीं वक्ष्यते। स्तुवीरन्निति वचनात् छन्दोगवशाद् भवति, तथैव स्तोत्रियानुरूपानिति न[7] वक्तव्यम्। **यथास्तुतम्** (आश्रौ ५, १५, १४) इति वचनात् प्राप्तम्। इदं प्रयोजनम्। यथास्तुतमिति वचनेन छन्दोगवशात् कारित्वं विधीयते। तस्मादभ्यावृतिः, सर्वं चावसाने आवर्तते सामवशात्। न च सर्वत्र स्तोत्रियः, ज्योतिष्टोमा गर्भिणः छन्दोगानामाम्नाताः, तेषु, बृहद्रथंतरयोः श्यैतनौधसयोश्च गर्भकारं स्तुवते॥ ४॥

[गर्भकारस्वरूपकथनम्]

**रथंतरेणाग्रे ततो वैराजेन ततो रथंतरेण॥ ५॥**

[वैकल्पिकगर्भकारस्वरूपकथनम्]

**बृहद्वैराजाभ्यां वैवमेव॥ ६॥**

---

१. **विध्यंते** मूको। २. **योनिचक्रमिति** मूको। ३. **प्राप्तायोः** मूको। ४. द्र. आश्रौ ७, ४, ३; ८, ७, २। ५. **काला** मूको। ६. **छन्दोगानां** मूको। ७. नास्ति मूको।

[मैत्रावरुणब्राह्मणाच्छंसिनोर्गर्भकारस्वरूपम्]

**वामदेव्यशाक्वरे मैत्रावरुणस्य नौधसवैरूपे ब्राह्मणाच्छंसिनः॥ ७॥**

[तत्र विकल्पकथनम्]

**श्यैतवैरूपे वा॥ ८॥**

[अच्छावाकस्य गर्भकारस्वरूपम्]

**कालेयरैवते अच्छावाकस्य॥ ९॥**

रथंतरस्य प्रथमः पर्यायः, द्वितीयो बृहतः, तृतीयो रथंतरस्येति। एवं श्यैतनौधसयोरपि। तत्रापि तथैव स्तोत्रियानुरूपान् शंसेत्, [१]अप्तोर्यामसत्त्वात् सांवत्सरिकवचनाच्च[१]। न वा वचनाभावात्। यथावचनात् स्थायी अप्तोर्यामे[२]। अपि चान्येषामवचनात् सत्त्वादेव॥ ५-९॥

[सामानन्तरं शस्त्ररूपेण द्वयोर्द्वयोः प्रगाथयोरगर्भकारं शंसनम्]

**सामानन्तर्येण द्वौ द्वौ प्रगाथावगर्भकारम्॥ १०॥**

सामानुक्रमेणैकैकस्मिन् शस्त्रे द्वौ द्वौ सामप्रगाथौ भवतः। अगर्भकारं गर्भकारं न विद्यते। [३]साममध्ये प्रविष्टत्वात्[३] प्रगाथानामपि गर्भकारं प्राप्तम्। विश्वजिति[४] होत्रकाणां सामप्रगाथाः पूर्वं शस्यन्ते, ततो नित्याः प्रगाथाः। तथैवेहापि प्राप्ते सामान्तर्येणेति वचनाद् ऐकाहिकाः पूर्वं शस्यन्ते, ततः सामप्रगाथाः। वचनान्निष्केवल्ये प्राप्तानां प्रगाथानां प्रतिषेधः। सामानन्तर्येणेति वचनात् प्रगाथयोर्गर्भकारे प्राप्तेऽगर्भकारमित्याह। सामानन्तर्येणेति वचनाद् अगर्भकारेऽप्तोर्यामे एकैकः सामप्रगाथो भवति। अप्तोर्यामप्रगाथाः॥ १०॥

[अत्रातिरात्रधर्मतायाः कथनम्]

**अतिरात्रस्त्विह॥ ११॥**

संवत्सरे विश्वजिदग्निष्टोम आम्नातः, इह त्वतिरात्रो भवति। तुशब्दः प्राप्तव्यावृत्त्यर्थः, इह वचनादिहैवातिरात्रो भवति, न विश्वजिच्छिल्पे। अन्यथा उभयत्र [? स्यात्] सन्निधाने अतिरात्रवचनात्। उभयोरपि छन्दोगश्चेत् द्विपदा उक्थ्येषु स्तुतेषु[५]॥ ११॥

[अद्वैपदोक्थ्येऽप्तोर्यामे सति वैषुवतं तृतीयसवनम्]

**अद्वैपदोक्थ्यश्चेद् वैषुवतं तृतीयसवनम्॥ १२॥**

अद्वैपदोक्थ्यश्चेद् अप्तोर्यामो भवति, तदा वैषुवतं तृतीयसवनं भवति।

---

१-१. °र्यामः पत्वात् सांवत्व के वनाच्च मूको। २. प्राप्तोर्यां° मूको। ३-३. सामधेष्टित्वा प्र° मूको। ४. विश्वजितो मूको। ५. स्तुते मूको।

विषुवति[1] भवं [2]वैषुवतम्। वैषुवतीयाद्[2] वैश्वदेवमाग्निमारुतं च तद् भवति।

एव सति[3] द्विपदानामभावाच्छिल्पानि न शस्यन्ते, शिल्पाभावान्नाभानेदिष्ठो न शस्यते। **तान्येतानि सहचराणीत्याचक्षते** (ऐब्रा ६, ३०) इति श्रुतिवचनान् नाभानेदिष्ठस्योद्धारार्थं वैषुवतं तृतीयसवनं कल्पते। अद्वैपदोक्थ्ये[4] शिल्पानि प्राप्तानि प्रतिषिद्धानि **शिल्पयोनिवर्जम्** (आश्रौ ९, ११, २) इति। वैषुवतं तृतीयसवनम् उत्तमे आभिप्लविके यत् तदेव[5]। ऐकाहिकौ तु प्रतिपदनुचरौ॥ १२॥

[आश्विनशस्त्रादूर्ध्वमतिरिक्तोक्थशंसनम्]

**ऊर्ध्वमाश्विनादतिरिक्तोक्थानि॥ १३॥**

आश्विनाच्छस्त्रादूर्ध्वमतिरिक्तोक्थानि प्रत्येतव्यानि। तानि वक्ष्यन्ते इति। अधिकारसूत्रम्। अत्यतिरात्रो हि संभवतीत्यूर्ध्वमाश्विनात् तेषां स्थानम्। **चतुःशस्त्राः पर्यायाः** (आश्रौ ६, ४, ७) इति वचनात् तेषां पर्यायसंज्ञा। **अतिरात्रे पर्यायाणामुक्तः शस्योपायो होतुरपि यथा होत्रकाणाम्** (आश्रौ ६, ४, १), तस्मात् चतुःशस्त्राः पर्यायाः। **होतुराद्यम्** (आश्रौ ६, ४, ७-८) इति वचनाद् आद्यं होतुः। इतराणि होत्रकाणां भवन्ति **उक्तः शस्योपायः** (आश्रौ ६, ४, १) इति वचनात्। एवमिहापि प्राप्ते स्तोत्रियानुरूपाणां यथावृत्तं विधीयते तथैवस्तोत्रियानुरूपान् इति। अस्मात् सूत्रारम्भान्माध्यंदिनगर्भा आम्नाताः, तेभ्योऽन्यत्रापि गर्भकारं शंसेयुः प्रातःसवने तृतीयसवने च। कथं [6]गर्भकारशस्यम्, यथोक्तेन[6] विधिना बृहतः स्तोत्रियः, वैराजस्य स्तोत्रियः, बृहतः स्तोत्रिय इत्येवम्। अनुरूपानपि एवमेवेति गर्भकारं विधीयते[7]। रथंतरे वैराजे चोक्तो विधिः स्तोत्रिये [? च] स्यात्। [8]एवमेवेति वचनाद् बृहद्वैराजयोरपि भवति। [9]वेति विकल्पः। **वामदेव्यशाक्वरे** (आश्रौ ९, ११, ७)। वामदेव्यं [? च] साम शाक्वरं च वामदेव्यशाक्वरे, ताभ्यां गर्भकारं [9]स्तुवते। [10]एवमेवेति वर्तते मैत्रावरुणस्य शस्त्रे[9]। होतुरधिकारान्मैत्रावरुणस्येत्याह। एतेषां साम्नां स्तोत्रियानुरूपा एकाहे पृष्ठ्ये वा महानाम्न्यः। **कया नः** (ऋ ४, ३१, १-३) इति स्तोत्रियाः। **कया त्वं नः** (ऋ ८, ९३, १९-२१), **स्वादोरित्था** (ऋ १, ८४, १०-१२), **कया** [11]**त्वं नः**[11] इति त्रयस्तृचाः। इत्यनुरूपाः। नौधसं च साम वैरूपं च नौधसवैरूपे सामनी गर्भकारं स्तुवते ब्राह्मणाच्छंसिनः शस्त्र एवमेव। मैत्रावरुणाऽधिकारात् **ब्राह्मणाच्छंसिनः** (आश्रौ ९, ११, ७) इत्याह। **तं वो दस्मम्** (ऋ ८, ८८, १-३), **यद् द्यावः** (ऋ ८, ७०, ५-६), **तं वो दस्मम्** (ऋ ८, ८८, १-३) इति स्तोत्रियाः। ककुबुत्तराकारं, **तत्त्वा यामि** (ऋ १, २४, ११-१३), **यदिन्द्र यावतस्त्वम्** (ऋ ७, ३२, १८-२०), **तत्त्वा यामि** (ऋ १, २४, ११-१३) इत्यनुरूपाः। श्यैतवैरूपेन यदि बृहत्पृष्ठो भवति, सवनीयाभ्यां गर्भकारं स्तुयुः ब्राह्मणाच्छंसिनः। **एवमेव** (आश्रौ ९, ११, ६) इति वर्तते। **अभि प्र वः** (ऋ ८, ४९,

---

१. नास्ति मूको। २-२. **विषुवंत विषुव**° मूको। ३. ति मूको। ४. °**पदोक्थेन** मूको। ५. द्र. आश्रौ ८, ७, ११। ६-६. **गर्भकार यथो**° मूको। द्र. आश्रौ ९,११,४। ७. द्र. आश्रौ ९,११,६। ८. द्र. आश्रौ ९, ११,८। ९. द्र. आश्रौ ९,११,७। १०. द्र. आश्रौ ९,११,६। ११-११. **चमु** मूको।

१-३), **यद् द्याव:** (ऋ ८, ७०, ५-७), **अभि प्र व:** (ऋ ८, ४९, ५-७) इति स्तोत्रिया:। **प्र सु श्रुतम्** (ऋ ८, ५०, १-३), **यदिन्द्र यावत:** (ऋ ८, ३२, १८-२०), **प्र सु श्रुतम्**। (ऋ ८, ५०, १-३) इत्यनुरूपा:। बृहत्पृष्ठे सत्येते स्तोत्रियानुरूपा नो भवन्ति। [1]कालेयं च रैवतं च कालेयरैवते, ताभ्यामच्छावाकस्य गर्भकारं स्तुवते। [2]एवमेवेति वर्तते। ब्राह्मणाच्छंसिनोऽधिकाराद् **अच्छावाकस्य** (आश्रौ ९, ११, ९), इत्याह। **तरोभिर्व:** (ऋ ८, ६६, १-३) इति स्तोत्रिया:। **तरणिरित्** (ऋ ७, ३२, २०-२२) इत्यनुरूपा:। [3]पृष्ठेष्वेव गर्भा:[3] नान्यत्र (द्र. द्राश्रौ २६, ३, ५) इति छन्दोगानामेक: कल्प:। एतस्मिन् कल्पे यदिदमाचार्येण प्रत्यक्षं कल्पितं **गर्भकारं चेत्स्तुवीरंस्तथैव स्तोत्रियानुरूपान्** (आश्रौ ९, ११, ४) इत्येतावता सिद्धे[4] प्रत्यक्षकल्पना न[5] कर्तव्या। इदं प्रयोजनम्। इष्टं कल्पं प्रदर्शयति। पृष्ठेष्वेव गर्भान् दर्शयति सर्वगर्भपक्षमनिष्टं दर्शयति। मशकेनाप्याचार्येण पृष्ठेष्वेव गर्भा: कल्पिता:[6]। **स्तोत्रियानुरूपा: शस्त्रादिषु सर्वत्र** (आश्रौ ५, १०, १८), **यथाग्रहणमन्यत्** (आश्रौ ५, १०, २०), **कर्मचोदनायां होतारम्** (आश्रौ १, १, १४) इति शस्योपायस्य न प्राप्नोति, तस्माद् भवत्येव। कथं पर्यायसंज्ञा भवतीति, तदुच्यते। **अतिरात्र:** (आश्रौ ९, ११, ११) इत्यधिकृत्य यानि शस्त्राणि वक्ष्यन्ते, तेषां पर्यायसंज्ञा। [7]**इति पर्याया:** (आश्रौ ६, ४, ११) इत्यत्र उक्तम्[7]। इति वचनमेव नित्यं, नातिरात्र[8] इति वचनाभावाद् [9]आसमाप्ते: अतिरात्रसंज्ञा। [10]**पर्याया:** (आश्रौ ६, ४, ११) इति तु यद् वचनं तत् पर्यासविवक्षार्थम्, एतेषु पर्यायेषु पर्यासा:, नोत्तरस्मिन् इति। तेष्वेव **संस्थितेष्वाश्विनाय स्तुवते** (आश्रौ ६, ५, १), नोत्तरस्मिन् संस्थित इति। **पर्यासवर्जं गायत्रा:** (आश्रौ ६, ४, १२), इति संभवतो विधिर्यत्र संभवति। यदि **उत्तमान्युत्तमे** (आश्रौ ६, ४, ५) इत्यधिकृतानामेवोत्तमे भवत्यभ्यासो न त्वर्थे॥ १३॥

[होतु: स्तोत्रियानुरूपपरिधानीयायाज्यानां कथनम्]

**'जराबोध तद् विविड्ढि', 'जरमाण: समिध्यसे', 'अग्निनेन्द्रेण', 'आ भात्यग्नि:', 'क्षेत्रस्य पतिना वयम्' इति परिधानीया; 'युवं देवा क्रतुना पूर्व्येण' इति याज्या॥ १४॥**

**जराबोध तद् विविड्ढि** (ऋ १, ७, १०-१२), **जरमाण: समिध्यसे** (ऋ १०, ११८, ५-७) इत्येतौ स्तोत्रियानुरूपौ। **अग्निनेन्द्रेण** (ऋ ८, ३५) इति सूक्तम्, [11]**आ भात्यग्नि:** (ऋ ५, ७६) इति सूक्तम्[11]। **क्षेत्रस्य पतिना वयम्** (ऋ ४, ५७, १) इति परिधानीयेति विद्यादिति। परिधानीयाग्रहणं याज्याग्रहणविवक्षार्थम्। अन्यथा उभयोर्याज्यासंज्ञा स्यात्। तथा सति विकल्प: स्यात्। **युवं देवा क्रतुना**

---

१. द्र. आश्रौ ९, ११, ९। २. द्र. आश्रौ ९, ११, ६। ३-३. **पृष्ठेष्वगर्भा:** मूको। ४. **भिक्षे** मूको। ५. नास्ति मूको। ६. द्र. आर्षेयकल्प ९, ३, ३। ७-७. **यथा दूत्पन्न उक्त्वा** मूको। ८. **नित्यन्नोति** मूको। ९. **असमाप्ते:** मूको। १०. **पर्याय पर्याय** मूको। ११-११. **इति सूक्तं** मूको।

(ऋ ८, ५७, १) इति सौपर्णी[1] याज्या भवति। याज्यान्तानि शस्त्राणि। होतुः शस्त्रम्। यजध्वमित्याध्वर्यवं संप्रैषमाह। तत्र **अग्निना** (ऋ ८, ३५) इत्येतस्मिन् सूक्ते **अर्वाग् रथम्** (ऋ ८, ३५, २२) इति पङ्क्तिशस्यस्यानुवाके। **पच्छःशस्यगतानां तु पच्छः** (आश्रौ ५, १४, १३) इति वचनात् **स्वाहा कृतस्य** (ऋ ८, ३५, २४) इति पङ्क्तिशंसनम्॥ १४॥

[मैत्रावरुणस्य स्तोत्रियादिशस्त्रस्य कथनम्]

**'यदद्य कच्च वृत्रहन्', 'उद्वेदभिश्रुतामघम्', 'आनो विश्वाभिः', 'प्रातर्यावाणा', 'क्षेत्रस्य पते मधुमन्तमूर्मिम्' इति परिधानीया; 'युवां देवास्त्रय एकादशासः' इति याज्या॥ १५॥**

**यदद्य कच्च** (ऋ ८, ९३, ४-६), **उद्वेदभि** (ऋ ८, ९३, १-३) इति [2]स्तोत्रियानुरूपौ। **आ नो विश्वाभिः** (ऋ ८, ८)इति[3] सूक्तम्। **प्रातर्यावाणा** (ऋ ५, ७७) इति सूक्तम्। **क्षेत्रस्य पते** (ऋ ४, ५७, २) इति परिधानीया। परिधानीयावचने उक्तं प्रयोजनम्। **युवां देवास्त्रयः** (ऋ ८, ५७, २) इति [4]सौपर्णी याज्या[4]। मैत्रावरुणस्य शस्त्रं[5] शस्तम्॥ १५॥

[ब्राह्मणाच्छंसिनः शस्त्राणां कथनम्]

**'तमिन्द्रं वाजयामसि', 'महाँ इन्द्रो य ओजसा'; 'आ नूनमश्विना', 'तं वां रथं', 'मधुमतीरोषधीर्द्याव आपः' इति परिधानीया; 'पनाय्यं तदश्विना कृतं वाम्' इति याज्या॥ १६॥**

**तमिन्द्रं वाजयामसि** (ऋ ८, ९३, ७-९), **महाँ इन्द्रः** (ऋ ८, ६, १-३) इति स्तोत्रियानुरूपौ। **आ नूनमश्विना** (ऋ ८, ९) इति सूक्तम्; **तं वा रथम्** (ऋ ४, ४४) इति सूक्तम्, **मधुमतीरोषधीः** (ऋ ४, ५७, ३) इति परिधानीया। [6]परिधानीयावचने उक्तं प्रयोजनम्। **पनाय्यं तत्** (ऋ ८, ५७, ३) इति सौपर्णी[7] याज्या। ब्राह्मणाच्छंसिनः शस्त्रम्। यजध्वमित्यध्वर्युसंप्रैषमाह॥ १६॥

[तत्र स्तोत्रियानुरूपयोर्निर्देशः]

**'अतो देवा अवन्तु नः' इति स्तोत्रियानुरूपौ॥ १७॥**

**अतो देवा अवन्तु नः** (ऋ १, २२, १६-२१) इत्येता ऋचः स्तोत्रियानुरूपौ भवतः। यत्रैकस्मिन् प्रतीके स्तोत्रियानुरूपावित्याह, तत्र षड् भवन्तीत्युक्तम्[8]। अतो देवाः इति स्तोत्रियः॥ १७॥

---

१. ऋक्सर्वानुक्रमण्यां मेध्यकाण्व ऋषिरस्य सूक्तस्यानुक्रान्तः। २. **स्तोत्रियः** मूको। ३. नास्ति मूको। ४-४. **सौपर्णयाज्या** मूको। ऋक्सर्वानुक्रमण्यां मेध्यकाण्व ऋषिरस्य सूक्तस्यानुक्रान्तः। ५. **शक्तं** मूको। ६. नास्ति मूको। ७. ऋक्सर्वानुक्रमण्यां मेध्यकाण्व ऋषिरस्य सूक्तस्यानुक्रान्तः। ८. द्र. आश्रौ. ५, १०, १८; २६।

[अनुरूपस्योत्तमायामृचि विकल्पः]

**'उत नो धियो गो अग्राः' इति वाऽनुरूपस्योत्तमा ॥ १८ ॥**

[1]**उत नो धियो**[1] **गो अग्राः** (ऋ १, ९०, ५) इति इयं[2] वा ऋग् अनुरूपस्योत्तमा भवति। **अतो देवाः** (ऋ १, २२, १६) इत्यनुरूपस्य प्रथमा प्राप्ता भवति। यतोऽनुरूपोक्तौ आम्नायस्यान्यथाभावो नेष्यते वचनं विना, तस्मादाम्नायानुग्रहार्थमन्तेऽन्या विधीयते ॥ १८ ॥

[शस्त्रस्य परिधानीयाया याज्यायाश्च निर्देशः]

**'ईळे द्यावापृथिवी', 'उभा उ नूनं', 'दैव्या होतारा प्रथमा पुरोहितः' इति परिधानीया; 'अयं वां भागो निहितो यजत्र' इति याज्या ॥ १९ ॥**

**ईळे द्यावा** (ऋ १, ११२) सूक्तम्। **उभा उ नूनम्** (ऋ १०, १०६) सूक्तम्। **दैव्या होतारा प्रथमा पुरोहितः** (ऋ १०, ६६, १३) इति [3]परिधानीया। परिधानीयावचने[3] उक्तं प्रयोजनम्। [4]**अयं वां भागो**[4] **निहितः** (ऋ ८, ५७, ४) इति सौपर्णी[5] याज्या ॥ १९ ॥

[तत्र याज्याया विकल्पः]

**यदि नाधीयात् 'पुराणमोकः सख्यं शिवं वाम्' इति चतस्रो याज्याः ॥ २० ॥**

यदि सौपर्णीर्ऋचो नाधीयात् **पुराणमोकः सख्यं शिवं वाम्** (ऋ ३, ५८, ६-९) इति चतस्र ऋचः शाखान्तरे आम्नाताः[6]। तस्मादध्ययनम्। अध्येतव्याश्च कर्मणि[7] प्रयोगदर्शनात्। सर्वे ते खैलिका मन्त्रा भवन्ति, तस्माद् यदि नाधीयादित्याह, यथा **यदि साम नाधीयाद्** (आश्रौ ९, ९, ९) इति। पादग्रहणादेका प्राप्ता, तस्माच्[8] चतस्र इत्युक्तम् ॥ २० ॥

[मैत्रावरुणादीनां त्रयाणां स्तोत्रियानुरूपाणां निर्देशः]

**'तद् वो गाय सुते सचा', 'स्तोत्रमिन्द्राय गायत', 'त्यमु वः सत्रासाहं', 'सत्रा ते अनुकृष्टयः' इति वा स्तोत्रियानुरूपाः[9] ॥ २१ ॥**

**तद् वो गाय सुते सचा** (ऋ ६, ४५, २२-२७), **स्तोत्रमिन्द्राय गायत** (ऋ ८, ४५, २१-२६), **त्यमु वः सत्रासाहम्** (ऋ ८, ९२, ७-१२) **सत्रा ते अनुकृष्टयः** (ऋ ४, ३०, २-७) इत्येते वा स्तोत्रियानुरूपा यथाम्नाताः। वा इति विकल्पः। छन्दोगवशाद् ऐन्द्राः। तस्मान् मैत्रावरुणब्राह्मणाच्छंसिनोर्विकल्पा भवन्ति।

---

१-१. विष्णो मूको। २. यं मूको। ३-३. या ग्रहणात् मूको। ४-४. नास्ति मूको। ५. ऋक्सर्वानुक्रमण्यां मेध्यकाण्व ऋषिरस्य सूक्तस्यानुक्रान्तः। ६. द्र. शांश्रौ १५, ८, १९। ७. कर्माणि मूको। ८. नास्ति मूको। ९. °यानुरूपौ सायणभाष्यम् ऋ ८, ९२, ७। यद्वा योगविभागे सन्धौ वकारलोपेन °रूपा इत्येतस्य °रूपाः इति छेदो विहितः स्यात्।

होतुराग्नेयो वैष्णवो वा। अच्छावाकस्य **त्यमु वः सत्रासाहम्** (ऋ ८, ९२, ७) इति मैत्रावरुणस्य स्तुवते। **तद् वो गाय** (ऋ ६, ४५, २२-२७) इति ब्राह्मणाच्छंसिनः स्तुवते॥ २१॥

[दक्षिणानिरूपणम्]

**अपरिमिताः परःसहस्रा दक्षिणाः॥ २२॥**

व्याख्यातान्यतिरिक्तानि। अप्तोर्यामस्यापरिमिता दक्षिणाः। परं मानं सहस्रं यासां दक्षिणानां ताः परःसहस्रा दक्षिणाः सहस्रादर्वागपरिमिता इत्यर्थः। अपरिमिता इत्युक्ते सहस्रादप्यधिकाः प्राप्ताः तस्मात् परःसहस्रा इत्याह। अप्तोर्यामस्येमा दक्षिणा भवन्ति, **साहस्रास्त्वतिरात्राः** (आश्रौ ९, १, ७) इति प्राप्ते आरम्भः॥ २२॥

[तत्र होतुर्दक्षिणाविशेषः]

**श्वेतश्चाश्वतरीरथो 'होतुर्होतुः'॥ २३॥**

श्वेतो वर्णोऽश्वतरीणाम्। अश्वतरीयुक्तो रथोऽश्वतरीरथः। उक्तास्तु दक्षिणाः। त्रयो भागा अश्वतरीणाम्। चशब्दः समुच्चयार्थः। असति समुच्चये रथ एव होतुः स्यात्, दक्षिणासु भागप्रतिषेधः स्याद्। होतुर्ग्रहणेऽक्रियमाणे रथोऽपि साधारणः स्यात्। व्याख्यातोऽप्तोर्यामः सदक्षिणः समाप्तः॥ २३॥

॥ इति एकादशः खण्डः॥

॥ वाराहे देवत्रातस्य कृतौ सूत्रव्याख्यायां नवमोऽध्यायः समाप्तः॥

---

१-१ होतुः मको।

# अथ दशमोऽध्यायः

(तत्र प्रथमः खण्डः)

केषाञ्चनैकाहानामहीनानां च निरूपणम्।

[ऋद्धिकामनया ज्योतिर्नामैकाहस्य प्रयोगः]

**ज्योतिर्ऋद्धिकामस्य॥ १॥**

ज्योतिर्नामैकाहः। तेन ज्योतिषा ऋद्धिकामो यजेत। ऋद्धिर्नाम पुत्रैः पशुभिर्धनेन[1] च वृद्धिरित्युच्यते॥ १॥

[नवसप्तदशनाम्न एकाहस्य निरूपणम्]

**नवसप्तदशः प्रजातिकामस्य॥ २॥**

नवसप्तदशो नामैकाहः। तेन प्रजातिकामो यजेत। प्रजासन्ततिं[2] यः कामयते स प्रजातिकामः॥ २॥

[विषुवत्स्तोमनाम्न एकाहस्य निरूपणम्]

**विषुवत्स्तोमो भ्रातृव्यवतः॥ ३॥**

विषुवत्स्तोमो नामैकाहः। तेन भ्रातृव्यवान् यजमानो यजेत। विषुवत इवास्य स्तोमः॥ ३॥

[गोरभिजितश्च निरूपणम्]

**गौरभिजिच्च॥ ४॥**

गौरभिजिन्नामैकाहौ। गौर्नामैकाहः। तेन भ्रातृव्यवान् यजेत। अभिजिन्नामैकाहः। तेन भ्रातृव्यवान् यजेत॥ ४॥

---

१. द्र. देवस्वामिभा। २. प्रजा सरस्वतीं च मूको।

[महत्त्वमिच्छता कर्तव्यस्य गोरुभयसामत्वं सर्वस्तोमत्वं च]

**गौरुभयसामा सर्वस्तोमो बुभूषतः ॥ ५ ॥**

गौर्नामैकाहः। उभयसामा 'उभये सामनी[1] अस्मिन्[2] सोऽयमुभयसामा[3]। सर्वे च स्तोमाः अस्मिन्त्रिवृदादयः सोऽयं [4]सर्वस्तोमः बुभूषता[4] कर्तव्यः। बुभूषन्नाम यो भवितुमिच्छति महत्त्वेन, [5]सोऽनेन गोसंज्ञकेन[5] सर्वस्तोमेन यजेत ॥ ५ ॥

[दीर्घव्याधेर्मुक्त्यर्थमायुषः कर्तव्यत्वम्]

**आयुर्दीर्घव्याधेः ॥ ६ ॥**

आयुर्नामैकाहः। तेन यो दीर्घेण व्याधिना गृहीतः स यजेत ॥ ६ ॥

[कामनाभेदेन विश्वजितः पृष्ठ्याहूनामादितश्चतुर्णामेकाहरूपेण यजनम्]

**पशुकामस्य विश्वजिद् ब्रह्मवर्चसकामवीर्यकामप्रजाकामप्रतिष्ठाकामानां पृष्ठ्याहान्यादितः पृथक्कामैः ॥ ७ ॥**

विश्वजिन्नामैकाहः तेन विश्वजिता पशुकामो यजेत। ब्रह्मवर्चसकाम-वीर्यकामप्रजाकाम-प्रतिष्ठाकामानां पृष्ठ्याहान्यादितः पृथक्कामैः। कामैः ब्रह्मवर्चसादिभिः पृष्ठ्याहानि पृथक् प्रयोक्तव्यानि। पृथग्ग्रहणं क्रियते। कथम्। [6]पृथग्भेदाः कामाः[6] स्युरिति। अन्यथा कामनियमः[7] प्राप्नोति द्वादशाहवत्। आदिग्रहणं क्रियते। कथम् पञ्चमषष्ठयोरह्नोर्निवृत्तिः स्यात् ॥ ७ ॥

[पूर्वोक्तानां ज्योतिरादीनामेकाहानामतिरात्रत्वम्]

**इत्यतिरात्राः ॥ ८ ॥**

य एते ज्योतिरादयोऽनुक्रान्ताः, एतेऽतिरात्रा वेदितव्याः। उच्यते। कथमिदं ज्ञायते, यथा ज्योतिरादयः [8]एवातिरात्रा न प्राक्[8] क्वचिदतिरात्रवचनात् ॥ ८ ॥

[ज्योतिरादीनां त्रयाणामैकाहिकशस्यत्वम्]

**तेषामाद्यास्त्रय ऐकाहिकशस्याः ॥ ९ ॥**

ऐकाहिकशस्या इत्येतदारभ्यते। ज्योतिःसंज्ञा आभिप्लविकस्याह्नः प्रथमस्य श्रूयते। नैवातिदेशः प्राप्नोति सिद्धैरतिदेश[9] इति वचनात्। तथा विषुवत्-[10]स्तोमस्यापीह नातिदेशः[10] प्राप्नोति **अनतिदेशे** (आश्रौ ९, १, ३) इत्यनयैव परिभाषया।

---

१-१. उभयसामनी मूको। २. अस्ति मूको। ३. स्तोयमुभ° मूको; द्र. देवस्वामिभा। ४-४. सर्वदेहामनु बु° मूको। ५-५. सह त्व सन अग्ने गोः संशकन मूको। ६-६. पृथग्भेदकामः मूको; पृथग्भेदेन का° देवस्वामी। ७. कामो नियमः मूको; द्र. देवस्वामी। ८-८. °तिरात्रन्यप्राक् मूको; °त्रान पृथक् देवस्वामी। ९. द्र. आश्रौ ९, १, २। १०-१०. स्तोमस्यापीतेनाति° मूको।

तस्मादैकाहिकशस्यत्वं[1] विधीयते। [2]इदं चाऽऽचार्यो ज्ञापयति। यथा गवादीनां गवादिभिरेवातिदेशो[2] वेदितव्यः॥ ९॥

[एकाहानामुपसंहारः]

**इत्येकाहाः॥ १०॥**

इत्येते येऽनुक्रान्ताः **उक्तप्रकृतयः** (आश्रौ ९, १, १) इत्येवमादयः। इदं न वक्तव्यम्। **अथाहीनाः** (आश्रौ १०, १, ११) [इति] वक्ष्यति। एकाहा इत्येतदारभ्यते। कथं **वरुणप्रघासस्थाने** (आश्रौ ९, २, ८) इत्येवमादीनामप्येकाहत्वं स्यात्[3]। अन्यथा अहीनार्त्विज्ये[4] यजनप्रतिषेधः प्राप्नोति॥ १०॥

[अहीनानामुपक्रमः]

**अथाहीनाः॥ ११॥**

अथाहीना अधिकृता वेदितव्याः। अहीना इति संज्ञा क्रियत उत्तरेषां क्रतूनां द्व्यहादीनाम्[5]। संज्ञाप्रयोजनम् **एतस्मिन् काले दक्षिणा नीयन्तेऽहीनैकाहेषु** (आश्रौ ५, १३, ११), **न्यस्तमार्त्विज्यमकार्यमहीनस्य** (आगृ १, २३, १३-१४) एवमाद्यम्[6]॥ ११॥

[अहीनलक्षणम्]

**द्व्यहप्रभृतयो द्वादशरात्रपरार्ध्या अग्निष्टोमादयोऽतिरात्रान्ता मासापवर्गा अपरिमाणदीक्षाः॥ १२॥**

एते[7] अहीना वेदितव्याः। द्व्यहप्रभृतयो द्व्यहादय इत्यर्थः। द्वादशरात्रपरार्ध्या द्वादशरात्रः परोऽवधिर्येषां त एते द्वादशरात्रपरार्ध्याः। अग्निष्टोम आदौ येषां त एते अग्निष्टोमादयः। [8]अतिरात्रः अन्ते येषां त[8] एतेऽतिरात्रान्ताः। मासापवर्गा मासेन समापनं कर्तव्यम्। अपरिमाणदीक्षा एषु कर्तव्याः। द्व्यहप्रभृतित्वं[9] विधेयमिति। द्व्यहा उत्तरत्र (द्र. १०, २, ३) वक्ष्यन्ते। द्व्यहप्रभृतित्वमारभ्यते[10]। कथम्। असमाम्नातानामपि द्व्यहानामहीनत्वं स्यात्। अहीनत्वे शस्यप्राप्तिरभिप्लवाद् याजनप्रतिषेधश्च। द्वादशरात्रपरार्ध्या इतीदं न वक्तव्यम्। **द्वौ त्रयोदशरात्रौ** (आश्रौ ११, २, १) इत्यारभ्य सत्राणि वक्ष्यन्ते। तेन द्वादशरात्रान्तत्वमेव[11] भविष्यति। द्वादशरात्रान्तत्वं विधीयते। उत्तरेषां मा भूदिति। अन्यथाऽहीनलक्षणं दृष्ट्वाऽहीनत्वं स्यात्। तृतीयस्य चतुर्दशरात्रस्याग्निष्टुत्प्रायणीयस्थानेऽग्निष्टोमादित्वं दृष्ट्वाऽहीनत्वं स्यात्।

१. **तस्मादेकश**° मूको; द्र. देवस्वामिभाष्यम्। २-२. **इदं वा धार्यो ज्ञापयति यथा एवादीनां एवादिति एवातिदेशो** मूको; द्र. देवस्वामिभाष्यम्। ३. द्र. देवस्वामी। ४. **अहीनाज्ये** मूको। ५. **द्व्यहानां** मूको। ६. **द्याः** मूको। ७. नास्ति मूको; द्र. देवस्वामी। ८-८. **अतिरात्र आनदर्श्यं ते त ए**° मूको। ९. °**तित्वमपि** मूको; द्र. देवस्वामी। १०. **द्व्यह त्वमा**° मूको। ११. °**दित्वमपिधे**° मूको; द्र. देवस्वामी।

तस्मान्नियमः। अग्निष्टोमादित्वं विधेयं सिद्धत्वात्। **षळहान्ता अभिप्लवात्** (आश्रौ १०, १, १६) इति वक्ष्यति। आभिप्लविकं च प्रथममहरग्निष्टोमसंस्थं तेनातिदेशे[१] क्रियमाणे अग्निष्टोमादित्वमेव[२] भविष्यति। अग्निष्टोमादित्वमारभ्यते। **पुराऽभिचरन्**[३] (आश्रौ १०, ३, २५) इति वक्ष्यति। **ज्योतिर्गामभितः**[४] (आश्रौ १०, ३, १६) ज्योतिराद्यमहर्भवति। ततः संस्थानियमः प्राप्नोति चतुःसंस्थत्वाज् ज्योतिषः। एवमादीनामपि कथमग्निष्टोमादित्वं[५] स्यात्। तस्मान्नियमः। [६]अतिरात्रान्ता इदमारभ्य उत्तरमुच्यते[६]। मासापवर्गाः मासेन समापनं कर्तव्यम्। अपरिमाणदीक्षाः कर्तव्याः।

[७]अपरिमाणदीक्षत्वं विधेयम्[७]। [८]द्वादशैवोपसदोऽहीनानामुपदिष्टाः[८]। अन्यानि च स्वयमेवोपविशन्ति। परिशेषादपरिमिता एव दीक्षा भविष्यन्ति। उच्यते। **संवत्सरं त्वेव सत्रे** (आश्रौ ४, २, १४) इति नियम उपदिष्टस्तस्मादपरिमितवचनमुच्यते[९]। संवत्सरनियमः सत्रेष्वेव[१०] कृतार्थो भविष्यति। यथैव [११]द्वादशाहेषु सत्रपक्षे[११] मासापवर्गता न भवति वचनसामर्थ्यात् एवमिहापि [१२]संवत्सरं त्वेवेति नियमादपरिमाणदीक्षत्वं[१२] विधीयते॥ १२॥

[ऐतरेयिणां मत एकाहानामपि मासापवर्गत्वमपरिमाणदीक्षत्वं च]

**एकाहांश्चैतरेयिणः॥ १३॥**

ऐतरेयिण आचार्या एकाहांश्च मासापवर्गान् अपरिमाणदीक्षांश्चेच्छन्ति॥ १३॥

[ऐतरेयिणां मत एकाहानां दक्षिणाः]

**सहस्रशश्च दक्षिणाः॥ १४॥**

एकाहानैतरेयिण एव॥ १४॥

[ऐतरेयिणां मतेऽतिरात्राणामपरिमाणदीक्षत्वं मासापवर्गत्वं च]

**अतिरात्रांश्च सर्वशः॥ १५॥**

अतिरात्रांश्च सर्वशोऽपरिमाणदीक्षानिच्छन्ति मासापवर्गांश्च, सर्वशः सर्वप्रकारान्[१३] इत्यर्थः, ऐतरेयिण एव॥ १५॥

[अहीनेष्वह्नां व्यवस्थाऽऽभिप्लविकषडहवत् कर्तव्या]

**तत्राह्नां संख्याः संख्याताः षळहान्ता अभिप्लवात्॥ १६॥**

१. **तेनाग्निदे°** मूको; द्र. देवस्वामी। २. **°ष्टोमत्वमेव** मूको; द्र. देवस्वामी। ३. **पुनराभि°** मूको; द्र. देवस्वामी। ४. **ग्रीमभितः** मूको; द्र. देवस्वामी। ५. **°ष्टोमत्वं** मूको; द्र. देवस्वामी। ६-६. **अतिरात्रोतमिदमारभ्य तत्तरच्यते** मूको। ७-७. **दीक्षत्वमपि चेयम्** मूको; द्र. देवस्वामी। ८-८. **द्वादशैवद्वादशेवोपसदः** मूको; द्र. आश्रौ ४, ८, १५। ९. **°तशब्दमुच्यते** मूको। १०. **सर्वेष्वेव** मूको; **सत्रेषु** देवस्वामी ११-११. **शाहेष्व उपक्षे** मूको; द्र. देवस्वामी। १२-१२. **संवत्सरपक्षेतिनियमाणदी°** मूको; द्र. देवस्वामी। १३. **नास्ति** मूको।

तत्र तेष्वहीनेष्वह्नां संख्या याः संख्याताः ताः सर्वाः षळहान्ता एवाऽभिप्लवात् षळहाद् वेदितव्याः। 'षळहान्ता इत्येतदारभ्यते' सप्तरात्रादिषु मा भूच्चेति। उच्यते। स्वयमेवाहानि तत्र विधास्यति। कुतस्तत्र प्रवृत्तिः। सप्तरात्रादिषु **ऐन्द्रमत्यन्याः** (आश्रौ १०, ३, १२) एवमुक्त्वेदमाह **त्रिकद्रुका अभिजिद्विश्वजिन्महाव्रतं सर्वस्तोमः** (आश्रौ १०, ३, १३) इदं सर्वस्तौमिकमहः। **गौरुभयसामा सर्वस्तोमः** (आश्रौ १०, १, ५) इत्युपदिष्टम्। इदं च द्वितीयमाभिप्लविकमहः। षळहान्ता इति यदि नारभ्येतास्यां सर्वचोदनायां प्रथमेऽविद्यमान आसत्त्या षष्ठमहः प्राप्नोति, प्रथमं वा, अविशेषवचने 'प्रथमतः संप्रत्यय' इति कृत्वा। इष्यते[3] च द्वितीयमाभिप्लविकमहः। अतः[4] षळहान्ता इत्येतदारभ्यते। संख्याता इत्यारभ्यते। संख्यातेष्वेवायं नियमः कथं स्यादित्यतः स्तोमसंख्यातवचनम्, असमाम्नातेषु मा भूवन्निति। असमाम्नाता-नामहीनानां पृष्ठ्या-च्छश्यं वेदितव्यम्। अतश्चापरिमाणदीक्षत्वमारब्धव्यम्। **द्वादशाहतापश्चितेषु यथा सुत्योपसदः** (आश्रौ ४, २, १५) इत्यनेन वचनेन द्वादशसुत्यं भवति द्वादशाहेति वचनात्। एवमिहापि स्यात् तस्मादपरिमितवचनम्। अतिरात्रांश्च एकाहांश्च सर्वानतिरात्रसंस्थितानिच्छन्ति ॥ १६ ॥

[संख्यापूरणेऽन्त्यस्याह्नोऽतिरात्रसंस्थाकत्वम्]

**अतिरात्रस्त्वन्त्यः संख्यापूरणे गृहीतानाम् ॥ १७ ॥**

संख्यापूरणे गृहीतानां यदन्त्यमहस्तदतिरात्रसंस्थं कर्तव्यम्। यथा **ऋतूनां षळहं प्रतिष्ठाकामः** (आश्रौ १०, ३, १) एवमादीन्युदाहरणानि। अतिरात्रस्त्वन्त्यः[5] इदं न वक्तव्यम् पूर्वेणैव 'सूत्रेण सिद्धत्वात्[6]'। एवमर्थमारभ्यते। **एते चत्वारः** (आश्रौ १०, ३, ६), **पृष्ठ्यो महाव्रतं च** (आश्रौ १०, ३, ७) अग्निष्टोमसंस्थमपदिष्टम्। पूर्ववचनमिहैव कृतार्थं स्यात्, **जनकसप्तरात्रमृद्धिकामः**[7] (आश्रौ १०, ३, १४) इत्येवमादिषु न स्यात्। कथं 'सर्वस्यैतद् अतिरात्रान्ते' स्यात्। तस्मात्[9] द्वितीयवचनं नियमार्थम् [10]अतिरात्रस्त्वन्त्यः इति[10] ॥ १७ ॥

[संख्याऽपूरणेऽन्त्ये वैश्वानरः कर्तव्यः]

**हानौ वैश्वानरोऽधिकः ॥ १८ ॥**

हानौ गृहीतानाम् अह्नां[11] हानौ वैश्वानरोऽधिकः। हानौ [12]संख्याऽपूरणेऽधिक इत्यर्थः[12] ॥ १८ ॥

॥ इति दशमे प्रथमः खण्डः ॥

---

१-१. °हान्तादित्ये मूको। २-२. प्रथमः प्रत्ययः मूको; द्र. देवस्वामी। ३. इज्यते मूको। ४. नास्ति मूको ५. रात्रस्थं मूको। ६-६. सूत्रत्व मूको। ७. द्र. देवस्वामी। ८-८. सर्वत्रैव स्य अतिरात्र अभेत्तः स्यात् मूको; द्र. देवस्वामी। ९. नास्ति मूको। १०-१०. अतिरात्रं सुत्यां इति गृहीतानां मूको। ११. नास्ति मूको; द्र. देवस्वामी। १२-१२. स पूरणेत्यर्थः। अह्नां पूर्वं मूको।

## अथ दशमेऽध्याये द्वितीयः खण्डः

[स्वर्गकामनया आङ्गिरसेन द्व्यहेन यजनम्]

**आङ्गिरसं स्वर्गकामः ॥ १ ॥**

आङ्गिरसं द्व्यहं[1] स्वर्गकामो यजेत ॥ १ ॥

[स्थानभ्रष्टस्य वा स्थानलाभाय तद्यजनम्]

**यो वा पुण्यो हीनोऽनुप्रेप्सुः स्यात् ॥ २ ॥**

यो वा पुण्यः पूर्वमासीत्, हीनो भ्रष्टस्तस्मात् स्थानात्[2] तदेव च स्थानं पुनः प्रार्थयते, स चानेनाङ्गिरसेन यजेत ॥ २ ॥

[अन्नाद्यकामनया चैत्ररथेन स्वर्गकामनया च कापिवनेन द्व्यहेन यजनम्]

**चैत्ररथमन्नाद्यकामः । कापिवनं स्वर्गकाम इति द्व्यहाः ॥ ३ ॥**

चैत्ररथो नाम द्व्यहस्तेन चैत्ररथेनान्नाद्यकामो यजेत। कापिवनं स्वर्गकामः। कापिवनो नाम द्व्यहः, अनेन स्वर्गकामो यजेत। इति द्व्यहा येऽनुक्रान्ता आङ्गिरस इत्येवमादय इत्येते द्व्यहा वेदितव्याः। अत्र संदेहः। द्व्यहा इति किमत्र [3]कालाहानि चोद्यन्ते, आहोस्वित्, कर्माहानीति[3]। यथा **अहानि पञ्चविंशतिः** (आश्रौ ८, १३, ३१) यान्येतान्यपदिष्टानि, तत्र यदि [4]तावत्, कालाह्नां[4] ग्रहणं रात्रौ कर्म न प्राप्नोत्यहर्वचनात्, अन्तरा च रात्रिर्भवति[5]। अथ कर्माहानि रात्रौ यदिदमपदिष्टं[6] कर्म पर्यायाद्दिने प्राप्नोत्यहर्वचनात्। तस्माद् [7]द्व्यहेन यन्निष्पद्यते कर्म, तद् व्यपदेशेन निर्दिश्यते[7]। तत्प्रत्यवगन्तव्यम्। द्व्यहाच्चापवर्गाकर्म[8] वेदितव्यम् ॥ ३ ॥

[आङ्गिरसस्य द्वितीयेऽह्नि तृतीयसवने विशेषकथनम्]

**प्रथमस्य तूत्तरस्याह्नस्तार्तीयं तृतीयसवनम् ॥ ४ ॥**

---

१. नास्ति मूको; प्र. देवस्वामी। २. वचनात् मूको। ३-३. काला (ल) हानिश्चोद्यते आहोस्वित् कर्महानिरिति मूको। ४-४. जानक्षीणहां मूको। ५. प्र. देवस्वामी। ६. यदममपदिष्टं मूको; यदपदिष्टं देवस्वामी। ७-७. द्व्यहे यानि पठ्यन्ते कर्म तद्व्यहोपदिष्टेनमिदं दृश्यते मूको; प्र. देवस्वामी। ८. °वर्गं कर्म मूको।

[1]'प्रथमस्य द्व्यहस्याङ्गिरसमित्यस्यायं विशेषो भवति[1] तार्तीयं तृतीयसवनं तृतीयस्याभिप्लविकस्य यत्[2] तृतीयसवनं **तद्देवस्य** (आश्रौ ७, ७, २) इत्यादि तद् भवति ॥ ४ ॥

[तत्राऽज्यसूक्तनिरूपणम्]

**'त्वं हि क्षैतवत्' इति चाऽऽज्यम् ॥ ५ ॥**

आज्यं च **त्वं हि क्षैतवत्** (ऋ ६, २) इतीदं भवत्याभिप्लविकस्यातिदेशप्राप्तस्य स्थाने, **होता जनिष्ट** (ऋ २, ५) इत्येतस्य स्थाने ॥ ५ ॥

[स्वर्गकामनया गर्गत्रिरात्रेण त्र्यहेण यजनम्]

**गर्गत्रिरात्रं स्वर्गकामः ॥ ६ ॥**

गर्गत्रिरात्रो नाम त्र्यहः। तेन स्वर्गकामो यजेत ॥ ६ ॥

[तत्र मध्यमेऽहनि पृष्ठविशोविशीययोः साम्नोर्निरूपणम्]

**तस्य मध्यमस्याह्नो वामदेव्यं पृष्ठं विशोविशीयमग्निष्टोमसाम ॥ ७ ॥**

तस्यायं विशेषो भवति। मध्यमस्याह्नो वामदेव्यं पृष्ठं **कयानश्चित्र आभुवत्** (ऋ ४, ३१, १) इतीदं भवति। विशोविशीयमग्निष्टोमसाम भवति ॥ ७ ॥

[तत्रोत्तमेऽहनि वारवन्तीयसाम्नो निरूपणम्]

**वारवन्तीयमुत्तमे ॥ ८ ॥**

उत्तमे चाहनि वारवन्तीयमग्निष्टोमसाम भवति ॥ ८ ॥

[तत्राऽऽज्यसूक्तस्य निरूपणम्]

**'त्वमग्ने वसूँर्' इति चाऽऽज्यम् ॥ ९ ॥**

[3]गर्गत्रिरात्रस्योत्तमे[3] अहन्यतिदेशप्राप्तस्य स्थाने **त्वमग्ने वसून्** (ऋ १, ४५) इत्येतदाज्यं भवति ॥ ९ ॥

[राज्यकामनया वैदत्रिरात्रेण यजनम्]

**वैदत्रिरात्रं राज्यकामः ॥ १० ॥**

वैदत्रिरात्रो नाम त्र्यहः। तेन राज्यकामो यजेत ॥ १० ॥

[तस्य त्रिवृत्स्तोमकत्वातिरात्रसंस्थाकत्वयोः कथनम्]

**सर्वे त्रिवृतोऽतिरात्राः ॥ ११ ॥**

---

१-१. नास्ति मूको; द्र. देवस्वामी। २. नास्ति मूको। ३-३. नास्ति मूको; द्र. देवस्वामी।

सर्वाण्यहानि 'त्रिवृत्स्तोमानि भवन्ति अतिरात्रान्तानि' ॥ ११ ॥

[पशुकामनया छन्दोमपवमानान्तर्वस्वोरन्यतरेण यजनम्]

**छन्दोमपवमानान्तर्वसू पशुकामः ॥ १२ ॥**

छन्दोमपवमानश्चान्तर्वसुश्च, एतयोरन्यतरेण पशुकामो यजेत ॥ १२ ॥

[स्वर्गकामनया पराकच्छन्दोम-पराकयोरन्यतरेण यजनम्]

**पराकच्छन्दोम-पराकौ स्वर्गकामः ॥ १३ ॥**

पराकच्छन्दोमः पराकश्चाहीनौ, अनयोरन्यतरेण स्वर्गकामो यजेत ॥ १३ ॥

[त्र्यहवर्णनोपसंहारः]

**इति त्र्यहाः ॥ १४ ॥**

अनुक्रान्ता एते त्र्यहा वेदितव्याः। त्र्यहवचनं मर्यादार्थम्। **चतुरहाः** (आश्रौ १०, २, २६) इति वक्ष्यति ॥ १४ ॥

[पूर्वोक्तेषु त्र्यहेषु गर्गत्रिरात्रवच्छस्यानां विधानम्]

**गर्गत्रिरात्रशस्याः ॥ १५ ॥**

**छन्दोमपवमानान्तर्वसू** (आश्रौ १०, २, १२) इत्येवमाद्या गर्गत्रिरात्रशस्या वेदितव्याः ॥ १५ ॥

[चतुरहोपक्रमस्तत्रात्रेश्चतुर्वीरेण वीरकामनया यजनम्]

**अत्रेश्चतुर्वीरं वीरकामः ॥ १६ ॥**

[2]अत्रेश्चतुर्वीरो नाम चतुरहः[2] ॥ १६ ॥

[तत्राऽऽज्यसूक्तानां निर्देशः]

**तस्य वीरवन्त्याज्यानि ॥ १७ ॥**

अनेन वीरवच्छब्दयुक्तानीत्यर्थः। तानि स्वयमेव पठति ॥ १७ ॥

[तत्र द्वितीयतृतीयचतुर्थेष्वहःस्वाज्यसूक्तानां निर्देशः]

**'यमग्ने वाजसातम' इतिं द्वितीयेऽहन्याज्यम्; 'अग्ना यो मर्त्यः' इति तृतीये, 'अग्निं नरः' इति चतुर्थे ॥ १८ ॥**

---

१-१. त्रिवृत्तनामानि भवंति अतिरात्रां मूको। २-२. अत्रेश्चतुर्वीरेण वीरकामो यजेत। वीरान् पुत्रान् यः कामयते स यजेत देवस्वामी।

**यमग्ने वाजसातम** (ऋ ५, २०) इति द्वितीयेऽहन्याज्यम्। **अग्ना यो मर्त्यः** (ऋ ६, १४) इति तृतीये। तृतीयेऽहन्येतदाज्यं भवति। [1]**अग्निं नरः** (ऋ ७, १) इत्येतदाज्यं भवति[1] चतुर्थेऽहनि। तस्येत्येतदारभ्यते। अस्मिन् प्रकरणे सर्वार्थः कश्चिद् विधिः[2] विधीयते। कोऽसौ, उच्यते॥ १८॥

[चतुर्थस्याह्नः षोडशिवत्कर्तव्यत्वम्]

**षोडशिमच्चतुर्थम्॥ १९॥**

षोडशिनश्चतुर्थं चतुर्थमहः। इत्ययध्व [? इत्यध्वरस्य] चतुर्थेऽहनि **अग्निं नरः** (७, १, १-३) इत्येतास्वेव बृहत् कर्तव्यम्। सर्वत्रैवाहीनेषु[3] षोडशिसंस्थं कर्तव्यम्। तस्मात् तस्येत्येतदारभ्यते। आज्यानि कथं, तस्यैव वीरवन्ति[4] स्युरिति, नान्यत्र। वीरवच्छब्दग्रहणं क्रियते। तस्याज्यानि यद्येतावदेवोच्यते, तदैतच्[5] चतुर्थमहः षोडशिसंस्थम्। इदमत्रैव स्यात्। [6]न सर्वस्य[6] तृतीयस्याह्नः॥ १९॥

[तत्र सच्छन्दस्कस्य साम्नो निरूपणम्]

**अस्य 'अभि[7] त्वा वृषभा सुते' इति गायत्रीषु रथंतरं पृष्ठम्॥ २०॥**

अस्यैव चतुरहस्य **अभि त्वा वृषभा सुते** (ऋ ४, ४५, २२-२४) इत्येतासु गायत्रीसु रथंतरं पृष्ठं भवति। केचित् तस्येति पठन्ति, स त्वपपाठः, छन्दोगैर्न समवैति[8]॥ २०॥

[तत्र बृहत्साम्नो छन्दोनिर्देशः]

**अनुष्टुब्बृहतीषु बृहत्॥ २१॥**

अस्मिन्नेव चतुरहे यद् बृहत् [? तत्] अनुष्टुप्सु वा बृहतीषु वा कर्तव्यम्। असमाम्नातास्ताः [? इति] केचित्॥ २१॥

[तत्र बृहति साम्नि योनिविकल्पः]

**चतुर्थे 'त्वं बलस्य गोमतः', 'यज्जायथा अपूर्व्य' इति वा॥ २२॥**

चतुर्थेऽहनि यद् बृहत् [? तत्] **त्वं बलस्य गोमतः** (ऋ १, ११, ५-७) [9]इत्येतासु एव वा[9], **यज्जायथा अपूर्व्य** (ऋ ८, ८९, ५-७) इत्येतास्वेव वा कर्तव्यम्। चतुर्थेऽहनि एतास्वेव बृहत् कर्तव्यं नियमेन। इष्टपरिग्रहार्थम् ऋचोऽ-

१-१. नास्ति मूको; द्र. देवस्वामी। २. नास्ति मूको; द्र. देवस्वामी। ३. **वेवाहिनेषु** मूको; द्र. देवस्वामी। ४. धीरवत्यानि मूको। ५. **यदेत च°** मूको। ६-६. **सर्वत्र** मूको। ७. **तस्य** B. I. ; आन। ८. द्र. देवस्वामी। ९-९. **एतासुधा वा** मूको।

पदिष्टाः **त्वं बलस्य** (ऋ १, ११, ५-७) अनुष्टुभः, यज्जायथा (ऋ ८, ८९, ५-७) बृहत्यः॥ २२॥

[पुष्टिकामनया जामदग्न्यचतुरहेण यजनम्]

**जामदग्न्यं पुष्टिकामः॥ २३॥**

जामदग्न्येन पुष्टिकामो यजेत॥ २३॥

[तस्योपसदां पुरोळाशिनीत्वम्]

**तस्य पुरोळाशिन्य उपसदः॥ २४॥**

अयं जामदग्न्यस्य विशेषो भवति। उपसत्सु पुरोळाशा भवन्ति। अतः किम् ? पुरोळाशा एव भवन्ति, नाज्यं[१] हविः। उच्यते। आज्यहविष्ट्वमेव भवति। पुरोळाशास्तु दर्विहोमा भवन्ति। तानध्वर्यवो जुह्वति। अथ संप्रैषयति। ता एव याज्यानुवाक्या भवन्ति। **तस्य** (आश्रौ १०, २, १७) इत्युच्यते सर्वार्थः प्राग् विधिरधिकृतः[२]। तेनायमपि विधिः सर्वार्थः स्यात्। इष्यते च इहैव। तस्मात् तस्य ग्रहणम्॥ २४॥

[भ्रातृव्यनाशाय वैश्वामित्रेण प्रजायै च वसिष्ठसंसर्पेण यजनम्]

**वैश्वामित्रं भ्रातृव्यवान् प्रजाकामो वसिष्ठसंसर्पणम्॥ २५॥**

वैश्वामित्रं भ्रातृव्यवान् आहरेत्[३] यजमानः[४]। प्रजाकामो यः [५]यजमानः स वसिष्ठसंसर्पेण यजते[५]। अभिप्लवेन शस्यं व्याख्यातम् अनागतानां चातिक्रान्तानां चाहीनानां षळहान्तानाम्॥ २५॥

[चतुरहोपसंहारः]

**इति चतुरहाः॥ २६॥**

येऽनुक्रान्तास्ते चतुरहा वेदितव्याः। **पञ्चरात्राः** (आश्रौ १०, २, २८) इति वक्ष्यति। अवध्यर्थं वचनं चतुरहा इति॥ २६॥

[पञ्चरात्रेषु सार्वसेन-दैव-पञ्चशारदीय-व्रतवद्-वावराणां कथनम्]

**सार्वसेनं पशुकामो दैवं भ्रातृव्यवान् पञ्चशारदीयं पशुकामो व्रतवन्तमायुष्कामो वावरं वाक्प्रवदिषुः॥ २७॥**

---

१. नाज्याहविषु मूको। २. द्र. देवस्वामी। ३. **आहते** मूको। ४. **यद्यज°** मूको। ५-५. **°मानः वसिष्ठसंतर्पणं यजति** मूको; द्र. देवस्वामी।

सार्वसेनमहीनं पशुकामो यजेत, दैवं भ्रातृव्यवान्। पञ्चशारदीयं पशुकामः। पञ्चशारदीयं च पशुकामो यजेत। पञ्चभिर्वर्षैरस्य समापनं भवति। व्रतवन्तमायुष्कामः। व्रतमस्मिन्नस्तीति व्रतवाँस्तं च व्रतवन्तमायुष्कामो यजेत। वावरो नाम पञ्चरात्रः। तं वावरं वाक्प्रवदिषुर्यजेत॥ २७॥

[उक्तपञ्चरात्राणां परिगणनम्]

**इति पञ्च पञ्चरात्राः॥ २८॥**

इति पञ्च पञ्चरात्राः। पञ्चप्रयोजनमुतरत्र वक्ष्यामः॥ २८॥

[पञ्चशारदीये पशूनां विधानम्]

**पञ्चशारदीयस्य तु सप्तदशोक्षाण ऐन्द्रामारुता मारुतीभिः सह वत्सतरीभिः सप्तदशभिः सप्तदशभिः पञ्चवर्षपर्यग्निकृता सवनीयाः॥ २९॥**

पञ्चशारदीयस्य त्वयं विशेषः—सप्तदशोक्षाण ऐन्द्रामारुता इन्द्रामारुतो देवता येषां त एत ऐन्द्रामारुताः। उक्षाणः प्रसेचनसमर्था मारुतीभिः, सप्तदश मारुत्यो वत्सतर्यो भवन्ति; ताभिः सह पर्यग्निकरणं कर्तव्यम्। सप्तदशभिः-सप्तदशभिरिति वीप्सा। क्रिया तु[१] संवत्सरे। कथं सप्तदशभिः-सप्तदशभिः पर्यग्निकरणं स्यात्। पर्यग्निकरणान्तं कर्म कृत्वा पशूनामुत्सर्गः क्रियते वत्सतरीभिः सह। एवं पञ्च वर्षाणि संवत्सरे। संवत्सरे इदं कर्तव्यम् पञ्चशारदीयेन यागं कर्म[२] [३]करिष्यामीति संकल्पः। अथास्य[३] पाशुकस्य पर्यग्निकरणान्तस्य कर्मण आरम्भः कर्तव्यः।

पञ्चवर्षपर्यग्निकृताः सवनीयाः भवन्ति। पञ्चशारदीये तस्मिन् पञ्चरात्रेऽन्यथा विनियोगे प्राप्त इष्टविभागार्थं शास्त्रमारभ्यते॥ २९॥

[पशूनामहविर्भागेनाऽऽलम्भनविधानम्]

**तेषां त्रींस्त्रींश्चतुर्व्हःस्वालभेरन्परिशिष्टान् पञ्च पञ्चमे॥ ३०॥**

तेषां पशूनां त्रयस्त्रयश्चतुर्व्हस्स्वालब्धव्याः। [४]परिशिष्टान् पञ्च पञ्चमे[४] पञ्चमेऽहनि, परिशिष्टाः पञ्च पशवः तेषामालम्भनं कर्तव्यम्। पञ्चग्रहणं क्रियते, कथं, पञ्चानामेव, अतः पञ्चग्रहणम्॥ ३०॥

[व्रतवतस्तृतीयेऽहनि महाव्रतम्]

**व्रतवतस्तु तृतीयस्याह्नः स्थाने महाव्रतम्॥ ३१॥**

१. न मूको। २. घार्ग मूको। ३-३. °मीति अथा° मूको। ४-४. परिशिष्टाः पञ्चं मूको।

व्रतवतस्तु तृतीयस्याह्नः स्थाने महाव्रतं भवति। स्थानग्रहणं क्रियते। कथं, तृतीयस्याह्नोऽनुद्धारः स्यात्। इह न किंचित् प्रयोजयति। पञ्चरात्रत्वादिदं दर्शितं भवति। अन्यत्राप्यनुद्धारः। तेनैतत् साधितं भवति। **त्वमर्यमा भवसि** (आगृ १, ४, ७) इह पञ्चाहुतयो भवन्ति। अयं च विशेषो व्रतवान् पृष्ठ्यपञ्चाहेन व्याख्यातः॥ ३१॥

[पञ्चरात्रस्योत्तमस्याह्नः पृष्ठ्यपञ्चाहवत् कर्तव्यत्वम्]

**पृष्ठ्यपञ्चाह उत्तमः॥ ३२॥**

पृष्ठ्यपञ्चाहो भवत्युत्तमः। आद्यभेदमुक्त्वा (?) पञ्चग्रहणस्य प्रयोजनम् एतावन्त एव पञ्चरात्राः, नान्येषाम् असमाम्नातानामपि। अथवा प्रकृतिप्रकृतमेव॥ ३२॥

॥ इति दशमे द्वितीयः खण्डः॥

# अथ दशमेऽध्याये तृतीयः खण्डः

[प्रतिष्ठाकामनया ऋतूनां षडहस्य विधानं पृष्ठ्यसमूढव्यूहविकल्पश्च]

**ऋतूनां षळहं प्रतिष्ठाकामः॥ १॥**

ऋतुषडह इति प्राप्तेऽलुक्समासो द्रष्टव्यः। प्रतिष्ठाकामो यजेत। प्रतिष्ठा पुत्रैः पशुभिश्च प्रतिष्ठा। पुत्रैः पशुभिश्च प्रतितिष्ठतीत्यर्थः। अस्य आह अहः। ऋतुभिर्दृष्टः गतो वा, तं प्रतिष्ठाकामो यजेत। **सिद्धैः** (आश्रौ ९, १, २) इत्यत्र नियमात् तायमानरूपाण्यपि सर्वत्र प्राप्नुवन्ति एकाहेषु[1] अपि, तन्त्रे तु स्यात्। प्रतिषेधान्न भविष्यति **नारम्भणीयाः** (आश्रौ ७, ५, १४) इत्यनेन वचनेन। एवमप्रतिषिद्धानां प्रवृत्तिः प्राप्नोति। चतुरक्षराभ्यासताक्ष्यर्जातवेदस्यादीनां प्रवृत्तिः प्राप्नोति। तस्माद् यथासिद्धवचनं न कार्यम्। तायमानरूपाणां[2] ग्रहणं नैव ह्युपगन्तव्यं **हानौ तत एवोद्धारः** (आश्रौ ९, १, १६) इति। अयं च विधिर्विषुवन्महाव्रतयोरन्यत्र भवति। एकविंशस्तोमेऽपि[3] निष्केवल्ये दश सूक्तान्युपदिष्टानि, तृचो महाव्रते। अष्टाशीतिः स्तोमे, पञ्चसूक्तं मरुत्वतीयम्, एवं पञ्चसूक्तं मरुत्वतीयम्। पञ्चवचनं प्रतिषेधात् तृचाः, एवमुद्धारस्तयोर्न भवति, एवं वचनं स्तोमादीनामनन्यभाव इति **एते चत्वारः पृष्ठ्यो महाव्रतं च** (आश्रौ १०, ३, ६) [4]पुराऽभिचरन् इत्येवमादिषु[4] न भवन्ति प्रत्यक्षोपदेशात्। अनिर्दिष्टेष्वेतद् विधानं भवति, न प्रत्यक्षोपदिष्टेषु। इह चोदाहरणं **येऽवार्क् त्रिवृत्स्तोमाः** (आश्रौ ९, १, १७) इत्यस्य **उद्भिद्बलभिदौ** (आश्रौ ९, ८, १७) उद्भित्सप्तपूर्वं भवति स्तोमः। अथ सप्तदशत एवं विपर्यासेन स्तोमो भवति। तत्र हतुराज्यतृचविधिर्भवति। सप्ति (? प्त) त्वा (? त्) स्तोमा (? म) स्य निष्केवल्यमरुत्वतीये अनुदाहरणमिदं प्रत्यक्षशिष्टत्वात् सूक्तयोर्वैश्वदेवमुदाहरणम्। तत्र सप्तमी (? मः) स्तोमः। तत्र तृचा (? चाः) तथा मैत्रावरुणस्य सप्तमी (? मः) स्तोमः प्रातःसवने तत्र तृचा (? चाः) तथा अच्छावाकस्य प्रातःसवन एव। तृचा (?

---

१. **एकान्तेष्वपि** मूको। २. **मानरूपाणां** मूको। ३. °**स्तोमेति** मूको। ४-४. **पुनातिमित्येव**° मूको।

चाः) तृतीयसवने ब्राह्मणाच्छंसिन तृचा मध्यंदिने मैत्रावरुणेन कथं तृचा होतुरपि तृतीयसवने यत्र सप्तमी [ ? मः] स्तोमो भवति। तत्र तृचा एवमुदाहरणानि अन्यान्यपि छन्दोगस्य प्रत्ययेन वेदितव्यानि। **एकाहीभवत्सु** (आश्रौ ९, २, ५) इत्यत्राहर्गणे केचित् प्रातःसवने एकाहानिच्छन्ति[1] न तु वयम्। सत्यमेकाहा भवन्ति। वैराजास्तृचा एकाहाश्च कर्तव्या यथा ब्रह्मवर्चसकामादीनां पृष्ठ्याहानि भवन्ति। तत्र चतुर्थस्य त्र्यह एकाही भवति। प्रथमं चाभिप्लविकत्वात् प्रथमाह एकाहीभवति। अयमागमो गुरुभ्यः, विहितशस्त्रानुगामित्वादावापादीनां यदा शस्त्रं भवति, अथावापा विधीयन्ते, तस्मादनुद्धार एकाहीभवत्स्वपि। अवश्यं चैतदेवमभ्युपगन्तव्यम्। वैराजवैमदानां तृचानामन्यथेह दोषः प्राप्नोति। **तौ चेदग्निष्टोमौ** (आश्रौ ८, ४, ७) षष्ठमहर्यदाग्निष्टोमसंस्थं भवति **नित्यशिल्पं त्विदमहः** (आश्रौ ८, ४, ५) इतिवचनात्, तदा खिलहीनानामागमे पारुच्छेपीनामुत्कर्षः प्राप्नोति, अग्निष्टोमे यदा विहितशस्त्रानुगामिनो भवन्त्यावापाः, तदा माध्यंदिने ऊर्ध्वमारम्भणीयाभ्यः शिल्पेषु विधीयमानेषूत्कर्षः पारुच्छेपीनां भवति। सिद्धे शास्त्र आवापा विधीयन्ते। तेन खिल्यानामन्तरे पारुच्छेपीनां प्रयोगो भवति नोत्कर्षः, आवापाश्च भवन्ति। पित्र्या चोभयान्यधर्मिणी न भवति। शुनासीरीयायां च द्वादश शतं दक्षिणा। योऽयमन्वारम्भणीयास्थानोपदिष्टः पवित्रसंत्रकः, कस्मादनन्तरमन्यदपि इष्टिसंयुक्तं कर्म भवति। पौर्णमास्यां चातुर्मास्यानां प्रयोगं ध्रुवं दर्शयति। नित्यग्रहणेन च ऐन्द्राग्ननिवृत्तिः। अन्ते च पशुसवनं भवति स्तोमो वा॥ १॥

[पृष्ठ्यषडहभेदनिरूपणम्]

**पृष्ठ्यः समूळ्हो व्यूळ्हो वा॥ २॥**

पृष्ठ्यः षळहः। समूळ्हो व्यूळ्हो वा द्विप्रकारोऽपदिष्टः। पृष्ठ्याभिप्लवो नोक्तोऽहीने-[? न] एवमादिः समूळ्हः। व्यूळ्हश्चेत् पृष्ठ्याश्चोत्तरे (? पृष्ठ्यस्तोत्तरे) द्व्यहरेव-(? त्र्यहे इत्येव-) मादि व्यूळ्हः। उभयविभाषा न कर्तव्याः। एवमेव च क्लृप्तम्। पृष्ठ्यः समूळ्हो व्यूळ्हो वा भवति यत्र नियमोऽभीष्टो भवति। तत्र स्वयमेव ब्रवीति। यथा **चतुर्थेन व्यूळ्हस्येतराणि सूक्तानि** (आश्रौ ८, १२, २५)। **व्यूळ्हस्य पञ्चमेन पृष्ठ्याह्ना** (द्र. आश्रौ १०, ९, ८) एवमादिषु स्वयमेव चोदनां[2] करोति। उच्यते। इदं ब्रुवन्[3] दर्शयति। अविशेषचोदनायां समूळ्ह एवमेव प्रत्यवगन्तव्यः। यथा **पृष्ठ्याहान्यादितः** (आश्रौ १०, १, ७)। **पृष्ठ्यपञ्चाहोऽभ्यासक्तो विश्वजिच्च** (आश्रौ १०, ३, ४), **पृष्ठ्यपञ्चाह उत्तमः** (आश्रौ १०, २, ३२) एवमादिषु॥ २॥

---

१. **एकाहांतुकानिच्छन्ति** मूको। २. **चोदग्रं** मूको। ३. **ध्रुवं** मूको।

[पशुकामनया पृष्ठ्यावलम्बस्य विधानम्]

**पृष्ठ्यावलम्बं पशुकामः ॥ ३ ॥**

पृष्ठ्यावलम्बो नाम षळहः। तेन पशुकामो यजेत। तस्याहर्व्यूढः[१] ॥ ३ ॥

[तत्र षडहेऽहर्व्यवस्था]

**पृष्ठ्यपञ्चाहोऽभ्यासक्तो विश्वजिच्च ॥ ४ ॥**

पृष्ठ्यपञ्चाहोऽभ्यासक्तो भवति, विश्वजित् षष्ठमहः। अभ्यासक्तो नाम स्तोमैरभ्यासक्तो भवति। प्रथमस्याह्नस्त्रिवृत्स्तोमे द्वे सवने भवतः। [२]पञ्चदशं तृतीयसवनम्। द्वितीयस्य पञ्चदशे द्वे सवने[२], सप्तदशं तृतीयसवनम्। अनेन प्रकारेणाभ्यासक्तो वेदितव्यः ॥ ४ ॥

[आयुष्कामनया संभार्यस्य विधानं तदहर्व्यवस्था च]

**संभार्यमायुष्कामः। पृष्ठ्यत्र्यहः पूर्वोऽभिप्लवत्र्यहश्च ॥ ५ ॥**

संभार्यो नाम षळहः। अनेनाऽऽयुष्कामो यजेत। तस्याहर्व्यूळ्हः। पृष्ठ्यत्र्यहः पूर्वम् (? र्वः अ)-भिप्लवत्र्यहश्च। [३]पूर्वः पृष्ठ्यत्र्यहः। अनेन[३] प्रकारेण संभार्यो वेदितव्यः। अभिप्लवत्र्यह उत्तरो भवति ॥ ५ ॥

[ऋषिसप्तरात्र-प्राजापत्य-छन्दोमपवमानव्रत-जामदग्नानां सप्तरात्राणां कामनाभेदेन विधानम्]

**ऋषिसप्तरात्रमृद्धिकामः, प्राजापत्यं प्रजाकामश्छन्दोमपवमानव्रतं पशुकामो, जामदग्नमन्नाद्यकामः ॥ ६ ॥**

ऋषिसप्तरात्रमृद्धिकामः। ऋषिसप्तरात्रो नाम सप्तरात्रः, तेन ऋद्धिकामो यजेत। प्राजापत्यं प्रजाकामः। प्राजापत्यो नाम सप्तरात्रः, तेन प्रजाकामो यजेत। छन्दोमपवमानव्रतं नाम सप्तरात्रः, तेन पशुकामो यजेत। जामदग्नमन्नाद्यकामः[४]। जामदग्नो नाम सप्तरात्रः, [५]तेनान्नाद्यकामो यजेत[५] ॥ ६ ॥

[उक्तसप्तरात्रेष्वहर्व्यवस्था]

**एते चत्वारः पृष्ठ्यो महाव्रतं च ॥ ७ ॥**

---

१. **तस्माद् द्व्यहः** मूको। द्र. देवस्वामी। २-२. नास्ति मूको। द्र. ना. वृत्तिः। ३-३. **एकानेन** मूको। ४. °दग्न्य° मूको। ५-५. नास्ति मूको। द्र. देवस्वामी।

एतेषां चतुर्णां सप्तरात्राणामहर्व्यूळ्हः— [1]पृष्ठ्यो महाव्रतं च। पृष्ठ्यः षडहः सप्तमं महाव्रतं च भवति[1] ॥ ७ ॥

[ऋषिसप्तरात्रे सप्तमेऽहनि महाव्रतस्य स्वस्तोमत्वम्]

**व्रतं तु स्वस्तोमं प्रथमे ॥ ८ ॥**

प्रथमे त्वयं विशेषो भवति व्रतस्य। व्रतं तु स्वस्तोमं प्रथमे सप्तरात्रे, स्वेन स्तोमेन [2]युक्तं व्रतं[2] भवति। पञ्चविंश आत्मा, त्रिवृच्छिरः, एकविंशः पुच्छं, पञ्चदशो दक्षिणः पक्षः, सप्तदश उत्तरः ॥ ८ ॥

[प्राजापत्ये सप्तरात्रे सप्तदशस्तोमस्य विधानम्]

**सप्तदशं द्वितीये ॥ ९ ॥**

द्वितीये सप्तदशस्तोमं भवति। अनेन न्यायेन द्वितीये[3] सप्तरात्रेऽयं विशेषो व्रतस्य ॥ ९ ॥

[छन्दोमपवमानव्रते सप्तरात्रे छन्दोमपवमानस्तोमस्य विधानम्]

**छन्दोमपवमानं तृतीये ॥ १० ॥**

[4]तृतीये सप्तरात्रे[4] छन्दोमानां पवमान इव यस्य तदिदं छन्दोमपवमानं व्रतं भवति। छन्दोमानां च प्रथमेऽहनि चतुर्विंशस्तोमो भवति। द्वितीयेऽहनि चतुश्चत्वारिंशः। एवमिहापि व्रतस्य बहिष्पवमाने चतुर्विंशस्तोमो भवति। माध्यंदिने पवमाने चतुश्चत्वारिंशः। आर्भवे पवमाने अष्टाचत्वारिंशस्तोमो[5] भवति। अनेन प्रकारेण छन्दोमपवमाने [? नं] व्रतं भवति ॥ १० ॥

[जामदग्ने सप्तरात्रे स्तोमस्य विधानम्]

**चतुर्विंशो बहिष्पवमानः सप्तदशः शेषश्चतुर्थे ॥ ११ ॥**

[6]चतुर्थे सप्तरात्रे[6] चतुर्विंशो बहिष्पवमानः स्तोमो भवति। सप्तदशः शेषः। शेषः स्तोमो व्रतस्य सप्तदशस्तोमो भवति ॥ ११ ॥

[प्रजातिक्रान्तिकामनया ऐन्द्रसप्तरात्रेण यजनम्]

**ऐन्द्रमत्यन्याः प्रजा बुभूषन् ॥ १२ ॥**

ऐन्द्रो नाम सप्तरात्रः। तेन योऽन्याः प्रजा अतीत्य भवितुमिच्छति विद्यया वा धनेन वा स यजेत। तस्याहर्व्यूळ्हः ॥ १२ ॥

---

१-१. पृष्ठ्यः षडहो व्रतं च सप्तमं महाव्रतं भ° मूको। २-२. व्रतं मुक्तं मूको। ३. तृतीये मूको। ४-४. नास्ति मूको। ५. ... ६. ... मूको।

[तत्राऽह्नां व्यवस्था]

**त्रिकद्रुका अभिजिद् विश्वजिन्महाव्रतं सर्वस्तोमः ॥ १३ ॥**

त्रिकद्रुका इति संज्ञा। त उत्तरत्र वक्ष्यमाणाः त्रिकद्रुकाः[१]। अभिजिद्विश्वजिन्महाव्रतं सर्वस्तोमः। अनेन प्रकारेण सप्ताहानि भवन्ति। पूर्वेषां[२] चतुर्णां सप्तरात्राणामन्ते महाव्रतं भवति। इह यथा चोदितं भवति ॥१३॥

[ऋद्धिकामनया जनकसप्तरात्रेण यजनम्]

**जनकसप्तरात्रमृद्धिकामः। अभिप्लवचतुरहो विश्वजिन्महाव्रतं ज्योतिष्टोमः ॥ १४ ॥**

जनकसप्तरात्रो नाम सप्तरात्रः। तेन ऋद्धिकामो यजेत। तस्याहर्व्यूळ्हः। अभिप्लवचतुरहः, विश्वजित्[३], महाव्रतम्, ज्योतिष्टोमः। अभिप्लवचतुरहः विश्वजित्[३] महाव्रतं ज्योतिष्टोमः ॥ १४ ॥

[पशुकामनया कर्तव्यस्य जनकसप्तरात्रस्याहर्व्यवस्था]

**पृष्ठ्यस्तोमो विश्वजिच्च पशुकामस्य सप्तमः ॥ १५ ॥**

पृष्ठ्यस्तोमः प्राग् व्याख्यातः[४], विश्वजिच्च। एवमहर्व्यूळ्हः। सप्तरात्रः पशुकामस्य भवति। सप्तमश्चायं सप्तरात्रः। संख्यावचनं प्रकृतिकृतम् ॥ १५ ॥

[देवत्वकामनयाऽऽष्टरात्रस्य विधानम्]

**देवत्वमीप्सतोऽष्टरात्रः ॥ १६ ॥**

देवत्वं यः कामयते सोऽनेनाष्टरात्रेण यजेत, तस्याहर्व्यूळहः ॥ १६ ॥

[अष्टरात्रेऽहर्व्यवस्था]

**पृष्ठ्यो महाव्रतं ज्योतिष्टोमः ॥ १७ ॥**

पृष्ठ्यो महाव्रतं ज्योतिष्टोमः। व्रतं चाहीनेषु यथाचोदितमेव भवति पाठे ॥ १७ ॥

[आयुष्कामनया नवरात्रस्य विधानम्]

**नवरात्रमायुष्कामः पृष्ठ्यस्त्रिकद्रुकाश्च ॥ १८ ॥**

नवरात्रमहीनम् आयुष्कामः[५] आहरेत्। तस्यैवं[६] शस्यं वेदितव्यम् पृष्ठ्यस्त्रिकद्रुकाश्चैतानि नवाहानि भवन्ति ॥ १८ ॥

---

१. द्र. आश्रौ ११, १, ११। २. सप्तैषां मूको। ३. विश्वजिति मूको। ४. द्र. आश्रौ ८, ४, २१। ५-५. °हीनमेवमहर्व्यूहः आयु° मूको। ६. तस्येदं मूको।

[पशुकामनया कर्तव्यस्य नवरात्रस्याहर्व्यवस्था]

**त्रिकद्रुकाः पृष्ठ्यावलम्ब इति पशुकामस्य॥ १९॥**

त्रिकद्रुकाश्च पृष्ठ्यावलम्बश्च व्याख्यातः[1]। एवं शस्यं द्वितीये नवरात्रे पशुकामस्य भवति॥ १९॥

[द्वयोर्नवरात्रयोरुपसंहारः]

**इति नवरात्रौ॥ २०॥**

एतावेव द्वौ नवरात्रौ भवतः। उत्तरे दशरात्राः॥ २०॥

[त्रिककुम्महात्रिककुप्समूढत्रिककुभां दशरात्राणां विधानम्]

**त्रिककुबध्यर्धः पृष्ठ्यः। महात्रिककुब्व्यूळ्हो नवरात्रः समूळ्हत्रिककुप्समूळ्हः॥ २१॥**

[2]त्रिककुप् नाम दशरात्रः[2]। तस्य शस्यविधिः—पृष्ठ्यः षळ्होऽर्धेनाधिको भवति। एतानि नवाहानि वैश्वानरश्च परिभाषोपदेशात्—**हानौ वैश्वानरोऽधिकः** (आश्रौ १०, १, १८)। महात्रिककुब् व्यूळ्हो नवरात्रः। महात्रिककुब् नाम दशरात्रः। तस्य शस्यं व्यूळ्हो नवरात्रः। व्यूळ्हसमूळ्हयोर्विशेषः। वैश्वानरः एव दशममहः। समूळ्ह-**त्रिककुप् समूळ्हः**। समूळ्हत्रिककुम्नाम दशरात्रः। तस्याहर्व्यूळ्हः। समूळ्हो नवरात्रो, दशममहर्वैश्वानरः एव॥ २१॥

[चतुष्टोमत्रिककुभोर्विधानं पूर्वोक्तानां च चतुर्णां दशरात्राणां काम्यत्वम्]

**चतुष्टोमत्रिककुबध्यर्धोऽभिप्लवः। एतैश्चतुर्भिः स्वानां श्रैष्ठ्यकामो यजेत॥ २२॥**

चतुष्टोमत्रिककुब् नाम दशरात्रः। तस्याहर्व्यूळ्हः। अध्यर्धोऽभिप्लवः। अध्यर्धोऽर्धेनाधिकोऽभिप्लवो भवति। वैश्वानर एव दशममहः। एतैश्चतुर्भिः स्वानां श्रैष्ठ्यकामो यजेत। एतेषां चतुर्णां दशरात्राणाम् अन्यतरेण[3] [?तमेन] स्वानां संजातानां यः श्रैष्ठ्यं कामयते, स यजेत॥ २२॥

[ऋद्धिकामनया कुसुरुबिन्दुदशरात्रस्य विधानम्]

**कुसुरुबिन्दुमृद्धिकामस्त्रयाणां पृष्ठ्याह्नामेकैकं त्रिः॥ २३॥**

कुसुरुबिन्दुर्नाम दशरात्रस्तेन ऋद्धिकामो यजेत। तस्याहर्व्यूळ्हस्त्रयाणां [4]पृष्ठ्याह्नामेकैकं त्रिः[4] पूर्वेषामह्नां पृष्ठ्यस्यैकैकमहस्त्रिकृत्वः प्रयोक्तव्यः [?व्यम्] [5]अनेन प्रकारेण नवाहानि भवन्ति[5]। दशममहः वैश्वानर एव॥ २३॥

---

१. द्र. आश्रौ १०, ३, ३; १३। २-२. **त्रिककुबध्यर्धो नाम** मूको। ३. **अन्यतमेन** देवस्वामी। ४-४. **पृष्ठ्याह एके** मूको। ५-५. **एवं नवाहानि स्युः** देवस्वामी।

[पशुकामनया छन्दोमवतो दशरात्रस्य विधानम्]

**छन्दोमवन्तं पशुकामः पृष्ठ्यावलम्बस्य प्राग् विश्वजितश्छन्दोमा दशमं चाहः॥ २४॥**

छन्दोमवन्तं दशरात्रं पशुकाम आहरेत्। तस्याहर्व्यूळ्हः[१]। पृष्ठ्यावलम्बः प्रागपदिष्टः[२]। तस्यैव प्राग्विश्वजितः छन्दोमाः कर्तव्याः। दशमञ्चाहः। दशममेव चाहः, अविवाक्यं दशममहः। दशमं भवति॥ २४॥

[अभिचारकामनया पुरो दशरात्रस्य विधानम्]

**पुराऽभिचरन्॥ २५॥**

पूर्नाम दशरात्रः। तेनाभिचरन् यजेत। तस्याहर्योगः[३]॥ २५॥

[पुरो दशरात्रस्याहर्व्यवस्था]

**ज्योतिर्गामभितो गौरभिजितं विश्वजिदायुषम्॥ २६॥**

ज्योतिर्गामभितो भवति, ज्योतिर्गौर्ज्योतिरिति। गौरभिजितम् अभितो भवति, गौरभिजिद् गौरिति। विश्वजिदायुषम् अभितो भवति, विश्वजिदायुर्विश्वजिदिति। अनेन प्रकारेण शस्यं भवति। वैश्वानर एव च दशममहः॥ २६॥

[श्रीकामनया शललीपिशङ्गस्य दशरात्रस्य विधानम्]

**शललीपिशङ्गं श्रीकामः॥ २७॥**

शललीपिशङ्गो नाम दशरात्रः। अनेन श्रीकामो यजेत। तस्याहर्योगः॥ २७॥

[शललीपिशङ्गस्याहर्व्यवस्था]

**अभिप्लवत्र्यहः पूर्वस्त्रिः॥ २८॥**

अभिप्लवत्र्यहः पूर्वस्त्रिरित्यभिप्लवस्त्र्यहः [४]पूर्वः पुनः पुनरसावेव[४] कर्तव्यः। वैश्वानरो दशमञ्चाहः[५]। एवं त्रिष्कृत्वः[६] प्रयोगः कर्तव्यः॥ २८॥

[दशरात्रोपसंहारः]

**इति दशरात्राः॥ २९॥**

इत्येते येऽनुक्रान्तास्त्रिककुबध्यर्ध इत्येवमादय एते दशरात्रा वेदितव्याः। उत्तर एकादशरात्रा भवन्ति॥ २९॥

॥ इति दशमे तृतीयः खण्डः॥

---

१. तस्याहसमध्यूल्हः मूको। २. द्र. आश्रौ १०, ३, ३। ३. तस्याहर्व्यूहः देवस्वामी। ४-४. समानः पुनस्सावेव मूको। ५. °नरदशमश्च दशः मूको। ६. त्रिष्कृतः मूको।

## अथ दशमेऽध्याये चतुर्थः खण्डः

[ऋद्धिकामनया पौण्डरीकस्यैकादशरात्रस्य यजनम्]

**पौण्डरीकमृद्धिकामः। पृष्ठ्यस्तोमश्छन्दोमा गोतमस्तोमो विश्वजिद् व्यूळ्हो नवरात्रो महाव्रतं वैश्वानर इति वा॥ १॥**

पौण्डरीकम् ऋद्धिकामः। पौण्डरीको नामैकादशरात्रः। तेन ऋद्धिकामो यजेत। तस्याहर्योगः। पृष्ठ्यस्तोमः। पृष्ठ्यस्तोमो भवति षडहः। छन्दोमाश्च भवन्ति, ते च व्याख्याताः[1]। गोतमस्तोमश्च दशमो भवति। विश्वजिच्चैकादशमहः। एवं पुण्डरीको वेदितव्यः। व्यूळ्हो नवरात्रो महाव्रतं वैश्वानर इति वा अयं पुण्डरीकस्य अहर्व्यूळ्हो भवति। प्राप्तश्च (? प्तस्य) वैश्वानरस्यैव देशोऽपार्थकः। **हानौ वैश्वानरः** (आश्रौ १०, १, १८) इति **प्राप्ते** अस्योपदेशः क्रियते विश्वजित् मा[2] प्राप्नुयादिति। **पूर्वेणैव**[3] विहित इति कृत्वाऽवे (? त्र) एकादशमहर्नित्यवद् गम्येत। **दशानामेव विकल्पो** गम्येत, इष्यते चैकादशानाम्॥ १॥

[संभार्यस्यैकादशरात्रस्य द्वयोः प्रकारयोर्वर्णनम्]

**अथ संभार्यौ॥ २॥**

**अतिरात्रश्चतुर्विंशमध्यर्धोऽभिप्लवः पृष्ठ्यो वा॥ ३॥**

संभार्ययोरध्यर्धोऽभिप्लवः पूर्वस्य संभार्यस्य पृष्ठ्यो वा। द्वितीयस्य संभार्यस्य पृष्ठ्योऽध्यर्धो भवति। वाकारश्चशब्दस्थाने वेदितव्यः। एवमेकादशाहानि। अथशब्दोऽधिकारार्थः[4]। अधिकृत्यादौ प्रयुज्येत। किमधिकृत्यादौ प्रयुज्येत, [5]किमत्राधिकृतमतिरात्रादित्वकम्[5] (? कम्)॥ २-३॥

---

१. द्र. आश्रौ ८, ९-११। २. नास्ति मूको। ३. **पूर्वेयत्वे** मूको। ४. नास्ति मूको। ५-५. **किमत्र विकृतमतिसत्रादित्वा** मूको।

[शत्रुनाशायेन्द्रवज्रस्यैकादशरात्रस्य विधानम्]

**इन्द्रवज्रं भ्रातृव्यवान्॥ ४॥**

इन्द्रवज्रो नामैकादशरात्रः। तेन भ्रातृव्यवान् यजेत। तस्याहर्व्यूळ्हः॥ ४॥

[इन्द्रवज्रस्याहर्व्यवस्था]

**पृष्ठ्यस्याद्ये अहनी व्यत्यासमा नवरात्रात्॥ ५॥**

पृष्ठ्यस्याद्ये अहनी[1] व्यत्यासं प्रयोक्तव्ये। प्रथममहः, अथ द्वितीयं, पुनः प्रथमम्, अथ द्वितीयम्, अनेन क्रमेण यावन्नव[2] भवेयुः। [3]नवरात्रग्रहणं नवाहार्थम्[3]॥ ५॥

[तत्र दशमैकादशयोरह्नोर्व्यवस्था]

**महाव्रतम्॥ ६॥**

महाव्रतं च दशममहः, वैश्वानर एकादशमहः[4]। एवंगता[5] एकादशरात्राः॥ ६॥

॥ इति दशमे चतुर्थः खण्डः॥

१. अहीनस्य मूको। २. नास्ति मूको। ३-३. ग्रहणं नाम्ना मूको। ४. एकादशममहः मूको। ५. ता मूको।

## अथ दशमेऽध्याये पञ्चमः खण्डः

[द्वादशाहोप्रकमः]

**अथ द्वादशाहा भवेयुः ॥ १ ॥**

अथेदानीं द्वादशाहा वेदितव्याः। अथ-शब्द आनन्तर्ये ॥ १ ॥

[द्वादशाहस्य सत्राहीनरूपाभ्यां द्विविधत्वम्]

**सत्राणि भवेयुरहीना वा ॥ २ ॥**

महतः प्रकरणस्यादौ सत्राणि भवेयुः सत्राणि भवन्तीत्यर्थः। द्वितीयं भवेयुर्ग्रहणं किमर्थम्। 'यत इदं'[1] पूर्वमेवानुवर्तते। एवं तर्हि अन्यथा करिष्यामः। अथ द्वादशाहाः इदमेवाधिकारिकम्[2]। सत्राणि भवेयुरहीना वा। एवं द्वितीयं भवेयुर्ग्रहणं न कर्तव्यम्, पूर्वमेवानुवर्तते। उच्यते। पूर्वमपि न वक्तव्यम्, अध्याहारात् सिद्धिः। यथाऽन्यत्रापि सिद्धिमीक्षमाणस्तिष्ठेत्। अथवाऽध्याहर्तव्यं स्वयमेवाचार्यो ब्रूयात्। उच्यते। सर्वथैकस्याध्याहरः क्रियते। अथवा द्वयोरप्यध्याहारो न कर्तव्यः। अथ उभावप्येतौ 'भवेयुः'-शब्दावनर्थकौ। एवं तर्हि पूर्ववत् सूत्रच्छेदः। अथ द्वादशाहा भवेयु र्व्यवतिष्ठेयुरित्यर्थः। व्यवस्थायामयं 'भवेयुः' अस्ति। पुनरन्यत्रापि 'भवेयुः'-शब्दो व्यवस्थायामस्तीत्युच्यते। यथेहाश्वा भवन्तु यथेहाश्वास्तिष्ठन्तु इव (? इह) गावस्तिष्ठन्तु। कथं वा न व्यवतिष्ठेयुः। आह-अग्निष्टोमादित्वम् अहीनपक्षे स्यात् मासापवर्गित्वं **तमभितोऽतिरात्रौ** (आश्रौ १०, ५, ५) इत्ययं विधिः। सत्रपक्षे कृतार्थः स्यात्, यथैव च अपरिमाणदीक्षत्वे[3] **संवत्सरं त्वेव** (आश्रौ ४, २, १४) इति बाधितमहीनत्वम्, एवमिहाप्यहीनपक्षे संवत्सरदीक्षत्वं बाधते सव्रतेषु। इष्यते च षट्त्रिंशापवर्गित्वं सव्रतेषु। **संवत्सरप्रवल्हं श्रीकामः** (आश्रौ १०, ५, ७)। एकस्य

---

१-१. **त इ** मूको। २. **इदमेवाधिकारिकं भवेयुः** मूको। ३. द्र. आश्रौ १०, १, १२।

यजमानस्य चोच्यते। स चाऽहीनपक्ष एव स्यात्, तस्माद् यथा दीक्षेयुरिति नियमः क्रियते[1] एवमादिभिः कारणैः। कथं, यथैव सत्रपक्ष एवमहीनपक्षेऽपि स्युरिति। सर्वाधिकरणानि यानि सत्रपक्षे तान्यहीनपक्षेऽपि कर्तव्यानि, तस्माद् व्यवस्थानं 'सत्राणि भवेयुः' इति, ते द्वादशाहाः सत्राणि भवेयुः सत्राणि भवन्तीत्यर्थः॥ २॥

[द्वादशाहेषु पूर्वं दशरात्रस्य विधानम्]

**उक्तो दशरात्रः॥ ३॥**

स इह कर्तव्यः। यथाऽन्यत्रापि **उक्तम् अग्निमन्थनम्** (आश्रौ ३, १, १२)। **उक्तम् अग्निप्रणयनम्** (आश्रौ ४, ८, २९) वा। क्रियामात्रमेव गम्यते, इष्यते च सत्रार्थकं[2] प्रणयनं मन्थनं वा। तस्मात् तत्रोक्तवचनम्। इतरथा हि क्रियामात्रमेव प्रतीयेत[3]। यथा **मथित्वा प्रणीयाऽऽहवनीयमुपतिष्ठेत** (आश्रौ ३, १२, २३)। इह पुनर्दशरात्रचोदनायां दशरात्रो भविष्यति, आह—यः कश्चिद् दशानामह्नां समाहारः प्राप्नुयात्। आह—अदोषाय कृत्रिमोऽकृत्रिम एव संप्रत्ययो भवति दशमस्योक्तवचनस्य प्रयोजनम् उक्तो दशरात्र इति।

यद्यपि प्रागुक्तो दशरात्रस्तथा ग्रहार्थ एव वेदितव्यः।इह प्रकृतिर्दशरात्रो द्रष्टव्यः। द्वादशाहप्रकृतिरित्यर्थः। इह विधीयमानो भवति, दशरात्रानन्तरं न भवति, इह प्रकृतिरेव। यथा कुण्डपायिनामयनेऽग्निहोत्रं दर्शपौर्णमासौ विधीयमानौ कर्मान्तरं भवतः, न तद्वदिह। सर्वथेदं साधितं भवति—दशरात्रः द्वादशाहोत्पत्तिः। द्वादशाहप्रकृतिरित्यर्थः। ततः इदं साधितं भवति—अहीना द्वादशाहप्रकृतयः। तत इदं लब्धं भवति। द्वादशाहप्रकृतिर्दशरात्रः। कैरहोभिः। अतिदेशेऽक्रियमाणेऽहीनानां बहुयजमानत्वं साधितं भवति। बहुयजमाना द्वादशाहाः। [4]तत्प्रकृतिकातिदेशेषु अहीनेष्वपि बहुयजमानत्वं[4] द्रष्टव्यम्। दशरात्रः द्विप्रकारो भवति॥ ३॥

[दशरात्रस्य समूळ्हव्यूळ्हरूपाभ्यां द्विविधत्वतम्]

**समूळ्हो व्यूळ्हो वा॥ ४॥**

समूळ्हो व्यूळ्हो वा दशरात्रः **पृष्ठ्यः षळहः** (आश्रौ ८, ७, १८) एवमधिकृत्य व्याख्यातः। तत्र निवेशयन्ति। व्यूळ्हो दशरात्र इति वचनात् सत्रपक्षमेव स्थापयन्ति[5]॥ ४॥

[द्वादशाहपूरणाय दशरात्रमभितोऽतिरात्रयोर्विधानम्]

**तमभितोऽतिरात्रौ॥ ५॥**

---

१. एवं उच्यते। स च अहीनपक्ष एव स्यात्। तस्माद् यथा दीक्षेयुरिति नियमः क्रियते। मूको अधिकम्। २. सर्वदार्थकं मूको। ३. °यतीयेत मूको। ४-४. तत्प्रतिनातिदेशे अहनिष्वपि यज° मूको। ५. स्थापयति मूको।

दशरात्रम् अभितोऽतिरात्रौ प्रथमोत्तमावहीनावित्यर्थः। अधिकौ[१] दशरात्रादेव। अयं प्राथमिको ज्योतिष्टोमः, स एव संस्थावशिष्टो भवति। इहैवंप्रकारो द्वादशाहोऽपदिष्टः। अथान्यो[२] द्विप्रकारः॥ ५॥

[प्रकारान्तरेण द्वादशाहपूरणविधानम्]

**संभार्ययोर्वा वैश्वानरमुपदध्यात्॥ ६॥**

संभार्यौ यौ[३] एकादशरात्रौ प्रागपदिष्टौ[४], तयोरेव वैश्वानरोऽन्ते कर्तव्यः। वैश्वानरो विधीयते। अहीनपक्ष एव प्राप्नुयात् परिभाषासामर्थ्यात्। इहेष्यते च सत्रपक्षेऽपि। अतो वचनारम्भः व्यवस्थावचनात् प्राप्ते शस्ये[५]॥ ६॥

[श्रीकामनया संवत्सरप्रवळ्हसंज्ञकस्य द्वादशाहस्य विधानं तदहर्व्यूहश्च]

**संवत्सरप्रवळ्हं श्रीकामोऽतिरात्रश्चतुर्विंशं विषुवद्वर्जो नवरात्रो महाव्रतम्॥ ७॥**

संवत्सरप्रवळ्हो नाम द्वादशाहः। तेन श्रीकामो यजेत। तस्याहर्व्यूहः— प्रथममहरतिरात्रः द्वितीयं चतुर्विंशम्[६], विषुवद्वर्जो नवरात्रः विषुवद्गर्भो नवरात्रोऽपदिष्टः[७]। विषुवन्तं वर्जयित्वा भवति। अष्टावहानि भवन्ति। एकादशमहर्महाव्रतम्। ततो वैश्वानरोऽधिकृतः। स च द्वादशमहः। अयं च पञ्चमो द्वादशाहप्रकारः॥ ७॥

[भरतद्वादशाहोपक्रमः]

**अथ भरतद्वादशाहः॥ ८॥**

अथेत्ययमर्थ[८]-शब्दः विशेषप्रक्रियायाम्। विष्कषो (? विप्रकृतो) ऽयं द्वादशाहः। तस्मादाद्यम (? द्योऽ) -थशब्दः प्रयुज्यते। अस्योद्धारः। अहा व्यहा (? अह्नां व्यूहो) वेदितव्यः॥ ८॥

[तत्राहर्व्यूहः]

**इममेवैकाहं पृथक्संस्थाभिरुपेयुः॥ ९॥**

इममेवैकाहं, योऽयं प्राथमिक [प्राकृतिक ?] पञ्चमाद्या [? ध्या]-योपदिष्टानामेकाहं [हस्तं ?] पृथक्संस्थाभिरुपेयुर्वक्ष्यमाणाभिः अप्रत्यक्षत्वात्तस्य[९]।

---

१. **अधिके** मूको। २. **अथान्यं** मूको। ३. **स** मूको। ४. द्र. आश्रौ १०, ४, २। ५. **शस्यस्ये** मूको। ६. **चातुर्विंशिकं** मूको। ७. द्र आश्रौ ८, ५, १ तः ८, ७, ११ पर्यन्तम्। ८. **अथेन्यथा मथशब्दः** मूको। ९. **°क्षत्वात्तरस्य** मूको।

उच्यते—प्रत्यक्ष एवासौ। **एतेनाह्ना सुत्यानि** (आश्रौ ७, १, ३) इत्यपदिष्टास्तेनासौ प्रत्यक्ष एव। विशेषणार्थं च इममेवेति, यस्य कस्यचिदेकाहस्य ग्रहणं मा भूदिति। [1]एकाहग्रहणमनन्तरस्य व्रतस्य[1] महाव्रतस्य ग्रहणं मा भूदिति। पृथक्संस्थाभिरितीदं किमर्थम्, उत्तरत्र स्वयमेव संस्था वक्ष्यति। उच्यते। इदमस्य प्रयोजनम्। कथं वचन-चोदिताः संस्थाः स्युरिति। [2]उत्तरत्र इति [3]**द्वादशाहाः** (आश्रौ १०, ५, ११) स्वयं[3] वक्ष्यति। तत्र कथं संस्था एवान्येषु द्वादशाहेषु स्युरिति नेष्टानात् (? म्) प्रकृतिशस्यत्वम्[4] एवकारोऽयं नो चेत् तत्र कथं प्रक्रियतेऽस्यैव संस्थाभिर्युक्तस्य ग्रहणं स्यादित्येवमर्थ एवकारः। इतरथा अभ्यस्यान्नः (? न्यद्) उक्थ (? क्थ्या)-वदितरस्य ग्रहणं स्यादिति, इतरथा द्वादशाहादन्यत्र सप्तममहरग्निष्टोमसंस्थं प्राप्नोति। अपदिष्टं (? ष्टा) येऽष्टौ मध्य उक्थाः (? क्थ्याः), स आत्मा अतो ज्ञापयते। अयमेवार्थः सर्वत्र निर्दिश्यते। तस्मात् कृत्स्नसूत्रमारभ्यते। ताः संस्था अपदिश्यन्ते ॥ ९ ॥

[तत्र द्वादशानामह्नां संस्थाभेदनिर्देशः]

**अतिरात्रमग्रेऽथाग्निष्टोममथाष्टा उक्थ्यानथाग्निष्टोममथातिरात्रम् ॥ १० ॥**

अतिरात्रमग्रे। अथग्रहणं[5] शास्त्रान्तरे भरत-द्वादशाहेऽग्निष्टोमादिकं श्रूयते,[6] तद्दर्शनार्थत्वादथग्रहणम्। अथाग्निष्टोमं द्वितीयमहः। अथाष्टावुक्थ्यान्। अथाष्टा-वुक्थ्याहाः। अष्टाकृत्व उक्थ्यम्[7] इति वक्तव्ये बहुवचननिर्देशः क्रियते, तदर्थमेव एवकारोऽपदिष्टः। अथाग्निष्टोमः, पुनरप्यतिरात्रः पुनरप्यन्तेऽतिरात्रो भवति ॥ १० ॥

[द्वादशाहपरिगणनम्]

**इति द्वादशाहाः ॥ ११ ॥**

इत्येवंप्रकारा द्वादशाहा वेदितव्याः। अनाम्नाताश्च[8] एवं संस्था वेदितव्याः। बहुवचन इति द्वादशाहा (? द्वादशाहा इति बहुवचनम्) उत्तरार्थम् ॥ ११ ॥

[सत्राहीनरूपाणां द्वादशाहानां काम्यत्वनिर्देशः]

**तैरात्मना बुभूषन्तः प्रजया पशुभिः प्रजनयिष्यमाणाः स्वर्गं लोकमेष्यन्तः स्वानां श्रैष्ठ्यमैच्छन्त उपेयुर्वा यजेत वा ॥ १२ ॥**

तैरात्मना बुभूषन्तः। एवमादिषु कामेषु सर्वे कथमधिक्रियेरन्। तैरात्मना बुभूषन्तः प्रजया पशुभिः प्रजनयिष्यमाणाः स्वर्गं लोकमेष्यन्तः[9] स्वानां श्रैष्ठ्यमैप्सन्तः

१-१. °नन्तस्य व्रतस्य मूको। २. उत्तर इ° मूको। ३-३. °शाहा व एवं मूको। ४. °त्वमवमे मूको। ५. अग्रहणं मूको। ६. अग्निष्टोमादिकं श्रूः इति अधिकम् मूको। ७. उक्थ्य मूको। ८. आम्नाताश्च मूको। ९. द्र. वैप ४ a टि, पृष्ठ ५८५।

किमुपेयुरिदं (?) नोपपद्यते। तृतीयानिर्देश उपेयुरिति इदं नोपपद्यते, तानुपेयुरिति एवं भवति। अथवा यजेत वा एतदन्तं[1] सूत्रं भविष्यति। एवं तृतीयानिर्देशः उपपन्नो भवति। एवमुत्तरेण सह निर्देशो नोपपद्यते। आह। उत स्नायि (?) उत्तरार्थं सूत्रमेव भवति यथा सूक्तयोरुपरिष्टात् सूक्ते इति वक्तव्ये अन्तरोपरिष्टात् पुरस्ताद् वक्ष्यामीति ततः षष्ठी-अध्याहारेणैव सूत्रच्छेदः। श्रैष्ठ्यमिच्छन्तः किं यजेरन्, प्रजया पशुभिश्च ये वर्धितुमिच्छन्ति कामयन्त इत्यर्थः। आत्मानं (? त्मना) येन स्वेन वीर्येण बुभूषन्तो भवितुमिच्छन्तः प्रजानां श्रैष्ठ्यमिच्छन्ति, य (? त) एतैः कामैर्युक्ता द्वादशाहैर्यजेरन्। आनन्तर्यभावो न भवति। षट् द्वादशाहाश्चत्वारः कामाः। कश्चित् द्वादशाहः येन केन चित् कामेन प्रयोक्तव्यः। कामो नियमो भवति। उपेयुर्वा यजेत वेति। उपेयुर्वा द्वादशाहान्, यजेत द्वादशाहैर्वा। उपेयुश्चोदितं सत्रं भवति। यजतिचोदितः अहीनो भवति। इयं (? दं) गदितं भवति इयं (? दं) ब्रुवता॥ १२॥

[सत्राहीनयोर्भेदलक्षणनिर्देशः]

## इति पृथक्त्वम्॥ १३॥

इति पृथक्त्वं वेदितव्यम्। उपेयुश्चोदितं सत्रम्, यजेतेति[2] चोदितोऽहीन इतीदं किमर्थम् ? पूर्वेणैवायमर्थः साधितः। नियमार्थं वचनम्। एतदेव पृथक्त्वं नान्यदस्य कृतम्। इदमपि प्राक्साधितं भवेयुः[3]-शब्देन। इदमस्य प्रयोजनमेतत्पृथक्त्वं सर्वत्र वेदितव्यम्। इह वचनादन्यत्र चैवमैतत्[4] साधितं भवति। बृहस्पतिसवे उपेयुश्चोदना श्रूयते शास्त्रान्तरे[5]। सप्तभिः कर्तव्यः, एवमादीनि साधितानि भवन्ति। अन्यथा एवायं नियमः स्यात्। इष्यते च सर्वत्र। अस्मात् कारणात् सूत्रमारभ्यते 'इति पृथक्त्वम्'। तृचा एव तत्र होत्रकाणां हौत्रकार्यार्थम्। बृहस्पतिसव एव दर्शनात् प्रथमोत्तमौ तृचौ भवतः[6]॥ १३॥

[सत्राहीनयोः साधारणधर्मस्य कथनम्]

## अथ सामान्यम्॥ १४॥

अथेदानीं[7] सामान्यविधानम् अधिकृतं वेदितव्यम् इति। पृथक्त्वं चोपदिष्टम्। इदं पुनः साधारणं लक्षणं सत्राणाम्[8] अहीनानां च। किमर्थमिदमारभ्यते। अविशेषेण विधीयमानं लक्षणं सामान्यमेव भविष्यति। उच्यते। अहीनाधिकारो वर्तते। अहीनानामेव स्यात्। आह। नैतदस्ति प्रयोजनम्। प्रासङ्गिकम् अहीनग्रहणम्। उभयाधिकारो वर्तते। आह। एकाहानां निवृत्त्यर्थमिदम्। नेदं[8] प्रयोजनम्।

---

१. **एवमन्तं** मूको। २. **जयतीति** मूको। ३. द्र. आश्रौ १०, ४, २। ४. **च वेनैतत्** मूको। ५. **शास्त्रातिरे** मूको। ६. द्र. आश्रौ ९, ५, ३-५। ७. **असमानमप्येदानीम्** मूको। ८. नास्ति मूको।

**तेन शस्यमेकाहानां** (आश्रौ ९, १, ३) नियमात्तु एकाहेष्वप्रवृत्तिरेव। आह। अनाम्नातं लक्षणं सत्रादीनां विधीयते। अधिकारार्थं सामान्यलक्षणमधिकृतं वेदितव्यम्॥ १४॥

[धर्मस्य प्रदेशानां कथनम्]

**अपरिमितत्वाद् धर्मस्य प्रदेशान् वक्ष्यामः॥ १५॥**

नास्यास्ति प्रमाणं परिमितम्। आह। कस्मात्[१] प्रमाणं न भविष्यति। उच्यते। [२]धर्मश्चानिर्देश्यो भवति धर्माणामेतेनापरिमितत्वात्। धर्माणां[२] याज्ञिकानां कर्मणामित्यर्थः। प्रदेशान् वक्ष्यामः। प्रतिनिर्दिश्यन्ते यैः कर्माणि [३]ते प्रदेशाः। अपरिमितत्वात्[३] कर्मणां प्रदेशान् वक्ष्यामः। विभ्येकदेशानित्यर्थः[४]। आह। कथमपरिमितानि कर्माणि, पञ्चविंशतिरहानि परिमित (? तानि) परिच्छिन्नानि, तैश्चादेशः क्रियते। एवमपरिमाणं धर्माणां नोपपद्यते। यथा को दृष्टान्तः। धनानामर्थकस्य समायार्थकं (?) भवति। एवमिहापि परिमिता एव धर्माः भविष्यन्ति। प्रकृतीनां परिमितत्वादुपपद्यत एवापरिमाणम्। कथम्। संघातविशेषात् क्रमविशेषाच्च अभ्यासाच्च। संघातविशेषादन्यथा प्रकृतौ अन्यथा विहितानामर्थ उपदेशः, यथा त्रिकद्रुका अभिजिद्, विश्वजिन्महाव्रतम्। गुणैरुपदेशः [५]वीरवन्त्याज्यानि पुरोडाशिन्य उपसदः[५] मध्यंदिनोपदेशाश्च। तत्राभ्यास एकैकं नवकृत्वः, एवमादिभिर्हेतुभिरपरिमाणं[६] भवति धर्मः। प्रदेशान् वक्ष्यामः। तदिदं विलक्षणमिव दृश्यते। परिमितैरहोभिः प्रकृतिभूतैरपरिमिता धर्माः क्रतुविशेषा भवन्तीति। अस्यार्थायोत्तरं सूत्रं निदर्शनत्वेनारभ्यते॥ १५॥

[परिमितवर्णसमाम्नायज्ञानेन अपरिमितवाग्भेदज्ञानवत् परिमिताहःसमाम्नायज्ञानेनापरिमिताहःसंघातज्ञानम्]

**यथा हि परिमिता वर्णा अपरिमितां वाचोगतिमाप्नुवन्त्येवमेव परिमितानामह्नामपरिमिताः संघाताः॥ १६॥**

यथा हि परिमिता वर्णा अपरिमितां वाचोगतिं प्राप्नुवन्ति। यथा परिमिता यथा त्रिषष्टिर्वर्णा अपरिमितां वाचोगतिमाप्नुवन्ति, एवमेव परिमितानां पञ्चविंशतेरह्नाम् अपरिमिताः संघाताः क्रतुविशेषा उत्पद्यमाना वेदितव्याः॥ १६॥

[सिद्धानामह्नां समाहारे सति तच्छस्यानामपि समाहारः सिद्धः]

**सिद्धानि त्वहानि तेषां यः कश्च समाहारः सिद्धमेव शस्यम्॥ १७॥**

---

१. **कस्येत्** मूको। २-२. **धर्म चातिनिर्देशो भवति मतेनापरिमिता चाद्धर्मा°** मूको। ३-३. **तिषामपरि°** मूको। ४. **विव्यैकादशा°** मूको। ५. द्र. आश्रौ १०, २, १७; २४;। ६. **°दिभिरहेतुभि°** मूको।

सिद्धानि त्वहानि सिद्धमेव शस्यम् एवमन्तमस्माकं [1]सूत्रम्। तेषां यः कश्च[1] समाहारः कर्तव्य इति वाक्यशेषः। एवमन्तमन्येषाम्। यः कश्च [2]समाहारः स चोदितोऽचोदितो वा[2] कर्तव्यः। एवं यजमानवशेनाहानि कर्तव्यानि, तेषामिदं प्रकारमतिरिच्यते सिद्धमेव शस्यमतः पूर्वमेव सूत्रम्। सिद्धानि [3]त्वहानि प्रायशोऽधिकृतान्यहानि सप्तमाष्टमयोः[3] तेषां यः कश्च समाहारः शास्त्रान्तरे चोच्यते, तत्र सिद्धमेव शस्यं वेदितव्यम्। यथा सिद्धान्येवाहानि कर्तव्यानि सिद्धमेव शस्यम्। इदं किमर्थमारभ्यते, आह। चोदितेषु पुनः शास्त्रान्तरे चोदितेषु न [4]स्यात् अतो वचनमारभ्यते[4] सिद्धमेव शस्यम्। यत्र पुनः नैवाहानि चोदितानि, तत्रोत्तरं[5] विधानं वेदितव्यम्॥ १७॥

[अह्नामनिश्चये स्तोमलिङ्गेन पृष्ठलिङ्गेन संस्थालिङ्गेन वा व्यवस्था कर्तव्या]

**अह्नां तु संशये स्तोमपृष्ठसंस्थाभिरेके व्यवस्थाम्॥ १८॥**

अह्नां तु संशयो भवति। तु-कारो विशेषविध्यर्थः स्तोमपृष्ठसंस्थाभिरह्नां संशये एक आचार्या व्यवस्थां मन्यन्ते, अध्यवसानमित्यर्थः। उदाहरणानि—**त्रीणि त्रिवृन्त्यहान्यतिरात्रो दश पञ्चदशान्यतिरात्रः** (आश्रौ ११, ५, २), **इन्द्रस्य वैरूपं पृष्ठ्यम्** (द्र. आश्रौ ७, १०, ८), अपां शाक्वरं[6] पृष्ठं, गवां रैवतम् अग्निरग्निष्टोमसहस्रसंस्थायाम्। छन्दोगेभ्यो वा आगमयितव्यानि॥ १८॥

[पूर्वोक्तविधानस्यासार्वत्रिकत्वम्]

**तदकृत्स्नं दृष्टत्वाद् व्यतिक्रमस्य॥ १९॥**

तदिदं विधानं स्तोमादिभिरध्यवसानमकृत्स्नमिदं विधानं दृष्टत्वाद् व्यतिक्रमस्य। स्तोमादीनां क्वचिदतिक्रमोऽपि दृश्यते। यथा क्वचिच्छन्दोगेषु त्रिष्वहःसु प्रथमेऽहनि चत्वारिंशस्तोमः, द्वितीये चतुश्चत्वारिंशः, तृतीये अष्टाचत्वारिंशः। आदित्यानामयने च छन्दोगदशरात्रे एतेष्वाहावः। स [? एतेष्वेवाहःसु] एकविंशादयः स्तोमा भवति। तथा त्रिवृद्व्यूळ्हो दशरात्रः। एवं व्यतिक्रममाहः। अयं व्यतिक्रमः प्रकृतौ न[7] भवन्ति। एतेष्वहःसु अन्यत्रादिष्टेषु प्रकृतिभूतेषु अवश्यमन्यत्वं भवति। अतो नायं व्यतिक्रमो भवति। आह। इदं दर्शयति क्वचिद् व्यतिक्रमोऽपि भवतीति, नैव सर्वत्रैव इदं साधितं भवति। प्रतिविशिष्टं तत्र स्तोमादिभिरध्यवसानं[8] भवति। तथा **त्रीणि त्रिवृन्त्यहान्यतिरात्रः** (आश्रौ ११, ५, २)। अत्र भवत्येतद् विधानमिह पुनर्न भवति।

---

१-१. **सूत्रमन्येषां यश्य** मूको। २-२. °**हारः चोदितो वा** मूको। ३-३. **प्रावसोधितान्यहानि सप्तमासप्तमयोः** मूको। ४-४. **स्यादनवच**° मूको। ५. **यत्रोत्त**° मूको। ६. **सीकरं** मूको। ७. **न व्यतिक्रमो भ**° मूको। ८. °**दिभिरव्यसा**° मूको।

**त्रिवृता मासं पञ्चदशेन मासम्** (आश्रौ १२, ३, ३)। अत्र मासशब्दो न[1] स्तोमस्य बाधको भवति। कृतलक्षणा मासा अत्र गृह्यन्ते। तेनात्र त्रिवृच्छस्यो न स्तोमो[2] भवति। यदैव[3] मासे शस्यं प्राप्तं तस्मिन्नेव त्रिवृत्स्तोमो वेदितव्यः। प्रथममहापृष्ठ्यस्य नैतद् भवति। कृत्स्नमासमेवं क्वचिद् व्यतिक्रमो दृश्यते। बलवता बाधकेन बाधितं स्तोमादिकम् अतो नाध्यवसानं भवति॥ १९॥

[अहर्निश्चयोपायो राथन्तराणामह्नां शस्यनिश्चयश्च]

**छन्दोगैरेव कृत्वा समयमह्नो बार्हतराथंतरतायामेकाहेन शस्यं राथंतराणाम्॥ २०॥**

एवकारः पक्षज्ञापनार्थः[4]। यदि छन्दौगैः[5] यस्मिन्नहन्युत्तरस्य शस्यं व्याख्यातं राथंतराणामह्नां वेदितव्यम्, तथा बृहत्पृष्ठे एकाहेन[6] शस्यं रथंतरेण व्याख्यातम् अह्नाम्॥ २०॥

[बार्हतानामह्नां शस्यनिश्चयः]

**द्वितीयेनाभिप्लविकेन बार्हतानाम्॥ २१॥**

द्वितीयेनाभिप्लविकेनाह्ना शस्यं व्याख्यातं बार्हतानाम्॥ २१॥

[शस्यनिश्चये तृतीयः पक्षः]

**अपि वा कयाशुभीयतदिदासीये एव निविद्धानीये स्यातामैकाहिकमितरत्॥ २२॥**

अपि वाऽयं तृतीयः पक्षः। कयाशुभीयतदिदासीये एव निविद्धाने स्याताम्[7]। अन्यत् सर्वमैकाहिकम्। एवकारः कथम्। उभयोरपि बृहद्रथंतरयोरेते निविद्धाने स्याताम्, अन्यदिष्यते[8] च उभयोरपि, अत एवकारः। इतरत् परिशिष्टं सर्वमैकाहिकं वेदितव्यम्। एते त्रयः पक्षाः स्तोमादिभिरध्यवसानमह्नो (? नमयं) प्रथमः पक्षः। अह्नो बार्हतराथन्तरयो (? राथन्तरताया)-मयं द्वितीयः पक्षः। सकृत्क्लृप्तिः। अपि नमि (? वेति) तृतीयः पक्ष ऐकाहिकक्लृप्तिः॥ २२॥

॥ इति दशमेऽध्याये पञ्चमः खण्डः॥

---

१. नास्ति मूको। २. सोमो मूको। ३. यदेष मूको। ४. °नार्थम् मूको। ५. छन्दोगाय° मूको। ६. °हो न मूको। ७. स्याताम् अपि वा अयं तृतीयः मूको। ८. अन्यमिष्यते मूको।

## अथ दशमेऽध्याये षष्ठः खण्डः

[अश्वमेधे कामनाभेदनिर्देशः]

**सर्वान् कामानाप्स्यन्त्सर्वा·विजितीर्विजिगीषमाणः सर्वा व्युष्टीर्व्यशिष्यन्नश्वमेधेन यजेत॥ १ ॥**

अश्वमेधेन यजेत यः सर्वान् कामानवाप्स्यन् भवति। प्रार्थयतीत्यर्थः। सः अनेन यजेत। सर्वा[1]विजितीर्यो विजेतुमिच्छति[1] स वा अनेन यजेत। सर्वा व्युष्टीर्व्यशिष्यन् यो भवति, स वा अनेन यजेत। [2]व्युष्टयो विभूतय[2] इत्यर्थः। सर्वकामोपदेशादेव सिद्धिः विजितरो व्युष्टिः नश्व (? विजितेः व्युष्टेश्च, पुनस्तद्)-ग्रहणमपार्थकम्। इदं दृष्ट्वा न कर्तुमुपदिशति। सर्वकामस्य ब्राह्मणस्य भवति। विजितिर्विजेतुमिच्छतः क्षत्रियस्य भवति। व्युष्टिर्व्यशिष्यतो वैश्यस्य भवति। एवं केचिद् ब्राह्मणस्यापीममुपदिशन्ति। वयं पुनर्नेति। राज्ञः एवं, नैवान्यस्य। [3]कुतः, एतदाह[3]— श्रुतिदर्शनात्। **राजयज्ञो वा एष यदश्वमेधश्च राजसूयश्च** (तु. बौश्रौ २४, ११)। **एतेन ह वा ऐन्द्रेण तु महाभिषेकेणाभिषिक्तं राजानम् अश्वमेधं दर्शयति** (तु. ऐब्रा ८, १५)। अश्वेन मेध्येन ये श्रुतिं (यं श्रुतिः) दर्शयति। ईश्वरमप्य [? न]-भिषिक्तम् अराजानमेव दर्शयति। **राज्ञे पारिप्लवमाचक्षीत** (आश्रौ १०, ६, १०) ब्रुवन्नेवमादिभिर्ज्ञापकैः[4] राज्ञामेवाश्वमेधः नान्यस्येति। अथ सर्वकामग्रहणं किमर्थम्, उच्यते। इदं दर्शयति। [5]अश्वमेधेनैव सर्वकामाः साकल्येन प्राप्यन्ते[5]। अन्ये सर्वकामाः क्रमतश्चोद्यन्ते स्वल्पाः कामाः प्राप्यन्ते। यथा लोके [6]बहुना बहवो[6] मञ्चाः स्वल्पेन स्वल्पाः, तद्वदिहापि। विजितिग्रहणमिन्द्रियनिग्रहार्थम्। कथं विजितिरिन्द्रियाणां स्यादिति[7]। किं पृथक् पृथक्[8] अयं क्रतुराहर्तव्यः विश्वजित्कल्पवत्[9]। सर्वेषामेव कामानामर्थाय सकृदाहरणं कर्तव्यम्। अर्थनिर्णयकारणमपदिष्टम्॥ १ ॥

---

१-१. °**तीर्यंदि भूततुमि**° मूको। २-२. **व्युष्टीभूत**° मूको। ३-३. **क्षत एतदाहे** मूको। ४. **बुवंते वमा**° मूको। ५-५. **अथानानैव सर्वकामान् साकल्पनं प्राणन्ते** मूको। ६-६. **बहुव्यण ब**° मूको। ७. **स्युरिति** मूको। ८. **प्राकाभ्य** मूको। ९. **किंश्वजितस्वल्पवत्** मूको।

[अश्वमेधात् प्रागिष्टिद्वययजनम्]

**अश्वमुत्स्रक्ष्यन्निष्टिभ्यां यजेत॥ २॥**

प्राक् संवत्सरादश्वस्योत्सर्गो भवति, तदा समानेऽहनीष्टिभ्यां यागो भवति॥ २॥

[तत्र प्रथमेष्ट्यां देवतानिर्देशः]

**अग्निर्मूर्धन्वान्॥ ३॥**

अग्निर्मूर्धन्वान् प्रथमायामिष्ट्यां देवता। नित्ये याज्यानुवाक्ये मूर्धन्वतः॥ ३॥

[संयाज्ययोर्निरूपणम्]

**विराजौ संयाज्ये॥ ४॥**

विराजो भवन्ति (? जौ संयाज्ये भवतः)। [1]इतिमात्रे विकारे वैराजतन्त्रत्व[1] भवति। धाय्ये सामिधेन्यौ। संयाज्याग्रहणे चतस्रस्तिस्रश्च विराजः। अक्रियमाणे संयाज्याग्रणे सन्देहः स्यात्। तत्र कासां[2] विराजां ग्रहणमिति॥ ४॥

[तत्र द्वितीयस्या इष्टेर्विधानम्]

**पौष्णी द्वितीया॥ ५॥**

द्वितीयस्यामिष्टौ पूषा देवता॥ ५॥

[तत्राऽऽज्यभागयोः कथनम्]

**'त्वमग्ने सप्रथा असि'[3], 'सोम यास्ते मयोभुवः'[4] इति सद्वन्तौ॥ ६॥**

[5]सद्वन्ताविति इह द्विवचनपुंवत्त्वनिर्देशादाज्यभागौ[5]॥ ६॥

[तत्र संयाज्ययोर्निर्देशः, अश्वोत्सर्गसावित्र्येष्टित्रयविधानं च]

**'त्वां चित्रश्रवस्तम', 'यद् वाहिष्ठं तदग्नये' इति संयाज्ये। अश्वमुत्सृज्य रक्षिणो विधाय सावित्र्यस्तिस्र इष्टयोऽहरहर्वैराजतन्त्राः॥ ७॥**

**सविता सत्यप्रसवः प्रसविताऽऽसविता॥ ८॥**

**त्वां चित्रश्रवस्तम** (ऋ १, ४५, ६), **यद् वाहिष्ठं तदग्नये** (ऋ ५, २५, ७) इति संयाज्ये हविषः। वैश्वदैव्यां[6] पौष्णस्य याज्यानुवाक्ये अपदिष्टे। अश्वमुत्सृज्य चरणाय रक्षिणो विधाय सावित्र्यस्तिस्र इष्टयः अहरहर्वैराजतन्त्राः। अश्वमुत्सृज्य

---

१-१. **इति मा अधिकारा वैरातंत्रं तं** मूको। द्र. आश्रौ २, १, ३३। २. **तासां** मूको। ३. ऋ ५, १३, ४। ४. ऋ १, ९१, ९। ५-५. **सोमो वावति सह द्विवचनं प्रवच्च** नि° मूको। ६. द्र. आश्रौ २, १६, ११।

चरणाय रक्षिणो विधाय अत्र प्रेषयित्वेत्यर्थः। सावित्र्यस्तिस्र इष्टयः सविता आसां देवता सावित्र्यो वेदितव्याः। अहरहश्च भवन्ति, वैराजतन्त्राश्च भवन्ति। त्रिवचनं न वक्तव्यम्। आदिबहुत्वं (?) विज्ञायेत, न भवति। देवतोपदेशाच्च त्रित्वम्। त्रिवचनस्य प्रयोजनमेकस्या द्वयोः सर्वासां च समानतन्त्रं[1] मा भूदिति समानतन्त्रनिवृत्यर्थं त्रिवचनम्। अनुसवनमेव कर्तव्याः। सावित्र्य इति किमर्थम्, देवतोपदेशादेव सिद्धिः। [2]सावित्र्या ग्रहणं कथं, सावित्र्यो देवतात्वेन सगुणत्वेन ज्ञायेरन्[2]। न तत्रोपांशुप्रसिद्धिः। इतरथा [3]अगुणाया देवताया यल्लक्षणं[3] विधीयते, तत् सगुणाया न प्राप्नोति। इह तु [4]सवितुर्गुणा उपदिश्यन्ते। सत्यप्रसव इत्येवमादयो[4] गुणाः। वैराजतन्त्राश्च भवन्ति। देवता सविता सत्यप्रसवः प्रसविताऽऽसविता। द्वितीयं सवितृग्रहणं कस्मात्। आह। यदि न क्रियते पुनः सवितृग्रहणम्, गुणा एव केवलं गृह्यन्ते प्रसवित्रादयः। इष्यते च सविता एतैर्गुणैर्युक्तः, [? स] कथं गृह्येत॥ ७-८॥

[तत्र याज्यानुवाक्ययोः कथनम्]

**'य इमा विश्वा जातानि', 'आ देवो यातु सविता सुरत्नः', 'स घा नो देवः सविता सहावा' इति द्वे॥ ९॥**

**य इमा विश्वा जातानि** (ऋ ५, ८२, ९), **आ देवो [5]यातु सविता सुरत्नः** (ऋ ७, ४५, १) प्रसवितुः सवितुः[5] याज्यानुवाक्ये। **स[5] घा नो देवः** (ऋ ७, ४५, ३; ४) इति द्वे आसवितुः[5] सवितुः। देवसूनां याज्यानुवाक्ये आम्नाते, सत्यप्रसवस्य सवितुः[6]। ते एवास्यापि सवितुराम्नाते॥ ९॥

[राज्ञे पारिप्लवाख्यानकथनम्]

**समाप्तासु समाप्तासु दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे पारिप्लवमाचक्षीत॥ १०॥**

[7]समाप्तासु इष्टिषु[7] दक्षिणत आहवनीयस्य हिरण्यकशिपौ आसन्द्यामित्यर्थः[8]। कः ? होता। अभिषिक्तायाचक्षीत[9] कृताभिषेकाय राज्ञे [? पुत्रामात्यपरिवृताय] पारिप्लवमाचक्षीत कथयतीत्यर्थः॥ १०॥

[तत्राध्वर्योः प्रतिगरः]

**हिरणमये कूर्चेऽध्वर्युरासीनः प्रतिगृणाति॥ ११॥**

---

१. **प्रसामतन्त्रं** मूको। २-२. **सावित्र्यग्रहणं कथं सावित्र्यदेवतात्वेन देवत्वेन जायेरन्** मूको। ३-३. **अग्रयणाय देवता य लक्ष°** मूको। ४-४. **°गुण उपदिश्यते सत्यप्रसवसवमाद°** मूको। ५-५. नास्ति मूको। ६. द्र. आश्रौ. ४, ११, ११। ७-७. **स इष्टस्तु** मूको। ८. **आसंनेत्यर्थः** मूको। ९. **°भिषेकाया°** मूको।

हिरण्मये कूर्चेऽध्वर्युरासीनः प्रतिगृणाति, आसीनवचनादन्यत्र स्थितस्यैव प्रतिगरः॥ ११ ॥

[तत्राऽऽहावप्रकारः]

**आख्यास्यन्नध्वर्यवित्याह्वयीत॥ १२ ॥**

**हो होतरितीतरः॥ १३ ॥**

'यदा होता आख्यास्यन् भवति[1], तदा अध्वर्यो इत्येवमाह्वयीत। सोऽयमाहावः। अध्वर्योरयं प्रतिगरो भवति—हो[2] होतः॥ १२-१३ ॥

॥ इति दशमे षष्ठः खण्डः॥

१. आख्यानं संभवति मूको। २. नास्ति मूको।

## अथ दशमेऽध्याये सप्तमः खण्डः

[प्रथमेऽहन्याख्यानसूक्तयोर्निगदः]

**प्रथमेऽहनि मनुर्वैवस्वतस्तस्य मनुष्या विशस्त इम आसत इति गृहमेधिन उपसमानीताः स्युस्तानुपदिशत्यृचो वेदः सोऽयमिति सूक्तं निगदेत्॥ १॥**

प्रथमेऽहनि संवत्सरस्य मनुर्वैवस्वतः। इदमाख्यानं कथयति होता—मनुर्वैवस्वतः। तस्यैकं प्रतीकमाख्यानस्य, तदाख्याति। आख्याय तथानन्तरं तस्य मनुष्या विशस्त इम आसत इत्येवमुक्त्वा, गृहमेधिनः। आ नीयन्ते, वा (?ता)-नुपदिशति—त इमे आसते। एवमहः (? माह) एवमप्रतीति (? एवम् ब्रवीति)—ऋचो वेदः सोऽयमेवमुक्त्वा सूक्तं निगदेत्। एवंक्रमतः दशानामपि अनुद्रवणं[१] कर्तव्यम्॥ १॥

[द्वितीयेऽहन्याख्यानानुवाकयोर्निगदः]

**द्वितीयेऽहनि यमो वैवस्वतस्तस्य पितरो विशस्त इम आसत इति स्थविरा उपसमानीताः स्युस्तानुपदिशति यजुर्वेदो वेदः सोऽयमित्यनुवाकं निगदेत्*॥ २॥**

[तृतीयेऽहन्याख्यानभेषजमन्त्रयोः परम्परानुसारं निगदः]

**तृतीयेऽहनि वरुण आदित्यस्तस्य गन्धर्वा विशस्त इम आसत इति युवानः शोभना उपसमानीताः स्युस्तानुपदिशत्यथर्वाणो वेदः सोऽयमिति यद् भेषजं निशान्तं स्यात् तन्निगदेत्*॥ ३॥**

[चतुर्थेऽहनि निगदस्वरूपम्]

**चतुर्थेऽहनि सोमो वैष्णवस्तस्याप्सरसो विशस्ता इमा आसत इति युवतयः शोभना उपसमानीताः स्युस्ता उपदिशत्याङ्गिरसो वेदः सोऽयमिति यद् घोरं निशान्तं स्यात् तन्निगदेत्*॥ ४॥**

---

१. °द्रवते मूको। * भाष्यं नास्ति।

[पञ्चमेऽहनि निगदस्वरूपम्]

पञ्चमेऽहन्यर्बुदः काद्रवेयस्तस्य सर्पा विशस्त इम आसत इति सर्पाः सर्पविद इत्युपसमानीताः स्युस्तानुपदिशति विषविद्या वेदः सोऽयमिति विषविद्यां निगदेत्*॥ ५॥

[षष्ठेऽहनि निगदस्वरूपम्]

षष्ठेऽहनि कुबेरो वैश्रवणस्तस्य रक्षांसि विशस्तानीमान्यासत इति सेलगाः पापकृत इत्युपसमानीताः स्युस्तानुपदिशति पिशाचविद्या वेदः सोऽयमिति यत् किंचित् पिशाचसंयुक्तं निशान्तं स्यात्तन्निगदेत्॥ ६॥

सेलगा उन्मत्ता उच्यन्ते॥ ६॥

[सप्तमेऽहनि निगदस्वरूपम्]

सप्तमेऽहन्यसितो धान्वस्तस्यासुरा विशस्त इम आसत इति कुसीदिन उपसमानीताः स्युस्तानुपदिशत्यसुरविद्या वेदः सोऽयमिति मायां कांचित् कुर्यात्*॥ ७॥

[अष्टमेऽहनि निगदस्वरूपम्]

अष्टमेऽहनि मत्स्यः सांमदस्तस्योदकेचरा विशस्त इम आसत इति मत्स्याः पुञ्जिष्ठा इत्युपसमानीताः स्युस्तानुपदिशति पुराणविद्या वेदः सोऽयमिति पुराणमाचक्षीत॥ ८॥

पुञ्जिष्ठाः कैवर्ता इत्युच्यन्ते॥ ८॥

[नवमदशमयोरह्नोर्निगदस्वरूपम्]

नवमेऽहनि तार्क्ष्यो वैपश्चितस्तस्य वयांसि विशस्तानीमान्यासत इति वयांसि ब्रह्मचारिण इत्युपसमानीताः स्युस्तानुपदिशतीतिहासो वेदः सोऽयमितीतिहासमाचक्षीत। दशमेऽहनि धर्म इन्द्रस्तस्य देवा विशस्त इम आसत इति युवानः श्रोत्रिया अप्रतिग्राहका इत्युपसमानीताः स्युस्तानुपदिशति सामवेदो वेदः सोऽयमिति साम गायात्। एवमेतत् पर्यायशः संवत्सरमाचक्षीत॥ ९॥

[1]एवमेतत्पर्यायशः संवत्सरमाचक्षीत[1]। दश आख्यानानि[2] पर्यायश इत्युच्यन्ते। एवं पर्यायशः संवत्सरमाचक्षीत। समाप्ते पर्याये पुनः पुनरारभ्य संवत्सरमाख्यानं कर्तव्यम्॥ ९॥

---

* भाष्यं नास्ति। १-१. °र्यायस्य एवं संव° मूको। २. व्याख्यातानि मूको।

[पर्यायग्रहणनिर्देशः]

**दशमीं दशमीं समापयन्॥ १०॥**

दशमीं दशमीं च रात्रिमनुसमापयेत्। दशमीं दशमीं रात्रिं समापयेदितीदं किमर्थम्। दशमी (? म्या)-मवश्यमेव समापनं भविष्यति, इदं ध्रुवं दर्शयति॥ १०॥

[संवत्सरान्ते दीक्षाकालः]

**संवत्सरान्ते दीक्षेत॥ ११॥**

पूर्वमपि दीक्षितोऽसौ भवति। अश्वोत्सर्गकाल एतत्॥ ११॥

॥ इति दशमे सप्तमः खण्डः॥

## अथ दशमेऽध्यायेऽष्टमः खण्डः

[अत्र सुत्यानां त्रित्वम्]

**त्रीणि सुत्यानि भवन्ति॥ १॥**

अत्र क्रतौ सुत्यान्यहानि[१] त्रीणि भवन्ति। तदिदं किमर्थम्। स्वयमेवात्र द्रवणं[२] करिष्यति त्रयाणामपि सुत्यानां **गोतमस्तोमः प्रथमम्** (आश्रौ १०, ८, २)। [३]एवमारभ्य त्रित्वं कथं विधीयते, निःसंदेहार्थम्। अन्यथा **चतुर्थं पृष्ठ्याहरुत्तमम्** (आश्रौ १०, १०, ८) अत्र संदेहः स्यात्, किमिदमुत्तमत्वेन विधीयते तृतीयमाहोस्वित् पञ्चमम् इति। तत्रैतत् स्यात्, पञ्चमं नैव भविष्यति। अन्ये द्वे [४]अहनी भवतः[४]। ये केचिदभिप्लवा उप्येरन्नहीनत्वात्। चतुर्थं वा इदमुत्तमं गम्यते। अतस्त्रिवचनम्॥ १॥

[प्रथमसौत्यस्याह्नो निरूपणं द्वितीयेऽहन्यश्वपशोश्च स्थापनम्]

**गोतमस्तोमः प्रथमम्। द्वितीयस्याह्नः पशोरुपाकरणकालेऽश्वमानीय बहिर्वेद्यास्तावे वाऽऽस्थापयेयुः॥ २॥**

प्रथमसौत्यमहः गोतमस्तोमो भवति। [५]यथाविहितो गोतमस्तोमो[५] वेदितव्यः। द्वितीयस्याह्नः [६]पशोरुपाकरणकाले। द्वितीयस्य[६] सौत्यस्याह्नः पशोः[७] उपाकरणकाले परिव्ययणीयाया अनन्तरम् अश्वमानीय बहिर्वेदि स्थापयन्ति[८]। आस्तावे वा किं त (?क्रीतान्) पशून् स्थापयन्ति। आस्तावो नाम बहिष्पवमानेन यस्मिन् [९]देश आस्तुवन्ति[९] छन्दोगाः स देश 'आस्ताव' इत्युच्यते। तस्मिन् वा तमश्वं स्थापयन्ति। स्थापयित्वोत्तरं कर्म करोति। बहुवचनं परिकर्मिभिः[१०] सह द्रष्टव्यम्॥ २॥

---

१. **सौत्या॰** मूको। २. **द्रविणं** मूको। ३. **एव प्रारभ्य** मूको। ४-४. **अहीनक्षतः** मूको। ५-५. **॰विहितगोतमस्यो॰** मूको। ६-६. **॰करणों द्विती॰** मूको। ७. **पशौ** मूको। ८. **स्थापयति** मूको। ९-९. **दश भुंजति** मूको। १०. **परवतृभिः** मूको।

[अश्वस्यावघ्राणे उपवर्तने वा यज्ञसमृद्धिरूपं शकुनं विद्यात्]

**स चेदवघ्रायादुपवर्तेत वा यज्ञसमृद्धिं विद्यात्॥ ३॥**

स चेदश्व[1] अवघ्रायात् जिघ्रतीत्यर्थः। भूमिमुपवर्तेत वा सर्वतो भूमौ वर्तेत, तदा यज्ञसमृद्धिं विद्यात्॥ ३॥

[अश्वस्यानवघ्राणेऽनुपवर्तने वा शान्तिनिर्देशः]

**न चेत् 'सुगव्यं नो वाजी स्वश्व्यम्' इति यजमानं वाचयेत्॥ ४॥**

न चेदसावश्वोऽवजिघ्रत्युपवर्तेत वा अथ **सुगव्यं नो वाजी** (ऋ १, १६२, २२) एतामृचं होता यजमानं वाचयेत्॥ ४॥

[एकादशभिर्मन्त्रैरश्वस्तुतिः]

**तमवस्थितमुपाकरणाय 'यदक्रन्दः' इत्येकादशभिः स्तौत्यप्रणुवन्॥ ५॥**

[2]सः अश्वो हि परिधानीयाया[2]अनन्तरमुपाकरणाय स्थापितो भवति यदा, तदा **यदक्रन्दः** (ऋ १, १६३, १-११) इत्येताभिरेकादशभिः ऋग्भिस्तमश्वं स्तौति। अत्र संशयाल्लोपो द्रष्टव्यः। अन्यथैकश्रुत्यं न प्राप्नोति। अथवा [3]स्तौति अप्रणुवन्निति[3] प्रणवप्रतिषेधादैकश्रुत्यम्। अप्राप्तानां कुतः प्रतिषेधः, सामिधेनीशब्दानाम-प्रणुवन्निति। तमिति अश्वेन (? श्वम्) ऋच [? चाभिः] अहिंसं बध्नाति, कथं तद्देवत्याभिरेव होता संस्तवनं कुर्यात्। अन्यथा सन्देहः स्यात्, किमेकादश सूक्तानि एवंप्रतीकानि, यथा **पुरो वो मन्द्रम्** (ऋ ६, १०-१३) इति चत्वारि[4] सूक्तानि॥ ५॥

[स्वाध्यायानुसारं संस्तवनमिति विकल्पः]

**अनुस्वाध्यायमित्येके॥ ६॥**

यथाऽधीताभिरेव संस्तवनं कर्तव्यम्, नैवैकश्रुत्येन। अर्धर्चेऽवसानं कृत्वा त्रैस्वर्येण संस्तवनं कर्तव्यमेवमेके॥ ६॥

[सूक्तावापविधानम्]

**'अध्रिगो शमीध्वम्' इति शिष्ट्वा 'षड्विंशतिरस्य वङ्क्रयः' इति वा 'मा नो मित्रः' इत्यावपेत 'उप प्रागाच्छसनं वाज्यर्वा' इति च द्वे।**

**अध्रिगो शमीध्वम्** (आश्रौ ३, ३, १) इति शिष्ट्वा **षड्विंशतिरस्य वङ्क्रयः** (आश्रौ ३, ३, १) इति वा **मा नो मित्रः** (ऋ १, १६२) इत्यावपेत। **अध्रिगो** इत्येवमादि

१. चेद्दृष्टः मूको। २-२. सः अश्वदोषनिधानीया मूको। ३-३. सु अप्रणवमिति मूको। ४. द्र. आश्रौ ४, १३, ७।

निगदितत्वात् त्रिर्वचनस्य ऋगन्ते त्रिर्वचने[१] प्रणवो न भवति निगदेऽविहितत्वात् तेनैकश्रुत्यमेव, केवलं संभवादस्य सूक्तस्य। **उप प्रागात्** (ऋ १, १६३, १२-१३) इत्येते च द्वे ऋचावावपति सूक्तानन्तरम्॥ ७॥

[संज्ञप्तस्याश्वस्य पत्नीकृतं धूननम्]

**संज्ञप्तमश्वं पत्न्यो धून्वन्ति दक्षिणान् केशपक्षानुद्ग्रथ्येतरान् प्रचृत्य सव्यानूरूनाघ्नानाः॥ ८॥**

यदा संज्ञप्तोऽश्वो मृत इत्यर्थः। इतरान् प्रचृत्य मुक्त्वेत्यर्थः। सव्यान् ऊरून् आघ्नाना दक्षिणैः पाणिभिराहत्येत्यर्थः॥ ८॥

[अश्वसमीपे महीष्या उपनिपातनम्]

**अथास्मै महिषीमुपनिपातयन्ति*॥ ९॥**

[महिषीं प्रति होतुराक्रोशः]

**तां होताऽभिमेथति 'माता च ते पिता च तेऽग्रे वृक्षस्य क्रीळतः प्रतिलामीति ते पिता गभे मुष्टिमंतसयद्'[२] इति॥ १०॥**

[होतारं प्रति महिष्या अनुचरीराजपुत्रीभिः सह प्रत्याक्रोशः]

**सा होतारं प्रत्यभिमेथत्यनुचर्यश्च शतं राजपुत्र्यो 'माता च ते पिता च तेऽग्रे वृक्षस्य क्रीळतः। यियपस्यत[३] इव ते मुखं होतर्मा त्वं वदो बहु' इति॥ ११॥**

राजपुत्र्यो राजदुहितर[४] इत्यर्थः। **माता च ते** (द्र०, मासं २४, २५) इत्यनेन मन्त्रेण॥ ११॥

[राज्ञो द्वितीयां पत्नीं प्रति ब्रह्मण आक्रोशः]

**वावातां ब्रह्मा 'ऊर्ध्वामेनामुच्छ्रयताद् गिरौ भारं हरन्निव। अथास्यै मध्यमेजतु शीते वाते पुनन्निव'[५] इति॥ १२॥**

वावाता नाम [६]द्वितीया पत्नी[६]। वावातां ब्रह्मा अभिमेथति **ऊर्ध्वामेनाम्** (द्र० मासं २३, २६) इत्यनेन मन्त्रेण॥ १२॥

१. **त्रिर्वचनं** मूको। २. मासं २३, २४। ३. **यी°** मूको। ४. **दुहितरः** मूको। ५. **पुनर्निव** मूको। ६-६. **द्वितीया सा पत्नी** मूको। *भाष्यं नास्ति।

[ब्रह्माणं प्रति वावाताया अनुचरीराजपुत्रीभिः सहितायाः प्रत्याक्रोशः]

**सा ब्रह्माणं प्रत्यभिमेथत्यनुचर्यश्च शतं राजपुत्र्यः 'ऊर्ध्वमेनमुच्छ्रयत गिरौ भारं हरन्निव। अथास्य मध्यमेजतु शीते वाते पुनन्निव'[१] इति*॥ १३॥**

[सदःप्रवेशः स्वाहाकृतिचरणं च]

**सदः प्रसृप्य स्वाहाकृतिभिश्चरित्वा॥ १४॥**

सदः प्रविश्य स्वाहाकृतिभिश्चरित्वा॥ १४॥

॥ इति दशमेऽष्टमः खण्डः॥

---

१. पुनर्निव मूको। * द्र. मासं २३, २७। भाष्यं नास्ति।

## अथ दशमेऽध्याये नवमः खण्डः

[प्रश्नप्रतिप्रश्नरूपो ब्रह्मोद्यविधिः]

**ब्रह्मोद्यं वदन्ति॥ १॥**

स्वाहाकृतिभ्योऽनन्तरं ब्रह्मोद्यं वदन्ति। तदुत्तरत्र वक्ष्यामः। ब्रह्मोद्यम्। सदः प्रविश्येति न वक्तव्यम्। मैत्रावरुणमग्रतः कृत्वोत्तरेण हविर्धानम् इत्येवं सदसि प्रवदनं चोदितम् अग्नीषोमीये। तेन च सवनीयानामतिदेशः[1]। एवं सिद्धं सदसि प्रवदनं ब्रुवन्[2] दर्शयतीति। इह मेथनप्रत्यभिमेथने बहिर्वेदि भवतः॥ १॥

[ब्रह्मोद्यस्वरूपम्]

**'कः स्विदेकाकी चरति क उ स्विज्जायते पुनः।**

**किं स्विद्धिमस्य भेषजं किं स्विदावपनं महद्'[3] इति होताऽध्वर्युं पृच्छति॥**

**'सूर्य एकाकी चरति चन्द्रमा जायते पुनः।**

**अग्निर्हिमस्य भेषजं भूमिरावपनं महद्'[4] इति प्रत्याह॥**

**'किंस्वित् सूर्यसमं ज्योतिः किं समुद्रसमं सरः।**

**कः स्वित् पृथिव्यै वर्षीयान् कस्य मात्रा न विद्यते' इत्यध्वर्युर्होतारं पृच्छति॥**

**'सत्यं सूर्यसमं ज्योतिर्द्यौः समुद्रसमं सरः।**

**इन्द्रः पृथिव्यै वर्षीयान् गोस्तु मात्रा न विद्यते' इति प्रत्याह॥**

**'पृच्छामि त्वा चितये देवसख यदि त्वमत्र मनसा जगन्थ।**

---

१. सवनीयामति° मूको। २. ध्रुवं मूको। ३. तैसं ७, ४, १८, १)। ४. तैसं ७, ४, १८, १-२।

केषु विष्णुस्त्रिषु पदेष्वस्थः केषु विश्वं भुवनमाविवेश' इति ब्रह्मोद्गातारं पृच्छति॥

'अपि तेषु त्रिषु पदेष्वस्मि येषु विश्वं भुवनमाविवेश।

सद्यः पर्येमि पृथिवीमुत द्यामेकेनाङ्गेन दिवो अस्य पृष्ठम्' इति[१] प्रत्याह॥

'केष्वन्तः पुरुष आ विवेश कान्यन्तः पुरुष आर्पितानि।

एतद् ब्रह्मन्नुवह्लामसि त्वा किं स्विन्नः प्रतिवोचास्यत्र' इत्युद्गाता ब्रह्माणं पृच्छति॥

'पञ्चस्वन्तः पुरुष आ विवेश तान्यन्तः पुरुष आर्पितानि।

एतत्त्वाऽत्र प्रतिवन्वानो अस्मि न मायया भवस्युत्तरो मद्' इति प्रत्याह॥

प्राञ्चमुपनिष्क्रम्यैकैकशो यजमानं पृच्छन्ति 'पृच्छामि त्वा परमन्तं पृथिव्याः' इति॥ २॥

'इयं वेदिः परो अन्तः पृथिव्याः' इति प्रत्याह॥ ३॥

तदिदं ब्रह्मोद्यम् **कः स्विदेकाकी चरति** एवं[२] (? एतं) प्रश्नं होताऽध्वर्युं पृच्छति। ब्रह्मा एवं[३] प्रतिप्रश्नमाह। पञ्चस्वन्तरिति ते प्राञ्चमुपनिष्क्रम्य एकैकश ऋत्विजो यजमानं पृच्छन्ति—**पृच्छामि** (ऋ १, १६४, ३४) इत्येतं प्रश्नम्। **इयं वेदिः** (ऋ १, १६४, ३५) इति यजमान एवं प्रतिप्रश्नमाह। यावन्त ऋत्विजः, सर्वेषां प्रतिप्रश्नो वाच्यः। प्रतिवचनमिति प्राप्तुं (?) यजमानासन उपविष्टा) (?) पृच्छन्ति। अन्ये पुनः प्राङ्मुखनिष्क्रमणमुपदिशन्ति। तत्पुनरर्थादेव सिद्धम्॥ २-३॥

[वपानां पुरस्तादुपरिष्टाच्च महिमग्रहचरणं यागश्च]

महिम्ना पुरस्तादुपरिष्टाच्च वपानां चरन्ति॥ ४॥

'सुभूः स्वयंभूः प्रथममन्तर्महत्यर्णवे। दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः'॥ 'होता यक्षत् प्रजापतिं महिम्नो जुषतां वेतु पिबतु सोमं होतर्यज' इति प्रैषः। 'तवेमे लोकाः प्रदिशो दिशश्च' इति याज्या। अश्वोऽजस्तूपरो गोमृग इति प्राजापत्याः॥ ५॥

महिमा नाम ग्रहः। सौवर्णराजताभ्यां गृह्यते, न मृन्मयेन। अश्वमेधे च [४]या वपास्तासां[४] पुरस्ताच्चोपरिष्टाच्च यागं कुर्वन्ति चरन्ति (? [५]चरन्तीति) तु[५] बहुवचनं यथान्यत्रापि[६] **यदि त्वध्वर्यव आज्येन समाप्नुयुः** (आश्रौ ६, १४, १२) **सुभूः** इति

१. मासं. २३, ५०। २. ऐ (ए) वे मूको। ३. इदं मूको। ४-४. यास्तासां मूको। ५-५. परित्रिषु मूको। ६. यक्षान्यवापि मूको।

इयमनुवाक्या भवति महिम्नः। **होता यक्षत्प्रजापतिम्** अयं च प्रैषो भवति। प्रैषग्रहणं क्रियते प्रैषसमाम्नाये अपठितत्वात्। **तवेमे लोकाः** इति महिम्नः याज्या[१]। याज्याग्रहणं न कर्तव्यम् अन्वारम्भणीया-वत्सिद्धत्वात्। याज्याग्रहणं क्रियते नियमार्थम्। कथमेतत्त्रयमपि पुरस्ताच्चोपरिष्टाच्च स्यात्। अनुवाक्याग्रहणमकृतमपि द्रष्टव्यम्, अन्यथा **जामि वा एतद् यज्ञे** (ऐब्रा ३, ४७) इति द्विः कृत्वोऽनयोः (?) प्रयोगो[२] न स्यात्। अश्वः, अजस्तूपरः गोमृग[३] इति जात्यन्तरं द्रष्टव्यम्। अथवा गौरेव मृगीभूतः। एवं ते प्राजापत्याः, एते त्रयः पशवः प्राजापत्यां वेदितव्याः, प्रजापतेर्निगमनं यागस्य[४] याज्यानुवाक्याः षळर्चेषु॥ ४-५॥

[अन्येषां पशूनामपि पूर्ववद्यागः]

**इतरेषां पशूनां प्रचरन्ति॥ ६॥**

एतान् मुक्त्वा येऽन्ये पशवस्तेषां प्रचरन्ति वपाभिर्हविर्भिश्च त्यागं कुर्वन्तीत्यर्थः॥ ६॥

[नानापशूनां यागे विश्वेदेवा देवतात्वेन कल्प्याः]

**वैश्वदेवी क्लृप्तिः॥ ७॥**

ते किल नानादेवत्याः पशवस्तत्र सन्देहो निगमेषु याज्यानुवाक्यासु च प्रैषेषु च। तस्मिन् सन्देहे इदमुपदिश्यते—वैश्वदेवी क्लृप्तिः। कल्पना इत्यर्थः। [५]यदीदं नारभ्यते, नानादेवता निगमेषु निगम्येरन् अत्र। ऐन्द्रामारुतीन्याय[६]-[७]विकल्पो निगमेषु[७] इहापि भवति। [८]**इन्द्रं पूर्वम्**[८] (आश्रौ २, ११, १५) इत्येवमारभ्य विश्वेषां देवानां निगमेषु पूर्वनिगमान्ता (? न्ते) यः (? भ्यः) हविः प्रदीयन्ते (? ते), त (? तद)-र्थानि च निगमनानि, सर्वेषु निगमेषु यागे च। अथवा नाना एव देवता निगमेषु च, अथवा नाना-देवता अ (? आ)-प्रदानात् प्रदानादारभ्य विश्वे देवाः। एवं त्रयो विकल्पाः॥ ७॥

[व्यूढस्य पृष्ठ्यस्य पञ्चमेनाह्ना शस्यनिर्देशः]

**पञ्चमेन पृष्ठ्याह्ना शस्यं व्यूळ्हस्य॥ ८॥**

अथास्याह्नः द्वितीये किं शस्यमिति व्यूळ्हस्य पृष्ठ्यस्य पञ्चमेनाह्ना शस्यं व्याख्यातम्[९]। पृष्ठ्यग्रहणं प्रसङ्गकृतं व्यूळ्हग्रहणेन सिद्धत्वात्॥ ८॥

॥ इति दशमे नवमः खण्डः॥

---

१. नास्ति मूको। २. **यो योगो** मूको। ३. **अमृग** मूको। ४. **यागश्च** मूको। ५. **यदिदं** मूको। ६. **°मारुत्यन्या°** मूको। ७-७. **°विकल्पनिग°** मूको। ८-८. **इदं पर्वमि°** मूको। ९. **द्र. आश्रौ ८, ८, ६-७।**

## अथ दशमेऽध्याये दशमः खण्डः

[तत्र यागस्य विशेषाणां कथनप्रतिज्ञा]

**तस्य विशेषान् वक्ष्यामः॥ १॥**

तस्य विशेषान् वक्ष्यामः [इति ?] प्रतिज्ञा किमर्थं क्रियते। स्वयमेव विशेषान् ब्रवीति[१]। तथैवावस्थितस्याह्नो ग्रहणार्थं **प्रगाथानेके** (आश्रौ ७, १२, ८) इत्ययं विकल्पः परिगृहीतो भवति॥ १॥

[आज्यसूक्तानन्तरमैकाहिकस्य शंसनम्]

**'अग्निं तं मन्ये' इत्याज्यं तस्यैकाहिकमुपरिष्टात्॥ २॥**

**अग्निं तं मन्ये** (ऋ ५, ६) इति आज्यम्। **इममू षु** (ऋ ६, १५) [? इति] व्यवहितत्वात्[२]। तस्यैकाहिकमुपरिष्टात्[३] **अग्निं तं मन्ये** इत्यस्य ऐकाहिकमुपरि भवति। उभे सूक्ते भवतः॥ २॥

[अनन्तरं प्रउगतृचेष्वैकाहिकानां तृचानां शंसनम्]

**प्रउगतृचेष्वैकाहिकास्तृचाः॥ ३॥**

[४]**आ नो**[४] **यज्ञम्** (ऋ ८, १०१, ९) इत्येवमादिषु प्रउगतृचेषु[५] ऐकाहिकास्तृचाः[६] प्रउगतृचा एव भवन्ति। तृचग्रहणमनुद्धारार्थम्। पार्ष्ठिकानामुपरिष्टादित्यनुवर्तते॥ ३॥

[त्रिकद्रुकेषु प्रतिपदनुचरयोर्निविदाधानस्य च नियमः]

**त्रिकद्रुकेषु 'महिषो यवाशिरम्' इति मरुत्वतीयस्य प्रतिपदेका तृचस्थान ऐकाहिकोऽनुचरः सूक्तेषु चान्त्यमुद्धृत्यैकाहिकमुपसंशस्य तस्मिन्निविदं दध्यात्॥ ४॥**

---

१. ब्रति मूको। २. द्र. आश्रौ ७, १२, ६। ३. द्र. आश्रौ ५, ९, १५। ४-४. अतो तो मूको। ५. द्र. आश्रौ ७, १२, ७। ६. द्र. आश्रौ ५, १०, ५।

त्रिकद्रुकेषु मरुत्वतीयस्य प्रतिपदेका तृचस्थाने। ऐकाहिकोऽनुचरः। **जनिष्ठा उग्रः** (ऋ १०, ७३) इदम्[1] उपसंशस्य इति पूर्वेण सूक्तेन सार्धं सूक्तैः कथं भावः (? एकसूक्तभावः) क्रियते। अन्यथा एकविंशोऽत्रस्तोमस्तिस्रो (?) दशतो नवतो वा न भवति। तेन सूक्तस्योद्धारः स्यात्॥ ४॥

[निष्केवल्ये निविदाधानम्]

**एवं निष्केवल्ये॥ ५॥**

अन्त्यसूक्तमुद्धृत्य **सत्रा** [2]**मदासः** (ऋ ६, ३६, १) इत्येतत्[2]। अत्र स्थान ऐकाहिकं भवति **इन्द्रस्य नु वीर्याणि** (ऋ १, ३२, १) इत्यस्मिन्निविदं दधाति। इहोद्धारार्थं पूर्वम्। एतत् प्रयोजनम्। **तस्मिन्निविदं दध्यात्।** (**आश्रौ** १०, १०, ४) इतीदं किमर्थम्। देवनिमित्तेऽस्मिन्निविदा प्रयोजनम्। उपसंशस्येत्येकसूक्तभावो विहितः [3]**इत्था हि** (ऋ १, ८०, १-१६) षोडशकम्[3], **जनिष्ठा उग्रः** (ऋ १०, ७३, १-११) एकादशकम्। तेन चतुर्दशसु निवित् प्राप्नोति। इष्यते च ऐकाहिकेषु[4] निवित् षट्सु ऋक्षु गतासु॥ ५॥

[वैश्वदेवे प्रतिपदनुचरयोर्निविदाधानस्य च कथनम्]

**'अभि त्यं देवं सवितारमोण्योः' इति वैश्वदेवस्य प्रतिपदेका तृचस्थाने। ऐकाहिकोऽनुचरः। सूक्तेषु चैकाहिकान्युपसंशस्य तेषु निविदो दध्यात्॥ ६॥**

**अभि त्यं देवं सवितारमोण्योः** (शौ ७, १४, १) इत्येका[5] तृचस्थाने। पूर्वमप्यैकाहिकवचनं[6] इदमेव प्रयोजनम्। अनुचर ऐकाहिक[7] एव भवति **आ घा (? अद्या) नो देव सवितः** (ऋ ५, ८२, ४-६)। इति। सूक्तेषु चायं विशेषो भवति। वैश्वदेव एवोक्तम्—ऐकाहिकान्युपसंशस्य तेषु निविदो दध्यात्। ऐकाहिकेष्वेव निविदः। दध्यादित्यर्थः[8]। तेषु निविदो दध्यादिति। इदं किमर्थं प्रयोजनम्। त्रैष्टुभान्येषां तृतीयसवनानि श्रूयन्ते। तेन निविदतिपत्तौ त्रैष्टुभे निवित् प्राप्नोति। इष्यते च जागते। तस्मात् तेष्वेवेत्युच्यते। उपसंशस्येत्येकसूक्तभावः प्रतीयते। किमर्थम्। आह, संसवनिमित्ते कयाशुभीयम्, **यो जातः** (ऋ २, १२) इति, **ममाग्ने वर्चः** (ऋ १०, १२८) इत्येतानि पुरस्तात् सूक्तानि चोद्यन्ते निष्केवल्य-मरुत्वतीययोर्वैश्वदेवे[9] च, ता यथान्तरमैकाहिकानामेव सूक्तानां पुरस्तात् प्राप्नुवन्ति, इष्यते च कथमुभयोरपि सूक्तयोः पुरस्तात्स्युरिति उपसंशस्येत्युच्यते[10]॥ ६॥

---

१. **इयं** मूको। २-२. °**दास्ये तत्** मूको। ३-३. **इच्छाभियादृशकं** मूको। ४. **ऐकाहिकसु** मूको। ५. **इभ्यते** मूको। ६. **पूर्वेप्यैकाव**° मूको। द्र. आश्रौ १०, १०, ४। ७. द्र. आश्रौ ५, १८, ५। ८. **वयादित्य**° मूको। ९. द्र. आश्रौ ६, ६, १४-१६। १०. **उपसरयेदि**° मूको।

[आग्निमारुते निविदाधाननियमः]

**एवमेवाग्निमारुते॥ ७॥**

पार्ष्ठिकेष्वैकाहिकान्युपशंस्तव्यानि, तेष्वेव च निविदो भवन्ति। ऐकाहिकेष्वेवं-प्रकारं द्वितीयमहः॥ ७॥

[पृष्ठ्यस्य चतुर्थस्याह्नोऽत्र तृतीयत्वेन क्लृप्तिः]

अथ तृतीयं वक्ष्यामः—

**चतुर्थं पृष्ठ्याहरुत्तमम्॥ ८॥**

चतुर्थं पृष्ठ्याहरुत्तमम् भवति। तृतीयं भवतीत्यर्थः। अविशेषवचनात् सामूहिकमेव चतुर्थेऽहनि प्रातरनुवाकं प्रपद्यते॥ ८॥

[ज्योतिरादीनामेकाहानामेकस्य ग्रहणम्]

**ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतं सर्वस्तोमोऽप्तोर्यामो वा॥ ९॥**

एवमाद्याह, किमेतत्, ज्योतिर्वा भवति। ज्योतिर्ग्रहणे **ज्योतिर्ऋद्धिकामस्य** (आश्रौ १०, १, १) इत्ययमेकाहो गृह्यते। अतिरात्रसामान्याद् यत्र ज्योतिष्टोम इति ब्रवीति, तत्र प्रथमे संप्रत्ययः। गौर्वा भवति, अथवा अभिजित्, अथवा विश्वजित्, अथवा महाव्रतम्, अथवा सर्वस्तोमोऽतिरात्रः[1]। सर्वस्तोमग्रहणे योऽसौ गौरुपदिष्टः[2], न तस्य ग्रहणम्। अश्वमेधादन्यत्र तस्य ग्रहणमेवमर्थमेव। तस्मिन् सर्वस्तोमत्वमपदिष्टम्। सर्वस्तोमग्रहणे कथं तस्य ग्रहणं स्यात्। इह तु अहीनत्वात्[3] तृतीयमेवाभिप्लविकमहर्भवति। तस्मिन्नेव सर्वस्तोमाः कर्तव्याः। अथवाऽप्तोर्यामो भवति। एतेषामन्यतममहर्वेदितव्यम्॥ ९॥

[चतुर्षु दिक्षु दक्षिणानां नियमः]

**भूमिपुरुषवर्जमब्राह्मणानां वित्तानि प्रतिदिशमृत्विग्भ्यो दक्षिणा ददाति। प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुरेता एव होत्रका अन्वायत्ता अन्वायत्ताः॥ १०॥**

भूमिपुरुषवर्जम् भूमिं च पुरुषजातिं च वर्जयित्वा अब्राह्मणानां यानि वित्तानि तानि प्रतिदिशम् ऋत्विग्भ्यो दक्षिणा ददाति। ऋत्विग्ग्रहणं क्रियते कथमानीय दक्षिणापथेन दानं स्यादन्यत्र। दिक्संदेहे[4] स्वयमेव निर्णयं शास्ति—प्राची दिक्[5] तु होतुः, दक्षिणा ब्रह्मणः, प्रतीच्यध्वर्योः, उदीच्युद्गातुः। अत्र संदेहो होत्रकाणां

---

१. **सर्वस्तोमतन्त्रम्** मूको। २. द्र. आश्रौ १०, १, ५। ३. **नरही°** मूको। ४. **दिव सं°** मूको। ५. **दिशो** मूको।

दक्षिणोत्तरे त्विदमाह। एता एव होत्रका अन्वायत्ताः, एता एव दिग्विदिशि दक्षिणाः। अत्र होत्रका अनुभागिन्यो (? नो) भवन्ति। होतारमनु होतृपुरुषाः, ब्रह्माणमनु ब्रह्मपुरुषाः। अनेन प्रकारेण द्वितीयेभ्यो यथा चोदिता दक्षिणाः। द्विर्वचनमध्याय-परिसमाप्तिलक्षणम्॥ १०॥

॥ इति दशमे दशमः खण्डः॥

**इत्याश्वलायनश्रौतसूत्रे उदाहरणबहुलायां देवत्रातस्य कृतौ सूत्रव्याख्यायां दशमोऽध्यायः॥ १०॥**

# अथैकादशोऽध्यायः

## [ तत्र प्रथमः खण्डः ]

[पूर्वोक्तानां पञ्चविंशतेरह्नां योगविशेषकथनप्रतिज्ञा]

**अथैतेषामह्नां योगविशेषान् वक्ष्यामो यथायुक्तानि यस्मै यस्मै कामाय भवन्ति॥ १॥**

अथेत्ययमथशब्दो ग्रन्थानन्तर्ये प्रकरणादौ वा। रात्रिसत्राणां प्रकरणम्। एतेषामिति पूर्वोपदिष्टानि पञ्चविंशतिरहानि[१] निर्दिश्यन्ते। तेषां पञ्चविंशतेर्योगविशेषान् वक्ष्यामः। संघातविशेषान् समासेन विशेषानित्यर्थः। प्रतिज्ञासूत्रमिदम्। [२]अन्येषु पुनरेतेषामित्येकाहांश्चाधिकृतान् मन्यन्ते, तत[२] एतदाह उत्तरैकाहानां भेदो[३] वा दृश्यते अभिजिद्विश्वजितोः स्थाने बृहस्पतिसवेन्द्रस्तुतौ[४] [५]त्रिवृदनिरुक्त एवमादयः[५]। अयं पुनर्नेति पञ्चविंशतिरेवाहानि, अन्यथा प्रतिज्ञाविघातो भवति। प्राक् प्रतिज्ञाया एव विघातो भवति। प्राक् प्रतिज्ञातम्। **एतेभ्य एवाहोभ्यः** (आश्रौ ८, १३, ३५) इत्यहीनैकाहान् वक्ष्याम इति। उच्यते। एकाहानामपि चोदना दृश्यते। नैष दोषः। वचनेन क्रियते, वचनं हि बलवत्। अनधिकृतानपि[६] ज्ञापयति। विशेषानित्युच्यते। कांश्चिदेव वयं संघातविशेषान् वक्ष्यामः। अनेनापि बहवः संघातविशेषा असमाम्नाता द्रष्टव्या इति। तदिदं न वक्तव्यं **तेषां यः कश्च[७] समाहारः सिद्धमेव शस्यम्** ( आश्रौ १०, ५, १७ ) इत्यत्रैवायमर्थः साधितः। सूत्रं किमर्थं प्रारब्धम्। आह—यथायुक्तानि यस्मै कामाय भवन्तीति। यथा यथा युक्ताः संघाताः, [८]अहानि वा यथायुक्तानि[८] यस्मै यस्मै[९] कामायावाप्तये भवन्ति तथा तथा वक्ष्यामः। यथा **द्वौ त्रयोदशरात्रौ** (आश्रौ ११, २, १), ऋद्धिकामानां प्रथमेऽहनि सत्राणामित्येवमादीन्युदाहरणान्याह॥ १॥

---

१. द्र आश्रौ ८, १३, ३१। २-२. अन्येषु नरेषामिति एकाहाश्चाधिकृता मन्यंते क्षत मूको। ३. वेदो मूको। ४. द्र आश्रौ १२, १, ४। ५-५. °निरुक्ते एवमादयं मूको। ६. अवधिकृ° मूको। ७. कश्चित् मूको। ८-८. का यथा यथा मूको। ९. नास्ति मूको।

[सत्रादौ प्रायणीयसंज्ञकस्यातिरात्रसंस्थाकस्यैकाहस्य विधानम्]

**अयमेवैकाहोऽतिरात्र आदौ प्रायणीयः ॥ २ ॥**

अयमेवेति प्रकृत एकाहो निर्दिश्यते। स आदौ कर्तव्यः सत्राणाम्। अतिरात्रसंस्थश्च भवति। प्रायणीय इति संज्ञा संव्यवहारार्था। **प्रायणीयोदयनीययोः** (आश्रौ १२, ७, ७), **प्रायणीयचतुर्विंशे उपेत्य** (आश्रौ ११, ७, २) एवमादीन्युदाहरणानि। एकाहग्रहणं क्रियते अनन्तरेऽधिकृते अप्तोर्यामे तस्य ग्रहणं माभूदिति। एवकारोऽवधारणाय। अन्ये[१] पुनरयमेवेति अधिकृतमग्निष्टोममेवेच्छन्ति[२]। **श्वःस्तोत्रियः** (शांश्रौ १२, ९, ८) अह (यं?) न भवतीत्येवं वर्णयन्ति। तेषां पुनर्भरतद्वादशाहेऽपि ऐकाहिके [३]आद्ये श्वःस्तोत्रियता[३] न प्राप्नोति। तस्मादस्माकं **पौनर्वचनिक** एव। आदाविति[४] न वक्तव्यम्। **तावन्तरेण व्यूळ्हः** (आश्रौ ११, १, ६) **इत्यत्रैवाद्ययोः** प्रायणीयोदयनीययोः प्राप्तौ दर्शयति। इदमत्र प्रयोजनं यत्रैव द्वादशरात्रो **भवति तत्रैव** प्रायणीयोदयनीयौ[५] प्राप्नुतः द्वादशरात्रेण संयुज्य विहितत्वात्। इष्यते च, कथं सर्वत्रादौ प्रायणीयः स्यात्। **त्रयाणामभिप्लवानां प्रथमावन्तराऽतिरात्रः**[६] (आश्रौ ११, ३, १) इति। **षण्णां पञ्चरात्राणां मध्ये विश्वजिदतिरात्रः** (आश्रौ ११, ४, ३) एवमादि। कथं प्रायणीय आदौ स्याद् अन्ते चोदयनीयः। तस्माद् [७]वचनं कृतम्[७] ॥ २ ॥

[सत्रान्त उदयनीयस्यैकाहस्यानुष्ठानम्]

**एषोऽन्त्य उदयनीयः ॥ ३ ॥**

उदयनीयः। [८]एष एव चान्ते युज्यते[८]। प्रयुज्यमानः[९] उदयनीयसंज्ञो वेदितव्यः संविज्ञानार्थम्। सप्रयोजनं केचिद् वर्णयन्ति श्वःस्तोत्रियनिवृत्त्यर्थमेव। अथवा **अव्यक्तो [१०]मध्ये** (आश्रौ ११, १, ४) इति[१०] वक्ष्यति। अतः श्वःस्तोत्रियप्रापणार्थं पूर्वमधिकृतं निवर्तयन्ति। एवं केचिदस्माकमेव[११] पूर्वस्यैव प्रापणार्थम् ॥ ३ ॥

[सत्राणां मध्यवर्तिनोऽह्नोऽविशेषेणातिरात्रत्वम्]

**अव्यक्तो मध्ये ॥ ४ ॥**

मध्ये प्रयुज्यमानः अव्यक्त एष[१२] वेदितव्यः। [१३]अतिरात्रभूत एवैकाहः **त्रीणि**[१३] **त्रिवृन्त्यहान्यतिरात्रः** (आश्रौ ११, ५, २) एवमादीन्युदाहरणानि। अव्यक्तवचनं क्रियते। [१४]अव्यक्तमृतेऽपि कथमयमेव[१४] स्यात् **पृष्ठ्यं छन्दोमांश्चान्तरा सर्वस्तोमः**

---

१. अयं मूको। २. अविकृ° मूको। ३-३. आद्येश्च° मूको। ४. स्तदावि° मूको। ५. °णीयो यो मूको। ६. प्रथवावं तरात्र मूको। ७-७. वचनं त मूको। ८-८. एव एव वक्ष्यन्ते प्रयुज्यन्ते मूको। ९. युज्यमानः मूको। १०-१०. मध्यम इति मूको। ११. °कमेष्व एव मूको। १२. एव मूको। १३-१३. °त्रभृत एवैकाह त्रीणि मूको। १४-१४. °क्तगतेपि कथमेव मूको।

(आश्रौ ११, २, २) इति। **सर्वस्तोमनवसप्तदशौ** (आश्रौ ११, ५, ५) इति, एवमादिष्वप्ययमेव वेदितव्यः॥ ४॥

[अहीनेषु वैश्वानरसंज्ञकस्यातिरात्रत्वम्]

**अहीनेषु वैश्वानर एष एव॥ ५॥**

अहीनेषु वैश्वानर एष एव भवति। अहीन एव वैश्वानरश्चोदितः[1]। स एष भवति। अहीनग्रहणं न[2] कर्त्तव्यम्, अहीनेष्वेव वैश्वानरः। आह। यो वैश्वानरार्थोऽहीनेषु चाव्यक्तो मध्ये [3]चोद्यमानः स एष[3] एव भवति। **संभार्यावतिरात्रश्चतुर्विंशम्** (आश्रौ १०, ४, २-३) एवमादीन्युदाहरणानि। वैश्वानर एष एव वैश्वानरचोदनायामप्येष एव वेदितव्यः, यत्र वैश्वानरग्रहणं **वैश्वानरमुपदध्यात्** (आश्रौ १०, ५, ६) इत्येवमादिषु॥ ५॥

[प्रायणीयोदयनीययोर्मध्ये व्यूळ्हदशरात्रस्य विधानम्]

**तावन्तरेण व्यूळ्हो दशरात्रः॥ ६॥**

प्रायणीयोदयनीयावधिकृतौ। तौ प्रायणीयोदयनीयौ [4]अन्तरा व्यूळ्हो[4] दशरात्रो वेदितव्यः। समूळ्हव्यूळ्हयोर्विशेषोऽपदिष्टोऽष्टमेऽध्याये। आह। **गोआयुषी दशरात्रम्** (आश्रौ ११, ७, ११)। **त्रिवृद्व्यूळ्हो दशरात्र उद्भिद्बलभिदौ च** (आश्रौ १२, १, ५) इति, एवमादिषु दशरात्रश्चोद्यते। तत्र व्यूळ्ह एव शस्यते, कस्मात्, **समूळ्हो दशरात्रः** (आश्रौ १२, १, ७) इत्यत्र[5] विशेषोपदेशाद् अन्यत्र व्यूळ्ह-वचनारम्भं दर्शयति॥ ६॥

[द्वादशाहस्य सत्रप्रकृतेर्वर्णनोपसंहारः]

**एषा प्रकृतिः सत्राणाम्॥ ७॥**

सत्राणां व्यूळ्हः प्रकृतिः, अहीनानाम् [6]आम्नातानामनाम्नातानां[6] च समूळ्हः प्रकृतिः। एषा प्रकृतिः॥ ७॥

एषा प्रकृतिरित्युक्तं सत्राधिकारश्च, अत्र महाकाला-(व्रता) नि द्वादश वैकाहानि निर्दिष्टानि, अत्रापि कर्तव्यमिति, तत्रैतमुत्तरमारभ्यते—

[त्रयोदशाहादिसत्रेषु दिनपूर्त्यर्थमावापविधानम्]

**तत्राऽऽवापस्थानम्॥ ८॥**

[त्रयोदशाहार्थं दशरात्रादूर्ध्वं महाव्रतस्यावापः]

**उर्ध्वं दशरात्रादेकाहार्थे महाव्रतम्॥ ९॥**

---

१. °नरचोदितः मूको। द्र. आश्रौ १०, १, १८। २. नास्ति मूको। ३-३. °मान एष मूको। ४-४. अन्तरा व्यूळ्हो मूको। ५. [illegible] मूको। ६-६. द्वादशानामाम्नातानां मूको।

[1]ऊर्ध्वं दशरात्रादेकाहार्थे[1] महाव्रतम् अनुदशरात्रेण संयुज्य विहितत्वात् एकाहार्थमेव चोद्यमानं महाव्रतमस्मिन् स्थाने प्राप्नोति। यदा पुनस्त्रिकद्रुकैः [2]सहिते गोआयुषी स्यातां[2], तदा एतत् स्थानं न प्राप्नोति। अथान्यथा सूत्रं करिष्यामः। ऊर्ध्वं दशरात्राद् इत्येवमन्तं तेषु चावापस्थानम्, ऊर्ध्वं दशरात्राद् वेदितव्यम्। आवापा ये, आवापादिमुत्तरत्र (१३ सू०) वक्ष्यति। एकाहार्थे महाव्रतम् इत्येवमारभ्य, अत्र स्थानमूर्ध्वं दशरात्राद् इति सिद्धे आवापञ्च[3] स्वयमेव विधास्यत्युत्तरत्र। आवापग्रहणमपार्थकं[4] सिद्धत्वाद् इति किलैवमर्थमारभ्यते। कथं नित्यमेव द्वाप्य (? द्वयोरप्या) आवापः क्रियते। तथा स[5] उत्तरत्र वक्ष्यति **उद्धरेयुर्गोआयुषी दशरात्रं च** (आश्रौ ११, ७, १८)। द्वादशानामह्नामुद्धारश्चोच्यते। तत्र सप्तमे मासे षडहानि व्यतिरिच्यन्ते, तेनाप्युत्तमं[6] मासं गच्छन्ति। षड्भिरैहोभिरुत्तमो[7] न पूर्यते, कथं तत्रापि षण्णामह्नामावापः स्याद् इति। तस्मादावापग्रहणम्। अन्ये पुनर्नैवमेवेच्छन्ति, तस्मात्तत्रैव दशरात्राणि गणयित्वैवं मन्यन्ते। एकाहार्थे महाव्रतम्, यदा एकेनाह्ना प्रयोजनं भवति महाव्रतस्य ग्रहणं वेदितव्यम्। यथा किमुदाहरणम् ? **द्वौ त्रयोदशरात्रौ** (आश्रौ ११, २, १) इति, **न्यायक्लृप्तं व्रतवन्तं प्रतिष्ठाकामा द्वितीयम्** (आश्रौ ११, २, ३), **एकत्रिंशद्रात्रमेकरात्रोपजनम्**[8] (आश्रौ ११, ३, ११) एवमादीन्युदाहरणानि ॥८-९॥

[द्व्यादीनामह्नामावापो दशरात्रात्पूर्वं प्रयोज्यः]

**प्राग्दशरात्रादितरेषामह्नाम् ॥ १० ॥**

महाव्रतादितरेषाम् ॥ १० ॥

[द्वित्रिचतुर्णामह्नामावापेष्वेकाहविशेषाणां व्यवस्था]

**द्व्यहार्थे गोआयुषी त्र्यहार्थे त्रिकद्रुका अभिप्लवत्र्यहं पूर्वं त्रिकद्रुका इत्याचक्षते चतुरहार्थे त्रिकद्रुका महाव्रतं च ॥ ११ ॥**

द्व्यहार्थे यत्र द्वाभ्यां प्रयोजनं तत्र गोआयुषी वेदितव्ये, प्राक् च स्थानात्, महाव्रतादितरेषामह्नां प्रायणीयादूर्ध्वमित्यर्थः। उदाहरणानि **न्यायक्लृप्तं द्व्यहोपजनम्** (आश्रौ ११, २, ८), **अष्टात्रिंशद्रात्रो द्विरात्रोपजनः** (आश्रौ ११, ४, ८) एवमादीनि। त्र्यहार्थे त्रिकद्रुकाः, त्र्यहेन यत्र प्रयोजनं तत्र त्रिकद्रुका वेदितव्याः। स्थानं व्याख्यातम्, अथ तेऽज्ञाताः, किं (? के) त्रिकद्रुका प [स्तज्] ज्ञापनार्थम् उत्तरशास्त्रमारभ्यते। अभिप्लवत्र्यहपूर्वं त्रिकद्रुका इत्याचक्षते पूर्वे[9] याज्ञिकाः। पूर्वग्रहणमुत्त-

---

१-१. **तत्रोदका°** मूको। २-२. **सहितं गोआयुषीभ्यां** मूको। ३. **आदावपञ्च** मूको। ४. **आधायग्रहणमपालकं** मूको। ५. **क** मूको। ६. **तेनात्युत्तमं** मूको। ७. **°भिरुत्तरो** मूको। ८. **°त्रिंशरात्रो°** मूको। ९. **पूर्वं** मूको।

रनिवृत्यर्थम्। उदाहरणानि—**न्यायक्लृप्तस्त्र्यहोपजनः शेषः** (आश्रौ ११, २, १२), **न्यायक्लृप्तं त्र्यहोपजनं प्रतिष्ठाकामाः चतुर्थम्** (आश्रौ ११, २, १३), **एकान्नचत्वारिंशद्रात्रं**[1] **त्रिरात्रोपजनम्** (आश्रौ ११, ४, ८) एवमादीन्युदाहरणानि। चतुरहार्थे त्रिकद्रुका महाव्रतं स्वस्थाने ऊर्ध्वमेव **दशरात्रात्** (आश्रौ ११, १, १०) उदाहरणानि—**षोळशरात्रं चतूरात्रोपजनमन्नाद्यकामाः** (आश्रौ ११, २, १४), **चत्वारिंशद्रात्रं** [2]**चतूरात्रोपजनं परमायां विराजि प्रतितिष्ठन्तः**[2] (आश्रौ ११, ४, ८) एवमादीनि॥ ११॥

[पञ्चाहावापे व्यवस्थाकथनम्]

**पञ्चाहार्थेऽभिप्लवपञ्चाहः। उत्तमस्य तु षष्ठात् तृतीयसवनम्॥ १२॥**

पञ्चभिरहोभिरन्यत्[3] प्रयोजनम्। सत्राण्यधिकृतानि, तेषु यदा पञ्चभिः कार्यं, तदाऽभिप्लवपञ्चाहः प्रक्षेप्तव्यः। अयं पुनः पञ्चाहे विशेषो[4] भवति। [5]उत्तमस्य पञ्चमस्याह्नः[5] तृतीयसवनं भवति षष्ठाद् आभिप्लविकादेव[6] **षष्ठस्य सावित्रार्भवे तृतीयेन** (आश्रौ ७, ७, ८) इत्येवमारभ्य। उदाहरणानि—**सप्तदशरात्रं पञ्चरात्रोपजनम्** (आश्रौ ११, २, १५) अनन्ताश्रियम् (? तम्) **एकान्नत्रिंशद्रात्रं पञ्चरात्रोपजनम्** (आश्रौ ११, ३, ११) एवमादीन्युदाहरणानि॥ १२॥

[षडहावापे व्यवस्था]

**षळहार्थेऽभिप्लवः षळहः। एवंन्याया आवापाः॥ १३॥**

षड्भिरहोभिर्यत्र प्रयोजनं भवति तत्राभिप्लवः षळहो वेदितव्यः। उदाहणानि—**षळहश्चात्र पूर्यते** (आश्रौ ११, २, १७; ३, ७)। तत्र वक्ष्यत्येवमादीन्युदाहरणानि। षळहग्रहणं किमर्थम्, अभिप्लवस्योपदेशादेव षळहः सिद्धः। आह, योगविभागं करिष्यामः। अभिप्लवः षडहार्थे षडहश्च भवति। इदं षडहवचनं किमर्थम्। कथं वा नियमोऽभिप्लवस्य प्राप्नोति। आह, महाव्रतादीनामनित्यत्वं वर्णयिष्यामः। तेनाभिप्लवस्यानित्यत्वं प्राप्नोति। तस्मात् षडहोपदेशो नियमार्थम्। एवंन्याया आवापाः। एवंप्रकारा आवापा वेदितव्याः, **एकाहार्थे महाव्रतम्** (आश्रौ ११, १, ९), **द्व्यहार्थे गो-आयुषी** (आश्रौ ११, १, ११) एवमादा (? द) यः। आह। आवापलक्षणमुक्त्वा एवमेव। एवंन्याया अवापा इति इदं किमर्थमाह। अनित्यत्वं किल दर्शयति महाव्रतादीनाम्। शास्त्रान्तरे महाव्रतस्य स्थानेऽभिजित्। अनयोरह्नोरन्यतरन्म-हाव्रतस्थाने चोद्यते यथा द्व्यहोऽन्य एवोच्यते गो-आयुषोः[7] स्थाने। एवमुत्तरेषामपि त्रिकद्रुकादीनां स्थाने अन्यान्यहानि चोद्यन्ते। तेषामपीह प्रामाण्यं दर्शयति॥ १३॥

---

१. **एकोन°** मूको। २-२. **°पजनमन्नाद्यकामाः** मूको। ३. **°भिरन्यत्र** मूको। ४. **विशेषे** मूको। ५-५. **उत्तरस्य पञ्चाह्नः** मूको। ६. **°विकादेक** मूको। ७. **आयुषोः** मूको।

[षडधिकानामहामावापे पूर्वोक्तानामेव पुनरावर्तनम्]

**षडहान्ताः पुनः पुनः ॥ १४ ॥**

षडहान्ता आवापा यदा पूर्णा भवन्ति, '[1]तदा पुनः पुनरावर्तन्ते[1]'।

एकाहार्थे महाव्रतम्[2], तथा गोआयुषी द्व्यहार्थे[3] अनेन प्रकारेण आवर्तेते, षडहान्ता एवंभूता आवर्तन्ते प्राक् ॥ १४ ॥

[आवश्यके पूर्णपूर्णषडहानां ग्रहणम्]

**पूर्णः पूर्णश्च षडहस्तन्त्रतामेव गच्छति ॥ १५ ॥**

षडहश्च यदा पूर्णः पूर्णो भवति, तदा तन्त्रतामेव गच्छति। दशरात्रवत्प्रकृतिभूतो भवति। तन्त्रीभवतीत्यर्थः। षडहं गणयित्वा आवापः एकाहादिर्विधीयते। सह षडहेन तन्त्र (? तन्त्री)-भूतस्य दशरात्रस्यावापो वेदितव्यः। तन्त्रसंबन्धिपारिभाषिकं बहु विधाय समाम्नातार्थं चेत्युक्त्वा ताः [? परिभाषाः] सर्वकामैरभिसंयुज्याभ्या (? था)-रब्धो[4] वक्तुम् ॥ १५ ॥

॥ इत्येकादशे प्रथमः खण्डः ॥

---

१-१. तदा पुनरावर्तन्ते पुनः मूको। २. द्र० आश्रौ ११. १. ९। ३. द्र० आश्रौ ११, १, ११। ४. सर्वकामाभिसंयुज्याद्यारब्धा मूको।

## अथैकादशेऽध्याये द्वितीयः खण्डः

[त्रयोदशरात्रस्य द्वौ प्रकारौ]

**द्वौ त्रयोदशरात्रौ ॥ १ ॥**

द्वौ त्रयोदशरात्रौ वक्ष्यामः। द्विग्रहणमन्येऽप्यसमाम्नाताः सन्तीति दर्शनार्थम्। तयोः पूर्वस्याहर्व्यूहः कामोपदेशश्च ॥ १ ॥

[प्रथमत्रयोदशरात्रस्य कामनाविशेषोऽहर्व्यूहश्च]

**ऋद्धिकामानां प्रथमं पृष्ठ्यं छन्दोमांश्चान्तरा सर्वस्तोमोऽतिरात्रः ॥ २ ॥**

ऋद्धिकामा उपेयुरिति। पृष्ठ्यं छन्दोमांश्चान्तरा सर्वस्तोमोऽतिरात्रः, तस्मिन्नेव दशरात्रे पृष्ठ्यं छन्दोमांश्चान्तरा वेदितव्यः। अयमिह[1] साधितो भवति—प्रायणीयः, पृष्ठ्यः, सर्वस्तोमोऽतिरात्रः, छन्दोमाः, उदयनीयः। गौरुभयसामा[2]। छन्दोमग्रहणे व्यक्ता वान्तो (? व्रतवान्ना)-स्तीति कृत्वा अतिरात्रोपदेशादयमेव भवति। प्राकृतो दशपञ्चाहावः यथाप्राप्तं भवति। अयमहर्व्यूहः ॥ २ ॥

[द्वितीयत्रयोदशरात्रस्य कामनोल्लेखः]

**न्यायक्लृप्तं व्रतवन्तं प्रतिष्ठाकामा द्वितीयम् ॥ ३ ॥**

न्याय उत्सर्गः। न्यायक्लृप्तं न्यायेन कल्पितमित्यर्थः। कश्चात्र न्यायः। **एषा प्रकृतिः सत्राणाम्** (आश्रौ ११, १, ७) इत्युक्त्वा **एकाहार्थे महाव्रतम्** (आश्रौ ११, १, ९) इति यदुक्तन्यायः। किमुक्तं भवतीति। प्रकृतिभूते द्वादशरात्रे महाव्रतम् अक्लृप्तव्यमित्यर्थः। एवं न्यायक्लृप्तं व्रतवन्तं व्रतसहितमित्यर्थः। तं[3] प्रतिष्ठाकामा उपेयुर्द्वितीयं त्रयोदशरात्रम्। प्रतिष्ठाकामा उपेयुरितीदं किमर्थं केवलकामोपदेशः

---

१. **अयमहसा°** मूको। २. द्र० आश्रौ १०, १, ५। ३. न मूको।

कर्तव्यः **स्वयमेव एकाहार्थे महाव्रतम्** (११, १, ९) इति अनया परिभाषया प्रकृतिभूतश्च [1]दशरात्रः। प्रायणीयोदयनीयौ[1] दशरात्रो नित्यः। एवं त्रयोदशाहानि भवन्ति। किमर्थं गुरुयत्नः क्रियते। आह। कथं न्यायक्लृप्तमेव व्रतवन्तम् आ दशरात्रं [2]प्रतिष्ठाकामा उपेयुरिति[2] नाहर्व्यूहः। अत इदमारभ्यते॥ ३॥

[चतुर्दशरात्राणां त्रयः प्रकारास्तत्र प्रथमस्य कामनोपदेशश्च]

**त्रीणि चतुर्दशरात्राणि सार्वकामिकं प्रथमम्॥ ४॥**

त्रीणि चतुर्दशरात्राणि वक्ष्यन्ते। सार्वकामिकं प्रथमम्[3]। तेषां चतुर्दशरात्राणां प्रथमं सर्वकामा उपेयुस्तस्याहर्व्यूहः प्रायणीयोदयनीयौ नित्यौ। एवं चतुर्दशाहान्यधिकृतानि वेदितव्यानि॥ ४॥

[द्वितीयतृतीययोश्चतुर्दशरात्रयोः कामनोपदेशोऽहर्व्यूहश्च]

**द्वौ पृष्ठ्यावावृत्त उत्तरः*॥ ५॥**

**तल्पे वोदके वा विवाहे वा मीमांस्यमाना द्वितीयम्*॥ ६॥**

**पृष्ठ्यमभितस्त्रिकद्रुकाः*॥ ७॥**

**न्यायक्लृप्तं द्व्यहोपजनं प्रतिष्ठाकामस्तृतीयम्*॥ ८॥**

[चतुर्षु पञ्चदशरात्रेषु प्रथमस्य कामनोपदेशोऽहर्व्यूहश्च]

**चत्वारि पञ्चदशरात्राणि देवत्वमीप्सतां प्रथमं प्रथमस्य चतुर्दशरात्रस्य पृष्ठ्यमध्ये महाव्रतम्॥ ९॥**

देवत्वमीप्सतां प्रथमं तेषां पञ्चदशरात्राणां प्रथमं पञ्चदशरात्रं देवत्वं ये कामयन्ते, तैरिदमुपासितव्यम्[4]। तस्याहः साधित (? तं) प्रथमस्य चतुर्दशरात्रस्य यौ पृष्ठ्यौ व्याख्यातौ, तयोर्मध्ये महाव्रतं कर्त्तव्यम्। अयमहर्व्यूहः साधितप्रायणीयः। पृष्ठ्ये महाव्रतम्, अथ पृष्ठ्य उदयनीयः। स्थानप्राप्त्यर्थं महाव्रतवचनम्[5]। कथमन्तरा पृष्ठ्ययोः स्यात्॥ ९॥

[द्वितीयपञ्चदशरात्रस्य कामनोपदेशोऽहर्व्यूहश्च]

**ब्रह्मवर्चसकामा द्वितीयं द्वितीयस्य चतुर्दशरात्रस्याग्निष्टुत्प्रायणीयादनन्तरः॥ १०॥**

---

१-१. दशरात्रप्रायणीयोदयनीया मूको। २-२. प्रतिष्ठाकामानां शुरिति मूको। ३. नास्ति मूको। ४. °मुपास्तव्यं मूको। ५. महादेवं वचनं मूको। *भाष्यं नोपलभ्यते।

ब्रह्मवर्चसकामा द्वितीयं पञ्चदशरात्रमुपेयुः। तस्याहर्व्यूहः—द्वितीयस्य चतुर्दशरात्रस्य अग्निष्टुत्प्रायणीयादनन्तरः। अग्निष्टुदेकाहो व्याख्यातः[1]स इह[1] प्रायणीयादनन्तरं भवति। अयमहर्व्यूहः सिद्धो भवति। प्रायणीयोऽग्निष्टुत्, अथ त्रिकद्रुकाः, पृष्ठ्यः, पुनस्त्रिकद्रुकाः, उदयनीय इति॥ १०॥

[तृतीयस्य पञ्चदशरात्रस्य कामनोपदेशः]

**सात्राहीनिका उभौ लोकावाप्स्यतां तृतीयम्॥ ११॥**

सात्राहीनिकौ उभौ लोकावाप्स्यतां तृतीयं पञ्चदशरात्रं[2] भवति। सात्रिकैरहोभिर्ये काम्यन्ते तांश्च लोकान् ये प्रार्थयन्ते, ते[3] इदं तृतीयं पञ्चदशरात्रम्[4] उपेयुः॥ ११॥

[तृतीयस्य पञ्चदशरात्रस्य अहर्व्यूहः]

**तृतीयस्य चतुर्दशरात्रस्याग्निष्टुत् प्रायणीयस्थाने न्यायक्लृप्तस्त्र्यहोपजनः शेषः॥ १२॥**

तस्याहर्व्यूहः—तृतीयस्य चतुर्दशरात्रस्याग्निष्टुत् प्रायणीयस्थाने। स्थानवचनं क्रियत अतिरात्रत्वं मा भूदिति। न्यायक्लृप्तः त्र्यहोपजनः [5]शेष। शेषः[5] शेषाण्यहानि शिष्टानि, तानि न्यायक्लृप्तानि वेदितव्यानि। न्यायक्लृप्तवचनं कामार्थम्। पूर्वं च [6]प्रयोजनमयमत्राहर्व्यूहः साधितो[6] भवति॥ १२॥

[चतुर्थस्य पञ्चदशरात्रस्य कामनोपदेशोऽहर्व्यूहश्च]

**न्यायक्लृप्तं त्र्यहोपजनं प्रतिष्ठाकामाश्चतुर्थम्॥ १३॥**

प्रायणीयः[7] त्रिकद्रुका दशरात्र उदयनीयः॥ १३॥

[षोडशरात्रस्य कामनोपदेशोऽहर्व्यूहश्च]

**षोडशरात्रं चतूरात्रोपजनमन्नाद्यकामाः॥ १४॥**

षोडशरात्रं चतुरात्रोपजनम् अन्नाद्यकामा उपेयुः। तस्याहर्व्यूहः—प्रायणीयः, त्रिकद्रुकाः, दशरात्रो, महाव्रतम्, उदयनीयः॥ १४॥

[सप्तदशरात्रस्य कामनोपदेशोऽहर्व्यूहश्च]

**सप्तदशरात्रं पञ्चरात्रोपजनं पशुकामाः॥ १५॥**

सप्तदशरात्रं पञ्चरात्रोपजनम् अनन्तां[8] श्रियमिच्छन्तः, परमां विजितं[9] केचित्

---

१-१. **स ह** मूको। २. **चतुर्दशरात्रं** मूको। ३. नास्ति मूको। ४. **चतुर्दशरात्रं** मूको। ५-५. नास्ति मूको। ६-६. °त्राहः सवितौ मूको। ७. **प्रायणीयस्थाने** मूको। ८. **पशुकामाः इति सूत्रपाठः**। ९. द्र. आश्रौ ११, ३, ११।

य एतान् कामान् प्रार्थयन्ते। त इमं सप्तदशरात्रमुपेयुः। तस्याहर्व्यूहः—प्रायणीया अभिप्लवपञ्चाहः, यस्मिन् विशेषः अपदिष्टः, स भवत्येव, दशरात्र उदयनीयः॥ १५॥

[अष्टादशरात्रस्य कामनोपदेशः]

**अष्टादशरात्रमायुष्कामाः* ॥ १६ ॥**

[अष्टादशरात्रस्याहर्व्यूहः]

**षडहश्चात्र पूर्यते सतन्त्रस्योपजनं वक्ष्यामः* ॥ १७ ॥**

[एकोनविंशतिरात्रस्य कामनोपदेशोऽहर्व्यूहश्च]

**एकान्नविंशतिरात्रमेकरात्रोपजनं ग्राम्यानारण्यान् पशूनवरुरुत्स्यमानाः* ॥ १८ ॥**

[विंशतिरात्रस्य कामनोपदेशोऽहर्व्यूहश्च]

**विंशतिरात्रं प्रतिष्ठाकामा अभिजिद्विश्वजितावभिप्लवादूर्ध्वम्* ॥ १९ ॥**

॥ इत्येकादशे द्वितीयः खण्डः॥

---

*भाष्यं नोपलभ्यते।

## अथैकादशेऽध्याये तृतीयः खण्डः

[एकविंशतिरात्रस्य द्वयोः प्रकारयोरेकस्य कामनोपदेशोऽहर्व्यूहश्च]

**द्वावेकविंशतिरात्रौ प्रतिष्ठाकामानां प्रथमं त्रयाणामभिप्लवानां प्रथमावन्तराऽतिरात्रः ॥ १ ॥**

द्वावेकविंशतिरात्रौ। अनयोरेकविंशतिरात्रयोः। प्रतिष्ठाकामाः प्रथममुपेयुः। तस्याहर्व्यूहः—त्रयाणामभिप्लवानां प्रथमौ प्रथमाभिप्लवावन्तराऽतिरात्रः कर्त्तव्यः। परिभाषितत्वात् **अव्यक्तो मध्ये** (आश्रौ ११, १, ४) इत्यग्निष्टोम एवातिरात्रसंस्थः कर्त्तव्यः। अयमहर्व्यूहः साधितो भवति—प्रायणीयः, अभिप्लवः, अतिरात्रः, अभिप्लवः, पुनरप्यभिप्लवः, उदयनीयः॥ १ ॥

[द्वितीयस्यैकविंशतिरात्रस्य कामनोपदेशोऽहर्व्यूहश्च]

**ब्रह्मवर्चसकामा द्वितीयम्। नवरात्रस्याभिजिद्विश्वजितोः स्थाने द्वौ पृष्ठ्यावावृत्त उत्तरः॥ २ ॥**

द्वितीयमैकविंशतिरात्रं ब्रह्मवर्चसकामा उपेयुः। तस्याहर्व्यूहः—नवरात्रस्याभिजिद्विश्वजितोः स्थाने पृष्ठ्यौ भवतः। अयं च विशेष आवृत्त उत्तरो भवति नवरात्रः। '[1]अभिजिदिति विश्वजिदिति च व्याख्यातौ'[1]। आवृत्तवचने च विशेषोऽपदिष्टः—प्रथमेऽहनि षष्ठमहर्भवति, द्वितीये पञ्चममहः, अनेन प्रकारेण। अयमहर्व्यूहः साधितो भवति—प्रायणीयः, पृष्ठ्यः षडहः, स्वरसामानस्त्रयः, विषुवान्, आवृत्ताः स्वरसामानः [? आवृत्तः] पृष्ठ्यः षडहः, उदयनीयः॥ २ ॥

[एकविंशतिरात्रस्य विषुवन्मध्यत्वात् संवत्सरसत्रसम्मितत्वम्]

**संवत्सरसंमिता इत्याचक्षते॥ ३ ॥**

---

१-१. **अभिजितादिर्विश्वजिति व्याख्याताः** मूको। द्र० आश्रौ ८, ५, १-९; ७, १-११।

संवत्सरसम्मिता एता रात्रय इति[१] आचक्षते॥ ३॥

[द्वाविंशतिरात्रस्य कामनोपदेशोऽहर्व्यूहश्च]

**द्वाविंशतिरात्रं चतूरात्रोपजनमन्नाद्यकामाः॥ ४॥**

इदं सत्रमुपेयुः। अयमहर्व्यूहः साधितो भवति—प्रायणीयः, त्रिकद्रुकाः, अभिप्लवः षडहः, दशरात्रः, महाव्रतम्, उदयनीयः॥ ४॥

[त्रयोविंशतिरात्रस्य कामनोपदेशोऽहर्व्यूहश्च]

**त्रयोविंशतिरात्रं पञ्चरात्रोपजनं पशुकामाः॥ ५॥**

त्रयोविंशतिरात्रं पञ्चरात्रोपजनं पशुकामा[२] उपेयुः। तस्याहर्व्यूहः—त्रयोविंशतिरात्रस्य पञ्चरात्रोपजनस्य च प्रायणीयः, अभिप्लवपञ्चाहः, अभिप्लवषडहः, दशरात्रः, उदयनीयः॥ ५॥

[चतुर्विंशतिरात्रस्य द्वयोः प्रकारयोः प्रथमस्य कामनोपदेशोऽहर्व्यूहश्च]

**द्वौ चतुर्विंशतिरात्रौ प्रजातिकामाः पशुकामा वा प्रथमम्॥ ६॥**

द्वौ चतुर्विंशतिरात्रावधिकृतौ वेदितव्यौ। प्रजातिकामा [३]पशुकामा वा[३] प्रथमं चतुर्विंशतिरात्रमुपेयुः॥ ६॥

[द्वितीयस्य चतुर्विंशतिरात्रस्य कामनोपदेशः]

**षडहश्चात्र पूर्यते सतन्त्रस्योपजनं वक्ष्यामः स्वर्गे लोके सत्स्यन्तो ब्रध्नस्य विष्टपं रोक्ष्यन्तो द्वितीयम्॥ ७॥**

षडहश्चात्र पूर्यते। अयं द्वितीयोऽत्र षडहः तन्त्रतां[४] गच्छति। द्वौ षडहौ द्वादशरात्रावन्तर्भूतौ[५] वेदितव्यौ। अयमहर्व्यूहः साधितो भवति—प्रायणीयः, द्वौ षडहाभिप्लवौ, दशरात्रः, उदयनीयः।

स्वस्वतन्त्रस्योपजनं वक्ष्यामः। स्वर्गे लोके सत्तिमिच्छन्तो[६] ब्रध्नस्य विष्टपमारोक्ष्यन्तो[७] वा द्वितीयं चतुर्विंशतिरात्रमुपेयुः। तस्याहर्व्यूहः प्रायणीयः॥ ७॥

[द्वितीयस्य चतुर्विंशतिरात्रस्याहर्व्यूहः]

**पृष्ठ्यस्तोमस्त्रयस्त्रिंशोऽनिरुक्तो विशालः पृष्ठ्यस्तोमा एकविंशत्रिणवत्रयस्त्रिशाः प्रतिलोमाः पूर्वस्मिंस्त्र्यहेऽनुलोमा उत्तरस्मिन्त्स विशालोऽपि वोत्तर एव त्र्यहः प्रतिलोमोऽनुलोमश्चानिरुक्तमहरावृत्तः पृष्ठ्यस्तोमः॥ ८॥**

---

१. नास्ति मूको। २. प्रतिष्ठाकामाः मूको। ३-३. नास्ति मूको। ४. तत्र तां मूको। ५. अन्तर्भूमौ मूको। ६. शक्तिमि° मूको। ७. °पमाकांक्ष्यन्तौ मूको।

पृष्ठ्यस्तोमः[1], त्रयस्त्रिंशः, अनिरुक्त एकाहो व्याख्यातः[2]। तस्य [3]त्रयस्त्रिंशस्तोममुपेयुः। स भवति[3] विशालः। अनिर्ज्ञातो[4] विशालः। तस्य लक्षणमारभ्यते। पृष्ठ्यस्तोमा एकविंशत्रिणवत्रयस्त्रिंशस्तोमाः प्रतिलोमा भवन्ति। पूर्वस्मिन्[5] त्र्यहे पृष्ठ्यस्तोमाः स्युः, तथैव स्थितस्य शस्यस्य अनुलोमा उत्तरस्मिन् त्र्यहे। पुनः पृष्ठ्यं कुर्वन्ति। स्तोमा एकविंशतित्रिणवत्रयस्त्रिंशा इतीदं किल ब्रुवन्त्याचार्याः। अन्यत्र स्तोमैरक्षाग्रहणं दर्शयति। स्तोमा एवं विनाहानि (?) एवं केचित्। अस्माकं पुनरनुलोमा उत्तरस्मिन्नित्येतदारभ्यते। अनियमे प्राप्त उत्तरे त्र्यहे नियमार्थमारभ्यते। स विशालः। स विशालो वेदितव्यः। षडहोऽपि वोत्तर एव त्र्यहः। प्रतिलोमः अनुलोम-श्चावृत्तेः[6] निमित्तः। कश्चिद् विशेषो व्याख्यातः। नित्यदशरात्र उदयनीयः॥ ८॥

[अनिरुक्तैकाहस्य त्रिवृत्स्तोमवत्त्वम्]

**त्रिवृदनिरुक्तः*॥ ९॥**

[ज्योतिष्टोमस्योभयसामत्वम्]

**ज्योतिरुभयसामा*॥ १०॥**

[पूर्वोक्तानां संसदामयनमिति संज्ञा। पञ्चविंशतिरात्रमारभ्य द्वात्रिंशद्रात्रपर्यन्तानां कामनोपदेशा अहर्व्यूहाश्च]

**संसदामयनमित्येतदाचक्षते। पञ्चविंशतिरात्रमेकरात्रोपजनमन्नाद्यकामाः। षड्विंशतिरात्रं द्विरात्रोपजनं प्रतिष्ठाकामाः। सप्तविंशतिरात्रं त्रिरात्रोपजनमृद्धिकामाः। अष्टाविंशतिरात्रं चतूरात्रोपजनं [7]ब्रह्मवर्चसकामाः। एकान्न-त्रिंशद्रात्रं पञ्चरात्रोपजनं परमां विश्वितं विजिगीषमाणाः। त्रिंशद्रात्रमन्नाद्यकामाः। षडहश्चात्र पूर्यते सतन्त्रस्योपजनं वक्ष्यामः। एकत्रिंशद्रात्रमेकरात्रोपजनमन्नाद्यकामाः। द्वात्रिंशद्रात्रं द्विरात्रोपजनं प्रतिष्ठाकामाः[7]*॥ ११॥**

॥ इत्येकादशे तृतीयः खण्डः॥

---

१. द्र० आश्रौ ८, ४, २५। २. द्र० आश्रौ ९, १०, १-५। ३-३. °पेयुर्भवति मूको। ४. अतिज्ञा° मूको। ५. पूर्वे मूको। ६. प्रतिलोमाश्च मूको। ७-७. नास्ति मूको। *भाष्यं नोपलभ्यते।

## अथैकादशेऽध्याये चतुर्थः खण्डः

[त्रयाणां त्रयस्त्रिंशद्रात्राणां प्रथमस्य कामनाविशेषोऽहर्व्यूहश्च]

**[1]त्रीणि त्रयस्त्रिंशदतिरात्राणि, प्रतिष्ठाकामानां प्रथमं, त्रयाणाम-भिप्लवानामुपरिष्टादुपरिष्टादतिरात्रः* ॥ १ ॥**

[द्वितीयस्य त्रयस्त्रिंशद्रात्रस्य कामनाविशेषोऽहर्व्यूहश्च]

**ब्रह्मवर्चसकामा द्वितीयं, चतुर्णां पञ्चरात्राणामावृत्त उत्तम, उत्तमौ चान्तरा सर्वस्तोमोऽतिरात्रः*[1] ॥ २ ॥**

[तृतीयस्य त्रयस्त्रिंशद्रात्रस्य कामनाविशेषोऽहर्व्यूहश्च]

**उभौ लोकावाप्स्यतां तृतीयं षण्णां पञ्चरात्राणां मध्ये विश्वजिदतिरात्रः ॥ ३ ॥**

उभौ लोकौ आप्स्यन्तः[2] तृतीयं त्रयस्त्रिंशद्रात्रमुपेयुः। षण्णां पञ्चरात्राणां मध्ये विश्वजिदतिरात्रः॥ ३ ॥

[उक्तानां षण्णां पञ्चरात्राणां य उत्तरे त्रयस्तेषामावृत्तत्वम्]

**आवृत्तास्तूत्तरे त्रयः ॥ ४ ॥**

आवृत्ताश्च त्रय उत्तरे पञ्चरात्राः। अयमहर्व्यूहः सिद्धो भवति—प्रायणीयः, त्रयः अभिप्लवपञ्चरात्राः, विश्वजिदतिरात्रः, त्रय आवृत्ताः पञ्चरात्राः, उदयनीयः। **संवत्सरसम्मिता इत्याचक्षते** (आश्रौ ११, ३, ३) ॥ ४ ॥

[चतुस्त्रिंशद्रात्राणां कामनाविश्षोऽहर्व्यूहश्च]

**चतुस्त्रिंशद्रात्रं चतूरात्रोपजनमन्नाद्यकामाः ॥ ५ ॥**

---

१-१. नास्ति मूको। *भाष्यं नोपलभ्यते। २. आप्स्यतां मूको।

एकरात्रा (?) यः (?) चतुस्त्रिंशद्रात्रं चतूरात्रोपजनम् अन्नाद्यकामा उपेयुः। तस्याहर्व्यूहः—प्रायणीयः, त्रिकद्रुकाः, त्रयोऽभिप्लवाः, दशरात्रः, महाव्रतम्[1], उदयनीयः॥ ५॥

[पञ्चत्रिंशद्रात्र-षट्त्रिंशद्रात्र-सप्तत्रिंशद्रात्राष्टात्रिंशद्रात्राणां पशुकामत्वम्]

**पशुकामानामुत्तराणि चत्वारि॥ ६॥**

पशुकामानाम् उत्तराणि चत्वारि सत्राणि[2] वेदितव्यानि॥ ६॥

[पञ्चत्रिंशद्रात्रस्याहर्व्यूहः]

**पञ्चत्रिंशद्रात्रः पञ्चरात्रोपजनः॥ ७॥**

पञ्चत्रिंशद्रात्रो यः पञ्चरात्रोपजनः। उपजनप्रयोजनं पूर्ववद् द्रव्यसम्बन्धः[3]। तस्याहर्व्यूहः—प्रायणीयः[4], अभिप्लवपञ्चाहः, त्रयोऽभिप्लवाः, दशरात्रः, उदयनीयः॥ ७॥

[षट्त्रिंशद्रात्रसप्तत्रिंशद्रात्रयोरहर्व्यूहौ]

**षट्त्रिंशद्रात्रे षडह उपजायते। सतन्त्रस्योपजनं वक्ष्यामः। सप्तत्रिंशद्रात्र एकरात्रोपजनः॥ ८॥**

[5]षट्त्रिंशद्रात्रे षड्रात्रोपजनः[5] कामो व्याख्यातः[6]। तेन कामेनेदं सत्रमुपासितव्यम्॥ ८॥

[अष्टात्रिंशद्रात्रस्याहर्व्यूहः]

**अष्टात्रिंशद्रात्रो द्विरात्रोपजनः॥ ९॥**

तस्याहर्योगः—प्रायणीयः, गोआयुषी, चत्वारोऽभिप्लवाः, दशरात्रः, उदयनीयः॥ ९॥

[एकोनचत्वारिंशद्रात्राद्येकोनशतरात्रपर्यन्तानां कामनाविशेषा अहर्व्यूहाश्च]

**एकान्नचत्वारिंशद्रात्रं त्रिरात्रोपजनमनन्तां श्रियमिच्छन्तः। चत्वारिंशद्रात्रं चतूरात्रोपजनं परमायां विराजि प्रतितिष्ठन्तः। एकचत्वारिंशद्रात्रप्रभृतीन्युत्तराणि न्यायेनाष्टाचत्वारिंशद्रात्रात्। पञ्चाशद्रात्रप्रभृतीनि चाऽऽषष्टिरात्रात्। द्विषष्टिरात्रप्रभृतीनि चैकोनशतरात्रात्॥ १०॥**

एकान्नचत्वारिंशद्रात्रं त्रिरात्रोपजनमनन्तां श्रियमिच्छन्त उपेयुः। तस्याहर्योगः—

१. नास्ति मूको। २. सहस्राणि मूको। ३. द्र० आश्रौ ११, १, १२। ४. नास्ति मूको। ५-५. षड्विंशद्रात्रो° मूको। ६. द्र० आश्रौ ११, ४, ६।

प्रायणीयः, त्रिकद्रुकाः, चत्वारोऽभिप्लवाः, दशरात्रः, उदयनीयः। चत्वारिंशद्रात्रं चतूरात्रोपजनं परमायां विराजि प्रतितिष्ठन्त उपेयुः। तस्याहर्योगः—प्रायणीयः, त्रिकद्रुकाः, चत्वारोऽभिप्लवाः, दशरात्रः, व्रतम्, उदयनीयः। एकचत्वारिंशद्रात्रप्रभृतीन्युत्तराणि न्यायेन विहितान्याऽष्टाचत्वारिंशद्रात्राद् अष्टाचत्वारिंशद्रात्राणां[1] न्यायविधानमपदिष्टम्। आकारोऽभिविधौ। [2]उदाहरणान्येकचत्वारिंशद्रात्रस्य न्यायेन[2] [3]विकल्पितानि तस्य[3] अयमहर्योगः—प्रायणीयः, अभिप्लवपञ्चरात्रः, चत्वारोऽभिप्लवाः, दशरात्रः, उदयनीयः। द्वाचत्वारिंशद्रात्रस्याकल्पितस्यायमहर्योगः—प्रायणीयोदयनीयः (? यौ)। त्रिचत्वारिंशद्रात्रस्य न्यायेन कल्पितस्यायमहर्योगः—प्रायणीयः, पञ्चाभिप्लवाः, दशरात्रो, [4]महाव्रतम्, उदयनीयः[4]। अनेन प्रकारेण न्यायक्लृप्तानि वेदितव्यानि। पञ्चाशद्रात्रप्रभृतीनि आ षष्टिरात्रात्। आकारोऽभिविधावेव। पञ्चाशद्रात्रप्रभृतीनि च आ षष्टिरात्रात् न्यायक्लृप्तानि वेदितव्यानि। द्विषष्टिरात्रप्रभृतीनि च आ एकोनशतरात्रात्। द्विषष्टिरात्रप्रभृतीनि च सत्राणि न्यायक्लृप्तानि वेदितव्यानि॥ १०॥

[पूर्वोक्तेषु व्रतवतामुल्लेखः]

**तत्रैकरात्रचतूरात्रोपजनानि व्रतवन्ति॥ ११॥**

[5]तेषु एकचत्वारिंशद्रात्रादिषु यानि[5] एकारात्रोपजनानि सत्राणि, तानि व्रतवन्ति वेदितव्यानि; व्रतं तेषु भवतीत्यर्थः। प्राप्तमेव व्रतम्, किमेतदर्थमुच्यते। आह—नियमार्थम्। अन्यान्यप्यहानि भवन्ति शास्त्रान्तरदृष्टान्यभिजिदादीन्येकान्नपञ्चाशद्रात्रादिष्वेकषष्टिरात्रादिषु च। एकरात्रोपजनानि कानिचिद् भवन्ति चतूरात्रोपजनानि[6] कानिचित्। तेषु व्रतस्य नियमो भवति। इदं दर्शितं भवति। येषु नोक्ताः कामाः, तेष्वध्वर्युप्रत्यया वेदितव्याः॥ ११॥

॥ इत्येकादशे चतुर्थः खण्डः॥

---

१. आ अष्टाचत्वारिंशद्रात्राणां मूको। २-२. °त्वारिंशद्रात्रस्यान्या° मूको। ३-३. विकल्पितस्य मूको। ४-४. नास्ति मूको। ५-५. °शद्रात्रिषु यदि मूको। ६. चतुरहोप° मूको।

## अथैकादशेऽध्याये पञ्चमः खण्डः

[एकोनपञ्चाशद्रात्राणां भेदास्तत्र च प्रथमस्य कामविशेषः]

**सप्तैकान्नपञ्चाशद्रात्राणि विपाप्मना वर्त्स्यन्तः प्रथमम् ॥ १ ॥**

सप्तैकान्नपञ्चाशद्रात्राण्यधिकृतानि वेदितव्यानि। तेषां विपाप्मना वर्त्स्यन्तः प्रथममेकान्नपञ्चाशद्रात्रमुपेयुः। विना पापेन वर्तितुमिच्छन्त इत्यर्थः॥ १ ॥

[प्रथमस्याहर्व्यूहः]

**अतिरात्रस्त्रीणि त्रिवृन्त्यहान्यतिरात्रो दशपञ्चदशान्यतिरात्रो द्वादश-सप्तदशान्यतिरात्रः पृष्ठ्योऽतिरात्रो द्वादशैकविंशान्यतिरात्रः ॥ २ ॥**

तस्य प्रथमस्याहर्योगः—अतिरात्रः त्रीणि पृष्ठ्यस्तोमयुक्तान्यहानि[1] भवन्ति। पृष्ठ्यस्य[2] प्रथममहः तिष्ठत्व (? त्रिपृष्ठ्यत्वेन) प्रयोक्तव्यमित्यर्थः। अतिस्तृणा (? रात्राणां) कलृप्ती (? प्ता)-नामन्यतरा (? र)-त् सत्र (? त्रं) कर्त्तव्या (? व्यं), स्तोमैरेव तत्राव्या (? प्य)-वसानं भवति अन्यस्य बाध (? कार्य) स्याभावात्, अतिरात्र- (? त्रे) दशम च स्तोमा (? दशपञ्चदशस्तोमा)-न्यहानि भवन्ति। अतिरात्रः पृष्ठाः (? ष्ठ्यः) अस्मिन् स्थाने भवन्ति (? ति) अतिरात्रो द्वादशैकविंशस्तोमान्यहानि भवन्ति॥ २ ॥

[पूर्वोक्तत्रिवृत्सु त्रयाणामह्नां संस्थानिर्देशः]

**त्रिवृतां प्रथमोऽग्निष्टोमः षोडश्युत्तमः पञ्चदशानामुक्थ्या इतरे विधृतय इत्याचक्षते ॥ ३ ॥**

अतिरात्रस्त्रिवृत्स्तोमयुक्तानामह्नां[3] प्रथममहः अग्निष्टोमसंस्थं भवति। पञ्चदशस्तोमानामह्नाम् उत्तममहः[4] षोडशिसंस्थं भवति। इतराण्यहानि परिशिष्टानि भवन्ति। विहृ (? धृ)-तय [5]एता रात्रय[5] इति[6] आचक्षते सर्वे याज्ञिकाः॥ ३ ॥

---

१. **पृष्ठस्तोम°** मूको। २. **पृष्ठस्य** मूको। ३. **°वृत्स्तोमः युक्तानाम्** मूको। ४. नास्ति मूको। ५-५. **एतास्त्रयः** मूको। ६. नास्ति मूको।

[द्वितीयस्यैकोनपञ्चाशद्रात्रस्य कामनाविशेषः]

**यमातिरात्रं यमां द्विगुणामिव श्रियमिच्छन्तः॥ ४॥**

यमातिरात्रं नाम द्वितीयमेकान्नपञ्चाशद्रात्रं तद् यमां द्विगुणामिव श्रियमिच्छन्त उपेयुः॥ ४॥

[तस्याहर्व्यूहः]

**द्वावभिप्लवौ गोआयुषी अतिरात्रौ द्वावभिप्लवावभिजिद्विश्वजितावतिरात्रावेकोऽभिप्लवः सर्वस्तोमनवसप्तदशावतिरात्रौ महाव्रतम्॥ ५॥**

तस्याहर्योगः—प्रायणीयो, द्वावभिप्लवौ, गोआयुषी अतिरात्रौ भवतः, पुनरपि द्वावभिप्लवौ, अभिजिद्विश्वजितावतिरात्रौ भवतः, एकोऽभिप्लवः, सर्वस्तोमः नवसप्तदशश्चैतावतिरात्रौ भवतः, दशरात्रः, महाव्रतम्[1], उदयनीयः॥ ५॥

[तृतीयस्यैकोनपञ्चाशद्रात्रस्य कामनाविशेषोऽहर्व्यूहश्च]

**स्वानां श्रैष्ठ्यकामास्तृतीयम्। चतुर्णां पृष्ठ्याह्नामेकैकं नवकृत्वः॥ ६॥**

स्वानां सजातानामित्यर्थः। श्रैष्ठ्यकामाः श्रैष्ठ्यं ये कामयन्ते, त इदं तृतीयमेकान्नपञ्चाशद्रात्रं सत्रमुपेयुः। चतुर्णां पृष्ठ्याह्नाम् एकैकं नवकृत्वः प्रयोक्तव्यम्। अयं च विशेषो भवति॥ ६॥

[अहर्व्यूहे विशेषः]

**नववर्गाणां प्रथमषष्ठसप्तमोत्तमान्यहान्यग्निष्टोमा उक्थ्या इतरे॥ ७॥**

**महाव्रतम्॥ ८॥**

प्रथमं षष्ठं सप्तममुत्तमं चैतानि त्रीण्यहानि नववर्गाणामग्निष्टोमसंस्थानि वेदितव्यानि। इतराण्यहान्युक्थ्यसंस्थानि भवन्ति। अयमहर्व्यूहः साधितो भवति—प्रायणीयः, अथ चतुर्णां पृष्ठ्याह्नामेकैकस्य नवकृत्वः प्रयोगो भवति, दशरात्रः, महाव्रतम्[2], उदयनीयः॥ ७-८॥

[पूर्वोक्तानां रात्रीणां सवितुः ककुभ इति संज्ञा]

**सवितुः ककुभ इत्याचक्षते॥ ९॥**

सवितुः ककुभ इत्येता रात्रय आचक्षते॥ ९॥

॥ इत्येकादशे पञ्चमः खण्डः॥

---

१. व्रतमु° मूको। २. व्रतमुद° मूको।

## अथैकादशेऽध्याये षष्ठः खण्डः

[सप्तसु एकान्नपञ्चाशद्रात्रेषु चतुर्थपञ्चमषष्ठानामहर्व्यूहः]

**त्रयाणामुत्तरेषां न्यायक्लृप्ता अभिप्लवाः॥ १॥**

त्रयाणामुत्तरेषां विधिर्वेदितव्यः। त्रीण्येकान्नपञ्चाशद्रात्राणि साधितानि, त्रीण्यथ वक्ष्यन्ते। प्रथमस्य उत्तरेषां त्रयाणां न्यायक्लृप्ताः षडभिप्लवा[1] वेदितव्याः। न्यायक्लृप्ता इतीदं किमर्थम्। उत्तरेषामभिप्लवा इत्येतावदेव वक्तव्यम्। आह—न्यायक्लृप्तवचनं वक्तव्यमेव। अनुच्यमाने सप्तापि [2]स्युरिति। इष्यन्ते च षडेवाभिप्लवाः[2], कथं स्युरिति। [3]प्रायणीयोदयनीययोः दशरात्रस्य च संपरिग्रहः, ततो[3] भवति। उत्तरार्थं चाभिप्लवग्रहणं क्रियते। अन्यथाऽन्तरेणाभिप्लवग्रहणं शस्यसिद्धिर्भवत्येव[4]। एकेनाह्ना प्रयोजनम्। तत्रायमहर्विशेषो वेदितव्यः॥ १॥

[चतुर्थस्यैकोनपञ्चाशद्रात्रस्य चतुर्थादभिप्लवादूर्ध्वं सर्वस्तोमोऽतिरात्रः]

**प्रथमस्य तूर्ध्वं चतुर्थात् सर्वस्तोमोऽतिरात्रः॥ २॥**

प्रथमस्य त्वभिप्लवाद् ऊर्ध्वं चतुर्थादह्नः सर्वस्तोमोऽतिरात्रो भवति। अथ पञ्चाभिप्लवाः, अनन्तरं दशरात्र उदयनीयः॥ २॥

[उपसत्कालेऽनुसवनमञ्जनाभ्यञ्जनयोर्विधानम्]

**उपसत्सु गार्हपत्ये गुग्गुलुसुगन्धितेजनपैतुदारुभिः पृथक्सर्पींषि विपच्यानुसवनं सन्नेषु नाराशंसेष्वाञ्जीरन्नभ्यञ्जीरंश्च॥ ३॥**

अयं च विशेषो भवति प्रथममेषां त्रयाणां उपसत्सु यस्मिन् कस्मिंश्चिदहनि

---

१. सप्ताभि° मूको। २-२. अष्टावपि स्यादिति, इष्यते षडहो वाभिप्लवाः मूको। ३-३. दशरात्रस्य च संपरिग्रहः अतो मूको। ४. द्र० आश्रौ ११, १, १४।

गार्हपत्ये गुग्गुलुसुगन्धितेजनपैतुदारुभिस्त्रिभिर्द्रव्यैः पृथक्सर्पींषि विपच्यानुसवनं सन्नेषु नाराशंसेषु द्विनाराशंसं प्रातःसवनं माध्यंदिनम्, तेषु प्रथमेषु नाराशंसेषु मन्नेष्वञ्जनमभ्यञ्जनं कर्तव्यम्॥ ३॥

[अस्य सूत्रस्य कामनाविशेषः]

**ये वर्चसा न भायुर्ये वाऽऽत्मानं नैव जानीरंस्त एता उपेयुः॥ ४॥**

ये वर्चसा न भायुर्विद्यमानवर्चसा न भ्राजन्ते[1], त इदं सत्रमुपेयुः। ये वाऽऽत्मानं नैव जानीरन्न व्यवायं[2] (? यन्) ये कुलीना मति (? स्ते [उभये]) त्विदं सत्रमुपेयुः॥ ४॥

[पूर्वोक्तरात्रीणामाञ्जनाभ्यञ्जनीयेति संज्ञा]

**आञ्जनाभ्यञ्जनीया इत्याचक्षते॥ ५॥**

आञ्जनाभ्यञ्जनीया एता रात्रय इत्याचक्षते[3] **सप्तैकान्नपञ्चाशद्रात्राणि** (आश्रौ ११, ५, १) एवमादि ब्राह्मणमाकृष्टं तदुक्तम्। चतुर्थमेकान्नपञ्चाश-द्रात्रमधिकृतं वेदितव्यम्॥ ५॥

[आञ्जनाभ्यञ्जनरहितानामेतासां रात्रीणां प्रतिष्ठाकामनयोपयोगः]

**एता एव प्रतिष्ठाकामानामाञ्जनाभ्यञ्जनावर्जम्॥ ६॥**

[4]एता एव रात्रीरधिकृताः[4] प्रतिष्ठाकामाः उपेयुः। अयं च विशेषो वेदितव्यः, आञ्जनाभ्यञ्जनवर्जम् आञ्जनाभ्यञ्जने वर्जयित्वा अन्यत् सर्वं भवति॥ ६॥

[अस्मिन् काम्ये सत्रे सर्वस्तोमस्थाने महाव्रतम्]

**एतासामेव सर्वस्तोमस्थाने महाव्रतम्॥ ७॥**

अयं च विशेषो भवति। एतासामेव रात्रीणां पूर्वसूत्रेऽधिकृतानां सर्वस्तोमस्थाने महाव्रतं कर्तव्यम्। **ऊर्ध्वं चतुर्थात्** (आश्रौ ११, ६, २) **अह्न आभिप्लविकात् प्रथमे** प्रथमसर्वस्तोमोऽपदिष्टः[5], तस्मिन् स्थाने व्रतं कर्तव्यम्। अयमहर्योगः—प्रायणीयाः, अभिप्लवचतुर्थादह्नः[6] ऊर्ध्वं व्रतं भवति। [7]प्रथमे पञ्चाभिप्लवाः[7] षडहाः, दशरात्राः, उदयनीयाः॥ ७॥

[अन्याः प्रजा अतिरिच्य बुभूषद्भिरैन्द्रसत्रस्यानुष्ठानम्]

**ऐन्द्रमत्यन्याः प्रजा बुभूषन्तः॥ ८॥**

---

१. स्त्रजंते मूको। २. व्रानीयान्नव्यवायं मूको। ३. श्रुतिरागते मूको। ४-४. एतावन्त एव रत्रिमधिकृताः मूको। ५. द्र० आश्रौ ११, ६, २। ६. °प्लवश्चतु° मूको। ७-७. प्रथमपञ्चा° मूको।

ऐन्द्रं नाम षष्ठमेकान्नपञ्चाशद्रात्रम्। येऽतीत्य अन्याः प्रजा भवितुमिच्छन्त्यतिरिक्तधनेन वा विद्यया वा त इदं सत्रमुपेयुः॥ ८॥

[तत्राहर्व्यूहविशेषोक्तिः]

**एतासामेव सर्वस्तोममुद्धृत्य यथास्थानं महाव्रतम्॥ ९॥**

तस्य शस्यविधिः—एतासां चतुर्थमेकान्नपञ्चाशद्रात्रमपदिश्यते। तत्र सर्वस्तोमोऽपदिष्टः, तमुद्धृत्य तत्स्थाने[1] महाव्रतं भवति। ऊर्ध्वं दशरात्रादेव शस्यमिह भवति चतुर्थ एकान्नपञ्चाशद्रात्रे यद् विहितम्॥ ९॥

[संवत्सरसत्रं कर्तुमिच्छन्तः सप्तमं कुर्युः]

**संवत्सरकामानाप्स्यन्त उत्तमम्॥ १०॥**

अथ[2] संवत्सरकामान् ये प्रार्थयन्ते। अविशेषवचने गवामयनकामान्[3], तद्[4] हि प्रथमः संवत्सरः, त उत्तमम् एकान्नपञ्चाशद्रात्रमुपेयुः॥ १०॥

[सप्तमस्यैकोनपञ्चाशद्रात्रस्याहर्व्यूहः]

**अतिरात्रश्चतुर्विंशं त्रयोऽभिप्लवा नवरात्रोऽभिप्लवौ गोआयुषी दशरात्रो व्रतमतिरात्रः सर्वं प्रत्यक्षोक्तम्। संवत्सरसंमिता इत्याचक्षते॥ ११॥**

तस्य शस्यविधिः— अतिरात्रः, चतुर्विंशम्, त्रयोऽभिप्लवाः, नवरात्रः, अभिप्लवः, गोआयुषी, [5]दशरात्रः, व्रतम्, अतिरात्रः। सर्वं प्रत्यक्षोक्तम्[5]। संवत्सरसंमिता इत्याचक्षते। ब्राह्मणमेवेदं ताण्ड्यमादिष्टम्[6]॥ ११॥

[एकषष्टिरात्रस्य कामनाविशेषोऽहर्व्यूहश्च]

**एकषष्टिरात्रं प्रतिष्ठाकामा एतासामेव पृष्ठ्यावभितो नवरात्रम्॥ १२॥**

एकषष्टिरात्रं प्रतिष्ठाकामा उपेयुः। तस्य शस्यम्—एतासामेव पूर्व[7]निर्दिष्टानामेव रात्रीणाम्[7]। पृष्ठ्यौ नवरात्रमभितो भवतः॥ १२॥

[तत्र पृष्ठ्ययोर्व्यवस्थाविशेषः]

**तयोरावृत्त उत्तरः॥ १३॥**

तयोश्च पृष्ठ्ययोरुत्तरः पृष्ठ्य आवृत्तो भवति। अयमहर्योगः साधितो भवति—

---

१. श्चेतु स्थाने मूको। २. अयः मूको। ३. °मयने कामान् मूको। ४. स मूको। ५-५. नास्ति मूको। ६. द्र० तांब्रा २४, १४, १। ७-७. °नामन्तरिक्षाणां मूको।

अतिरात्रः, चतुर्विंशं, त्रयोऽभिप्लवाः, पृष्ठ्यः षडहः, नवरात्रः, आवृत्तः पृष्ठ्यः, अभिप्लवः, गोआयुषी, दशरात्रः, व्रतम्, अतिरात्रः॥ १३ ॥

[शतरात्रस्य कामनाविशेषोऽहर्व्यूहश्च]

**शतरात्रमायुष्कामाश्चतुर्दशाभिप्लवाश्चतुरहोपजनाः ॥ १४ ॥**

शतरात्रमायुष्कामा उपेयुः। तस्य शस्यं चतुर्दशाभिप्लवाश्चतुरहोपजनाः[१]। चतुरहोपजनवचने पूर्वं प्रयोजनम्[२]। न्यायक्लृप्ता एवाभिप्लवा भवन्ति। अयमहर्योगः साधितो भवति—प्रायणीयः, त्रिकद्रुकाः, चतुर्दशाभिप्लवाः, दशरात्रः[३], महाव्रतम्, उदयनीयः[३] ॥ १४ ॥

[रात्रिसत्रोपसंहारः]

**इति रात्रिसत्राणि ॥ १५ ॥**

इत्येवंप्रकाराणि रात्रिसत्राणि वेदितव्यानि। रात्रिभिरेव [४]परिसमाप्यमानत्वाद् अन्यान्यपि रात्रिसत्राणि[४], शास्त्रान्तरे द्रष्टव्यानि ॥ १५ ॥

॥ इत्येकादशे षष्ठः खण्डः ॥

---

१. °र्दशाभिप्लवो वा मूको। २. द्र० आश्रौ ११, १, ११। ३-३. °रात्रमुदय° मूको। ४-४. परिसत्रमाणमन्यरात्राणि मूको।

## अथैकादशेऽध्याये सप्तमः खण्डः

[सर्वकामनया गवामयनस्यानुष्ठानम्]

**अथ गवामयनं सर्वकामाः॥ १॥**

अथ गवामयनं सर्वकामा उपेयुः। अथेत्ययमथशब्दो विशेषप्रक्रियायामधिकारार्थो गवामयनमधिकरोति। तत् सर्वकामा उपेयुः॥ १॥

[गवामयनेऽहर्योगः]

**प्रायणीयचतुर्विंशे उपेत्य चतुरभिप्लवान् पृष्ठ्यपञ्चमान् पञ्च मासानुपयन्ति॥ २॥**

तस्याहर्योगः—प्रायणीयचतुर्विंशे उपेत्य चतुरभिप्लवान् पृष्ठ्यपञ्चमान् पञ्च मासान् उपयन्ति। चत्वारः पूर्वमभिप्लवा भवन्ति। पृष्ठ्यश्च पञ्चमो भवति। अनेन प्रकारेण पञ्च मासानुपयन्ति। प्रायणीयचतुर्विंशे पूर्वमुपेत्य कृत्वेत्यर्थः।

[1]'अत्र सूत्र उपेत्य'[1] इतीदं न वक्तव्यमन्तरेणापि सिद्धिः। इदमस्य प्रयोजनम्। प्रायणीयचतुर्विंशयोरिहैव कथं प्रयोगः स्यादन्यथा **आद्याभ्यां पूर्यतेऽहोभ्याम्** (आश्रौ ११, ७, ५) इति षष्ठे मासे संख्यानं तु[2] वक्ष्यति। तेन षष्ठ एव मासे प्रयोगः स्यादिति ॥ २॥

[षष्ठस्य मासस्य संभरणम्]

**अथ षष्ठं संभरन्ति॥ ३॥**

अतो यत्[3] पूर्वमासीदिति करणे पञ्च मासान् उपेत्य अथानन्तरं षष्ठं मासं संभरन्ति[4]॥ ३॥

---

१-१. **अत अत्रमुपे**° मूको। २. **न** मूको। ३. **यतः** मूको। ४. **संभवन्ति** मूको।

[षष्ठस्य मासस्य संभरणाय नियमः]

**त्रीनभिप्लवान् पृष्ठ्यमभिजितं स्वरसाम्न इति ॥ ४ ॥**

त्रीनभिप्लवान् पृष्ठ्यमभिजितं स्वरसाम्न इति, द्वे अहनी अत्र न विद्येते ॥ ४ ॥

[आद्याभ्यां द्वाभ्यामहोभ्यां मासपूर्तिः]

**आद्याभ्यां पूर्यतेऽहोभ्याम् ॥ ५ ॥**

तत्राद्याभ्यामहोभ्यामयं षष्ठो मासः पूर्यते ॥ ५ ॥

[पूर्वपक्षस्याहर्गणनोपसंहारः]

**इति नु पूर्वं पक्षः ॥ ६ ॥**

इत्येवंप्रकारं पूर्वं पक्षः वेदितव्यम्। नुकार[1] उत्तरविवक्षया क्रियते। **आद्याभ्यां पूर्यतेऽहोभ्याम्** (आश्रौ ११, ७, ५) इति, इदं [न ?] वक्तव्यमवश्यमेवाव (त्र ?) अहनी स (अ ?)-तिरिक्त (क्ते ?) इह पूरणं करिष्य [? तः], त्रिंशस्तोमा सा प्रसिद्धा। इदं कि [? ल] तस्य प्रयोजनं शास्त्रान्तरे द्वात्रिंशः प्रथमो मासः, द्वात्रिंश उत्तमः, षष्ठसप्तमौ च मासौ [2]अष्टाविंशिनौ, एवं[2] कौषीतकिनां[3] विहितम्। आथर्वणिकानामप्ययं किल पक्षः प्रदर्शितो भवति। अयं चत्वारिंशत्रिंशमासि पक्षो न कर्त्तव्यः साधितो भवति।

अन्यथा शास्त्रान्तरे दृष्टत्वादिह क्रियैव स्यादुत्तरेष्व (? ष्विष्य-)ते, इति-शब्द उत्तरविवक्षया न भवति। अन्यथा शास्त्रान्तरे दृष्टत्वादिह क्रियैव पी (? स्यादि)-ति **इति नु गतयः** (आश्रौ १२, ६, २५) यथा नाभि (?) **इति न्वेकसंभार्यमुत्तरं पक्षः** (आश्रौ ११, ७, १३) एवमादिषु ॥ ६ ॥

[उभयपक्षनिरपेक्षस्य विषुवद्दिवसस्योल्लेखः]

**अथ विषुवानेकविंशः* ॥ ७ ॥**

**न पूर्वस्य पक्षसो नोत्तरस्य* ॥ ८ ॥**

[उत्तरपक्षोपक्रमः]

**अथोत्तरं पक्षः *॥ ९ ॥**

[उत्तरपक्षस्याहर्योगव्यवस्था]

**आवृत्ताः स्वरसामानः षडहश्चोत्तरस्य पक्षसः* ॥ १० ॥**

---

१. अनुका मूको। २-२. अष्टाविंशतिना एवं मूको। द्र. शांश्रौ १३, २५, ५। ३. कौषीतकीनां मूको। * भाष्यं नोपलभ्यते।

[सप्तमाद्येकादशमासपर्यन्तमहर्योगव्यवस्था]

**स्वरसाम्नो विश्वजितं पृष्ठं त्रीनभिप्लवानिति सप्तमं द्विरात्रोनं कृत्वाऽथ पृष्ठ्यमुखांश्चतुरभिप्लवांश्चतुरो मासानुपयन्ति* ॥ ११ ॥**

[उत्तमस्य मासस्य संभरणम्]

**अथोत्तमं संभरन्ति। त्रीनभिप्लवान् गोआयुषी दशरात्रं व्रतोदयनीयाभ्यां सप्तमः पूर्यते* ॥ १२ ॥**

[एकसंभार्यस्योत्तरपक्षस्योपसंहारः]

**इति न्वेकसंभार्यमुत्तरं पक्षः* ॥ १३ ॥**

[द्विसंभार्यपक्षोपक्रमः]

**अथ द्विसंभार्यम् ॥ १४ ॥**

[द्विसंभार्यपक्षे नियमः]

**व्रतोदयनीये एवोत्तमस्य, गोआयुषी सप्तमस्य* ॥ १५ ॥**

[तत्र विकल्पः]

**गोआयुषी वा विहरेयुः* ॥ १६ ॥**

[विश्वजितोऽनन्तरं गोर्व्यवस्था]

**गां विश्वजितोऽनन्तरम्* ॥ १७ ॥**

[दशरात्रात् पूर्वमायुषोऽनुष्ठानम्]

**आयुषं पूर्वं दशरात्रात् ॥ १८ ॥**

अस्मिन् स्थाने विषुवान् भवति, स च प्राप्तोऽस्मिन् काले भवति। एकविंशश्च स्तोमः अस्य, विषुवान् भवति, नवमश्च भवति। नवरात्रौ मध्ये भवतः। असौ नवरात्रविभक्त इहापदिष्टः, द्वयोरपि पक्षयोरेकविंशश्च अयं विषुवानेकविंशश्च भवति संख्यातेनाह्ना[1], एवं च श्रुतिरपि भवति, मध्य एवमेकविंशः तेनायमन्यपक्षः साधितो भवति विषुवतः। अभिजित्, अथ पृष्ठ्यः, न स्वरसामान इति। अथ तत्रेदमारभ्यते- आयुषं पूर्वं दशरात्रादुत्तरपक्षे [? क्षि]-पेदित्यर्थः। इदमेव ज्ञापकं यथा उत्तममासाद्

*भाष्यं नोपलभ्यते। १. संख्यानेनाह्ना मूको।

गोआयुषी उद्धृत्य स [ ? प्तम] -मासे प्रयोग: कृत इति। दशरात्रात्तु[1] पूर्वमायुष:स्थानं[1] ब्रुवन् [2]गोआयुषो: सहभावाभावं[2] दर्शयति। गां विश्वजिति ( ? त:) अनन्तरे सप्तमे मासे कुर्यादनेन प्रकारेण गोआयुषी [ ? इति] पक्षो वेदितव्य:॥ १७-१८॥

[उत्तरे पक्षसि विकल्प:]

**अपि वोर्ध्वं विश्वजित: सप्तमं सवनमासं कृत्वोद्धरेयुर्गोआयुषी दशरात्रं च॥ १९॥**

अथवाऽयमन्य: प्रकारो वेदितव्य उत्तरस्य[3] पक्षस्य। अपि वा ऊर्ध्वं विश्वजित: सप्तमं सवनमासं कृत्वा उद्धरेयुर्गोआयुषी दशरात्रं च। विषुवतोऽनन्तराणि चत्वार्यहानि परिशिष्टानि[4]। सप्तमे मासे पृष्ठ्यं त्रींश्चाभिप्लवानुद्धृत्य सप्तमं सवनमासं करोति। उभयसामा सवनमासो भवति। तेनात्र पृष्ठ्यमुख: सवनमास:[5] कर्त्तव्य:। संवत्सरस्य स्थाने सवनमासं कृत्वा सप्तममुद्धरेयु: गोआयुषी दशरात्रं च। गोआयुषोश्च दशरात्रस्योद्धार: कर्त्तव्य:। उत्तमान् मासान् [उपेयु:]। दशरात्रोपजनो[7] मास उत्तम:। विषुवतोऽनन्तरैश्चतुर्भिरहोभिस्तत्रैवावस्थित उत्तम: पूरयितव्य इत्यर्थ:। अथात्र[8] षोडशाहानि न सन्ति तत्र **षडहार्थेऽभिप्लव: षडह:** (आश्रौ ११, १, १३) इति कृत्वा षडहस्य आवाप:॥ १९॥

[विकल्पान्तरकथनम्]

**अपि वोत्तरस्य पक्षसोऽहान्येवाऽऽवर्तेरन्ननुलोमा: षडहा: स्यु षडहा वाऽऽवर्तेरन्ननुलोमान्यहानि॥ २०॥**

अथवाऽयमन्य:[9] पक्ष:। अपि वोत्तरस्य पक्षस:[10] अहान्येवावर्तेरन् अनुलोमा: षडहा: स्यु:। अहानि[11] भवन्ति[11]। पञ्चमं द्वितीये चतुर्थं च तृतीये, अनेन प्रकारेण अहरावृत्तिर्वेदितव्या[12] षडहाश्चानुलोमा एव भवन्ति। यथैव पूर्वपक्षसि[13] विहितास्तथैव[13] भवन्तीत्यर्थ:। अथवाऽवस्थितान्येवाहानि तत्र तत्रापदिष्टानि। अथवाऽयमन्य: कल्प:—षडहा एवावर्तन्ते। अहान्यनुलोमान्येव भवन्ति। यथाविहितानीत्यर्थ:। आवर्तन्ते षडहा:। पृष्ठ्यमुखा एवेत्यर्थ:॥ २०॥

[गवामयनोपसंहार:]

**इति गवामयनम्॥ २१॥**

---

१-१. °मुपूर्वप्राप्तस्थानं मूको। २-२. नामायुषोऽभावं मूको। ३. उत्तस्य मूको। ४. परिशिष्टा मूको। ५-५. पृष्ठ्यमुखं चतुरभिप्लवो मूको। ६. सवन: मसि: मूको। ७. जनो मूको। ८. अथानुषो° मूको। ९. °य इति मन्य: मूको। १०. पक्षमास: मूको। ११-११. अहनि भवति मूको। १२. अहरहावृ° मूको। १३-१३. °पक्षसहिता तथैव मूको।

इत्यनुवर्णनायाम्, इत्येवंप्रकारं गवामयनं वेदितव्यम्। अन्येऽपि प्रकारा गवामयनस्य विद्यन्ते छन्दोगविहिताः। इति गवामयनमिदं न वक्तव्यम्। सर्वे षडहा अभिप्लवाः स्युरित्युक्त्वाऽथ '**इति गवामयनम्**' एवं कर्त्तव्यं, कस्माद् गवामयनस्य पूर्वनिपातनं क्रियते। इदं दर्शयति—एवमन्तमेव गवामयनमिति प्रथमस्यैव[1] प्रकृतिर्भवतीति नोत्तरस्य पक्षस्य, अतः पूर्वनिपातः॥ २१॥

[षडहानामभिप्लवत्वविकल्पः]

**सर्वे वा षडहा अभिप्लवाः स्युरभिप्लवाः स्युः॥ २२॥**

अथवाऽयमन्यः कल्पः—सर्वे वा षडहा अभिप्लवाः स्युरिति। ये[2] षडहा अस्मिन् गवामयनेऽपदिष्टास्तेऽभिप्लवा एव भवन्ति। अध्यायपरिसमाप्तौ द्विर्वचनम्। अस्य च सप्तमस्य च कल्पस्य चादित्यानामियं संज्ञा वेदितव्या स्तुतौ दृष्टत्वात्[3]। **सर्वे अभिप्लवाः षडहा आक्ष्यन्त्यन्यानि**[4] (ऐब्रा ४, १७) इयं श्रुतिः॥ २२॥

॥ इत्येकादशे सप्तमः खण्डः॥

इत्युदाहरणवहुलायामेकादशो[4]ऽध्यायः समाप्तः॥ ११॥

---

१. **दशमस्यैव** मूको। २. नास्ति मूको। ३. द्र. ऐब्रा ४, १७। ४. **इत्युदाहरणं दुलायामेकादशमोऽध्यायः** मूको। ४. **वक्ष्य**° मूको।

# अथ द्वादशोऽध्यायः

## [ तत्र प्रथमः खण्डः ]

[आदित्यानामयनादिसत्राणि]

**गवामयनेनाऽऽदित्यानामयनं व्याख्यातम्॥ १॥**

गवामयनेनादित्यानामयनसंज्ञाकः संवत्सरश्च[1] व्याख्यातः। अनेनादित्यानामयनं नाम सांवत्सरिकं सत्रं वेदितव्यम्। पञ्च वा पदानि त्रीणि वा ये [ ? विकल्पाः] गवामयने विद्यन्ते ते आदित्यानामयनेऽपि कर्तव्या इत्यर्थः। अत्र चोदयन्ति—कालातिदेशो न कर्तव्यः। कस्मात्। आह, गवामयनस्य सर्वत्रैव सिद्धत्वात्। कुत एतत्। सर्वत्रैव [2]गवामयनं प्रकृतिरित्युच्यते[2]। शास्त्रान्तरे प्रकृतिवचनमस्ति[3] गवामयनं संवत्सरं[4] सत्राणाम्। नैयायिकानामयं[4] सिद्धान्तः। एवं गवामयनं संवत्सरसत्राणां प्रकृतिः। अयमपि चाचार्यः य (? त) मेवार्थं दर्शयति।

पदद्वयं वक्ष्यति **व्रतं विषुवत्स्थाने** (आश्रौ १२, ३, ४) इति। **ज्योतिर्द्वादशीस्तोमो विषुवत्स्थाने**[5] (आश्रौ १२, ५, ४), **प्रकाशकामा उपेयुः** (आश्रौ १२, ५, ५) इदं ब्रुवन् गवामयनं सर्वं[6] प्राप्तं दर्शयति। तत्रैतत् स्यात्। कथं स्थानमिदं स्यादिति व्रतादीनामेवार्थानि (?) वचनानि, तच्च न, अथ व्रतमेवावक्ष्यद् यदि स्थानार्थमभीष्टं[7] स्यादित्याह **उक्तो गवामयनेन** (आश्रौ १२, ५, १२) इति, **गवामयनशस्याः** (आश्रौ १२, ५, १३) इति च। एवमादीनि वचनान्यतिरिच्यन्ते। तेषां परिहारानुत्तरत्र वक्ष्यामः। अयमस्य परिहारः। अतिदेशकरणे[8] कर्मान्तरं दर्शयति—गवामयनवदादित्यानामयनमन्यथा[9] आदित्यानामयनं कर्मान्तरं न[10] गम्येत। तस्मात्

---

१. संवत्सरस्य मूको। २-२. गवामयनप्रच्छभिरि° मूको। ३. व्यतिवच° मूको। ४-४. संवत्सरं सत्राणां नैयामिकानां° मूको। ५. नास्ति मूको। ६. सर्वे मूको। ७. °भीष्टः मूको। ८. आदिश्रेयक° मूको। ९. गवामयनादादित्याग्रसमनाथा मूको। १०. नास्ति मूको।

पूर्वमादित्यानामयनसंज्ञकाद्[1] गवामयनमुपदिष्टम्। तदेवं गम्येत, अतः अतिदेश-वचनम्[2]।

एवमपि व्याख्यातवचनं किमर्थम्। सामिधेन्यतिदेशवत् सिद्धे व्याख्यानं (? तं) वचनं किमर्थम्, एवमर्थं क्रियते कथं सर्वे विकल्पाः, अतिदेशः स्यादिति। उत्तमं विकल्पं वर्जयित्वा चतुर्थश्च कल्प आदिश्यते, पूर्वस्मिन्नवकृति (?) प्राप्ते अर्थ विशेषोऽपदिश्यते॥ १॥

[अभिप्लवानां साम्नां निरूपणम्]

**सर्वे त्वभिप्लवास्त्रिवृत्पञ्चदशाः॥ २॥**

सर्वेऽभिप्लवा अतिदेशप्राप्तास्त्रिवृत्स्तोमयुक्ताः पञ्चदशस्तोमयुक्ताश्च भवन्ति। तत्र सन्देहः—किमयं स्तोमविधिः। पूर्वे षळहे त्रिवृत्। द्वितीये पञ्चदशः, तृतीये त्रिवृदित्यनेन प्रकारेण भवति, आहोस्वित्पूर्वे त्र्यहे षळहस्य त्रिवृदुत्तरे पञ्चदश इत्यनेन प्रकारेणेत्येवमादयः संदेहा भवन्ति।

[3]तत्र ब्रूमः[3]। अनेन प्रकारेण स्तोमा अभिप्लवेषु भवन्ति। आह। कुत एतत्, सर्वशब्दोपदेशात्। सर्वेषु षळहेषु त्रिवृच्च पञ्चदशश्च एतौ स्तोतव्यौ च-(? ज)-पितव्यौ। यदा चैकस्मिन् षळहे त्रिद (त्रिवृत् ?) कृतो भवति, अन्यस्मिन् पञ्चदशः, तदा सर्वेष्वभिप्लवेष्वेतौ स्तोमौ भवतः। अतः सर्वशब्दः क्रियते॥ २॥

अयं चान्यो विशेषः—

[षष्ठसप्तमद्वादशमासेभ्योऽन्येषां मासानामहर्व्यवस्था]

**मासाश्च पृष्ठ्यमध्यमा नव षष्ठसप्तमोत्तमान् वर्जयित्वा॥ ३॥**

मासाश्च पृष्ठ्यमध्यमा नव[4] भवन्ति। किमविशेषेण ये केचिद्,[5] न [5]वोत वा नियमेन। आह[4], षष्ठसप्तमोत्तमान् वर्जयित्वा षष्ठादीन् मासान् [6]मुक्त्वा त्रीन् अन्ये नव[6] मासा पृष्ठ्यमध्यमा भवन्ति अन्यत्र नवेतीदं न वक्तव्यं[7] द्वादशानां मासानां [8]त्रिष्वपदिष्टेषु तथैव[8] परिशिष्टा भवन्तीति, नवग्रहणमपार्थकम्। उच्यते। अपार्थकं च (? न) यदि [नव ?] ग्रहणं न क्रियते, [तदा ?] दशानां पृष्ठ्यमध्यत्वं पक्षेण प्रयुज्येते नित्य न्वेव (? ति नव) वचनं ष्टयते (? पृच्छ्यते) कथं, दशानामपि प्रवृत्तिः स्यात्। आह—अस्मिन् पक्षे **अपि वोद्ध्वं विश्वजितः सप्तमं सवनमासं कृत्वोद्धरे-युर्गोआयुषी दशरात्रं च** (आश्रौ ११, ७, १८) इत्यस्मिन् पक्षे सप्तमस्यापि पृष्ठ्यं[9]

---

१. °यनसंज्ञकं मूको। २. आदिदेश° मूको। ३-३. अनुब्रूमः मूको। ४. नास्ति मूको। ५-५. वीतिमा मूको। ६-६. युक्तात् वीनन्येव मूको। ७. वक्तर्थ मूको। ८-८. °परिशिष्टेषु तथैव मूको। ९. पृष्ठं मूको।

मध्यत्वं प्राप्नोति। प्रतिषेधश्चायमन्त्येषु कृतार्थः। अतो नवग्रहणं क्रियते। अयं च पक्षोऽतिदेशेनाभीष्ट आचार्यस्य। तस्मात् षष्ठादीनां वर्जनं क्रियते॥ ३॥

अयं चान्यो[१] विशेषो भवति—

[अभिजिद्विश्वजितोः स्थाने बृहस्पतिसवेन्द्रस्तुतोरादेशः]

**बृहस्पतिसवेन्द्रस्तुतौ चाभिजिद्विश्वजितोः स्थाने॥ ४॥**

बृहस्पतिसवेन्द्रस्तुतौ च अभिजिद्विश्वजितोः स्थाने भवतः। नवरात्रस्याभिहिता[२] अभिजिद्विश्वजितौ, तयोः स्थान एते द्वे अहनी वेदितव्ये। आनन्तर्ययोगेन बृहस्पतिसवोऽभिजितः स्थाने भवति। इन्द्रस्तुद् विश्वजितः स्थाने भवति॥ ४॥

[सप्तमस्य मासस्योत्तमयोरभिप्लवयोः स्थाने व्यवस्थान्तरम्]

**सप्तमस्य च मासस्योत्तमयोरभिप्लवयोः स्थाने त्रिवृद्व्यूळ्हो दशरात्र उद्भिद्बलभिदौ च॥ ५॥**

अनेन प्रकारेण सप्तमस्य च मासस्य येऽभिप्लवास्त्रयस्तेषां यावुत्तमाभिप्लवौ, तयोरुत्तमयोरभिप्लवयोः स्थाने त्रिवृद्व्यूळ्हो दशरात्रश्चोद्भिद्बलभिदौ च, द्वयोः षळहयोः स्थान एतानि द्वादशाहानि भवन्ति—त्रिवृद्व्यूळ्हो दशरात्रश्चोद्भिद्बलभिदौ च। व्यूळ्हवचनं किर्थम्। **तावन्तरेण** (आश्रौ ११, १, ६) दशरात्रो न क्रियते, उत्तमे तिष्ठतीति कृत्वा दशरात्रो विधीयमानोऽर्थादविशेषेण समूढत्वमाप्नुयात्[३]॥ ५॥

[उत्तमस्य मासस्यादौ त्रिष्वभिप्लवेषु पृष्ठ्यमध्यमत्वेन परिवर्तनम्]

**उत्तमस्य च मासस्यादौ येऽभिप्लवास्त्रय उद्धृत्य तेषां मध्यममथ स्युः पृष्ठ्यमध्यमाः॥ ६॥**

दशाभिजिद्[४] गाथा वेदितव्याः। तदिदं[५] न वक्तव्यम्। तस्मादर्थादेवोद्धारे प्राप्त उद्धृत्येति ध्रुवं पठति[६]॥ ६॥

[उत्तमे मासे व्यूढदशरात्रस्य स्थाने समूढदशरात्रत्वम्]

**समूळ्हो दशरात्रः*॥ ७॥**

॥ इति द्वादशे प्रथमः खण्डः॥

---

१. **वान्योथ्रेभूषो** मूको। २. °**भिहितः** मूको। ३. **समूहन्मा**° मूको। ४. **दसोभिजुगा**° मूको। ५. **तदीदं** मूको। ६. **पयति** मूको। *भाष्यं नोपलभ्यते।

## अथ द्वादशेऽध्याये द्वितीयः खण्डः

[आदित्यानामयनेनाङ्गिरसामयनस्यातिदेशः]

**आदित्यानामयनेनाङ्गिरसामयनं व्याख्यातम्*॥ १॥**

यथा वचने प्राप्तेऽयं विशेषविधिरारभ्यते—

[तत्राहर्व्यवस्थायां विशेषः]

**त्रिवृतस्त्वभिप्लवाः सर्वे:॥ २॥**

ये [1]अतिदेशेन प्राप्ता[1] आदित्यानामयनात्, तेऽभिप्लवाः सर्वे त्रिवृत्स्तोमप्रयुक्ता भवन्ति। सर्वग्रहणं किमर्थम्। आह। यदि सर्वग्रहणं न क्रियते, योगविभागो न क्रियेत। त्रिवृत्स्तोमस्याभिप्लवाः **पृष्ठ्यादयश्चाद्या मासाः पञ्च पूर्वस्य पक्षसः** (आश्रौ १२, २, ३) पूर्वेष्वेव मासेष्वयं त्रिवृत्स्तोमो गम्येत, तस्योत्तमेष्वाम्नाता अभिप्लवाः न[2] गम्येरन्[2]। अतः योगविभागार्थ आरम्भः सर्वशब्दस्य॥ २॥

[पूर्वस्य पक्षस आद्यानां पञ्चानां मासानां षडहव्यवस्था]

**पृष्ठ्यादयश्चाद्या मासाः पञ्च पूर्वस्य पक्षसः॥ ३॥**

पृष्ठ्यादयश्चाद्या मासाः पञ्च पूर्वस्य पक्षसः। मासाश्चात्र ये कर्ममासा अतिदेशप्राप्तास्ते पृष्ठ्यादयो भवन्ति। [3]पृष्ठ्यः पूर्वाश्चत्वारोऽभिप्लवाः द्रष्टव्याः[3]। कथं ज्ञायते। यथा कर्ममासा एव, न च कालमासाः। अधिकारात् **उत्तमस्य च मासस्यादौ येऽभिप्लवास्त्रयः** (आश्रौ १२, १, ६) इत एव मासाधिकारः। तस्मात् कर्ममासाः। एवं पञ्च पृष्ठ्याहाः पूर्वपक्षस्य मासाः। मासाश्च त्रयः कर्ममासा एवं भवन्ति॥ ३॥

---

*भाष्यं नोपलभ्यते। १-१. अतिदेशे प्राप्ते मूको। २-२. मासेरन् मूको। ३-३. पृष्ठ्या पूर्वमचत्वारः अभिप्लवा द्रव्याना मूको। द्र. आश्रौ ११, ७, १०।

[उत्तरस्य पक्षस्याष्टमादीनां चतुर्णां मासानां पृष्ठ्यान्तत्वम्]

**चत्वारस्तूत्तरस्य पृष्ठ्यान्ता अष्टमादयः ॥ ४ ॥**

अस्योत्तरस्य पक्षस्य चत्वारो मासाः पृष्ठ्यान्ता भवन्ति। के पुनस्त इति सन्देहे चेदमारभ्यते, अष्टमादयश्चत्वार[1] उत्तरस्य पक्षसः[2] पृष्ठ्यान्ता भवन्ति ॥ ४ ॥

[उत्तरपक्षस्य उत्तममासस्यादौ त्रयाणां षडहानां पृष्ठ्यान्तत्वम्]

**उत्तमस्य च मासस्यादौ ये षळहास्त्रयः पृष्ठ्यान्ता एव तेऽपि स्युः ॥ ५ ॥**

[3]उत्तमस्य च मासस्यादौ[3] ये षळहास्त्रयः पृष्ठ्यान्ता एव तेऽपि स्युः ॥ ५ ॥

[पूर्वयोरवशिष्टयोर्द्वयोः षडहयोरभिप्लवत्वम्]

**पूर्वौ स्यातामभिप्लवौ ॥ ६ ॥**

पूर्वौ स्यातामभिप्लवावितीदं किमर्थम्, अर्थादेवमभिप्लवौ भविष्यतः, एवमर्थं किलाभिप्लववचनं क्रियते। पूर्वसत्रे[4] उत्तमे [5]मासेऽतिरिक्तमुद्धृत्याभिप्लवपृष्ठ्यौ विहितौ[5]। तेनैवमतिदेशः। तेन कृतसंदेहः स्यात्, किमयं पृष्ठ्यातिरिक्तः, आहोस्विद् य एव च मध्यप्राप्तः तस्यैवायं क्रमो विधीयते। मध्यप्राप्तयैवान्यत् सर्वं यथाप्राप्तमेव भवति, उत्तमे मासे, अन्येषु च मासेषु ॥ ६ ॥

**॥ इति द्वादशे द्वितीयः खण्डः ॥**

---

१. अष्टामासादयश्च° मूको। २. पक्षमासः मूको। ३-३. उत्तरस्य मासादौ मूको। ४. पूर्वरात्रे मूको। ५-५. °भिप्लवं पृष्ठया विहिता मूको।

## अथ द्वादशेऽध्याये तृतीयः खण्डः

[दृतिवातवतोरयनस्योपक्रमः]

**दृतिवातवतोरयनम्॥ १॥**

दृतिवातवतोरयनमधिकृतं वेदितव्यम्॥ १॥

[प्रायणीयस्यातिरात्रत्वम्]

**प्रायणीयोऽतिरात्रः॥ २॥**

*तस्मिन् प्रायणीयोऽतिरात्रः सिद्धः। प्रायणीयस्य पुनरुपदेशः किमर्थम्। स्वस्तोमप्राप्त्यर्थम्। तच्च गवामयनमेव, अन्यथा भिन्नित (? ऽभिहित-)मन्यथा त्रिवृत्स्तोमः प्राप्नोति॥ २॥

[षण्णां मासानां स्तोमविधानम्]

**त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासमेकविंशेन मासं त्रिणवेन मासं त्रयस्त्रिंशेन मासम्॥ ३॥**

त्रिवृता स्तोमेन मासं कर्म कर्तव्यम्। पञ्चदशेन मासं कर्तव्यः, स्तोमोऽधिकृतो वेदितव्यः, सप्तदशेन मासम्, एकविंशेन मासं, त्रिणवेन मासं, त्रयस्त्रिंशेन मासम्॥ ३॥

[विषुवत्स्थाने महाव्रतविधानम्]

**व्रतं विषुवत्स्थाने॥ ४॥**

षण् मासानेतैः[1] स्वस्तोमैः[2] कर्म कृत्वा अथ विषुवान् (विषुवन्तं ?) प्राप्नोति। अस्य विषुवतः स्थाने व्रतं वेदितव्यम्, सर्वस्तोमयुक्तम्। विषुवतः स्थाने

---

* प्रथमसूत्रव्याख्यायां 'तमस्मिन्'-इत्यारभ्य 'वेदितव्यम्' इति पर्यन्तः पाठः। तत्र 'दृतिवातवतो .... वेदितव्यम्' इति पाठो द्विरुक्तः 'तमस्मिन्'। इति तु 'तस्मिन्' इति शोधपुरस्सरं द्वितीयसूत्रव्याख्यायां संनिवेशनीयम्।

१. षु ख मूको। २. मस्तोमैः मूको।

ब्रुवन्निदं च दर्शयति गवामयनं सर्वत्र प्रकृतिभूतम्, तेन गवामयनक्लृप्तिरपि वेदितव्या। अत्र चोदयन्ति। अथ व्रतमिति सिद्धे स्थानवचनं किमर्थम्, आह[१]। स्थानवचनस्यैतत् प्रयोजनं विषुवानपि व्रतस्थाने भवति। छन्दोगानां वचनमेवास्ति विषुवान् व्रतस्थाने भवतीति॥ ४॥

[पूर्वपक्षसः प्रतिलोमविधिनोत्तरपक्षसो विधानम्]

**एतैरेव मासैः प्रतिलोमैः पक्ष उत्तरम्॥ ५॥**

एतैरेव मासैः प्रतिलोमैरुत्तरः पक्षो वेदितव्यः। एतैरेव त्रिवृदादिभिः स्तोमैरुत्तरं पक्षो मन्तव्यम्। कर्ममासा एव भवन्त्यधिकृतत्वात्। तेनैवमुत्तरः पक्षो भवति। प्रथमे मासे त्रयस्त्रिंशे सति द्वितीयस्त्रिणवः[A], तृतीय एकविंशस्तोमः, अनेन प्रकारेण॥ ५॥

[उदयनीयस्यातिरात्रत्वम्]

**उदयनीयोऽतिरात्रः॥ ६॥**

उदयनीय एवातिरात्रः, अन्त एवं शस्यं व्यवस्थितम्। गावामयिनिका मासा एतैः स्तोमैर्युक्ताः। यथा पुनः स्तोमैरह्नां ग्रहणं भवति, तदा प्रायणीयोदयनीयावतिरिक्तौ भवतः, स्वस्तोमावेव तु। यदा[२] **छन्दोगैरेव कृत्वा समयम्** (आश्रौ १०, ५, २०) इत्ययं[३] पक्षो भवति, तदाऽप्येतावतिरिक्तावेव भवतः प्रायणीयोदयनीयौ। [४]यदाप्याह्नां क्लृप्ति-स्तदाप्येतावतिरिक्तार्थे भवतः। गवामयनक्लृप्तिः पुनर्व्रतमेव केवलमतिरिक्तं भवति, नान्यत् किञ्चित्। उत्त-नरेन (? मेन तेन) द्वितीयं व्रतं भवति[५]। [६]गवामयनपक्षे तु स्वस्तोमयुक्तं[६] व्रतं भवति[७], उत्तमे मासे यदा भवति। एवमेव[८] शस्यक्लृप्तयः प्राप्नुवन्ति दृतिवातवतोरयने। अत्र [९]याऽऽदिष्टा शस्यक्लृप्तिः[९], सा कर्तव्या। अयं पूर्वपक्षः॥ ६॥

अयं द्वितीयः—

[उत्तरे पक्षसि पूर्वोक्तानामेवाह्नामतिरात्रत्वम्]

**एतेषामेवाह्नामतिरात्राविति॥ ७॥**

विधानमारभ्यते—एतेषामेवाह्नां दृतिवातवतोरयने अतिरात्रौ कर्तव्यौ। आदिष्टानामेवाद्योत्तमावहीनातिरात्रौ कर्तव्यौ। अपरिमितं विधानमस्ति। अपरिमित-विधाने यदा गवामयनक्लृप्तिर्भवति, तदा सामस्तोमप्रमाणार्थं वचनीयौ[१०] प्रायणीयोदयनीयौ।

यदाऽन्ये पक्षास्तदाऽन्यार्थं वचनं प्रायणीयोदयनीययोः[११], अन्यथाऽन्यस्तोमादिषु

---

१. **यथा** मूको। A. **प्रथमः** मूको। २. **यथा** मूको। ३. °मित्युपं मूको। ४. **यदाप्येहाक्लृ°** मूको। ५. **भवं भवन्ति** मूको। ६-६. °**पक्षेषु स्वस्तो**° मूको। ७. एतदनन्तरं मूलकोशे **स्वस्तोमयुक्तं व्रतं भवति। स्वस्तोमयुक्तम्** इत्यधिकम्। ८. **एवमेते** मूको। ९-९. **याभिष्टस्यक्लृप्तिः** मूको। १०. **वचनीयं** मूको। ११. **प्रायणीयोदयनीयौ** (? ये) मूको; द्र नावृ.।

अध्यवसानम्[१]। त्रीण्यहान्यतिरिक्तानि भवन्ति, प्रायणीयोदयनीयौ[२] च व्रतं च। एतेषामेवाह्नामतिरात्राविति च ब्रुवन् दर्शयति—प्रायणीयोदयनीयावतिरात्रौ भवतः॥ ७॥

किमिदं विधानमिहैव भवति आहोस्विदपरत्रापीति।

तत्रेदमारभ्यते—

[अन्यत्र कालपूरणनियमः]

**अपरमन्यत्राप्यादिष्टैः कालपूरणे न चेत् संस्थानियमः॥ ८॥**

[३]अन्यत्राऽप्यादिष्टैः कालपूरणे[३] सति इदमेव विधानं वेदितव्यम्। आदिष्टानामेवाह्नामाद्योत्तमे [४]अहनी अतिरात्रसंस्थे[४] कर्तव्ये। यथा किमुदाहरणम्—त्रयस्त्रिवृतः, **संवत्सरा** (आश्रौ १२, ५, १६) एवमादीनि। अत्र केचित् ते दोषा (? एतेषा)मेवेत्युभयमत्रानुवर्तयन्तीति, अतिरात्रावित्यपरे। अ[? न्य-]त्र अपरमिति। इह सन्देहो भवति किमन्यत् पूर्वं भवति, यस्येदमपरं विधानम् अपदिश्यते। आह। अनतिरात्रत्वमपि भवति। इदमपि दर्शितं भवति। अन्ये पुनरतिरात्राविति केवलमनुवर्तयन्ति। सर्वत्रैवार्थविधिर्भवति। आह। न चेत्संस्थानियमः यत्र[५] न भवति, तत्रैव लक्षणं भवति। आदिष्टानामेवातिरात्रम्। यथा **अग्निष्टोमसहस्रम्** (आश्रौ १२, ५, २१) इत्येवमादीनि, **ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतचतुर्विंशानां वैकैकम्** (आश्रौ १२, ५, १२) इति इदमन्यदन्यतो[६] वा उदाहरणे उदाहरणम्॥ ८॥

॥ इति द्वादशे तृतीयः खण्डः॥

---

१. अव्यवसानं मूको। २. °दयनीयं मूको; द्र. नावृ.। ३-३. °दिष्टे कालप्रकरणे मूको। ४-४. अहनीनमतिरात्रं संस्थे मूको। ५. अत्र मूको। ६. °मत्यदनतो मूको।

## अथ द्वादशेऽध्याये चतुर्थः खण्डः

[कुण्डपायिनामयनस्योपक्रमः]

**कुण्डपायिनामयनम्॥ १॥**

कुण्डपायिनामयनमधिकृतं वेदितव्यम्। कुण्डाकृतयः किलात्र चमसा भवन्ति। तैर्यजमानाः सोमं पिबन्ति, तस्मात् कुण्डपायिनामयनं नाम सत्रं सांवत्सरिकम्॥ १॥

[मासं दीक्षानियमः]

**मासं दीक्षिता भवन्ति॥ २॥**

तस्मिन् कुण्डपायिनामयने सत्रिणो मासं दीक्षिता भवन्ति। उपासी(? सि)तव्या भवन्तीतीदमारभ्यते। कथं प्रथमेऽहनि सर्वे दीक्षेरन् ? [1]अन्वहं दीक्षणनिवृत्त्यर्थम्[1]। अथवा ब्राह्मणमेवाकृष्टम्[2]॥ २॥

[सोमक्रयणदिवसनियमः]

**ते मासि सोमं क्रीणन्ति॥ ३॥**

यदा मासः पूर्णो भवतीति दीक्षणं, तदा ऊनत्रिंशेऽहनि सोमं क्रीणन्ति, प्रायणीयं तस्मिन्नहनि कुर्वन्ति। ऊनेऽपि मासे मासशब्दो भवत्येव भूयस्त्वादह्नाम्॥ ३॥

[उपसदां संख्यायाः कथनम्]

**तेषां द्वादशोपसदो भवन्ति॥ ४॥**

क्रीत्वा सोममथ द्वादश उपसदः कुर्वन्ति। द्वादशोपसदो भवन्ति। **द्वादश चतुर्विंशतिः संवत्सर इति सत्राणाम्** (आश्रौ ४, ८, १५) इति[3] विकल्पे प्राप्ते नियमार्थं वचनम्। उपासि[? त]त्वाद् उपसदः। अथोपादानमग्रेः॥ ४॥

---

१-१. अन्वहि दीक्षणे निवृ° मूको। २. तांब्रा २५, ४, १। ३. नास्ति मूको।

[सोमोपनहनादि मासमग्निहोत्रनियमश्च]

**सोममुपनह्य प्रवर्ग्यपात्राण्युत्साद्योपनह्य वा मासमग्निहोत्रं जुह्वति॥ ५॥**

सोममुपनह्य वनं च (प्रवर्ग्यं ?) न पिबेदित्यर्थः। प्रवर्ग्यपात्राणि प्रवर्ग्ये यानि पात्राणि तान्युत्साद्य, माशयित्वा (? आसयित्वा) इत्यर्थः। अथवोपसंनह्य बंधित्वा स्थापयन्ति, स्थापयित्वा मासमग्निहोत्रं जुह्वति सत्रिणः। मासमग्निहोत्रहोमो[1] भवति। अग्निहोत्रान्तरमिदं विधीयते। अत्र संदेहः, किमनियमेन क(?य)स्मिन्-कस्मिंश्चित् काले होमः, आहोस्वित् प्रकृतिविहिते केवलं स्वे काले होमः। कुत एतत्। अग्निहोत्रं कर्म चोद्यते, तत् सधर्ममेव चोद्यमानं स्वे काले भवति। नैवाहुत्ये सति जुह्वतः एवासते। न चाहनि[2] सकृद् भवति, द्विः कृत्वोऽहनि स्व एव काले प्रातरारम्भणे केवलं भवति। द्वावपि कालौ होतव्यौ सायं प्रातश्च॥ ५॥

[मासं दर्शपूर्णमासयजनम्]

**मासं दर्शपूर्णमासाभ्यां यजन्ते॥ ६॥**

मासं[3] दर्शपूर्णमासाभ्यां यागः कर्तव्यः। यथाकालं दर्शपूर्णमासाभ्यां यागः कर्तव्यः। अग्निहोत्रहोमत्व आहोस्विदन्यदहनीति। उच्यते। अहन्येव यागः कर्तव्यो दर्शपूर्णमासाभ्याम्। कुत एतत्। आह। अग्निहोत्रादयो मासाः सौत्याःश्रूयन्ते, सौत्येषु च अहन्यहनि कर्मिव (कर्मैव) भवतीति। यदि यथाकालमभीष्टं स्यात्, [? तदा] प्रयोग एवावक्ष्यदिति दर्शपौर्णमासाभ्यां जपित्वा अथ होमं कुर्यात्, न[4] चैवं ब्रवीति। तस्मादहन्येव दर्शपौर्णमासाभ्यां यागः कर्तव्यः। एवं च क्रियमाणे मासं यागः कृतो भवति। यथाकालं [5]क्रियमाणे न[5] मासं यागः कृतो भवति। ६॥

[मासं वैश्वदेवयजनम्]

**मासं वैश्वदेवेन॥ ७॥**

वैश्वदेवेन पर्वणा मासं यागः कर्तव्यः। वैश्वानरयागो भवति। अहन्यहनि चातुर्मासिकेन वैश्वदेवपर्वणा यागः कर्तव्यः॥ ७॥

[मासं मासं वरुणप्रघाससाकमेधाभ्यां यजनम्]

**मासं वरुणप्रघासैर्मासं साकमेधैः॥ ८॥**

[मासं शुनासीरीयेण यजनम्]

**मासं शुनासीरीयेण॥ ९॥**

---

१. °ग्निहोत्रः सोमो मूको। २. हनि मूको। ३. नास्ति मूको। ४. जं मूको। ५-५. क्रियमाणः मूको।

[मासपूर्तावितिकर्तव्यता]

**यदहर्मासः पूर्यते तदहरिष्टिं समाप्याग्निप्रणयनादि घर्मोत्सादनादि वौपवसथिकं कर्म कृत्वा श्वोभूते प्रसुनुयुः ॥ १० ॥**

मासं वरुणप्रघासैः। वरुणप्रघासो[1] नाम पर्व, तेन पर्वणा मासं यागः कर्तव्यः।

अत्र संदेहः—द्व्यहापवर्गमिदं[2] कर्मणो साकमेधिकं केचिद् वारुणप्रघासिकस्य मासस्य यद्[3] अहन्नहर्विशेषस्तस्मिन्नन्ते[4] वारुणप्रघासिकं कर्म समापयित्वा, अथानन्तरमेव[5] या इष्टयः पूर्वेद्युर्भवन्ति, ता अनन्तरमेव करोति। अन्यस्मिन्नहन्यन्यायाः प्रारम्भः कर्तव्यः। इदमौपवसथिकं कर्म कृत्वा औपवसथिकं च कर्म संनिहितात् शंसनादारभ्य भवति, तत् कृत्वा अस्मिन्नहनि सुत्यायाः प्रारम्भं करोति ॥ ८-१० ॥

[तत्र मतान्तरम्]

**तद्धैक उपसद्भ्य एवानन्तरं कुर्वन्ति तथादृष्टत्वात् सौत्यान्मासानग्निहोत्रादीन् वदन्तः ॥ ११ ॥**

तद्धैके उपसद्भ्य एवानन्तरं कुर्वन्ति। तदिदमौपवसथिकं कर्मैके आचार्या उपसद्भ्य एवानन्तरं कुर्वन्ति। किमर्थम्। तत्र हेतुरुपादीयते, तथादृष्टत्वात्। प्रकृतौ ह्यौपवसथिकं कर्म तथा दृष्टमुपसद्भ्य एवानन्तरम्[6]। तत्प्रकृतावनन्तरमिदं कर्म दृष्ट्वा[7] इहाप्येवमेवेच्छन्ति। आह। प्रकृतौ हि यथैवोपसद्भ्योऽनन्तरं भवत्येवमेव सुत्याभ्योऽपि पूर्वं दृष्टम्। तत्रायं हेतुर्द्वितीय उपादीयते सौत्यान्मासानग्निहोत्रादीन् वदन्तो ये इमेऽग्निहोत्रादयो मासाः, एतान् सौत्यानिच्छन्तः। [8]एवं सौत्यार्थं[8] पूर्वमौपवसथिकं कर्म कृतं भवति। एवं तावदेके ॥ ११ ॥

[मतान्तरखण्डनम्]

**तदनुपपन्नम् ॥ १२ ॥**

पश्वर्थमग्निप्रणयनं, तन्नोपपद्यते, अग्निहोत्रादीनां मासानां सौत्यत्वम्। कस्मात् कारणात्। आह। सूयते यत्र[9] सोमोऽसाविति कर्म मासो वा सुत्यत्वेन गृह्यते। अन्वर्थेयं संज्ञा सुत्या इति। न वैतेषु सोमः सूयते। अतो नोपपद्यते सौत्यत्वमग्निहोत्रादीनां[10] मासानाम्। ये[11] वा सौत्यत्वमिच्छन्ति तेषां[12] कोऽभिप्रायः। उच्यते। सौत्या मासा

१. °प्रघासं मूको। २. द्र. आश्रौ ९, २, ८। ३. यः मूको। ४. °न्नन्त्व मूको। ५. °मिव मूको। ६. एव निरं मूको। ७. दृष्ट्या मूको। ८-८. एव सौत्यार्थः मूको। ९. तत्र मूको। १०. सौत्यमग्नि° मूको। ११. नास्ति मूको। १२. ते वा मूको।

गावामयनिका इह प्राप्ता[1] अतिदेशेन। गवामयनं प्रकृतिभूतमिति कृत्वा[2] एषां स्थाने एते[3]ऽग्निहोत्रादयो मासा विधीयन्ते। अतः सौत्यत्वमेषाम्। अथ प्रकाराणां त्र्यहानि भवन्ति दैक्षणान्यौपसदादीनि सौत्यानीति। [4]सौत्यानां स्थाने विधीयन्ते एते मासास्तस्मात्[4] सौत्यत्वमिच्छन्ति। तेषां वा कोऽभिप्रायः। उच्यते। सौत्या मासाः। तथापि नोपपद्यते[5] सौत्यस्य वचनाभावात्। एवमनुपपन्नमुपसद्भ्योऽनन्तरम् औपवसथिकं कर्म पश्वर्थमग्निप्रणयनम्॥ १२॥

[पश्वर्थाग्निप्रणयनस्य श्वःसुत्यानिमित्तम्]

**पश्वर्थं ह्यग्निप्रणयनं तस्य च श्वःसुत्यानिमित्तम्॥ १३॥**

पश्वर्थं हि भवति अग्निप्रणयनम्[6]। कोऽस्याभिसंबन्धः। अस्य सूत्रस्य पश्वर्थं ह्यग्निप्रणयनमिति। इदं किल पशोरुपसद्भ्य एवानन्तरं क्रिया निवारयेत् पूर्वमेव, पश्चाद्धोता शास्ति—**अतिप्रणीतचर्यायां च वैगुण्यम्** (आश्रौ १२, ४, १४) वक्ष्यतीति कृत्वा पूर्वमेव तावदौपवसथिके कर्मणि विहितस्याग्निप्रणयनस्योत्कर्षार्थं पश्वङ्गतां शास्ति। पशोश्चोत्कर्षणं वक्ष्यति। त्रस्य च श्वःसुत्यानिमित्तमिति। उच्यते। युक्तं पुनरङ्गस्य पशोः सोमार्थमग्निप्रणयनं पश्वङ्गमभ्या(?भ्यु)पगन्तुमाह। अपिशब्दलोपो द्रष्टव्यः।पश्वर्थमग्निप्रणयनं पश्वर्थं भवति।तस्मादुपसद्भ्योऽनन्तरमपि प्राप्तमपि न क्रियते। पशोरुत्कर्षे क्रियमाणेऽग्निप्रणयनस्याप्युत्कर्ष उच्यते। किमुपकरोति पशोरग्निप्रणयनम्। ब्रवीति। पूर्णदर्व्यादि परिशिष्टं कर्म करोति। अन्ये पुनः [7]समान एवाहनि[7] कर्म कुर्वन्ति। इष्टयश्च पौर्णदर्व्यादि वपलह्य (? वोपनह्य) परिशिष्टमयमेव चा(?वावा)पः। एवं[8] साकमेधेन मासं कर्म कृत्वा अथान्यं **मासं शुनासीरीयेण** (आश्रौ १२, ४, ९)। यः साकमेधादनन्तरो मासस्तस्मिञ्छुनासीरीयेण यागः कर्तव्यः। अहन्यहनि शुनासीरीयं कर्म करोति।

**यदहर्मासः पूर्यते तदहः** (आश्रौ १२, ४, १०) तस्मिन्नहनीत्यर्थः।**इष्टिं समाप्य अग्निप्रणयनादि** (आश्रौ १२, ४, १०) वाऽहनि करोति, अग्निप्रणयनादि, घर्मोत्सादनादि वा कर्म कृत्वा किमविशेषेणैव प्रणयनाद्युत्सादनादि वा कर्म करोति, नेत्युच्यते। यदा प्रवर्ग्यपात्राण्युत्सादयितव्यानि भवन्ति, तदाश्रयि प्रणयनाद्येव औपवसथिकं[9] कर्म कर्तव्यं कृत्वा इदं कर्म **श्वोभूते प्रसुनुयुः** (आश्रौ १२, ४, १०)। अन्यस्मिन्नहनीत्यर्थः प्रसुनुयुरिति। योऽसावतिप्रणीतः, तस्मिन् वपादीनि सर्वाणि[10] हूयन्ते[10], एवं पश्वर्थमपि प्रणयनम्, तस्मात् तस्योत्कर्षः। आह। स पशुरुपसद्भ्यः

१. प्राप्ते मूको। २. त्वा मूको। ३. ऐतैरग्नि° मूको। ४-४. **सौत्यानी स्थाने विधीयते एते मासात्तस्मात्** मूको। ५. °पद्यन्ते मूको। ६. प्रणयनं मूको। ७-७. **समानमेवाहनि** मूको। ८. एनं मूको। ९. नास्ति मूको। १०-१०. **सर्वा हूयते** मूको।

एवानन्तरं किमर्थं न क्रियते। तत्रायं हेतुरुपादीयते। तस्य श्वःसुत्या निमित्तं भवति। तथाऽसौ कर्तव्यः। यथाऽन्यस्मिन्नेवाहनि सुत्यानि भवन्ति, तथा चासौ। तत्कथं ज्ञायते यथा पशोः सुत्यानिमित्तोऽसौ। आह। श्रुतिदर्शनात्। इयं हि श्रुतिः—**अग्नीषोमाभ्यां वा इन्द्रो वृत्रमहंस्तावेनमब्रूतामावाभ्यां वै वृत्रमवधीर्वरं ते वृणावहा इति वृणाथामिति तावेतमेव वरमवृणातां श्वःसुत्यायां पशुं स एनयोरेषोऽच्युतो वरवृतो ह्येनयोः** (ऐब्रा २, ३) तस्मान्निदर्शनादिदमारभ्यते तस्य च श्वःसुत्या निमित्तमिति, तस्मात्तस्योपसद्भ्यः एवानन्तरं[1] क्रिया भवति। तत्रेदं स्यादग्निप्रणयनं पूर्वं करिष्यामीति श्वःसुत्याकाले च पशुं करिष्यामीति, तत्रापीदमारभ्यते दोषप्रख्यापनाय॥ १३॥

[दर्शपूर्णमासाभ्यामग्निहोत्राच्च पूर्वमग्निप्रणयनस्य निषेधः]

**अतिप्रणीतचर्यायां च वैगुण्यं दर्शपूर्णमासयोस्तथाऽग्निहोत्रस्य॥ १४॥**

अतिप्रणीतचर्यायां च वैगुण्यं दर्शपूर्णमासयोः। दर्शपूर्णमासाभ्यां यदा पूर्वमग्निप्रणयनं क्रियते तदाऽयं दोषो भवति। वैगुण्यं दर्शपूर्णमासयोर्न क्रियते, न क्वचिदपि अतिप्रणीते भवति। संदेहश्च स्यात् कतरस्मिन्नग्नौ होमः कर्तव्य इति। तस्मादग्निप्रणयनमपि पूर्वं न कर्तव्यम्। तथाऽग्निहोत्रस्य तथापि वैगुण्यं संपद्यते। यथैव दर्शपूर्णमासयोः, यदाऽतिप्रणीते होमः क्रियते तदा वैगुण्यमग्निहोत्रस्य कृतं भवति। न क्वचिद् अतिप्रणीतेऽग्निहोत्रहोमो भवति। तस्माद् द्वितीयात्कारणादग्निप्रणयनमुपसद्भ्य एवानन्तरं भवति। एवमादयो दोषाः प्रसज्यन्ते, यदा औपवसथिकं कर्मोपसद्भ्य एवानन्तरं क्रियते। बहवः पदार्थाः पशोरुत्कर्षे क्रियमाणे नोत्कृष्येरन्[2]। ये पदार्थास्ताननुक्रमिष्यामः। यदा च पूर्वमेवौपवसथिकं कर्म क्रियते, तदाऽनुत्कर्षः स्यात्। स च दोषः। अस्माच्च कारणात् पूर्वमौपवसथिकं कर्म न वक्तव्यम्॥ १४॥

[सदोहविर्धानादीनां पश्वङ्गता मतान्तरेण च सुत्याङ्गता]

**सदोहविर्धानान्याग्नीध्रीयाग्नीषोमप्रणयनवसतीवरीग्रहणानि पश्वर्थानि भवन्ति सुत्यार्थान्येके॥ १५॥**

सदोहविर्धानादीनि पश्वर्थानि भवन्ति। अत्राप्यपिशब्दलोपो[3] द्रष्टव्यः। किमेतानि सदोहविर्धानादीनि पशोरुपकुर्वन्तीति। तद् वक्ष्यामः सदस्तावदुपकरोति। **दण्डं[4] प्रदाय मैत्रावरुणमग्रतः कृत्वा** (आश्रौ ४, ११, ३) इत्येवमारभ्य सदस्यवस्थितस्य कर्म चोदितम्। **पश्चात्स्वस्य धिष्ण्यस्योपविशति होता।** (आश्रौ ४, ११, ३) एवं सदस्यवस्थितः सर्वं यत् करोति, तेन सदः पशोरुपकरोति।

---

१. एवान्तरे मूको। २. °नोत्कर्षेरन् मूको। ३. °प्यति शब्द° मूको। ४. बर्हणं मूको।

अथ हविर्धाने किमुपकुरुतः पशोः[1]। आह। हविर्धानयोर्द्वार्यवस्थितः[1] सन् सामिधेनीरनुब्रवीति, अध्वर्यूणां किल वचनमस्ति यथा हविर्धानयोर्द्वार्यवस्थितेन[2] सामिधेन्योऽनुवक्तव्याः[3], एवं सामिधेनीदेशप्रसाधनेन[4] हविर्धाने उपकुरुतः। अथवा क्रमं तद्धर्म (? क्रमेण तद्द्वयं) निष्पद्यते, अकृत्वा[5] हविर्धानप्रवर्तनम्, उत्तरे पदार्था नैवारभ्यन्ते। एवमादिभिः कारणैर्हविर्धाने अ(? उ)पकुरुतः[6] पशोः।

आग्नीध्रीयः किमुपकरोति। आह। अग्नीषोमप्रणयने किल कृते सति देवता किलाभिनिष्पद्यते, अग्नीषोमीयः पशुः। अस्याग्नीध्रीयस्य चाग्रेः पश्वर्थः किल[7] सोमः। अनयोः किलालभ्यते पशुः, एवं देवताप्रसाधनेनाग्नीषोमप्रणयनं पशोरुपकरोति। आह। कथमिदं ज्ञायते। यथाऽयं पशु-लता(? रालभ्यते) सोमस्य। आग्नीध्रीयस्य चाग्रेरालभ्यते। उच्यते। मन्त्रवर्णदर्शनात्, **आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः** (ऋ १, ९३, ६) अस्माद् दर्शनात्।

अथ वसतीवरीग्रहणं किमुपकरोति। आह। वसतीवरीग्रहणेन किल गृहीतेन रक्षोऽपहननार्थेनाग्नीषोमीयस्य पशोर्वसतीवरीग्रहणमुपकरोति। एवं तैत्तिरीयाणां ब्राह्मणमस्ति। अथवा यत्कर्मणामानुपूर्व्यम्, तद् विहन्येत वसतीवरीग्रहणेऽक्रियमाणे। अग्नीषोमीयवपायां हुतायामथ वसतीवर्यो गृह्यन्ते। एवं[8] क्रमः क्रियते। न धर्म निःष्काधने (? तत्क्रमप्रसाधनेन) रक्षोऽपहननेन[9] वसतीवरीग्रहणं पशोरुपकरोति। एवमेतानि सदआदीनि पशोरुपकुर्वते।

सुत्यार्थान्येके। एके[10] आचार्याः सुत्यार्थान्येवेच्छन्ति। सुत्या एतेषां प्राधान्ये[11] वर्तते, अतदङ्गता तस्याः[12] ॥ १५ ॥

[कर्मणां कालानुगुणत्वम्]

**तत्कालाश्चैव तद्गुणाः ॥ १६ ॥**

तत्कालाश्चैव तद्गुणा भवन्ति। प्रधानवशानुवर्तिनो गुणा भवन्तीत्यर्थः। सुत्या प्रधानं[13] वर्तते औपवसथिककर्मणाम्। तस्योत्कर्षे सौत्यस्य कर्मणोऽग्नीषोमीयस्यान्येषां चाग्निप्रणयनादिनौपवसथिकानां कर्मणामुत्कर्षो भवति। [14]प्रधाने [न] सौत्ये कर्मण्युत्कृष्यमाणे सर्वाण्येतानि कर्माणि सुत्याप्रधानानि[15] तस्मादुपसद्भ्य

---

१-१. **पशोराहविर्धा°** मूको। २. °**वस्थिते** मूको। ३. द्र. आपश्रौ। ४. °**नीदशा प्र°** मूको। ५. **अनृता** मूको। ६. **अपि कु°** मूको। ७. **पश्वार्थ** मूको। ८. **एव** मूको। ९. **रक्षोपहतेन** मूको। १०. नास्ति मूको। ११. **प्राचेन** मूको। १२. **स्तस्य** मूको। १३. **प्रधाने** मूको। १४. **प्राधान्ये** मूको। १५. **सुत्यानि°** मूको।

एवानन्तरमौपवसथिकं कर्म न क्रियते। कारणान्यपि च बहून्युपदिष्टानि विरोध-निमित्तानि। इहायं विधिर्निदर्शितः सर्वत्रैव भवति। अन्यत्रापि तत्काल एव तद्गुणो भवति। यथाऽस्तमिते होमः ये होमसम्बन्धाः पदार्थाः, ते सर्वेऽस्तमित एव भवन्ति। के पुनस्त इति। उच्यते। आचमनादयः। प्रणयनं च पृथगुपदिष्टत्वादनस्तमित एव भवति। एवमत्रापि यथा[1] इळादि॥ १६॥

[सिद्धस्वभावानां कर्मणां व्यवधानपातेऽप्यन्यत्वाभावः]

**सिद्धस्वभावानां न व्यवधानादन्यत्वं यथा पृष्ठ्याभिप्लवयोः॥ १७॥**

[2]सिद्धस्वभावानां च व्यवधानादन्यत्वं भवति, सिद्धः स्वभावो येषां तान्येतानि सिद्धस्वभावानि भवन्ति कर्माणि। नायं भावशब्दः भावे वर्तते। सत्त्वमत्र[3] विवक्षितम्। यद्यसा(? सौ स्यात्, तदा) कर्मणा सत्त्वेनावस्थितम् अह्ना[4] कर्म, तदत्र निर्दिष्यते। यथा किमुदाहरणम्। इह किल गवामयने वाऽऽदित्यानामयने वा सत्रेषु [5]वा पृष्ठ्यस्य वाऽभिप्लवस्य[5] वा षडहस्य द्व्यहे त्र्यहे वा गते सति यदा[6] यजमानो म्रियेत, तदाऽनन्त-रीयमहः सप्तदशस्तोमो भवति तृतीयस्य पार्ष्णि(? ष्ठि)कस्याह्नः स्थाने द्वितीयस्य वा। यदा[6] तृतीयमहः पार्ष्ठिकं चतुर्थमहर्भवति, तदाऽपि तृतीयस्याह्नो ये[7] विशेषाः, ते चतुर्थस्यापि क्रियमाणस्य पार्ष्ठिकस्याह्नः कर्तव्या एव, तस्यैते स्वभावा भवन्ति। के पुनस्ते इति। आह, सामप्रगाथाः, प्रथमे संपाता रथन्तरं पृष्ठमित्येवमादयः। **एवं स्थितान् प्रगाथान् पृष्ठ्याभिप्लवयोरन्वहम्** (आश्रौ ७, ३, ४) इति प्राङ्नियमो दृष्टः। सत्यस्मिन् नियमेऽनेन प्रायश्चित्तिकेनह्ना सप्तस्तोमकेन सत्यपि व्यवधाने तृतीयमहः अनद्य(? न्य)वदेव द्रष्टव्यं, तृतीये कर्मे(? र्माणि) सर्वाणि कर्तव्यानि, नैवागन्तु-कस्याह्नः भवन्तीति। यथा च (?ऽब) लोऽपि सुदृच(? ढ)मपि(? धि)गतः देवत्रस्यै (?) र्युवपुत्रो भवन्ति (? ति), न तस्य सौत्ये [? न] व्यवधानादन्यत्वं भवति। एवमिहाप्याह। किमर्थं पुनरिदं सूत्रमारभ्यते यतः प्रागपदिष्टम्। **उपसद्भ्य एवानन्तरम्** (आश्रौ १२, ४, ११) औपवसथिकं कर्तव्यमिति[8]। तस्योपोद्बलादिदं[9] सूत्रमारब्धम्, उपसद्भ्योऽनन्तरम् औपवसथिकं कर्म क्रियमाणं सुत्यागमे भवति। यद्यप्यग्नि-होत्रादिमासैर्व्यवधानमिदं दर्शितं भवति, यथा पृष्ठ्याभिप्लवयोः षळहयोः॥ १७॥

[उद्धारोपजनयोः कर्मणां सगुणत्वं हेतुः]

**सगुणानां ह्येव कर्मणामुद्धार उपजनो वा॥ १८॥**

---

१. **यथा यथा** मूको। २. **असिद्धस्व°** मूको। ३. **स च मत्र** मूको। ४. **अह्ना** मूको। ५-५. **पावभिप्ल°** मूको। ६. **तदा** मूको। ७. **नास्ति** मूको। ८. **द्र** आश्रौ १२, ४, ११। ९. **°पोद्बला दथं** मूको।

सगुणानामेव हि कर्मणामुद्धारो भवत्युपजनो वा। हिशब्दः पक्षव्यावर्तकः। [1]सह गुणेन[1] यानि कर्माणि वर्तन्ते तानि सगुणानि भवन्ति। तेषां सगुणानामेवोद्धारो भवत्युपजनो वा। गुणा [2]गुणिनि उत्कृष्यमाण उत्कृष्यन्त इति[2] इदमुक्तं भवतीति। किमुदाहरणम्—तृतीयस्याह्नः स्थाने महाव्रतम्। अत्र तृतीयमहः सगुणमुद्ध्रियते[3]। सामप्रगाथादि [4]सर्वमुद्ध्रियते। अथ[4] उपजनः। **चतुर्थं पृष्ठ्याहरुत्तमम्** (आश्रौ १०, १०, ८) अश्वमेधे विधीयते। [5]तच्च सगुणं[5] भवति। आह, अङ्गानि। यथा सामप्रगाथाः प्रथमे संपाते, तथा आभिप्लविकं तृतीयसवनम्। एवमादिभिर्गुणैर्युक्तं चतुर्थं पृष्ठ्याहर्वेदितव्यम्॥ १८॥

[सुब्रह्मण्याया नित्यकर्तव्यत्वम्]

**सुब्रह्मण्या त्वत्यन्तम्॥ १९॥**

किमर्थं सूत्रमारभ्यते। आहः। यदिष्टं तदनुपपन्नमिति तस्योपोद्बलायेदमारभ्यते। उच्यते। अग्निहोत्रादयो मासा [6]नव सौत्या[6] नवौपसदाः। इयं च सुब्रह्मण्या सौत्येषु वा। [7]अत्र नित्यविधानार्थं[7] सुब्रह्मण्याया अत्यन्तवचनं क्रियते। अत्र संशयः। कथं सुब्रह्मण्या कर्तव्येति। किं द्वादशाहे 'सुत्यामागच्छ' इत्येवं प्रयोगः कर्तव्यः, आहोस्विदनिरुक्तैव सुब्रह्मण्या कर्तव्येत्यस्मिन् संदेहे प्राप्त इदमारभ्यते॥ १९॥

[अत्र कालसङ्ख्याऽनवधृतत्वेन सुब्रह्मण्यायाः प्रयोगः]

**अनवधृतेह कालसंशयत्वात्**[8]॥ २०॥

कालसंशयत्वाद्धेतोः अनवधृतेह[9] सुब्रह्मण्या कर्तव्या। 'सुत्यामागच्छ' इत्येवं प्रयोगः कर्तव्यः। कर्तव्या न कर्तव्येति नायमर्थः। कालोऽनवधृतः कर्तव्य इदमुक्तं भवति। अन्यथा द्वादशाहे सुत्यामागच्छेति प्रकृतौ एवंविहितेति कृत्वेहाप्येवमेव क्रियेत[10]। द्वादशाहे सुत्यामागच्छेति प्रयोगः क्रियते। एवं द्वादशाहे विहितेतीहापि क्रियेत। द्वादशाहप्रकृतयोऽहर्गणा इति। छन्दोगानां च एवमेवाम्नाता सुब्रह्मण्या द्वादशाहे इष्यते वा न, उक्तैव सुब्रह्मण्या, तस्मादनिरुक्तवचनम्। हेतुश्च कालसंशयत्वात्।

सूत्रमपि केचिदिच्छन्ति। अत्र चोदयन्ति केचित् छन्दोगाः—सुब्रह्मण्या किमर्थमस्माकमुद्दिश्यते। उच्यते। अभिप्रैषार्थं च सुब्रह्मण्या तथाऽतिप्रैषः।

---

१. **स गुणे** मूको। २-२. **गुणिते उत्कृष्यमाणा उत्कृष्यन्तीति** मूको। ३. **सर्वगुणे** मूको। ४-४. °**मुद्धीम तथा** मूको। ५-५. **तत्र सगुणे** मूको। ६-६. **नवशौ** मूको। ७-७. **अतः वित्वयर्थविद्या**° मूको। ८. नास्ति मूको। पाठाभावोऽयं देवत्रातमते सूत्रस्यैतावन्मात्रत्वं सूचयति द्र० भाष्यम्। ९. °**धृतैव** मूको। १०. **क्रियते** मूको।

अतश्चिन्ता क्रियते। 'सारस्वतानामयनेन मित्रावरुणयोरयनेन'[1] प्रयोजयति कथं कर्तव्यमित्युत्तरत्र करिष्यामीति तद् व्याख्यास्यामः। अथवा सुब्रह्मण्यावत्॥ २०॥

[एकेषां मते सुब्रह्मण्याया उत्सर्गः]

**उत्सर्गमेके सुत्योपसद्गुणत्वात्॥ २१॥**

एक आचार्याः सुब्रह्मण्याया[2] उत्सर्गमेवेच्छन्ति। कस्मात्। आह। सुत्योपसद्गुणत्वात्। सुत्योपसद्गुणा भवन्ति। सौत्येष्वहःस्वौपसदेषु सुब्रह्मण्या विहिता। अग्निहोत्रादयो मासा नवौपसदाः, नव सौत्याः, इयं च सुत्योपसद्गुणा[3] तस्मादुत्सर्गमेवैक इच्छन्ति॥ २१॥

[प्रवृत्तायां क्रियायां पूर्त्यभावे दोषः]

**क्रिया त्वेव प्रवृत्ते ह्यन्तमगत्वाऽवस्थाने दोषः॥ २२॥**

पुनः क्रियापक्षोऽवधार्यते। [4]प्रवृत्ते सति प्रारब्धायाः क्रियाया आ अन्तात्[4] क्रिया कर्तव्यैव। अवस्थाने[5] क्रियाया दोषो भवति। को दोषः ? उच्यते। न कश्चिदपदिष्टः। न्यायतस्त्वयं[6] दोषः। यदा किल कश्चिद् ब्राह्मण आमन्त्रितो भवति केनचिदिष्टगृहे[7] दशमेऽहनि भोक्तव्यमिति। स च तं ब्राह्मणमहन्यहनि संबोधयति। द्व्यहं त्र्यहं वा सम्बोधयित्वा यदाऽन्यान्यहानि न सम्बोधयति, तदा तस्य ब्राह्मणस्याशङ्का भवति। किमयं नैव मां भोजयिष्यतीति। एवमिहापीन्द्रस्य शङ्का स्यात्, न ममायं सोम इति। तस्मान्नित्या सुब्रह्मण्या वक्तव्या। प्रवृत्ते हि इत्यत्र हिशब्दोऽवधारणायाम्॥ २२॥

[अग्रे षट्सु मासेष्वितिकर्तव्यता]

**त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासमेकविंशेन मासं त्रिणवेन मासम्। अष्टादश त्रयस्त्रिंशानि द्वादशाहस्य द्वादशाहानि महाव्रतं चातिरात्रश्च॥ २३॥**

यथाप्राप्तमौपवसथिकं कर्म कृत्वा त्रिवृता मासं कर्म कर्तव्यम्। पञ्चदशेन [8]मासं कर्म कुर्वन्ति। सप्तदशेन मासं कर्म कुर्वन्ति[8]। एकविंशेन मासं कर्म[9] कुर्वन्ति। त्रिणवेन मासं कर्म कुर्वन्ति। अष्टादश त्रयस्त्रिंशान्यहानि भवन्ति। षष्ठस्य मासस्याष्टादशाहानि त्रयस्त्रिंशस्तोमानि भवन्ति। द्वादशाहस्य द्वादशाहानि भवन्ति। प्रकृतिभूतस्य द्वादशरात्रस्य दशाहानां व्यूळ्हो दशरात्रः। अस्मिन् पक्षेण(पक्षे ? न) सात्ये(? सौत्यानि) भवन्तीति। महाव्रतं चातिरात्रस्य(? श्च) ऊर्ध्वं दशरात्राद् व्रतम्। अन्ते

---

१-१. सारस्वतैरनेन मित्रावरुणयोरनेन मूको। २. नास्ति मूको। ३. सुत्यापसंगुणा मूको। ४-४. पुवृत्तौ सति प्रारब्धायां आ अंता मूको। ५. अव समासे मूको। ६. न्यायतत्त्वयं मूको। ७. केचिदिष्टि गृहे मूको। ८-८. मासं करोतिं मूको। ९. नास्ति मूको।

उदयनीयातिरात्रः। एवमयं मासोऽन्त्यो वेदितव्यः। प्रायणीयश्चात्र न[1] भवति। नात्र गवामयनक्लृप्तिः षळहमात्रमासा विधीयन्ते। वचनेनोदयनीयः। व्रते च इदमेव ज्ञापकं यथा नात्र गवामयनक्लृप्तिः॥ २३॥

[फलश्रुतिकथनम्]

**सर्वेण यज्ञेन यजन्ते य एतदुपयन्ति॥ २४॥**

सर्वप्रकारेण यज्ञेनेष्टं भवति ये[2] इदं सत्रमुपासते। नायमर्थः 'सर्वयज्ञेनेष्टं[3] भवतीति'। अत्र मासाधिकाराद् गवामयनाधिकारान्मासा वा एतैः स्तोमैर्युक्तास्त्रिवृदादिभिर्वेदितव्याः[4]। यदा स्तोमैस्तदा [5]पृष्ठ्यः प्रथमादह आरभ्य वेदितव्य इति[5]॥ २४॥

॥ इति द्वादशे चतुर्थः खण्डः॥

१. नास्ति मूको। २. इदं मूको। ३. सर्व यज्ञे षष्टभव° मूको। ४. एतव्यं मूको। ५-५. पृष्ठ्य प्रथमाह्न आरभ्यः वेदितव्यानि मूको।

## अथ द्वादशेऽध्याये पञ्चमः खण्डः

[सर्पाणामयनस्योपक्रमः]

**सर्पाणामयनम्॥ १॥**

सर्पाणामयनं सांवत्सरिकं सत्रमधिकृतं वेदितव्यम्॥ १॥

तस्य विधिः—

[गोआयुषोः शस्यत्वेन प्रयोगः]

**गोआयुषी ददृशि[1] स्तोमे॥ २॥**

गोश्चायुश्च ते गोआयुषी दशिना स्तोमेन युक्ते वेदितव्ये, शस्यत्वेन॥ २॥

अस्य शस्यं[2] किमविशेषेणैव ? उच्यते—

[पूर्वोत्तरपक्षयोरनुलोमप्रतिलोमविधिना गोआयुषोः प्रयोगः]

**अनुलोमे षण्मासान् प्रतिलोमे षट्॥ ३॥**

अनुलोमे पूर्वान् षण्मासान् प्रतिलोमे च उत्तमान् षण्मासान्। इदं शस्यं सर्पाणामयनस्य सूत्रं[3] चोदयति। अनुलोम इतीदं न वक्तव्यम्। अन्तरेणापि[4] वचनमनुलोमे भविष्यतः, तथैव विहिते। इदं किलानुलोमवचनं क्रियते योगविभागार्थम्। अयं दोषः स्यात्। योगविभागे अक्रियमाणे, पूर्वेषु[5] षट्सु मासेषु केवलं दशी स्तोमः प्रतीयेत, उत्तरेषु च प्रतिलोमे केवलं गम्येयातां[6] स्तोमवर्जिते। इष्यते च कथं (? अयं) सर्वत्रैव दशी स्तोमः। अतो योगविभागकरणम्। पूर्वे मासे प्रयोगः—गौरायुः, उत्तर आयुर्गौः। आयुर् [7]गौः इत्येतेन[7] प्रकारेण प्रायणीयोदयनीयावेतेषामेवाद्योत्तमे अहनी॥ ३॥

---

१. द्र. वैप ४ पृ. १२४१N टि। २. **सत्रं** मूको। ३. **सूक्तं** मूको। ४. **अनन्तरे°** मूको। ५. **पूर्वं** मूको। ६. **गम्येत** मूको। ७-७. **गौरं तेन** मूको।

[विषुवत्स्थाने ज्योतिष्टोमस्य प्रयोगः]

**ज्योतिर्द्वादशिस्तोमो विषुवत्स्थाने॥ ४॥**

ज्योतिर्द्वादशिना स्तोमेन युक्तः प्राथमिको ज्योतिष्टोमः [1]स विषुवत्स्थाने[1] वेदितव्यः। कुत एतत्प्राथमिकस्यैवैकाहस्य[2] ग्रहणम्। उच्यते। **अथैतेषामह्नाम्**[3] (आश्रौ ११, १, १) इति प्रतिज्ञाकरणे इदमेव प्रयोजनम्, कथमस्या[4] एकाहा अप्यधिक्रियेरन्। विशेषवचने एकाहानां प्राथमिकः गृह्येत[5], संस्थानियमे प्रथम[6]-संप्रत्ययः॥ ४॥

[तत्र कामनाविशेषवचनम्]

**प्रकाशकामा उपेयुः॥ ५॥**

प्रकाशं ये कामयन्ते धनेन वा स्वाध्यायेन वा, त इदं सत्रमुपेयुः अतिरात्रान्तम्[7]॥ ५॥

[प्रजाकामनया त्रैवर्षिकस्यैतस्य प्रयोगः]

**त्रैवर्षिकं प्रजाकामाः॥ ६॥**

त्रैवर्षिकं सत्रमधिकृतं वेदितव्यम्। इदमेवंनाम। तदेतत् सत्रं त्रैवर्षिकं[8] प्रजाकामा उपेयुः॥ ६॥

तस्य विधि :—

[गवामादित्यानामङ्गिरसामयनानां क्रमेण त्रिषु वर्षेषु प्रयोगः]

**गवामयनं प्रथमः संवत्सरोऽथाऽऽदित्यानामथाङ्गिरसाम्॥ ७॥**

गवामयनं प्रथमं[9] प्रथमसंवत्सरशस्यं भवति। अथ द्वितीयमादित्यानामयनशस्यं[10] वेदितव्यम्। तृतीयमङ्गिरसामयनशस्यं भवति। एवं त्रैवर्षिकस्य[11] शस्यं भवति। अत्र [12]गवामयनग्रहणं चोदयति[12], न वक्तव्यमिति। प्रागपदिष्टं गवामयनं सर्वेषां सांवत्सरिकाणां[13] प्रकृतिर्भवति। इह किमर्थं ग्रहणम्। यदि ग्रहणं न क्रियेत, गवामयनं प्रथमः[14] संवत्सर इति सांवत्सरिको दोषः स्यात्। को दोषः। आह

---

१-१. **सर्वेषु च स्थानेषु** मूको। २. °**मिकमेवैकाहस्य** मूको। ३. **तथैतेषा°** मूको। ४. °**अस्या** मूको। ५. **गृह्येते** मूको। ६. **प्रथमः** मूको। ७. °**रतिरात्र** मूको। ८. **त्रैवार्षिकं** मूको। ९. **प्रथमे** मूको। १०. °**मयनं शस्यं** मूको। ११. **त्रैवार्षिकं** मूको। १२-१२. °**ग्रहण चोदयन्ति** मूको। १३. **सांवत्सरिणां** मूको। १४. **प्रथमं सांवत्सरिको** मूको।

'क्रमस्तावन्न सिद्ध्येत[1] गवामयनमादित्यानामयनमङ्गिरसामयनमिति। [2]यद्येतावदेवाभिधीयते पूर्वोपदिष्टानामेव[2] सत्राणां तत्रावस्थितानामेव[3] इह क्रिया चोदिता[4]-वगम्येत। अतोऽयं दोषः पृथग्दीक्षोपसदः प्राप्नुवन्ति।

उद्भिद्बलभिदिति यथैवोद्भिद्बलभिदावेकाहौ चोद्येते तद्वद् द्वन्द्वयज्ञाभ्यां चैकफलम्, पृथग् दीक्षोपसदो भवन्ति[5]। कथमिहापि[5] गम्येत, अतः प्रथमः संवत्सर उच्यते। अथवा प्रायणीयोदयनीयावेव स्याताम् आद्यन्तयोर्विहितत्वात्। दृश्यन्ते[6] च प्रतिसंवत्सरं प्रायणीयोदयनीयौ विषुवांश्च, तस्माद् गवामयनवचनं प्रथमः संवत्सर इति॥ ७॥

[चतुर्णां तापश्चितानामयनानामुपक्रमः]

**चत्वारि तापश्चितानि॥ ८॥**

चत्वारि तापश्चितानि 'वक्ष्यन्ते। उत्तरो विधिस्तापश्चितानां चतुर्णां वेदितव्यः। अत्र 'चत्वारि तापश्चितानि' इदं न वक्तव्यम्। कस्माद्, उत्तरत्र चतुर्णामेवोपदेशात्। क्षुल्लकतापश्चितं त्रैवर्षिकं तापश्चितं [7] द्वादशवर्षिकं तापश्चितं[7] षाट्त्रिंशद्वर्षिकं महातापश्चितम्, एवं स्वयमेव चत्वारि तापश्चितानि विधास्यति, इह किमर्थं वचनं, कस्मादपदिष्टं, नियमार्थं तापश्चितवचनं प्रागपदिष्टं "**द्वादशाहतापश्चितेषु यथा सुत्योपसदः** (आश्रौ ४, २, १५) इति। इह च क्षुल्लकशब्देन च चोदनां करोति तापश्चितानां, विहितो विधिः क्षुल्लकादिभिः शब्दैः संयुज्य विहितानां न प्राप्नुयादयं दोषः स्यात्। उत्तरत्र वक्ष्यति, **उक्तो गवामयनेन** (आश्रौ १२, ५, १२), **सौत्यः संवत्सरः** (आश्रौ १२, ५, ११) तावताऽत्रैवं ब्रवीति, तेन दीक्षाः प्राप्नुवन्ति, उपसदश्च। विषुवानतिरिक्त इति कृत्वा तेन सौत्यानामतिदिष्टत्वात् तापश्चितवचनं नियमार्थम्॥ ८॥

[क्षुल्लकतापश्चितस्य संवत्सरसाध्यत्वम्]

**क्षुल्लकतापश्चितं प्रथमं संवत्सरं सदीक्षोपसत्कम्॥ ९॥**

तेषु क्षुल्लकतापश्चितं प्रथमम्। तस्य विधिः— संवत्सरं सदीक्षोपसत्कं सह दीक्षाभिरुपसद्भिस्तम्, तैश्च (? ताभिश्च) संवत्सरं भवति। अत्र संवत्सरवचनं वेदितव्यम्। चत्वारो मासाः सौत्या वक्ष्यन्ते[9]। परिशिष्टादौ दीक्षोपसदो भविष्यन्तीति, **यथा सुत्योपसदः** (आश्रौ ४, २, १५) इति वचनात्। इदमस्य प्रयोजनम्। अत्र

---

१-१. क्रमस्तावन्त सिद्ध्यैव मूको। २-२. °धीयन्ते एवो° मूको। ३. यत्राव° मूको। ४. चोदितामेव गम्येत मूको। ५-५. भवति कराकमिहापि मूको। ६. दिश्यते मूको। ७-७. नास्ति मूको। ८. द्वादशाहं तेषु मूको। ९. द्र. आश्रौ १२, ५, १०।

गावामयनिक उत्तमो मासो विधीयते, तस्मिंश्च व्रतम्[1]। तेनात्र सव्रतत्वात् संवत्सरदीक्षत्वं प्राप्नोति, तन्निवृत्त्यर्थं[2] संवत्सरवचनं **संवत्सरं त्वेव सव्रते** (आश्रौ ४, २, १४) इति वचनात्। तत्र त्वेवकारस्य[3] इदमेव प्रयोजनं कथं द्वादशाहतापश्चितेष्वपि सव्रतत्वं दृष्ट्वा संवत्सरदीक्षत्वमेव[4] स्यादिति ॥ ९ ॥

[तस्याहर्व्यवस्था]

**तस्य चत्वारः सौत्या मासा गवामयनस्य प्रथमषष्ठसप्तमोत्तमाः ॥ १० ॥**

तस्य क्षुल्लकलक्षणस्य तापश्चितस्याहर्व्यूहः—चत्वारः सौत्या मासा गवामयनस्य प्रथमषष्ठसप्तमोत्तमाः एते चत्वारोऽस्य मासा वेदितव्याः। विषुवांस्तु न भवति। प्रायणीयोदयनीयौ च मासावेतौ द्वौ स्वयमेव भवतः। [5]सर्पाणामयवादारभ्य अयनशब्दो[5]ऽनुवर्तते ॥ १० ॥

[त्रैवर्षिकतापश्चितस्य सौत्यः संवत्सरः]

**त्रैवर्षिकं तापश्चितं तस्य सौत्यः संवत्सरः ॥ ११ ॥**

त्रैवर्षिकं तापश्चितमयनमधिकृतं वेदितव्यम्। तस्य तापश्चितस्य सौत्यः संवत्सरः ॥ ११ ॥

[तत्र शस्यविधानं गवामयनवत्]

**उक्तो गवामयनेन ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतं चतुर्विंशानां वैकैकम् ॥ १२ ॥**

उक्तो गवामयनेन व्याख्यात इत्यर्थः। इदमस्य शस्यं भवति, दैक्षः संवत्सर औपसदः सौत्य इति। अत्र गवामयनवचनं विषुवतः प्रापणार्थम्[6]। किमेतदेव शस्यम्। उच्यते। न। ज्योतिर्गौरायुरेवमादीनां वा अन्यतरेण[7] संवत्सरं कर्म कर्तव्यम्। अत्र संस्थानियमः। अष्टानामेवैतौ[8] प्रायणीयोदयनीयौ ॥ १२ ॥

[द्वादशवर्षिकतापश्चितस्याहर्व्यूहः]

**द्वादशवर्षिकं तापश्चितं तस्य चत्वारः सौत्याः संवत्सरा गवामयनशस्याः पूर्वेणैव न्यायेन ॥ १३ ॥**

द्वादशवर्षिकं नाम[9] तापश्चितमयनमधिकृतं वेदितव्यं भवति। तस्य शस्यं चत्वारः सौत्या संवत्सरा गवामयनशस्याः पूर्वेण न्यायेन। पूर्वो न्यायः इति

---

१. व्रत मूको। २. निवृत्त्यर्थं मूको। ३. वैवका° मूको। ४. दीक्षत्वमेव कथं मूको। ५-५. °मयनान्वारभ्यः अयं श° मूको। ६. प्रायणीयार्थं मूको। ७. नान्तरण मूको। ८. °नामेव तौ मूको। ९. वा मूको।

**न्वेकसंभार्यमुत्तरं पक्षः** (आश्रौ ११, ७, १३) एवं संमतो गवामयनस्य पूर्वो न्यायः। गवामयनग्रहणं च पूर्वस्य विशेषार्थमेव, अयं विधिः सिद्धो भवति॥ १३॥

[षाट्त्रिंशद्वर्षिकमहातापश्चितस्य सविकल्पोऽहर्व्यूहः]

***षाट्त्रिंशद्वर्षिकं महातापश्चितं तस्य द्वादश सौत्याः संवत्सरा गवामयनशस्याः पूर्वेणैव न्यायेन, अपि वोत्तरस्य पक्षसो द्वाविंशतिः सवनमासा भवेयुस्त्रयोविंशतिः पूर्वस्य॥ १४॥**

षाट्त्रिंशद्वर्षिकं महातापश्चितम् अयनं वेदितव्यम्। तस्य शस्यम्—द्वादश सौत्याः संवत्सरा[1] वेदितव्या गवामयनशस्याः पूर्वन्यायेन। गवामयनग्रहणे[2] पूर्ववत् प्रयोजनं वेदितव्यम्। अयं विधिः सिद्धो भवति। द्वादश दैक्षाः संवत्सरा द्वादश[3] औपसदाश्च द्वादश सौत्याश्च। अपि वोत्तरस्य पक्षसो [4]द्वाविंशतिः सवनमासा भवेयुः[4], त्रयोविंशतिः पूर्वस्य। अयं वा पक्षो भवति। तस्योत्तरपक्षसो द्वाविंशतिः सवनमासा भवन्ति, त्रयोविंशतिः पूर्वस्य। अपि[5] वा सवनमासाश् **चतुरभिप्लवान् पृष्ठ्यपञ्चमान् पञ्च मासानुपयन्ति**[6] (द्र० आश्रौ ११, ७, २), **पृष्ठ्यमुखान् चतुरभिप्लवान् चतुरो मासान् उपयन्ति**[7] (द्र० आश्रौ ११, ७, १०) [8]एते सवनमासा[8] इत्युच्यन्ते। [9]एतान् यथाविहितानुत्तरे च पक्षे पूर्वे च[9] करोति। सर्वथा संहा(?भा)र्याणां मासानामनावृत्तिः साधिता भवति। षष्ठसप्तमोत्तमानामन्ये सवनमासा आवर्तन्ते। आह। अयं विधिरत्र नोपपद्यते। तर्हि[10] किमर्थमाम्नातः ? उच्यते। संवत्सरपाठाद् वा अथवा शुद्धिपूर्वकमत्रायं विधिः प्रदर्शितः सर्वत्र स्यादिति। तेनेदं सिद्धं भवति। यस्मिन्नपि [11]षट्त्रिंशत्संवत्सरे अन्त्येषु चकुरुषु (चतुर्षु ?) कर्तव्यः[11]। [12]षट्त्रिंशत्संवत्सरे द्वासप्ततिः[12] पूर्वपक्षस्य एकसप्ततिरुत्तरस्य[13] संभार्याणां सकृत्प्रयोगे। विषुवांश्च मध्येसंवद् भवति। षट्सु संवत्सरेष्वेवं सर्वत्र विनियोगो वेदितव्यः॥ १४॥

[प्रजापतेरयनस्य द्वादशसंवत्सरसाध्यत्वम्]

**प्रजापतेर्द्वादशसंवत्सरम्॥ १५॥**

---

*(?) देवत्रातः 'षट्त्रिंश .................. न्यायेन। अपिवोत्त .............. पूर्वस्य।' इति सूत्रक्रमं मनुते इति प्रतीयते तद्व्याख्यादर्शनेन। १. **संवत्सरसौत्या** मूको। २. °**ग्रहणं** मूको। ३. नास्ति मूको। ४-४. °**शति मासाभ**° मूको। ५. **अयं** मूको। ६. द्र. आश्रौ ११, ७, २। ७. **भवन्ति** मूको। ८-८. **एकसवन**° मूको। ९-९. **एतां यथाविहितमुत्तरे च पक्षे च** मूको। १०. **तस्मिन्** मूको। ११-११. मूको पाठः पुनरावृत्तः। १२-१२. °**त्सर द्वास प्रति** मूको। १३. °**तिमुत्तरस्य** मूको।

प्रजापतेर्द्वादशसंवत्सरम् अयनमधिकृतं वेदितव्यम्॥ १५॥

[तत्र शस्यविधानं शाक्त्यानामयनस्य चोपक्रमः]

**त्रयस्त्रिवृतः संवत्सरास्त्रयः पञ्चदशास्त्रयः सप्तदशास्त्रय एकविंशाः। एतैरेव स्तोमैः शाक्त्यानां षाट्त्रिंशद्वर्षिकम्॥ १६॥**

तस्य शस्यविधिः—त्रयः त्रिवृत्स्तोमयुक्ताः[१] संवत्सराः कर्तव्याः, त्रयः पञ्चदशस्तोमयुक्ताः। स्तोमैरह्नामध्यवसानं भवतीति पुनः पुनस्त्रिस्त्रिग्रहणं क्रियते, सर्वैः स्तोमैः संवत्सरा मा भूवन्निति। एवमस्मिन् प्रजापतेरयनेऽहानि भवन्ति। एतैरेव स्तौमैः शाक्त्यानामयनं नाम सत्रं षाट्[त्रिंशद् ?]वर्षिकं पूर्वापदिष्टैस्त्रिवृदादिभिः स्तोमैर्वेदितव्यम्॥ १६॥

[तत्राहर्व्यूहः स्तोमविधानं च]

**एकैकेन नव नव वर्षाणि॥ १७॥**

एकैकेन स्तोमेन नव वर्षाणि, त्रिवृता प्रथमो नवकः, पञ्चदशेन द्वितीयो नवकः, [सप्तदशेन तृतीयो नवकः, एकविंशेन चतुर्थो नवकः]॥ १७॥

[साध्यानामयनस्य विधानम्]

**एतैरेव स्तोमैः साध्यानां शतसंवत्सरमेकैकेन पञ्चविंशतिः पञ्चविंशतिवर्षाणि॥ १८॥**

अनेन प्रकारेण एतैरेव स्तोमैः साध्यानामयनं नाम सत्रं शतसंवत्सरं कर्तव्यमिति वाक्यशेषः। एतैरेव त्रिवृदादिभिः स्तोमैरस्य साध्यानामयनस्य शस्यं वेदितव्यम्। एकैकेन स्तोमेन पञ्चविंशतिः पञ्चविंशतिः[२] वर्षाणि वेदितव्यानि। कर्तव्यानि त्रिवृता प्रथमानि पञ्चविंशतिः॥ १८॥

[विश्वसृजामयनस्य विधानम्]

**एतैरेव स्तोमैर्विश्वसृजां सहस्रसंवत्सरमेकैकेनार्धतृतीयान्यर्धतृतीयानि वर्षशतानि॥ १९॥**

अनेन क्रमेणैतैरेव स्तोमैर्विश्वसृजामयनसत्रं सहस्रसंवत्सरं कर्तव्यमिति वाक्यशेषः। एतैरेव त्रिवृदादिभिः स्तोमैर्विश्वसृजामयनं वेदितव्यम्। एकैकेन स्तोमेनार्द्धस्तोमेनार्द्धतृतीयान्यर्धतृतीयानि वर्षशतानि[३] वेदितव्यानि, कर्तव्यानि। [४]त्रिवृता पूर्वाणि[४] अर्धतृतीयानि वर्षशतानि। अनेन प्रकारेण शस्यं वेदितव्यम्॥ १९॥

---

१. त्रिवृतः स्तोम° मूको। २. नास्ति मूको। ३. वर्षाणि मूको। ४-४. त्रिवृदात्पूर्वेण मूको।

[अग्नेरयनस्य विधानम्]

अग्नेः* ॥ २० ॥

[तत्राहर्व्यूह]

अग्निष्टोमसहस्रम् ॥ २१ ॥

तस्य शस्यमग्निष्टोमसहस्रं कर्तव्यम्। अत्र संस्थानियमः। अत्र किल प्रायणीयोदयनीयावतिरिक्तौ कर्तव्यौ ॥ २१ ॥

[अग्नेरयनस्य सहस्रसाव्यमिति संज्ञान्तरम्]

सहस्रसाव्यमित्येतदाचक्षते ॥ २२ ॥

यान्येतानि प्रजापतेर्द्वादशसंवत्सरम् (आश्रौ १२, ५, १५) इत्येवमादीनामेवाह्रामाद्योत्तमे अहनी[१] अतिरात्रौ कर्तव्यौ। छन्दोगेषु प्रतिषेधः। एवं दीक्षोपसदश्च द्वादश चतुर्विंशतिः संवत्सर इति (आश्रौ ४, ८, १५) एकाहप्रभृत्या संवत्सराद् (आश्रौ ४, २, १४) अस्मिन् प्रकरणे यथाविहितास्तथा वेदितव्याः ॥ २२ ॥

॥ इति द्वादशे पञ्चम खण्डः ॥

---

* भाष्यं नोपलभ्यते। १. अहीने मूको।

# अथ द्वादशेऽध्याये षष्ठः खण्डः

[सारस्वतसत्राणामुपक्रमः]

**अथ सारस्वतानि ॥ १ ॥**

अथ सारस्वतान्यधिकृतानि वेदितव्यानि। अथशब्दो ग्रन्थानन्तर्ये प्रकरणादौ वा ॥ १ ॥

तेषां दीक्षणदेशोपदेशः क्रियते—

[तत्र दीक्षास्थाननिर्देशः]

**सरस्वत्याः पश्चिम उदकान्ते दीक्षेरन् ॥ २ ॥**

सरस्वत्याः यः[1] पश्चिम उदकान्तः, तस्मिन् देशे दीक्षणं कर्तव्यम् प्लाक्षं प्रस्रवणम् (आश्रौ १२, ६, २९) यथा प्रत्यङ्मुखी गच्छति (न्ती ?) सरस्वती यस्मिन् देशे विनश्यति, विनश्यति नाशं गच्छतीत्यर्थः। तस्मिन् देशे दीक्षणं कर्तव्यम् ॥ २ ॥

[तत्रेतिकर्तव्यता यजमानानाञ्चानुगमनम्]

**ते तत्रैव दीक्षोपसदः कृत्वा प्रायणीयं च सरस्वतीं दक्षिणेन तीरेण शम्याप्रासे शम्याप्रासेऽहरहर्यजमाना अनुव्रजेयुः ॥ ३ ॥**

तस्मिन् पश्चिम उदकान्ते दीक्षणं कृत्वा ते तत्रैव दीक्षोपसदः कृत्वा, प्रायणीयं चाऽहरहः [2]कृत्वा यजमाना[2] अनुव्रजेयुः। तस्मिन्नेव विनशने[3] ते दीक्षोपसदश्च कुर्वन्ति। कृत्वा दीक्षोपसदः प्रायणीयमप्यतिरात्रं तस्मिन्नेव देशे कुर्वन्ति। अथ प्रायणीयं कृत्वा सरस्वतीं दक्षिणेन तीरेण शम्याप्रासे सम्याप्रासेऽहरहर्यजमाना अनुव्रजयेयुः। [4]सरस्वतीं[4] दक्षिणेन तीरेण शम्या क्षिप्ता सती यस्मिन् देशे निपतति

---

१. नास्ति मूको। २-२. कृत्वा प्रायणीयं चाहरहः यज॰ मूको। ३. विनाशय मूको। ४-४. नास्ति मूको।

तावद्देशे यजमाना यजन्त उत्थानप्रदेशं गच्छन्ति। येन शम्या क्षेप्तव्या यस्मिन् देशे स्थितेन, तं पश्चाद् वक्ष्यामः। अहन्यहनि कर्म कुर्वन्तो दक्षिणेन तीरेण सरस्वतीं गच्छन्ति। अत्र किल ते तत्रैव दीक्षोपसदः कृत्वा इदं न वक्तव्यम्, तस्मिन्नेव दीक्षोपसदो भविष्यन्तीति। कस्माद्, यजन्तः गवां प्रतीति* (? प्रयान्तीति) [1]वचनात्। यदैव[1] सौत्यान्यहानि प्रारब्धानि भवन्ति, तदैव यागः प्रारब्धो भवति, नैव (यत्रैव ?) दीक्षासु यजतिचोदना भवति, तत्रैव स्यादुपसत्सु [2]यजति कर्म[2]। तदपि न प्राधान्येन [3]गृह्यन्ते (ते ?) यजति[3]-कर्म। एवमपार्थकं ते[4] तत्रैव दीक्षोपसदः कृत्वेति। इदमस्य प्रयोजनम्। **मित्रावरुणयोरयनम्** (आश्रौ ६, ६, १०) उत्तरत्र वक्ष्यति। तत्र च अग्निहोत्रादयः सोमा गच्छतां विधीयन्ते। मासि मासि गोआयुषी[5] विधीयेते। तत्र पृथगेकाह इति कृत्वा गोआयुषी-[6]संज्ञकान्...इतरस्मिन्[6] देशे दीक्षोपसदः [7]क्रियेरन्। इष्यते[7] च, कथं सर्वेषां सारस्वतानामस्मिन् देशे दीक्षणं स्यादिति। तस्मात् तत्रैव दीक्षोपसदः कर्तव्याः। अथ प्रायणीय आदौ प्राप्त एव पुनः किमर्थं विधीयते वचनेन। उच्यते, उदयनीयनिवृत्त्यर्थम्। उदयनीयो नात्र भवतीति प्रायणीय एव केवलं भवतीत्युदयनीयस्थानीयानां[8] वक्ष्यति—**विश्वजितातिरात्रेण** (आश्रौ १२, ६, ३६) अतः प्रायणीयस्योपदेशः। दक्षिणतीरग्रहणमुत्तरनिवृत्त्यर्थम्। एवं कर्म कुर्वन्तः प्राङ्मुखाः प्लाक्षं प्रस्रवणं गच्छन्ति। यूपादीनि कथं नेतव्यानीति कृत्वोपायनप्रदर्शनार्थमुत्तरमारभ्यते॥ ३॥

[तत्र यूपस्य लक्षणम्]

**संभार्य[9] उलूखलबुध्नो यूपः॥ ४॥**

**संभार्यः सहभार्यः** यजमानैर्यूपः। उलूखलस्येव च समूलो भवति **यूपः**॥ ४॥

[सदोहविर्धानानां लक्षणम्]

**चक्रीवन्ति सदोहविर्धानानि॥ ५॥**

**चक्रीवन्ति सदोहविर्धानानि** सदो हविर्धानानि च तानि, **सदोहविर्धानयोर्द्वौ** (**द्वयोर्**विधानार्थं बहु)वचनम्॥ ५॥

[आग्नीध्रीयपत्नीशालयोर्लक्षणम्]

**आग्नीध्रीयं पत्नीशालां च॥ ६॥**

**यद्यप्येका** शाला तथापि तत्संयोगाद् आग्नीध्रीयं पत्नीशालं च। [10]किं **चक्रीवती**[10] प्रयुक्ते भवत आग्नीध्रीयपत्नीशाले॥ ६॥

---

१-१. **वचनादैव** मूको। * **यजमाना अनुव्रजेयुः** इत्यस्यार्थिकमुद्धरणं प्रतीयते ?। २-२. **यजन्ति** मूको। ३-३. **गृह्यन्ते यजन्ति कर्म** मूको। ४. नास्ति मूको। ५. द्र. आश्रौ १२, ६, १२। ६-६. °**युषी संज्ञकानितिर**° मूको। ७-७. **क्रियेरन्निष्यते** मूको। ८. **शेषषष्ठी प्रतीयते**। ९. **संहार्यः** B. I. आन°। १०-१० **किं चक्री च प्र**° मूको।

[गार्हपत्याऽऽयतनस्थाननिरूपणम्]

**दक्षिणपुरस्तादाहवनीयस्यावस्थाय ब्रह्मा शम्यां प्रहरेत् सा यत्र निपतेत् तद् गार्हपत्यस्याऽऽयतनं ततोऽधिविहारः ॥ ७॥**

दक्षिणपुरस्तादाहवनीयस्य यो देशस्तस्मिन्नवस्थाय[१] ब्रह्मा शम्यां प्रहरेत्, सा यत्र निपतति शम्या, तद् गार्हपत्यस्याऽऽयतनम्। योऽसौ शालामुखीयो [देशः] गार्हपत्यं तदुपचर्यते[२] तस्य शम्यायतनं वेदितव्यमतोऽधिविहारो वेदितव्यः। तस्माद् गार्हपत्यस्य [आयतनाद् ?] अधिविहारः कर्तव्य। पूर्वेणातिप्रणीतानि (पूर्वमतिप्रणीतः ?) आहवनीयः कर्तव्यः, पश्चाद् गार्हपत्यदक्षिणाग्नी कर्तव्यौ ॥ ७॥

[विषमे देशे शम्यापाते समे देशे विहारः कार्यः]

**विषमे चेन्निपतेदुद्धृत्य समे विहरेयुः ॥ ८॥**

विषमे चेत् निपतेत्[३] सा हि शम्या यदा क्षिप्ता सती विषमे देशे निपतति, उद्धृत्य शम्यां तत्सम एव देशे निपातदेशे स्थापयति। तस्मिन् विहारः कर्तव्यः॥ ८॥

[अप्सु शम्यापाते प्रायश्चित्तस्य स्वरूपम्]

**अप्सु चेद् वारुणं पुरोळाशं निर्वपेयुः। अपांनप्त्रे चरुम्। 'अपान्नपादा ह्यस्थादुपस्थम्', 'समन्या यन्त्युपयन्त्यन्या' इति। आतः समानं सर्वेषाम् ॥ ९॥**

अप्सु चेद् यदि शम्या निपतति[४]। कर्तव्यमुच्यते। तदेतं प्रायश्चित्तं कर्तव्यम्। वारुणं पुरोळाशं निर्वपेयुरिति दीक्षिताः। किमेतावदेव। उच्यते। 'अपांनप्त्रे चरुं' निर्वपन्ति। उद्धृत्य तु समीप एव विहरन्त्यग्नेः। वरुणस्य याज्यानुवाक्ये वरुणप्रघासे[६]। अपांनप्तुः[७] इमे एव **अपान्नपादा ह्यस्थादुपस्थम्** (ऋ २, ३५, ९), **समन्या यन्त्युपयन्त्यन्याः** (ऋ २, ३५, ३) इति। आ अतः समानं विधानं भवति सर्वेषां सारस्वतानां दीक्षणादिचरुनिर्वपणान्तम्[८] ॥ ९॥

[मित्रावरुणयोरयनस्योपक्रमः]

**मित्रावरुणयोरयनम् ॥ १०॥**

मित्रावरुणयोरयनं नाम प्रथमं सारस्वतानां सत्रं[९] वेदितव्यम् अधिकृतम् ॥ १०॥

---

१. °वस्थानाय मूको। २. °चर्यत मूको। ३. क्रियते मूको। ४. निवपति मूको। ५-५. न अनेन पुनश्चरुं मूको। ६. द्र. आश्रौ २, १७, १५। ७. सोमपानस्तु मूको। ८. चरुं निर्वापणान्तम् मूको। ९. नास्ति मूको।

[तस्याहर्व्यूहः]

**कुण्डपायिनामयनस्याद्यान् षण् मासानावर्तयन्तो व्रजेयुः॥ ११॥**

तस्य कुण्डपायिनामयनस्य य आद्याः षण् मासा अग्निहोत्रादयः, तान् मासानावर्तयन्तो व्रजेयुः। आ उत्थानकालप्राप्तेरग्निहोत्रादीन् मासान् कुर्वन्तो व्रजन्तीति। समाप्तेषु मासेषु षट्स्वथ पुनरारम्भः। अनेन सरस्वतीम् अनुगच्छेयुः किमेतावन्तो(? तो)च्यते॥ ११॥

अयं विशेषो भवति—

[तत्राहर्व्यूह गोआयुषोर्मासानुसारं व्यवस्थाविशेषः]

**मासि मासि च गोआयुषी उपेयुः। आयुरयुग्मेषु गौर्युग्मेषु॥ १२॥**

'मासि मासि'[1] गोआयुषी उपेयुः[2]। 'मासे मासे' गोआयुषी भवतोऽहनी किमविशेषेणैव ते, [3]अत आह। आयुरयुग्मेषु गौर्युग्मेषु[3]। आयुर् अयुग्मेषु मासेषु प्रथमतृतीयपञ्चमेषु, गौः युग्मेषु[4] मासेषु कर्तव्यो द्वितीयचतुर्थषष्ठेषु। यदा अमावास्यायां[5] मासः पूर्यते, तदर्थाय[6] यथाप्राप्तं कर्तव्यम्। वीप्साकरणमत्यन्तप्रापणार्थं विधानस्य॥ १२॥

[प्रथमकल्पोपसंहारः]

**इति नु[7] प्रथमः कल्पः॥ १३॥**

इतिः प्रकारवचने द्रष्टव्यः। नुशब्द[8]-(? स्त्व)यमुत्तरविवक्षया भवति। यथा **इति न्वेकसंभार्यमुत्तरपक्षः** (आश्रौ ११, ७, १३), **इति नु गतयः** (आश्रौ १२, ६, २७)॥ १३॥

[मित्रावरुणयोरयनस्य द्वितीयकल्पस्योपक्रमः]

**अथ द्वितीयः॥ १४॥**

अथ द्वितीयः पक्षो वेदितव्यः॥ १४॥

[द्वितीयकल्पेऽहर्व्यूहविशेषः]

**यथाऽमावास्यायामतिरात्रः स्यात् तथा दीक्षेरन्॥ १५॥**

यथाऽमावास्यायामतिरात्रो भवति तथा दीक्षणं कर्तव्यम्। शुक्लपक्षस्य षष्ठ्यां पञ्चम्यां वा दीक्षणं कर्तव्यम्?। कृष्णपक्षद्वितीयायां दीक्षां समाप्य तृतीयस्मिन्नेवाहनि

---

१-१. मासि मूको। २. मधेयुः मूको। ३-३. एव अति आयुः मूको। ४. नास्ति मूको। ५. अमावास्याया मूको। ६. तदर्था मूको। ७. तु मूको। ८. न शब्द त्वयमुत्त° मूको।

प्रायणीयस्यातिरात्रस्य प्रतिक्रमं कुर्वन्ति ॥ १५ ॥

[अमावस्यायामतिरात्रं कृत्वेतिकर्तव्यता]

**तेऽमावास्यायामतिरात्रं संस्थाप्य तदहरेवामावास्यस्य सान्नाय्यवत्सानपाकुर्युः ॥ १६ ॥**

तेऽमावास्यायामेवातिरात्रं संस्थापयन्ति। द्व्यहकालत्वादतिरात्रस्यास्मिन्नहन्याश्विनादि भवति[1]। इष्यते चामावास्यायामेव समानेऽहनि समापनम्। तदहरेवामावास्यस्य योगस्यार्थाय सान्नाय्यवत्सानपाकुर्युः समाप्य[2] एतेऽमावास्यायामतिरात्रम[? न]न्तरं वत्सापाकरणं कुर्वन्ति[2] ॥ १६ ॥

[पक्षं समाप्य पौर्णमास्यां गोः प्रयोगः]

**तं पक्षमामावास्येन व्रजित्वा पौर्णमास्यां गामुपेयुः ॥ १७ ॥**

तं पक्षं शुक्लपक्षम् आमावास्येन हविषाऽङ्गं कुर्वन्तो गच्छन्ति। अथ पौर्णमास्यां गामुपेयुर्गौः कर्तव्य इत्यर्थः ॥ १७ ॥

[पौर्णमासेन कृष्णपक्षं समाप्यामावास्यायामायुषः प्रयोगः]

**पौर्णमासेनोत्तरं व्रजित्वाऽमावास्यायामायुषमुपेयुः ॥ १८ ॥**

पौर्णमासेन हविषोत्तरं कृष्णपक्षं व्रजित्वाऽमावास्यायाम् आयुषमुपेयुः आयुः[3] कर्तव्यम् इत्यर्थः ॥ १८ ॥

[एवं मासानां पूरणम्]

**एवमावर्तयन्तो व्रजेयुः ॥ १९ ॥**

अनेन प्रकारेणाऽवर्तयन्तः मासान्[4] व्रजन्त्युत्थानदेशम् ॥ १९ ॥

[इन्द्राग्न्योरयनस्योपक्रमः]

**इन्द्राग्न्योरयनम्* ॥ २० ॥**

[तत्राहर्व्यूहो गोआयुषीभ्यां पूरणीयः]

**गोआयुषीभ्याम् ॥ २१ ॥**

इन्द्राग्न्योरयनं गोआयुषीभ्यां वेदितव्यम्। गौर् आयुः एवं[5] गोआयुषी आवर्तयन्तो व्रजन्ति यावदुत्थानदेशम् ॥ २१ ॥

---

१. भवन्ति मूको। २-२. समापयित्वा एव अमावास्यामतिरात्रमन्तर-वत्सोपाकरणं करणं करोति मूको। ३. नास्ति मूको। ४. मासा मूको। ५. ए मूको।

* भाष्यं नोपलभ्यते।

[अर्यम्णोऽयनस्योपक्रमः]

**अर्यम्णोऽयनम्॥ २२॥**

अर्यम्णोऽयनं नाम तृतीयं सारस्वतमधिकृतं वेदितव्यम्॥ २२॥

[तत्राहर्व्यूहस्य त्रिकद्रुकैः पूरणम्]

**त्रिकद्रुकैः॥ २३॥**

शस्यविधिस्त्रिकद्रुकैर्वेदितव्यः। त्रिकद्रुकास्तावन्तो वक्तव्याः पुनः पुनर्याव-दुत्थानदेशं प्राप्ताः॥ २३॥

[सरस्वतीपरिसर्पणसंज्ञकसारस्वतस्य कथनम्]

**सरस्वतीपरिसर्पणस्य शस्यमुक्तं गवामयनेन॥ २४॥**

इदमनुशस्यं भवति। यदेतदपदिष्टं प्राक् पञ्चमे षष्ठे सप्तमाष्टमयोश्च। अन्यच्च यदुपदिष्टमुच्यते। अपदिष्टस्य[१] इहानुकीर्तने किं प्रयोजनम्। उच्यते। अधिकारार्थम्। य एते सवनीया विधीयन्ते, ते कथं सर्वेषां ज्योतिष्टोमादीनां स्युरिति। तस्माच्छस्यग्रहणं सर्वक्रत्वधिकारार्थं क्रियते॥ २४॥

[चतुर्विंशाद्येकपातिनामह्नामतिरात्रसंस्थाकत्वम्]

**एकपातीनि त्वहान्यतिरात्राः*॥ २५॥**

[पृष्ठ्यषडहस्य चतुर्थमहरतिरात्रसंस्थम्]

**पृष्ठ्याहश्चतुर्थम्*॥ २६॥**

[सारस्वतसत्राणामुपसंहारः]

**इति नु गतयः*॥ २७॥**

(सत्रोत्थानम्)

**अथोत्थानानि*॥ २८॥**

[उत्थानदेशत्वेन प्लाक्षप्रस्रवणस्य विधानम्]

**प्लाक्षं प्रस्रवणं प्राप्योत्थानम्*॥ २९॥**

---

१. अपदिष्टशस्य इ° मूको। * भाष्यं नोपलभ्यते।

[तेषामवभृथस्नानस्य कथनम्]

**ते यमुनायां कारपेचवेऽवभृथमभ्युपेयुः*॥ ३०॥**

[अवभृथानन्तरं वैराजतन्त्राया इष्टेः प्रयोगः]

**उदेत्याग्नये कामायेष्टिर्वैराजतन्त्रा*॥ ३१॥**

[तत्रेष्टावश्वीं स्त्रीं च धेन्ववस्थे दद्युः]

**तस्यामश्वीं च पुरुषीं च धेनुके दद्युः*॥ ३२॥**

[उत्थानविकल्पकथनम्]

**एतद् वोत्थानम्*॥ ३३॥**

[वृषभसहितानां वैकशतानां गवां सहस्रभावे उत्थानम्]

**ऋषभैकशतानां वा गवां सहस्रभावे*॥ ३४॥**

[सर्वस्वापहारे उत्थानम्]

**सर्वस्वज्यान्याम्*॥ ३५॥**

[गृहपतिमरणे वोत्थानं तत्र विशेषश्च]

**गृहपतिमरणे वा ज्यान्यां तूत्तिष्ठन्तो विश्वजिताऽतिरात्रेणोत्तिष्ठेयुर्गृहपतिमरण आयुषा गवा गवां सहस्रभावे*॥ ३६॥**

[शस्यविधानोपसंहारः]

**इति शस्यम्*॥ ३७॥**

॥ इति द्वादशे षष्ठः खण्डः॥

---

* भाष्य नोपलभ्यते।

# अथ द्वादशेऽध्याये सप्तमः खण्डः

[सवनीयपशूनां निरूपणस्योपक्रमः]

**अथ सवनीयाः॥ १॥**

अथेदानीं सवनीयाः पशवो वक्ष्यन्ते। सवनेषु भवाः सवनीयाः। अथशब्द आनन्तर्ये[१]। सवनीया अधिकृता[१] वेदितव्याः॥ १॥

[पूर्वोक्तक्रतुपशूनां सवनीयत्वम्]

**क्रतुपशवो वाऽत्यन्तम्॥ २॥**

क्रतुपशवो वाऽत्यन्तं, कर्तव्या इति वाक्यशेषः। सवनीयाः क्रतुपशवो भवन्ति। आग्नेयादयः क्रतुपशवः प्रागपदिष्टाः[२] भवन्ति[३], यथाविहितमेक एको वा द्वौ[४] द्वौ वा संस्थासंबन्धात्[४]। येनैव प्राग् विहितास्तेनैव भवन्तीति वाकारः। अन्यानप्यध्वर्युविहितान् पशून् दर्शयन्ति, तेऽपि कर्तव्या इत्युक्तं भवति। अत्यन्तवचनं किमर्थम्। अत्यन्तं स्युरित्युच्यते, भवति अत्यन्तम्। किं तर्हि, उत्तरार्थमत्यन्तवचनम्॥ २॥

[आग्नेयैन्द्राग्न्योः पश्वोर्विकल्पेन सवनीयत्वम्]

**आग्नेयो वैन्द्राग्नो वा॥ ३॥**

[५]आग्नेयो वा ऐन्द्राग्नो वा इत्येवं[५] वा भवति सवनीयम्। अत्यन्तमहन्यहनि सवनीयम्, यथा गवामयनं, द्वादशाहा द्व्यहप्रभृतयोऽहीनादीनि संवत्सराणामुदाहरणानि। क्रतुपशूनां चान्येषामप्याग्नेयादीनां[६] यथाक्रमं विनियोगो वेदितव्यः। प्रथमे प्रथमः क्रतुपशुः द्वितीये द्वितीयः। तथाऽऽग्नेयत्वम्। अथो [७]ऐन्द्राग्नो वा[७] सवनीयो भवति पशुः। अत्यन्तमनुवर्तते। अथवाऽयमन्यः पक्षः॥ ३॥

---

१-१. **अनन्तर्येष्वधिकृता** मूको। २. द्र. आश्रौ ५, ३, ३। ३. **न भवन्ति** मूको। ४-४. **द्वौ द्वौ संस्था संबन्धाः** मूको। ५-५. **अग्नियो वा ग्नेय इत्येव** मूको। ६. °**मभीष्टेया**° मूको। ७-७. °**न्द्राग्नावेव** मूको।

[रथन्तरपृष्ठेषु विकल्पेनाग्नेयस्य पशोः प्रयोगः]

**आग्नेयं वा रथन्तरपृष्ठेषु॥ ४॥**

रथन्तरपृष्ठेष्वाग्नेयं कर्तव्यम् (कुर्यात् ?)॥ ४॥

[बृहत्पृष्ठेष्वैन्द्रस्य पशोः प्रयोगः]

**ऐन्द्रं बृहत्पृष्ठेषु॥ ५॥**

ऐन्द्रः कर्तव्यः सवनीयः। अत्यन्तमेवानुवर्तते। वैरूपादीनामप्याग्नेयः सवनीयो भवति। वैरूपादीनां किमिति सामान्यं दृष्ट्वाऽध्यवसानं कर्तव्यं मो (? विशिष्टं नामो)पगम्य वा॥ ५॥

[बृहत्पृष्ठेष्वैकादशिनानां वा प्रयोगः]

**ऐकादशिनान्[1] वा॥ ६॥**

ऐकादशिनान्[1] वा। किमालभेत। अत्यन्तमनुवर्तते। अयं वा पक्षः। एकादशिन्या[2] एतदहः। अहन्यहन्येकादश पशव आलब्धव्या इति। ऐकादशिना वा, एते वाऽहन्यहनि भवन्ति। अथवाऽयमन्यः पक्षः॥ ६॥

[प्रायणीयोदयनीययोरतिरात्रयोः सर्वेषामैकादशिनानामभ्यन्तरे चैन्द्राग्नस्यालम्भः]

**प्रायणीयोदयनीययोरतिरात्रयोः समस्तानालभेरन्। ऐन्द्राग्नमन्तर्धौ वा॥ ७॥**

[प्रत्यहमेकैकशो वैकादशिनानामालम्भः]

**अन्वहं वैकैकश ऐकादशिनान्॥ ८॥**

प्रायणीयोदयनीययोरतिरात्रयोः समस्तानालभेरम् ऐकादशिनान्। प्रायणीयोदयनीययोः समस्ताः पशव एकादशैकादशिना आलब्धव्याः। ऐन्द्राग्नमन्तर्धौ वा। अन्तराले प्रायणीयोदयनीययोर्यान्यन्तरेऽहानि भवन्ति, तत्रैन्द्राग्नः पशुरालब्धव्यः। [3]प्रायणीयोदयनीयग्रहणमतिरात्रग्रहणं च प्रकृतिकृतसमस्तग्रहणार्थं, तस्मात्[3] समस्ता एवाधिकृताः। उच्यते। योगविभागार्थम्। अक्रियमाणेऽस्मिन् समस्तग्रहणे [4]ऐकसौत्र्यं[4] स्यात्। एकसूत्रत्वे चायं दोषः, सोऽयं पक्षः पूर्व एव, **ऐकादशिनान् वा** (आश्रौ १२, ७, ६) इति, अयं च न गम्येत। एक एव पक्ष एकपक्षो गम्येत **ऐकादशिनान् वा** (आश्रौ १२, ७, ६), प्रायणीयोदयनीययोरतिरात्रयोरालभेरन्, ऐन्द्राग्नमन्तर्धौ वेति तेनैव गम्यते। तद्विधाने सर्वत्र प्राप्ते क्वचिन्नेष्यते, तन्निवृत्त्यर्थं वचनम्॥ ७-८॥

---

१. द्र. वैप ४ पृ. ८०२। २. एकादशिनी मूको। ३-३. प्रायणीयग्रहणमतिरात्रग्रहणं प्रकृतिकृतं समस्तग्रहणं कस्मात् मूको। ४-४. ऐ एक सौत्यं मूको।

[एकादशिन्यामेकादशतो न्यूनपशूनामालम्भनस्य निषेधः]

**न त्वेवैकादशिनीं न्यूनामालभेरन्॥ ९॥**

यत्रातुल्या[1] एकादशभिः, तत्र नैवैकादशिनी आलब्धव्या, एकादश-द्वाविंश-त्रयस्त्रिंशादिष्वेव[2] भवन्ति। अन्यत्रैकस्मिन् निगमे[3] प्राप्तेऽन्यत्राप्येकादश [4]स्युः, आह।[4] त्रिप्रदर्शनार्थं[5] गवामयननिदर्शनार्थं गवामयननिदर्शनं विनाऽपदिश्यते॥ ९॥

[एकादशिनीपक्षे गवामयनेऽवशिष्टनवरात्रेऽतिरिक्तपशूनामालम्भे नियमः]

**एतेन चेत् पश्वयनेनेयुस्तृतीयेऽहनि दशरात्रस्य द्वात्रिंशतमेकादशिन्यः संतिष्ठन्तेऽत एतस्मिन्नवरात्रेऽतिरिक्तपशूनालभेरन्॥ १०॥**

एतेन चेद् एकादशिननिमित्तकेन[6] पश्वयनेन ईयुर्गच्छेयुरित्यर्थः। अथ[7] तृतीयेऽहनि यो दशरात्र उत्तमे मासे गवामयनस्य, तस्मिन् दशरात्रे तृतीयेऽहनि द्वात्रिंशतम् (द्वात्रिंशत् ?) एकादशिन्यः सन्तिष्ठन्ते[8], समाप्ता भवन्ति। तत्र नवाहानि परिशिष्टानि भवन्ति। तत्र के पशव आलब्धव्याः। तत्रेदमारभ्यते। एतस्मिन् नवरात्रेऽतिरिक्तपशून् आलभेरन्। अतिरिक्तपशव इति संज्ञा भवति। न चायं विषुवन्मध्यो नवरात्रः। नवाहानि परिशिष्यन्ते, तानि नवरात्र इत्युच्यते। तत्र विनियोगस्तेषामतिरिक्तपशूनाम्॥ १०॥

[अतिरिक्तपशूनां परिगणने एकविंशस्तोमेऽहनि वामनवैष्णवस्य पशोरालम्भः]

**वैष्णवं वामनमेकविंशे॥ ११॥**

वैष्णवं वामनमेकविंशेऽहन्यालभन्ते। वैष्णवो[9] विष्णुदेवत्यः। वामनः प्रमाणेन गोपशुः, स एकविंशेऽहनि वेदितव्यः। गोपशवः ए (एवं ?) केचित् पठन्ति। चतुर्थेऽहनि दशरात्रस्य वेदितव्यः॥ ११॥

[अग्रे षट्स्वहःसु षण्णां पशूनामालम्भस्य निर्देशः]

**ऐन्द्राग्नं त्रिणवे, वैश्वदेवं त्रयस्त्रिंशे, द्यावापृथिवीयां धेनुं चतुर्विंशे, तस्या एव वत्सं वायव्यं चतुश्चत्वारिंश, आदित्यां वशामष्टाचत्वारिंशे, मैत्रावरुणीमविवाक्ये॥ १२॥**

ऐन्द्राग्नं त्रिणवे स्तोमे। इन्द्राग्नदेवतो[10] गोपशुः पञ्चमेऽहनि दशरात्रस्य वेदितव्यः। वैश्वदेवं त्रयस्त्रिंशे। वैश्वदेवो गोपशुः त्रयस्त्रिंशस्तोमे षष्ठेऽहनि वेदितव्यः। द्यावापृथिवीयां च धेनुं चतुर्विंशे, द्यावापृथिवीयो गोपशुः

---

१. **यमा तुल्या** मूको। २. °**विंशतरात्रिंसादि**° मूको। ३. **निष्टमे** मूको। ४-४. **सुराहः** मूको। ५. **तिस्रः**° मूको। ६. **एकादशानामितित्तकेन** मूको। ७. **थ** मूको। ८. नास्ति मूको। ९. नास्ति मूको। १०. **इन्द्राग्निदेवतः** मूको।

चतुर्विंशस्तोमेऽहनि सप्तमे दशरात्रस्य वेदितव्यः। धेनुश्चायं पशुर्भवति। तस्या एव वत्सं वायव्यं चतुश्चत्वारिंशे तस्या एव द्यावापृथिवीयाया यो वत्सः, स एव वायुदेवत्यश्चतुश्चत्वारिंशस्तोमेऽहनि, अयं पशुरष्टमेऽहनि दशरात्रस्य वेदितव्यः। आदित्यां वशामष्टाचत्वारिंशेऽहन्यालभेरन् दशरात्रस्य नवम एवाहनि। मैत्रावरुणी-मविवाक्ये, अविवाक्ये दशमेऽहनि मैत्रावरुणी गोपशुर्भवति। वशेत्यनुवर्तते। वशानूबन्ध्या इत्यर्थः॥ १२॥

[अवशिष्टनवरात्रस्य नवमेऽहन्युदयनीयातिरात्रे च पशोर्निर्देशः]

**वैश्वकर्मणमृषभं महाव्रतं आग्नेयमुदयनीयेऽतिरात्रे॥ १३॥**

वैश्वकर्मणमृषभं महाव्रते आलभते। आग्नेयमुदयनीयेऽतिरात्रे आलभेत गोपशुम्। एतेऽतिरिक्तपशवः। एतेष्वहःस्वन्यस्तोमयुक्तेष्वप्येवमेव गवामयनेऽवस्थिते गवामयनादिनिष्ठेषु वाऽङ्गिरसामयनेषु। अस्मिन्नेकादशिनीपक्षे[१] एते पशवो भवन्ति, नान्यत्र। अतिरिक्तपशव इति संज्ञानार्थं[२] संज्ञा वेदितव्या। नानया[३] संव्यवहारः क्वचित्॥ १३॥

[पूर्वोक्तव्यवस्थाविकल्पेनैकादशिन्यैव त्रयस्त्रिंशावृत्तिपूरणं तत्र च व्यवस्था]

**अपि वैकादशिनीमेव त्रयस्त्रिंशीं पूरयेयुः। अभिजिद्विश्वजिद्विषुवन्ति द्विपशूनि स्युः॥ १४॥**

अपि वैकादशिनीमेव त्रयस्त्रिंशीं पूरयेयुः। [४]अथवाऽत्र यदा त्रयस्त्रिंश्येवैका-दशिनी[४] पूरयितव्या, तदा नवस्वहःसु परिशिष्टेष्वेकादशानां पशूनां कथं विनियोगस्तत इदमारभ्यते। अभिजिद्विश्वजिद्विषुवन्त्येतान्यहानि द्विपशूनि भवन्ति। एवं विनियोगः कर्तव्यः। विषुवद्ग्रहणं किमर्थं सिद्धत्वाद् द्विपशुत्वस्य। उच्यते। परिसंख्यानभयाद् विषुवतो ग्रहणम्। इदं च दृष्ट्वा महाव्रतमेकपशुकादिष्वपि वि (? दि)शति[५] ज्ञापयत्याचार्यः—यथा एकपशुकं व्रतं भवति। यदयमाह **वैश्वकर्मणमृषभं महाव्रते** (आश्रौ १२, ७, १३), सवनीयत्वेन[६] यस्माद् विदधाति, स पुनः ग्रन्थः अस्यैव[७] आचार्यस्य। अतः द्विपशुत्वमेव, नात्र परिसंख्यानं भवति। श्रुतौ च द्विपशुत्वमेव श्रूयते। अतो द्विपशुकं महाव्रतमपि। अनेन क्रमेण सवनीया वेदितव्या अर्थेषु॥ १४॥

॥ इति द्वादशे सप्तमः खण्डः॥

---

१. एकादशिर्विपक्षे मूको। २. संज्ञार्थं मूको। ३. नामया मूको। ४-४. अथवा त्रयवा त्रयस्त्रिंशमिवैका° मूको। ५. विशन्ति मूको। ६. सवनियमत्वेन मूको। ७. अतस्यैव मूको।

# अथ द्वादशेऽध्यायेऽष्टमः खण्डः

[सत्रिधर्मनिरूपणोपक्रमः]

**अथ सत्रिधर्माः ॥ १ ॥**

अथेदानीं सत्रिणां ये धर्मास्तान् वक्ष्यामः। अथशब्दोऽधिकारार्थे आनन्तर्ये च वेदितव्यः। धर्मा व्रतनियमाः। अत्र धर्मो व्रतवाची[1] वेदितव्यः॥ १ ॥

[सत्रिणां सर्वेषां देवपित्र्यप्राकृतधर्माणां लोपः]

**दीक्षणादिपित्र्याणां दैवानां धर्माणां प्राकृतानां निवृत्तिः सर्वशश्च ॥ २ ॥**

दीक्षणादिग्रहणं क्रियते। पुनस्तस्याः[2] दीक्षणीयायाः प्राजापत्यः पशुर्भवति। वर्जनं[3] मा भूदिति। पित्र्यधर्माः पिण्डपितृयज्ञादयः श्राद्धादयः। दैवा अग्निहोत्रादयः। दर्शपूर्णमासादयश्च नित्या ये धर्माः, कर्माणीत्यर्थः। नित्यानां कर्मणां लोपो वेदितव्यः पित्र्याणां दैवानां च। सर्वशोग्रहणं श्रौताधिकारात्। श्रौतानामेव निवृत्तिः केवलं स्यात्, न गार्ह्याणाम्। इष्यते च गार्ह्यादीनामपि वैश्वदेवानां सर्वेषां लोपः। अतः सर्वशोग्रहणम्। सत्राधिकारे वर्तमाने **एषा प्रकृतिः सत्राणाम्** (आश्रौ ११, १, ७) इत्येवमारभ्योत्तरत्र च **इति सत्राणि** (आश्रौ १२, १५, ६) इति वक्ष्यति। एवं सत्राधिकारो वर्तते। किमर्थं पुनरिदं सत्रग्रहणम्। उच्यते। सर्वोऽवधिः सवनीयानां योऽपदिष्टः स समर्थो भवति, इदं दर्शितं भवति। अतः पुनरपि सत्रिग्रहणं क्रियते। सर्वशः[4] इतीदमुत्तराङ्गमिति केचित् कुर्वन्ति। सर्वशश्च वर्जयेयुरभया ग्रामचर्याम् उत्तरत्र वक्ष्यामः॥ २ ॥

[ग्रामचर्यावर्जनम्]

**वर्जयेयुर्ग्रामचर्याम् ॥ ३ ॥**

---

१. °वादी मूको। २. पुनस्ता मूको। ३. व्रजनं मूको। ४. सर्व मूको।

[1]ग्रामचर्यां ग्रामधर्मविशेषान्[1] सर्वशो वर्जयेयुः। के ? सत्रिणः। निवृत्ति-र्वर्जनेत्येकार्थः। निवृत्तिरेवाधिकृता, किमर्थं पुनर्वर्जनं निर्दिश्यते। उच्यते। यदि निवृत्तिरेवाधिकृता स्याद् इत्युत्तरत्र गुरुः षष्ठीसमासः कर्तव्यः स्यादिति। अतो लाघवार्थं वर्जयेयुरित्युक्तः, सर्वशोग्रहणस्य प्रयोजनमभिवादनविधिमुत्तरत्र वक्ष्यति। तस्य च, उत्तरत्र **नृत्यगीतवादितानि**[2] (आश्रौ १२, ८, १८) वक्ष्यति। तेषामपि विधिः प्राप्नोति, तन्निवृत्त्यर्थमेकमधिकारमतीत्यापि[3] अयं वर्जनाधिकारः स्यादिति, अतः सर्वश उच्यते। अन्यथा नृत्यादीनां[4] विधिरेव प्राप्नोति, ततो यत्रः। ग्रामचर्यां [5]ग्रामे प्रचरणमित्यर्थः[5]। तां च वर्जयेत्॥ ३॥

[शीघ्रगमनवर्जनम्]

**सरणम्॥ ४॥**

सरणं नाम शीघ्रगमनमित्यर्थः। तद् वर्जयेत्॥ ४॥

[विवृतमुखेन स्मयनस्य वर्जनम्]

**विवृतस्मयनम्॥ ५॥**

विवृतस्मयनं नामोद्घाट्य दन्तान्, तद् विवृतस्मयनमुच्यते। तद् वर्जयेयुः॥ ५॥

[स्त्रीभिः सह हासस्य वर्जनम्]

**स्त्र्यभिहासम्*[6]॥ ६॥**

स्त्र्यभिहासं[6] वर्जयेत्। स्त्रीभिः सह हासो न कर्तव्य इत्यर्थः॥ ६॥

[अनार्यैः सह भाषणस्य वर्जनम्]

**अनार्याभिभाषणम्॥ ७॥**

अनार्याभिभाषणं वर्जयेत्। शूद्रैः सहाभिभाषणं न कर्तव्यम्। ७॥

[अनृतभाषणक्रोधजलावगाहनानां वर्जनम्]

**अनृतं क्रोधमपां प्रगाहणम्॥ ८॥**

---

१-१. **धर्मा विशेषां** मूको। २. °**तवादित्रानि** मूको। ३. °**र्थमेकथमधि**° मूको। ४. **नृत्तादीनि वि**° मूको। ५-५. **ग्रामे न प्रचीयादि**° मूको। *व्याख्यादर्शनात् प्रतीयते यत् देवत्रातमते °**हसम्** इति सूत्रपाठः। ६. **भिहसम्** मूको।

अनृतं किम्, अनृतवचनं किमर्थं वर्जयेत्, न कर्तव्यम्। श्रुति-शास्त्रादिनिवारितमनृतवचनम्[१]। तस्मादत्र पुनः प्रतिषेधः क्रियते। उच्यते। अङ्गीकरणार्थमनृतं किम्, इदं प्रायश्चित्तं स्यादिति **त्वमग्ने व्रतपा असि** (ऋ ८, ११, १), **इति जपेत्** (आश्रौ १२, ८, २३)। क्रोधं, क्रोधं च वर्जयेत्। अपां न प्रगाहणं [२]के प्रवेशनं न कर्तव्यम्[२]। यदाऽशुचित्वं न भवति, तदोद्धृतोदकेन स्नानं कर्तव्यम्॥ ८॥

[अभिवर्षणे स्थानस्य वर्जनम्]

**अभिवर्षणम्॥ ९॥**

अभिवर्षणं च। किम्, वर्जयेत्। [३]वर्षणकाले आकाशे न स्थानीयमित्यर्थ[३]:॥ ९॥

[वृक्षनौरथेष्वारोहणानां वर्जनम्]

**आरोहणं च वृक्षस्य नावो वा*॥ १०॥**

**रथस्य वा॥ ११॥**

वृक्षारोहणं च वर्जयेत्। [४]चकारः समुच्चयार्थे[४] द्रष्टव्यः। नावो वा रथस्य वाऽऽरोहं वर्जयेत्। वाकारश्चार्थे[५] द्रष्टव्यः॥ १०-११॥

[अदीक्षितस्याभिवादनवर्जनम्]

**अदीक्षिताभिवादनम्॥ १२॥**

अदीक्षितस्याभिवादनं न कर्तव्यं सत्रिभिः। अथेदानीं कस्य दीक्षितैरभिवादनं कर्तव्यं तदर्थमुत्तरमारभ्यते॥ १२॥

[दीक्षितेनोपसत्प्रवृत्तस्याभिवादनं कार्यम्]

**दीक्षितस्त्वौपसदम्॥ १३॥**

दीक्षितस्तु औपसदम् अभिवादयेत्। यदा अन्यः[६] दीक्षितः, अन्यश्चोपसत्सु वर्तते। तदा[७] दीक्षितेन, उपसत्सु यः वर्तते, सोऽभिवादयितव्य औपसदः॥ १३॥

[दीक्षितोपसत्प्रवृत्ताभ्यां सुत्यावस्थस्याभिवादनं कार्यम्]

**उभौ सुन्वन्तम्॥ १४॥**

---

१. °शास्त्रवदनि° मूको। २-२. केशवेशनं कर्तव्यं मूको। ३-३. °कालमाकाशे न स्थापनी° मूको। ४-४. धकारः स्वार्थे मूको। ५. धकारः स्वार्थे मूको। * देवत्रातमते 'आरोहणं च वृक्षस्य' इत्येकं सूत्रम् 'नावो वा रथस्य वा' इति चापरं सूत्रं प्रतीयते। ६. यथा मूको। ७. यस्य मूको।

[1]उभावपि औपसददीक्षितौ[1] सुन्वन्तम् अभिवादयेताम्। कः सुन्वद् (? न्) भवति। स उभाभ्यामप्यभिवादयितव्यः॥ १४॥

[समावस्थयोः पूर्वारम्भिणमितरोऽभिवादयेत्]

**समसिद्धान्ताः पूर्वारम्भिणम्॥ १५॥**

[समावस्थयोरधिकतपास्तप्ततरमितरोऽभिवादयेत्]

**अभितप्ततरं वा॥ १६॥**

समसिद्धान्ताः सदृशसिद्धान्ता इत्यर्थः। यथा[2] अन्यस्य तृतीयदीक्षाऽन्यस्यापि तृतीयोपसत्, यथैकस्यापि प्रथमं सौत्यमहः द्वितीयस्यापि। ते समसिद्धान्ताः [3]पूर्वारम्भिणम् अभिवादयेयुः। अभितप्ततरं वा[3] यस्तपस्वितम इत्यर्थः। तस्य चाभिवादनं कर्तव्यं समसिद्धान्तैः॥ १५-१६॥

[विषयान्तरेषु समयोर्वयोऽधिकमितरोऽभिवादयेत्]

**सर्वसाम्ये[4] यथावयः॥ १७॥**

यदा सर्वं समं भवति, दीक्षाश्चोपसदश्चान्यानि सर्वेषां समानि भवन्ति। तस्मिन् सर्वसामान्ये यथावयोऽभिवादनं कर्तव्यम्। यो यो [5]वयसाऽधिको भवति[5] [6]स स[6] तु पूर्वमभिवादयितव्यः सर्वैः सत्रिभिः॥ १७॥

[सत्रिभिर्नृत्यगीतवादितानि वर्ज्याणि]

**नृत्यगीतवादितानि॥ १८॥**

नृत्यगीतवादितानि न कर्तव्यानि। [कथं निषेधो निवृत्ते तदधिकारे ?] उच्यते। पूर्वाधिकारो[7] न व्यावृत्तः। तेन वादित्रादीनि वर्जयितव्यानि। न द्रष्टव्यानीत्यर्थः, अन्यैरपि क्रिय[माणानि ?]॥ १८॥

[व्रतेषु निषिद्धान्यन्यान्यपि कार्याणि वर्ज्याणि]

**अन्यांश्चाव्रत्योपचारान्॥ १९॥**

ये चातुर्मास्येष्वपदिष्टाः **केशान् निवर्तयीत** (आश्रौ २, १६, २३)

---

१-१. °**वपि दीक्षितौ** मूको। २. **यदा** मूको। ३-३. नास्ति मूको। ४. **सर्वसामान्यैः** मूको। ५-५. नास्ति मूको। ६-६. **सप्त** मूको। ७. **पूर्वमधिका**° मूको।

इत्येवमाद्याः। अन्येऽव्रत्योपचाराः, तान् वर्जयेत्। अन्यांश्चेत्युच्यते, एषामपि व्रत्यत्वं तद्व्या (ख्या ?)पनार्थम् अव्रत्यग्रहणमपेक्षितम्[१]। तत इदं सिद्धं भवति। अत ऊर्ध्वमाहिताग्निर्व्रतचारी। [२]अत एवैतेषामपि व्रतानामिहोपदिष्टानां वर्जनं भवति यथासंभवम्॥ १९॥

[बहिर्वेदिस्थितैरध्वर्युभिः सत्रिणामाश्रावणस्य वर्जनम्]

**न चैनान् बहिर्वेदिषदोऽभ्याश्रावयेयुः॥ २०॥**

न चैनान् बहिर्वेदिषदोऽभ्याश्रावयेयुः, [३]के, अध्वर्यवः[३] [? न] अभ्याश्रावयेयुः। आश्रावणकाले शुचिभिर्भवितव्यं सर्वैः सत्रिभिः॥ २०॥

[आचमनादिव्यापृतानां सत्रिणामध्वर्युभिराश्रावणं न कार्यम्]

**नोदक्यान्*॥ २१॥**

[सूर्योदयास्तमयनकालयोः सत्रिभिः शुचिभिर्भवितव्यम्]

**नो एवाभ्युदियान्नाभ्यस्तमियात्॥ २२॥**

नो एवाभ्युदियात्। तथा कर्तव्यं यथा [४]अशुचीन् नैवाभ्युदियात्[४]। आदित्योदयकाले सर्वैः शुचिभिर्भवितव्यमित्युक्तं भवति। नाभ्यस्तमियाद् अस्तमयनकाले[५] च सर्वैः शुचिभिर्भवितव्यम्॥ २२॥

[पूर्वोक्तनियमानामनिर्वाहे प्रायश्चित्तम्]

**तेषां चेत् किञ्चिदापदोपनमेत् 'त्वमग्ने व्रतपा असि' इति जपेत्॥ २३॥**

तेषां **ग्रामचर्यां, सरणम्** (आश्रौ १२, ८, ३-४) इत्येवमाद्यानां नियमानाम् आपदाऽऽगतो दोषो भवति, तेषां प्रतिषिद्धं किञ्चित्कृत्यं भवति व्रतम्, तदेदं प्रायश्चित्तं भवति, **त्वमग्ने व्रतपाः** (ऋ ८, ११, १) इत्येताम् ऋचं च जपेत्। अस्या ऋच आपदा नियमलोपे जपो भवति॥ २३॥

[अतिक्रममितरेभ्य आख्याय दीक्षायाचनम्]

**आख्याय वेतरेषूपहवँल्लीप्सेत॥ २४॥**

आख्याय वेतरेषु सत्रिषूपहवं लिप्सेत। तेषामेव वा कथयित्वा तेभ्य एव सकाशाद् उपहवं [६]लीप्सेत, इच्छेदित्यर्थः[६]। दीक्षोपहवः। जपो नित्यम्। उपहवस्तु विकल्प्यते[७]॥ २४॥

---

१. **अप्रत्यग्रह**° मूको। २. **अत्र** मूको। ३-३. **कः अध्वर्यु** मूको। *भाष्यं नोपलभ्यते। ४-४. **अशुचिः नः नैवाभ्युदये** मूको। ५. **अस्तमन**° a corruption of **अस्तमयन** M.W.। ६-६. **लीप्सेय चिदि**° मूको। ७. **विकल्पते** मूको।

[व्रतातिक्रमवतः पुनर्दीक्षाविधिः]

**अवकीर्णिनं तैरेव दीक्षितद्रव्यैरपर्युप्य पुनर्दीक्षयेयुः॥ २५॥**

अवकीर्णिनं तैरेव पुराणैर्दीक्षितद्रव्यैर्मेखलादिभिर्दण्डादिभिश्चापर्युप्य वापनमकृत्वैव पुनरसौ दीक्षयितव्यः सत्रिभिः। संस्कारमात्रं केवलं भवति॥ २५॥

[आग्रयणकाले नवीनानां व्रीहीणां सवनीयाः कर्तव्याः]

**आग्रयणकाले नवानां सवनीयान्निर्वपेयुः॥ २६॥**

आग्रयणकाले किं कर्तव्यमित्यस्मिन् संदेहे इदमारभ्यते। आग्रयणकाले नवानां सवनीयान्[१] निर्वपेयुः। आग्रयणं शरदि वसन्ते च[२] भवति। अनयोः कालयोर्नवानां व्रीहीणां सवनीयाः कर्तव्याः। एते सवनीया भवन्ति धानादीनि पुरोळाशादीनि। शरदि पुरोळाशः परिवापश्च केवलं नवो[३] भवति। अन्यद् यवमयं पुराणमेव भवति। तथा वसन्ते [४]करम्भो लाजाश्च[४] केवलं नवा भवन्ति। अन्यद् व्रीहिमयं पुराणमेव भवति। एवं तावत् सुत्यास्वाग्रयणोपायोऽपदिष्टः।

अथेदानीं दीक्षोपसत्सु किं कर्तव्यमित्युत्तरत्राऽऽरभ्यते॥ २६॥

[दीक्षोपसत्स्वाग्रयणकाले आगते गां नवमन्नं भक्षयित्वा तस्याः पयसा व्रतं कर्तव्यम्]

**दीक्षोपसत्सु व्रतदुघ आदयेयुः॥ २७॥**

दीक्षासूपसत्सु [५]च व्रताय या दुह्यन्ते गावो व्रतदुहः[५]। आदयेयुः [६]ता नवमन्नमाशयितव्याः[६]। तथेह[७] सवनीयानां पयसा व्रतं कर्तव्यम्। पातव्यमित्यर्थः। इति दीक्षोपसत्स्वाश्रवणं वेदितव्यम्। तेषां व्रत्यानि किम् (कानि?), उत्तरत्र वक्ष्यन्ते॥ २७॥

[सत्रिणां तत्रतत्रेष्टिषु नियतपदार्थानां भोजनम्]

**तेषां व्रत्यानि॥ २८॥**

तेषां सत्रिणां[८] भोजनानि व्रत्यान्यधिकृतानि वेदितव्यानि। तेषामिति ब्रुवन्[९] दर्शयति प्रागपदिष्टानि व्रतानि। यथासम्भवं पत्नीनामपि भवन्ति अयवाग्वादीनि[१०]। एवमर्थं वैषामिति। तेषां व्रत्यादीनि शास्त्रान्तरविहितानि अपरुद्धानीह[११] भवन्ति। यवाग्वादीन्येवमर्थं वा। एषामिति पक्षे दीक्षासमये[१२] व्रतं भवति॥ २८॥

---

१. **सवनीयानाम्** मूको। २. नास्ति मूको। ३. **नवस्यं** मूको। ४-४. **करम्भवाजाश्च** मूको द्र. आपश्रौ १२, ४, १३। ५-५. **व्रतया सौ दुह्यते गावः सुरहः** मूको। ६-६. **स्तास्तवनं च माश°** मूको। ७. **वेद** मूको। ८. **सत्राणां** मूको। ९. **ध्रुवं** मूको। १०. **अथवारवादीनि** मूको। ११. **अवरुह्यनीहा** मूको। १२. **°समयः** मूको।

